श्रीवेङ्कटेश्वरप्राच्यग्रन्थमाला सं. ४३.

सम्पादकः – श्री प. वें. रामानुजस्वामी, एम्. ए.
श्रीवेङ्कटेश्वरप्राच्यपरिशोधनालयाध्यक्षः

श्री

# बृहदारण्यकोपनिषद्भाष्यम्

श्रीरङ्गरामानुजमुनिविरचितम्

उपोद्घात-आङ्ग्लानुवाद-टिप्पणी-सहितम्

---

## प्रथमो भागः

मूलमात्रम् – उपोद्घात-टिप्पणी-

---

शिरोमणि उत्तमूर् ति. वीरराघवाचार्येण
सम्पादितम्

श्रीतिरुमल-तिरुपतिदेवस्थानमुद्रणालये मुद्रितम्
१९५३

# PREFACE



THE Institute has undertaken to publish the Viśiṣṭādvaita commentaries on the Upaniṣads with English translation in order to make their contents known to scholars unacquainted with Sanskrit. Four volumes have already been published in the Series of books issued by the Institute containing the translation of the four Upaniṣads, *Īśa, Kēna, Kaṭha,* and *Praśna*. When the fifth Upaniṣad according to the order of the Ten Upaniṣads had to be taken up, the Rāmānuja Siddhānta Bhāshya Publication Committee, Madras, which had already published eight Upaniṣads with their *Bhāṣya* applied to the Devasthanam Committee for assistance in their enterprise and requested them to bear the cost of printing of their edition of the *Chāndōgya Upaniaṣd*. The Committee graciously complied with their request and ordered the printing of that *Bhāṣya* in the Devasthanam Press. As the Institute also had to publish the Bhāṣya of that Upaniṣad with English translation, the opportunity was availed of and the required number of copies of that edition were got printed for the Institute. As it would take some more time for the English translation and introduction to be ready, it was decided to publ'sh the text with Sanskrit notes by the Editor in one volume and reserve the translation for the second. The text of the *Bhāṣya* was also big enough to form a separate volume.

Before the English translation of the *Chāndogya Upaniṣad* could be prepared in the Institute, the R. S. B. Publication Committee, Madras, again applied to the Board

of Trustees of the T. T. Devasthanams for the printing of this *Bhāṣya* on the *Bṛhadāraṇyaka Upaniṣad.* The Board complied with their request and this Upaniṣad-bhāṣya is accordingly printed as a volume of the Institute Series. The translation of this *Bhāṣya* also will be published in due course in a separate volume.

S. V. O. INSTITUTE
TIRUPATI
31—12—1953.

P. V. RAMANUJASWAMI,
*Director.*



॥ श्रीः ॥

श्रीवेङ्कटेशः शरणम्

# भूमिका



ब्रह्मेति यद् बृहति बृंहयतीति वित्तं
सर्वप्रकारबृहदस्य च बृंहणं यत् ।
आरण्यकं बृहदिदं परिशील्य किञ्चित्
संगृह्यतेऽत्र सकलोपनिषद्रहस्यम् ॥

बृहदारण्यकमिदं वाजसनेयिब्राह्मणोपनिषदिति तावत् विदितमेव। ब्राह्मणमिदं शुक्लयजुर्वेदीयम्। शुक्लकृष्णभेदेन द्वेधा विभक्ते एकशत (१०१) शाखात्मनि यजुर्वेदे कृष्णयजुश्शाखासु षडशीतौ (८६) स्थितासु, शुक्लशाखाः पञ्चदश (१५) परिगण्यन्ते, यासां प्रवर्तकाः काण्वमाध्यन्दिनादयः पञ्चदश महर्षयो वाजसनेयस्य याज्ञवल्क्यस्यान्तेवासिन इति व्यक्तं वायुपुराणादौ।

स भगवान् याज्ञवल्क्यः प्रथमं वैशम्पायनस्यान्तेवासी भूत्वा अधीतयजुर्वेदो गुरुभक्त एव स्थितोऽपि गुरोरभिसंधिमभिज्ञाय ततोऽधीतमंशं योगबलेन मांसरूपेण बहिश्छर्दयित्वा स्वयमादित्यमुपास्य गुर्वादिभिरनधिगतानि अयातयामसंज्ञानि अभिनवप्रकाशानि यजूंषि आदित्यादेवाध्यैष्टेति वर्णितं विष्णुपुराणादौ। अन्ते चास्याऽऽरण्यकस्यैवं श्रूयते, 'आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाऽऽख्यायन्ते' इति। मन्ये, राजर्षिभ्यो जनकादिभ्य इव प्रियपत्न्यै मैत्रेय्या अपि मुक्तिविद्यामुपदिश्य परमहर्षिवैलक्षण्येन प्रकृष्टं योगाश्रममपि तुरीयमूरीचकारेत्यत इव आदितःसिद्धाद्भुतयोगमहिमहेतोरप्ययमेव योगियाज्ञवल्क्य इत्यखिलश्लाघनीय आसीदिति। एवमत्र तत्रैव वंशब्राह्मणे आदित्यमूलया अम्भिणीप्रभृतिपरम्परया उद्दालकाद् याज्ञवल्क्यस्य विद्याप्राप्तिर्निरदेशि। परं तु, जनकस्य राज्ञः सभायामुद्दालकस्य च याज्ञवल्क्यस्य च वादकथा ववृत इति समदर्शि पञ्चमसप्तमेऽत्रैव।

यदि उद्दालकशिष्यात् याज्ञवल्क्यादयमनन्य इति मन्यते, तर्हि, 'अयमुद्दालकात् किमप्यधीतवानपि साक्षादादित्यादेव सर्वं जग्राह। अस्यैव पश्चात् सुदूरं प्रसृता वंशावलिर्वंशब्राह्मणेऽत्रादर्शि' इत्येष्टव्यम्। अन्यथा पुनः, 'स उद्दालकशिष्यो याज्ञवल्क्योऽन्यः, 'चतुर्धा व्यस्य बोध्याय याज्ञवल्क्याय भार्गव' (श्रीभागवते) इत्युक्त बह्वृचयाज्ञवल्क्यवत्; अयं पुनरन्यो वाजसनेययाज्ञवल्क्यः साक्षादादित्यशिष्यः, यः पञ्चदश काण्वमाध्यन्दिनादीन् अयातयामनामानि यजूंष्यध्याप्य प्रख्यापयामासेति भणितव्यम्। परंतु वाजसनेयो याज्ञवल्क्य एवोद्दालकस्य कचिदंशेऽन्तेवासीति इहैव श्राव्यते, महत्त्वकामनायामनुष्ठेयं मन्थाख्यं कर्म, 'दिशामेकपुण्डरीकमसि, अहं मनुष्याणामेकपुण्डरीकं भूयास' मित्यादित्योपासनान्तमुपदिश्यैवम्, 'तं हैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वोवाच' इति।

अथ कथमसौ वाजसनेयः, यो नाम्ना याज्ञवल्क्यः? अत्रेदं प्रथमं प्रतीयमानं प्रत्युत्तरम्, यत् वाजसनिरिति वाजसन इति वा वाजश्रवा इव कश्चिन्महर्षिरास्त; तस्यायमिति। प्रशस्तश्चेदं नाम, यत् भगवन्नामसहस्रेऽपि पठितमस्ति, 'अर्को वाजसनिः (नः) श्रृङ्गी' इति। स हि परमात्मा सर्वेषां वाजं विभजति। (वाजोऽन्नम्)। 'येन जातानि जीवन्ती' ति हि श्रूयते। अस्मिन् प्रत्युत्तरे पुनरयमाक्षेपः पदं धत्ते, 'याज्ञवल्क्योऽयं देवरातसुत इति श्रीभागवते निर्दिष्टः कथङ्कारमेवंरीत्या वाजसनेय' इति। अथ देवरातस्यैव वाजसनिरिति नामान्तरमिति वा, अन्य एव तद्वंशे ततः प्रागेवन्नामा कश्चिदिति वा वक्तव्यम्। तथा पुरुषं नाम्ना पूर्वं निर्दिश्य कुलसंबन्धकीर्तनं पश्चादेव क्रियत इतीयं श्रुतिशैली, यथा—उद्दालकः आरुणिः, मधुकः पैङ्ग्यः, सत्यकामो जाबालः, उपकोसलः कामलायनः इत्येवम्। कुलपुरुषेष्वपि समनन्तरस्य प्राङ्निर्देशो व्यवहितस्य च पश्चात्, जानकिरायस्थूण इत्येवम्। तदत्र वाजसनेयो याज्ञवल्क्य इति पूर्वनिर्देशादस्यैतद् बिरुदनामेति भाव्यत इति वा। नूनमिदं वाऽन्यद् वा मनसिकृत्य प्रकृतबृहदारण्यकभाष्यकारैः अत्रैवमर्थः प्राकाशि, "वाजसनेयशाखाध्यायिने याज्ञवल्क्याये" ति।

अथ कथं शाखाया वाजसनेयत्वमिति विचार्यम्। तत्र अदित्यो वाजसनिरिति वाचस्पत्यम्। प्रसिद्ध्यति चाऽऽदित्यस्य वाजसनित्वम्, 'आदित्याज्जायते वृष्टिर्वृष्टे-

रन्नं ततः प्रजाः' इति । तथाच तैत्तिरीयनारायणेऽन्ते, 'याभिरादित्यस्तपति, ताभिः पर्जन्यो वर्षति । पर्जन्येनोषधिवनस्पतयः प्रजायन्ते । ओषधिवनस्पतिभिरन्नं भवति' इत्यादि । वाजसनिरादित्यो वाजिरूपधरो यजूंषि विश्राणयामासेति च नूनं वाजपदप्रयोगेण व्यज्यते । आदित्यान्तर्वर्ती भगवान् वाजिरूपधरो हरिरस्योपदेष्टेत्युदितमेव श्रीभागवते । नूनं स याज्ञवल्क्यो योगीश्वरो मधुकैटभापहृत वेदरूपव्यष्टिनिर्माणगणनकोशस्य वेधसोऽनुग्रहाय सर्गादौ अवतीर्णं सौशील्यशेवधिं श्रीनिधिं वाजिमुखमेव स्वयमधीतापेतवेदतया शरणमुपगम्याधिजिगमिषुः आदित्यमण्डलमध्यमध्यासीनं तमेव त्रयीमयं हिरण्मयं पुरुषमुपतस्थे । तत् स वत्सलो वाजी भूत्वा प्रत्यग्राणि यजूंषि प्रतिपादयामास । तदयं तस्मादधीतवेदो वाजसनेय इति ।

एवम्भूतायां वाजसनेयशाखायां संहिताभागे चत्वारिंशदध्यायात्मके गते वाजसनेयिब्राह्मणं परस्तात् । तत्र संहितोपनिषद्भूतं चत्वारिंशमीशावास्यं व्यावर्तयितुं वाजसनेयिब्राह्मणोपनिषदिति व्यवह्रियते । वाजसनेयशाखाध्यायिनो वाजसनेयिनः; तद्ब्राह्मणमिति तदर्थः ।

तस्यास्य ब्राह्मणस्य शतपथब्राह्मणमिति संज्ञान्तरमपि संप्रतिपन्नम् । शतं पन्थानः = अध्याया अस्येति शतपथम् । माध्यन्दिनब्राह्मणे शतमेवाध्यायाः । काण्वे यद्यपि चतुरधिकं शतमध्यायाः, अथाप्यल्पाधिकत्वात् तदुपेक्षया तथैव प्रथेति प्रतिपत्तव्यम् । एवं हि विभजन्ति — काण्वशतपथे काण्डानि सप्तदश (१७), अध्यायाः चतुरधिकं शतम् (१०४), ब्राह्मणानि पञ्चत्रिंशदुत्तरचतुश्शतीमितानि (४३५), कण्डिका षडुत्तराष्टशत्यधिकषट्सहस्रीसंख्याताः (६८०६); माध्यन्दिने तु शतपथे काण्डानि चतुर्दश (१४), प्रपाठकाः अष्टषष्टिः (६८), अध्यायाः शतम् (१००), कण्डिकाः चतुर्विंशत्युत्तरषट्छत्यधिक सप्तसहस्रीसंख्या (७६२४) इति । कण्डिकाविभागो नावश्यमर्थपार्थक्ये सत्येव, असमाप्तेऽपि वाक्ये तद्दृष्टेः । नूनं निरूप्यमाणस्य विषयस्य असमाप्तत्वं सावशेषत्वं व्यङ्क्तुमेव वाक्यमध्य एव खण्डकण्डिकादिविभागः, यथा छान्दोग्यतैत्तिरीयादौ, 'ता यदा सहस्रं संपेदुः', 'स तपस्तप्त्वे' त्यादौ । अत्र काण्वे षोडशधा सप्तदशधा च विभजनं लक्ष्यत इति परिष्कारारम्भे प्रादर्शयाम । एवञ्च षोडशधा विभागपक्षे माध्यन्दिन इव

काण्वेऽपि प्रवर्ग्यभागः ब्रह्मपरबृहदारण्यकभागेन सहैकस्मिन् काण्डे निविशते। अस्तु काममरण्येऽधीयमानत्वं वा अरण्याध्ययनाधेयफलकत्वं वा अगृहस्थैर्विरक्तैर्ग्रामनगरत्यागिभिररण्ये वृक्षच्छायासु वसद्भिरप्यवश्याध्येयत्वं वा आरण्यकपदप्रवृत्तिनिमित्तं प्रवर्ग्यभागात् पाश्चात्यस्यैव — अथापि तद्घटितत्वादेव स काण्डः कृत्स्नो बृहदारण्यकमिति भूम्ना व्यवह्रियते। एवं विशिष्टे बृहदारण्यकव्यवहारात् प्रवर्ग्यभागोऽपि अरण्येऽधीत एव फलाय कल्पत इति वेधाद्यधिकरणे वर्णितं व्याख्यातृभिरित्यप्याशयीरन्। एवमपि बृहदारण्यकस्य तृतीयाध्यायादारभ्यैव ब्रह्मपरता काण्वे। माध्यन्दिने च, 'द्वया ह प्रजापत्याः' इत्यादेरेव, ततः प्राच्यमध्यायत्रयं प्रवर्ग्यपरमिति।

प्रतिवेदं प्रतिशाखमन्ते आरण्यकमस्ति; यत्रान्त्यो भाग उपनिषदित्युद्घुष्यते। तत्रान्यानि आरण्यकानि अपेक्ष्य आरण्यकमिदं प्रवर्ग्यभागेन समस्तं व्यस्तं वा आकारतो बृहदिति बृहदारण्यकमिति अन्वर्थं प्रथते। व्याख्यानस्याऽऽकारे वैपरीत्यसंभावनायामपि मूलग्रन्थो दृश्यमानः छान्दोग्यात् इतरबृहतो बृहत्तर इत्यत्र न विवादस्यावसरः। वेदशाखानामानन्त्यादुपनिषदामानन्त्येऽपि साम्प्रतमधिकं प्रसिद्धास्तावत् अष्टोत्तरशतमुपनिषद एव। तत्र सर्वासां निर्विचिकित्सं प्रामाण्यं पारम्परिकं प्रसिद्ध्यति, न वेत्यन्यदेतत्। तत्र पूर्वाभ्य इवोत्तराभ्योऽप्युपनिषदियं बृहतीति सुदर्शमेतत्।

सतीष्वप्येतावतीषु उपनिषत्सु आदिमा दशैवोपनिषदो मतप्रवर्तकानां प्राचामाचार्याणां प्राचुर्येणादरपदमभूवन्। न तावता अन्यासां सर्वथैवाप्रामाण्यमाशङ्कितुं साम्प्रतम्। यतो ब्रह्मसूत्रकृता भगवता बादरायणेनैव, "जगद्वाचित्वात्", "ज्योतिरुपक्रमा तु तथा ह्यधीयत एके" इत्यादौ कौषीतकिश्वेताश्वतरादीनामप्युल्लेख आशयित इति निर्विवादा निरूपणसरणिर्भाष्यकृतां सर्वेषाम्। तदिदमनन्तरे शिष्टोपनिषद्भाष्यसरे निश्शेषं प्रदर्शयेम। अथापि अष्टोत्तरशतवारमावर्तनीयाया गायत्र्याः, 'दशावरा गायत्री' ति दशकृत्वो जपेनापि क्रियानिष्पत्तिवत् अष्टोत्तरशतसंख्यासूपनिषत्सु दशेमा उपनिषदोऽलमधिगन्तव्यस्य ब्रह्मणोऽधिगमायेति सर्वेषामेकवाक्यता विदुषां संलक्ष्यते।

अत्र च दशके यजुरुपनिषदश्चतस्रः ; सामोपनिषदौ द्वे ; अथर्वोपनिषदस्तिस्रः ; ऋगुपनिषदेका । चतसृषु च शुक्लयजुरुपनिषदौ द्वे ; अन्ये द्वे कृष्णयजुरुपनिषदौ ; कठशाखा हि कृष्णयजुर्वेदीयेति । तत्र आदितः पारम्पर्येण प्राप्तशाखा अपेक्ष्य आदित्यादभिनवं प्राप्तायामयातयामाभिधायां शुक्लयजुश्शाखायामादरातिशयादिव आद्यन्तयोस्तन्निवेशेनान्यासामन्तर्निक्षेपः कृतोऽस्ति । 'वेदानां सामवेदोऽस्मी' ति प्रसिद्धस्य साम्नोऽनन्तरं स्थानं दित्सव इव तदुपनिषद्द्वयम् उपाद्योपान्त्यरूपेण परिकल्प्य तन्मध्ये न्यवेशयन्त तदन्याः ।

आसु च दशस्वर्थवर्णनसरणिरप्युत्तरोत्तरसंश्लिष्टा शुभावसाना संलक्ष्यत इति च श्लाघनीयक्रमनियममित्थम्भूतमिदं दशकं व्याख्यानोपव्याख्यानादिभिः शाखोपशाखाहितप्रचारं प्राज्ञैरकारीत्यध्यवसीयते । तदिदं दशोपनिषदर्थसारोद्धारेण संजिघृक्षामः-

### उपनिषद्दशके अर्थनिरूपणक्रमः

तत्र सर्वप्रथमपरिगणितायां संहितान्तर्गतायामीशोपनिषदि प्रपञ्चस्य परमात्मनियाम्यत्वम्, अन्तर्बहिस्तद्व्याप्तत्वम्, तत्सृष्टत्वमित्याद्युपदिश्य तद्विद्ययैव साध्वसाधुकर्माचरणानाचरणसनाथया तदनुग्रहेण तत्कल्याणतमरूपदर्शनेनाखिलकल्मषनिर्हरणेनामृतप्राप्त्या तन्नमःप्रावण्यरूपं निःश्रेयसं न्यरूपि ।

तत्र मध्ये, 'नैनद्देवा आप्नुवन् पूर्वमर्षत्' इति देवानामपि स दुष्प्राप इत्यवाचि । ओमिति प्रणवेन तदनुसंधानमदर्शि । 'यत्ते रूपं कल्याणतमम्' इति चादित्यमण्डलान्तर्वर्तिदिव्यमङ्गलविग्रहानुसंधानमसूचि । अन्ते पूषयमाग्निप्रार्थनारूपा मन्त्राश्च पठिताः । तत्र पूषादिपदानि न सूर्याद्यर्वाचीनदेवनापराणीति यद्यपि विशेषज्ञानां विवेको भवितुमर्हति, अथाप्यापातबुद्धीनां न भवेत् । प्रत्युत सत्कर्माचरणस्य, असत्कर्मनिवृत्तेः, आध्यानस्य चामृतत्वसाधनस्य निर्दुष्टकरणकलेबरनिर्वर्तनीयतया तत्तत्करणमहाभूताधिष्ठातॄणां देवानां प्रसादमन्तरेण तत्संपत्तिर्न संभाव्यत इत्यवश्यमेव सर्वदेवतावशीकरणकर्माणि विभाव्यानीति मन्येत । एवं तत्तद्देवतास्वरूपस्वभावसमधिगमाय मुमुक्षौ प्रयतमाने तमनुग्रहीतुं केनोपनिषदवततार । उपदिदेश च,

यैरिन्द्रियाद्यैर्वशीकृतैः स परमात्मा निध्येयोऽस्ति, तेषां सर्वेषामपि स एक एव मुख्यः प्रेरक इत्येवं बुद्ध्या निध्यानमनुवर्त्यताम्; अलं तत्तदिन्द्रियदेवानां पृथग्भूतानामुपासनप्रयासेन परमात्मनः पूर्णग्रहणाभिमानपुरस्कृतेन। न हि कश्चिच्चक्षुषा सुबहु संस्कृतेनापि गन्धं घ्रातुमलम्। अतो नेन्द्रियाणि स्वशक्तिमतिक्रम्य ब्रह्मणो-ग्रहणमाधास्यन्ति; नतरां पूर्णस्य। न च परमात्मा परिच्छिन्नप्रभावः, यस्य पूर्णग्रहणेऽभिनिविश्यते। न चेन्द्रियाधिष्ठातारोऽपि देवाः स्वतन्त्राः, किन्तु सर्वथा तस्मिन् परस्मिन्नेव त आयतन्ते। तदिदं निदर्शनेन निरूपयामः। ये खल्विमेऽग्निवाय्विन्द्राः भूम्यन्तरिक्षद्युलोकाधिपतयः, तेऽपि न तस्य संकल्पमन्तरेण स्वयं किञ्चित् व्यापरितुं पारयन्ति। तथा हि सर्वदेवसंभावनीयेनोत्कृष्टेनाऽऽकारेण तेन कदाचित् प्रादुर्भूतेन तृणं निक्षिप्तं नाशक्नोद् दग्धुमग्निः; न चालयितुं वायुः। एवमन्योऽपि। तत् सर्वान्तःप्रविष्टः स एकः सर्वथोपास्यः। नूनं न स कार्त्स्न्येन पार्यते करणैरधि-गन्तुम्, अथापि न स सर्वात्मना दुर्ग्रहः। स च वननामा सुखं वननीयः। तेन सर्वं संपत्स्यत इति।

अनेन चोपदेशेनेदमप्यस्माभिरधिगन्तव्यम् — परमात्मन्यनुकूले तद्भक्तौ प्रयतमानानां न कश्चित् प्रतिकूलो भवितुमलम्भविष्णुः। यथा हि सर्वलोकशरण्यं राघवं विभीषणे शरणं गते प्रातिकूल्ये प्रवृत्ताः सुग्रीवादयः तत्सुहृत्तमा अपि न स्वचिकीर्षितं कर्तुं प्रबभूवुः, तथैव सर्वा अपि देवता न भगवद्भक्तप्रातिकूल्ये प्रगल्भन्त इति।

लोके सर्वेषामपि जन्तूनां संभावितेषु क्लेशेषु मरणक्लेशो महिष्ठः। अतस्तस्य यो विधाता, तस्मात् सर्वो बिभ्यति। स च मृत्युः। सोऽपि भगवत्परतन्त्रः तदुपासन-लम्भनीयस्वक्षेमः तदुपासकमहापुरुषानुबन्धिवर्गेऽपि (नचिकेतसीव) निरपराधवृत्तिं स्वस्य सर्वदा रोचयमान इति नाचिकेतोपाख्यानव्याजेन कठोपनिषत् मुक्तकण्ठमाह। यमर्थं यमः स्वयमेवैवमाह, — 'ब्रह्मक्षत्रादिसर्वप्रपञ्चरूपमोदनं भक्षयतो हरेरहं दध्यादिवदुपसेचनीभवन् चराचरौदनचरणं स्वादु निर्वर्तयन् स्वयमपि भक्ष्य एव भवामीति अहं हरिगुरुवशगोऽस्मि, न स्वतन्त्रः। तेन गुरुणोपदिष्टा विद्यैव मामपि तारयति। सर्वप्राणिमारणप्रवृत्तो मत्तोऽहं न भगवन्तं वेद्मीति केचन मन्येरन्।

(लोके पुंसां मदोऽमदो वा नूनं तदधीनः)। कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति। विवेकिनश्च कथं मदः? (केनोपनिषदुक्ताः) वाय्यग्नीन्द्रादय इवान्येऽपि, अहमपि ततो बिभीमः। भयादस्याग्निस्तपति भयात् तपति सूर्यः, भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम इति तत्त्ववित् वेद। सूर्यादेस्तपनादिर्व्यापारो नियमितः, मृत्योश्च मे मारणदेशं प्रति धावनं व्यापार' इति। एवमिहोपनिषदि मृत्युनाऽन्ववादि, यदिदं प्रागेव नचिकेताः प्रजानन् तमेवाभिमुखीकृत्य निश्शङ्कमाह स —
'स्वर्गे लोके न भयं किञ्चनास्ति; न तत्र त्वम्; न जरया बिभेति; उभे तीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोके' इत्यनेन, 'अपहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठती' ति केनोपनिषदन्ते दर्शिते मुख्यस्वर्गे दुःखासंभिन्ने अग्रस्ते अनन्ते अभिलाषोपनेये मृत्योरविकारलवलेशवैधुर्यम्। ईदृशस्वर्गप्राप्तिश्च योगेन, योगश्च केनोपनिषत्प्रस्तुतेन्द्रियादिवशीकरणप्रवृत्तकर्तव्येन वशीकार्यकाष्ठाभूतविष्णुवशीकरणेन। स च विष्णुः पूर्वं वननाम्ना व्यपदिष्टः सौलभ्याय सर्वस्यापि हृदयकुहरं समाश्रित्याङ्गुष्ठमात्रोऽवतिष्ठते सह स्वात्मना। तदुपास्तौ मन्त्रश्च प्रणव इति प्राच्योपनिषद्द्वयप्रस्तुतमिह विस्तृतं किञ्चित्।

अथ प्रश्नोपनिषत् प्राक्तनोपनिषत्संगृहीतमर्थं विवरीतुं प्रावर्तिष्ट। पूर्वत्र हि, सर्वजगत्कारणत्वं यत् परमात्मनो मुख्यं सर्वैरुपासकैरदसीयाशेषमहिमाधिगमस्य कृते अवश्यविज्ञेयमस्ति, न तत विशदमभ्यधायि। परमात्मजीवात्मनोर्वैलक्षण्यमपि कठोपनिषदि केवलं मात्रया प्रादर्शि, 'न जायते म्रियते वा', 'अध्यात्मयोगाधिगमेन देवम्' इति। वशीकार्येषु वागादिषु प्राणस्य प्राधान्यं ततो नाज्ञायि। उपासनकरणभूते च प्रणवे एकद्वित्रिमात्रातारतम्येन फलभेद इत्यादि च नैवाबोधि। सर्वमिदं सम्यगुपदिश्य, मुख्यप्राणस्य स्वार्थं स्वपरिकरभूतेन्द्रियपुष्टये च अशितपीते स्वीकुर्वतः तज्जरणनिर्वर्तनाय सर्वस्वापकालेऽपि सह जाठराग्निना जागरणप्रतिपादनेन तत्प्राधान्यमवगमय्य, षोडशकलं जीवमुपपाद्य तद्विलक्षणं परमं प्रणववेद्यं प्रकृष्टमोक्षप्रतिपादकं प्रत्यपीपददियमुपनिषदिति।

एवं, 'यः पुनरेतं त्रिमात्रेण ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत' इति प्रणवरूपाक्षरेण परमात्मवेदने प्रस्तुते, मुण्डकोपनिषत् स्वयमनेनाक्षरेणाक्षरविद्यां

काञ्चिदुपदेष्टुमुदद्युयुजे, 'येनाक्षरं पुरुषं वेद सत्य' मिति । प्रणवरूपञ्चाक्षरम्, 'सर्वे वेदा यत् पदमामनन्ती' त्युक्तरीत्या वेदादिसर्वविद्यास्थानगर्भम्, एतद्विद्या च परापरभेदेन द्वयी, यतः परोक्षज्ञानरूपात् श्रवणादेः परं तदपरोक्षज्ञानमिति विवेचयामास । प्रागुक्तं ब्रह्मणो जगत्कारणत्वमभिन्ननिमित्तोपादानत्वरूपम्; ऊर्णनाभिवत् उपादानभूताचेतनशरीरकं सत् खल्वक्षरमिदं कार्यं सृजत् स्वयमुपादानमपि भवतीति दर्शयामास, 'यथोर्णनाभिः सृजते गृह्णते चे' ति । तत्र च दृष्टान्तैः कार्यकारणयोर्वैलक्षण्यम, एकरूपादपि कारणाद् विचित्रानेककार्योत्पत्तिञ्च गमयामास । दृष्टान्तत्रयदर्शनेन च ईश्वरः, अचित, चिदिति तत्त्वत्रयं संभूतं कारणं कार्यञ्चेति सूचयामास । यत् तत् कवयो वेदयन्ते, तत्र स्थाने परमं पुरुषं प्राप्तस्य प्रश्नोपनिषदुक्ता मुक्तिश्च, 'निरञ्जनः परमं साम्यमुपैती' ति परमसाम्यरूपेति विशदयामास । कर्म द्वैविध्यमुपवर्ण्य काम्यकर्मप्रवणानां छिन्नभिन्नसच्छिद्रप्लवसमारूढानां सागरस्येव दुष्करं संसरणस्य तरणमिति निष्कामकर्मनिष्ठामुपदिदेश । शरीरवृक्षे निवसतोर्द्वयोः पक्षिणोः सख्योर्मिथो वैलक्षण्यञ्च व्याचचक्षे । एवमक्षरमन्त्रकरणिका अक्षरब्रह्मगोचरा विद्या काचिदिह विशदमुपादेशि ।

माण्डूक्योपनिषत् पुनः प्रणवस्यास्यैकाक्षरत्वेन प्राग्वर्णितस्य अकार–उकार–मकाररूपवर्णत्रयात्मत्वमर्धमात्रात्मकनादशिरस्कत्वम्, एकैकाक्षरस्य अनिरुद्धादितत्तद्व्यूहपरत्वम्, तत्तदुपासने फलविशेषम्, मुक्तये परवासुदेवोपासनञ्च गूढं जीवस्य जागरस्वप्नसुषुप्तितुरीयदशाभेदप्रदर्शनमुखेन संक्षिप्यैवोपक्षिप्य सुबहु प्रणवव्याख्यानं व्यधितेति वक्तव्यम् ।

एवं प्रणवे यत्र अवान्तरविभागानामर्थविशेषाणाञ्च विशदमवगमो माण्डूक्यात्, तैत्तिरीयोपनिषत् तस्य अकार–उकार–मकारसंहितारूपतां प्रणवस्य दर्शितां मनसिकृत्य संहितोपनिषदं प्रस्तुत्य, प्रणववत् व्याहृतीनामप्युपासनमन्त्रत्वमुदीर्य, प्रणवमिमं सर्वकर्माङ्गतया प्रक्रम्य कर्माणि च प्रदर्श्य, मुण्डकोपनिषदि गदितं परमसाम्यं माण्डूक्ये, 'आनन्दमयो ह्यानन्दभुक्' इत्युक्तार्थशोधनेनोपपादयितुकामा आनन्दमयविद्यां प्रस्तुत्य आनन्दमीमांसामारभ्य, अतिशयितमानुषानन्दप्रक्रमेणानवधिकातिशयमानन्दमयस्याऽऽनन्दं निरूप्य, मुक्तो जीवः परमसाम्यप्राप्त्या जगद्व्यापारेऽपि

व्यापरितुं पारयेदिति मा कश्चिन्मंस्तेति जगत्कारणत्वमसाधारणमन्नमयाद्यविशेषेण विज्ञानमयादपि व्यावर्तमानं भृगुवल्लीमुखेन प्रतिपाद्य भोगसाम्यमेव परमसाम्यमिति व्यनक्ति स्म। यस्तु तैत्तिरीयोपनिषदि द्वितीयः प्रश्नः नारायणोपनिषदाख्यः, स योगिनां पाञ्चकालिकीमाह्निकप्रक्रियां निरूपयितुमिव प्रवृत्तः, 'क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः' इति मुण्डकोपनिषदन्ते स्पष्टं कर्मणामावश्यकत्वं प्रदर्श्य अन्ते पूर्वप्रश्नवत् आनन्दमयनिरूपणैदम्पर्यमात्मनोऽप्यदर्शयत्।

ऐतरेयोपनिषत् पुनः, ज्ञानमेव ह्यनुकूलमानन्दः इति सिद्धान्तं सूचयितुं सार्वज्ञ्याभावे संपूर्णानन्दप्रसक्तिविरहात् प्रज्ञानशक्तिं निरुरूपयिषुः प्रज्ञानब्रह्मविद्यामादृत्य, नानालोकसृष्टिमभिधाय, तिर्यक्षु गवामश्वानाञ्चातिशयमभिसंधाय, तत्रापीन्द्रियदेवतानां पूर्णकार्यकरणकौशलवैकल्यं व्युत्पाद्य, ऊर्ध्वप्राणिनां पुरुषाणां प्रकर्षं तत्र तत्तदिन्द्रियदेवतानां ब्रह्मणश्च पूर्णं प्रवेशञ्च प्रख्याप्य, दर्शनश्रवणादीनां बाह्यज्ञानानां संज्ञानविज्ञानप्रज्ञानादीनां मानसज्ञानानाञ्च भूमानं प्रतिपाद्य, एवम्भूतमनेवम्भूतञ्च सर्वं प्रपञ्चं प्रज्ञानब्रह्मप्रतिष्ठितं विदन् प्रज्ञात्मानुगृहीतः सर्वान् कामानाप्नोतीत्याह।

एवं तावदष्टावुपनिषदो दृष्टाः। ता इमा अनतिविस्तृताः केवलमेकैकविद्यानिरूपणैदम्पराः। अथ पुनर्विस्तृतं छान्दोग्यम्, ततोपि बृहच्च बृहदारण्यकम्। तत्र मुमुक्षूणामधिकाररुचिक्रममालोच्य बह्व्यो भक्तिविद्याः प्रस्तूयन्ते परं पुरुषमधिगमयितुम्। तत्र सर्वासां प्रणवप्रावण्यमनुरुध्य, यथा माण्डूक्यात् प्राच्य उपनिषदः अखण्डप्रणवम्, यथा च माण्डूक्यं सखण्डप्रणवम्, तथा स्वयमपि प्रणवं परिगृह्य, सामवेदनिविष्टतया स्वस्य, सामनिविष्टं प्रणवमादृत्य सामभक्त्यन्तर्भूतोद्गीथावयवं प्रणवं प्रस्तुत्यैवमाह — एषां भूतानां पृथिवी रसः; निराधारं प्राणिनां निवासो हि न संभाव्यते। पृथिव्या आपो रसः; अपामभावे हि पृथिवी नात्मानं लभते, न च फलाय कल्पते। अपामोषधयो रसः; तदर्थत्वात् तासाम्। ओषधीनां पुरुषो रसः; ओषधीभ्यो ह्यन्नम् अन्नरसमयश्च पुरुष इति। पुरुषस्य वाग् रसः (अत एव हि पुरुषसृष्टिं वर्णयन्ती श्रुतिः, 'आपः पुरुषवाचो भूत्वा समुत्थाय वदन्ती' ति वाग्व्यापारं सह दर्शयति) व्यक्तवाच इति हि पुरुषाः परान्

अतिशेरते इति। एवमुपवर्ण्य, वाचः ऋग् रसः, ऋचः साम रसः, साम्न उद्गीथो रसः इत्यचकथत् । तेन पृथिव्यां जन्म भेजुषां पुरुषाणां परमं संपाद्यमिदम्, यत् ऋक्सामोद्गीथाध्ययनं नामेति प्रतिबोधयति। योऽयमुद्गीथः प्रधानभूतः तस्मिन् पुरुषोपकरणेषु वागादिषु प्रधानस्य मुख्यप्राणस्य दृष्टिम्, स्वयं सामवेदनिविष्टतया नाना सामोपासनविधाश्च विधाय, प्रणवोद्गीथैक्यमभिधाय, 'ओङ्कार एवेदं सर्व' मिति सारभूतं प्रणवं प्रशंसति । विदधाति च परस्तात् मधुविद्यादीर्मुक्तिविद्याः। अधिकविद्याविधानञ्च नूनमसाधारणं छान्दोग्यस्येत्यन्यत्र दर्शितमित्यलं पिष्टं पिष्ट्वा।

अथ बृहदारण्यकम् । मन्त्रब्राह्मणाधिगतोच्चावचबाह्यकर्मवैयग्र्यव्यपोहनेन मानसकर्मानुष्ठाने व्यापारयितुं प्रवृत्तमारण्यकमादौ परिचितकर्मानुबन्धिष्वेव कांश्चिद् दृष्टिरूपान् मानसव्यापारान् विविधं फलमुद्दिश्य विदधाति, यासां खलु दृष्टीनां कर्मानुबन्धिनीनां कर्मवीर्यवत्तरत्वं फलमिति ब्रह्मसूत्रे साधारण्येन निरणायि। लोके हि राजादयः प्रजाभिः इन्द्रः चन्द्रः इति प्रशस्यमानाः तयोत्कृष्टदृष्ट्यैव तुष्टाः फलं प्रयच्छन्तीति प्रत्यक्षम्। तथेह फलं दर्शयति श्रुतिः। तेन अयथावस्थितस्य तदारोपज्ञानस्यैव तावत्फललम्भकत्वे, साक्षात् तत्तत्प्रशस्तवस्तुगोचरं यथार्थज्ञानं किमुतेति श्रद्धाऽपि संधुक्षिता भवति। अनया सर्वारण्यकसाधारण्या सरण्या प्रवृत्य वैतानिकेषु कर्मसु विशिष्टतया विश्रुतं वाजिमेधमेव गृहीत्वा तत्र यागान्तराण्यपेक्ष्यातिशयो यदायत्तः, तत्राश्वेऽपि अग्नावपि च दृष्ट्यभावे वीर्यवत्तरत्वरूपो न सिद्ध्यत्यतिशय इति दृष्टिविशेषान् प्रस्तौति प्रथममिदम्। तत्र प्रथमतः अब्रह्मज्ञपरिचितानामब्रह्मणामेव दृष्टिम्, ततो ब्रह्म प्रति पुरुषमानेतुं ब्रह्मदृष्टिञ्च विधाय, ब्रह्मज्ञानपरिकरतयाऽपेक्षितेषु प्राणस्य प्राधान्यात्, आन्तमुपनिषदि प्राणप्रस्तावस्य करिष्यमाणतया च, छान्दोग्यवत् स्वयमप्युद्गीथमुपादाय, उद्गातरि प्राणदृष्टिविधानादि प्रपञ्चयति।

एवं ब्रह्मदृष्टिविधानेन ब्रह्म प्रस्तुत्याथ साक्षादेव सामान्यविवेकविशेषोपदेशमुखेन तन्निरूपयति। तत्र जगत्कारणत्वस्य मुमुक्षुसामान्यावश्यविज्ञेयतया, जगदुपादानभावस्य चात्मशरीरभावायत्ततया, 'आत्मैवेदमग्र आसीत्' इत्येव तन्निरूप-

यितुमारभते । सामान्यसृष्टि-विशेषसृष्टि-अतिशयितसृष्टीरभिधाय, ‘ आत्मन इहोपादानत्वं नाऽऽहत्य अचेतनप्रपञ्चादिरूपेण परिणामात्, किं नाम, अव्यक्तशरीरकत्वा ’ दिति परमात्मानुप्रवेशेन विशिष्टमपि वस्तु विशिष्टमेवावतिष्ठत इति मुमुक्षुभिः, अहं ब्रह्मास्मीति विशिष्टोपासनमेव कार्यमिति सर्वोपासनसरणिं शिक्षयति ।

अथ केनकठादिदर्शितरीत्या सर्वा देवतास्तन्निघ्ना इति, ताश्च कर्मव्यग्रान् स्वं लोकं नयन्त्यः स्वपरिचरणरूपेषु पशुशतेषु व्यापारेषु प्रेरयन्त्यः पशू कुर्वन्ति, तदर्थमेव ब्रह्मविद्याप्रवृत्तिमपि निरुन्धन्तीति, तासामपि परमात्मतो भिया नाधिकं प्रत्यूहविधानप्रागल्भ्यमिति चोपवर्ण्य तत्तद्देवताप्रीणनक्षुद्रकर्मचरणात् परावर्त्य आत्मविज्ञानपूर्वकानन्तफलपर्यवसायिनि प्रकृष्टे कर्मणि प्रवर्तयति ।

### वेदनोपासनदर्शनानामैक्यस्येतोऽधिगमः

यथैवं पूर्वोपनिषदुद्दिष्टानामेषामर्थानाम्, एवमस्यापि कस्य चित् निखिलनिगमशिखरहृदयकुहरनिगूढस्यानर्घस्यार्थस्यात्यर्थं वैशद्यमत्र विधित्सितमित्यतोऽपि विशिष्यत एतत् । तथाहि --

सुदूरपरिश्रमसंपादितस्य, स्थिरम्, दृढमित्यभिमतस्यापि सर्वस्य फलस्य आदिमध्यान्तेष्ववर्जनीयं दुःखानुषङ्गमनुदृश्य विरज्य विशिष्टं फलमन्विच्छद्भिः अनन्तस्थिरफलब्रह्मनिश्चयमधिगच्छद्भिरपि यथावदुपायानुष्ठानवैयग्र्यविरहे न समीहितं लभ्यत इति मुक्तकण्ठमाह, (३-४-१५) ‘अथ यो ह वा अस्माल्लोकात् स्वं लोकमदृष्ट्वा प्रैति, स एनमविदितो न भुनक्ति, यथा वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतम्’ इति । भगवद्वेदनविधुरान् भगवान्न परिपालयतीति वदताऽनेन वचनेनान्यद् रहस्यं व्यज्यते, यत् खलु भगवता भाष्यकृता वाक्यकारवचनादि साक्षीकृत्य, ‘वेदनमुपासनं स्यात्’, ‘उपासनं स्यात् ध्रुवानुस्मृति’ रिति वेदनध्यानैक्यं स्थापयता, “सेयं स्मृतिर्दर्शनरूपा प्रतिपादिते” त्यभाषि, तदत्र बृहदारण्यक एवेह विद्युपास्योरिव दृशोरपि व्यतिकरेण वेद्यते । अत्र हि, ‘ अदृष्ट्वा प्रैति चेत्, एनमविदितो न भुनक्ति परमात्मे ’ ति दर्शनवेदनयोरैक्यमभिसंधीयते, तथा समनन्तरमेव, ‘ आत्मानमेव लोकमुपासीते ’ ति वाक्येनोपासनैक्यम् ।

## प्राणादिपञ्चकरूपपरिकरप्रख्यापनम्

ईदृशदर्शनसमानाकारोपासनरूपवेदनसंपत्तये पुरुषेण करणकलेबरे स्वायत्ते कार्ये । तत्रेन्द्रियादीनां वशीकारप्रकारश्च रूपकविन्यासेन सुनिरूपितः कठवल्लीषु, 'आत्मानं रथिनं विद्धि शरीरं रथमेव च । इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।', 'इन्द्रियेभ्यः परा ह्यर्थाः', 'यच्छेद् वाङ् मनसी प्राज्ञः' इतीति निष्प्रपञ्चम् । तत्रान्यदपि किञ्चिदखिलोपनिषदन्तर्निगूढमधिगन्तव्यम् । यथा — ईशोपनिषदि, 'संभूतिञ्च विनाशञ्च' इति संगृहीतं करणनियमनम् । तत्र कानि करणानि परमात्मवेदने प्रधानानीत्यत्र प्राणमनोवाक्चक्षुश्श्रोत्राणीति श्रुतयोऽध्यवस्यन्ति । अत एव केनोपनिषदुपक्रमे, 'केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः । केनेषितां वाचमिमां वदन्ति चक्षुःश्रोत्रे क उ देवो युनक्ति' इति पञ्चेम एव परिकराः प्रादर्शिषत । कठोपनिषदि तु सामान्यतः सर्वेषामिन्द्रियाणां मनस्सनाथानाम् अत्मनः शरीरस्य परमपुरुषस्य च वशीकार्यत्वमवेदि । अथ प्रश्नोपनिषदि, (२) 'वाङ्मनश्चक्षुः श्रोत्रञ्च । ते प्रीताः प्राणं स्तुवन्ति' इति, 'या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि । या च मनसि संतता शिवां तां कुरु मोत्क्रमीः' इति च पञ्चैतानि प्राधान्येन निरदेशिषत । नूनं (तैत्तिरियोपनिषदि भृगुवल्ल्यां) लक्षणमुखेन ब्रह्म दर्शयिष्यन् वरुणः, 'अतिप्रसङ्गादिदोषदूरमिदं सल्लक्षणम् । इतो ब्रह्म यथावन्निर्धार्यं तपसा, 'किं तत् स्या' दिति, इति तदुपयुक्तोपकरणशुद्धिमपेक्षितामुपक्षेप्तुमेव प्राणादिपञ्चकमिदं पुत्राय भृगवे प्राह स्म, 'अन्नं प्राणं चक्षुः श्रोत्रं मनो वाच' मिति । तत्र परिष्कारे भाष्याशयाविष्करणपूर्वमिदमावेदयाम । यत् पुनरन्नमेकमधिकं तत्र, तत् बृहदारण्यकवक्ष्यमाणरीत्या शरीररूपं परिकरमभिप्रेत्येति च तत्राभ्यधाम ।

एवम्भूतस्यास्य पञ्चकस्योपयोगप्रकारमैतरेयोपनिषत् विशदमुदैरयत् । तथा हि तत्र आत्मषट्कभागात् प्राक्तनेऽध्याये अन्ते, — 'अनकाममारो देवरथः । तस्य वागुद्धिः । श्रोत्रे पक्षसी । चक्षुषी युक्ते । मनः संग्रहीता । तदयं प्राणोऽधितिष्ठति । तदुक्तमृषिणा, 'आ तेन यातं मनसो जवीयसा निमिषश्चिज्जवीयसे' ति' इति । अस्यायमर्थः — सकलदुष्कामक्षपणतया काममार एव भवन्

अकाममारविलक्षणोऽयं परदेवगोचरतया तत्प्रापकतया च देवरथ इति कथ्यमानो भक्तियोगः। तस्य वागादिपञ्चकाधीनः प्रचारः। तत्र वाक् ईषादण्डः, श्रोत्रे चक्रे, चक्षुषी युग्यौ वाहौ, मनः संग्रहीता, प्राणोऽधिष्ठाते'ति। एवमत्र प्राणप्राधान्यञ्च प्रपञ्चितमस्ति।

छान्दोग्येऽप्येतस्य पञ्चकस्य प्राधान्येन निर्देशो लक्ष्यते, यथा आदौ (१-२) वाक्चक्षुश्श्रोत्रमनःप्राणानां ग्रहणेनोद्गीथविद्या विमृष्टा। परंतु घ्राणेऽपि प्राणवायुप्रवेशोपकरणे प्राणपदप्रयोगदर्शनात् नासिक्यः प्राणोऽपि प्रस्तावं प्रापितः। अन्ते च मुख्यप्राणस्य मुख्यत्वमघोषि। अथ द्वितीये (२-७.), 'प्राणेषु पञ्चविधं सामोपासीते'ति प्रस्तुत्य पञ्चकमिदमदर्शि। तत्र प्राणपदं घ्राणपरं शाङ्करभाष्यानुरोधे; अथाप्यसद्भाष्यकृत् नैवमभाषिष्टेत्यत्र कारणं परिष्कारे प्रादर्शयाम। न केवलमेतावत्। 'परोवरीयांसि वा एतानी'ति पञ्चानामेषां परत्वे सति वरीयस्त्वमपि तत्र प्रख्यापितम्। अथ तृतीये (३-१३.), 'तस्य हवा एतस्य हृदयस्य पञ्च देवसुषयः' इति हृदये सुषिपञ्चकमुपक्रम्य, 'ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः' इति वक्ष्यत् मध्ये प्राणापानव्यानोदानसमानान् चक्षुर्वाक्छ्रोत्रवायुमनांसि च सुषिसंबन्धितया दर्शयत् पञ्चकप्रभावं कञ्चित् ग्राहयामास। चतुर्थे (४-३) संवर्गविद्यायाम्, 'प्राणमेव वागप्येति, प्राणं चक्षुः, प्राणं श्रोत्रम्, प्राणं मनः' इतीदं पञ्चकं गृहीत्वा प्राणस्य संवर्गत्वं शशंस। पञ्चमे च प्राणविद्यायां वाक्चक्षुश्श्रोत्रमनोभिः प्राणस्य कलहमन्ते पराजितानां प्राणाधीनस्थितिविवेकञ्च वर्णयत्, पञ्चकमिदमेव निर्दिदेश। एवमत्र वैश्वानरविद्यायामग्निहोत्रहोमभावितत‍ृप्तिवर्णनावसरे पञ्चकमिदमुवाद। एवमुपनिषदन्तरेष्वपि द्रष्टव्यम्।

यथेमा उपनिषदः सर्वेष्वपि करणेषु प्रस्तोतव्येष्वपि पञ्चेमानि प्राधान्येन परिगणयन्ति, तथा बृहदारण्यकमपि। न केवलमेतावत्। तेषां कार्यविशेषमपि गृणाति; तेष्विदमिदं प्रधानमिति विवेकमपि विस्तृणाति। तथाहि — (३-३) उद्गीथविद्यायां पञ्चकमिदमुपन्यस्तम्; घ्राणमपि सह, यथा छान्दोग्ये। अनन्तरब्राह्मणे (३-४) च, 'प्राणन्नेव प्राणो नाम भवति वदन् वाक् पश्यन् चक्षुः शृण्वन् श्रोत्रं मन्वानो मनः' इति पञ्चकमिदन्। तत्रैवोपरि, यथा जायापुत्रवित्तशरीरविकल-

स्याकृत्स्नत्वमपेक्षितकार्याक्षमत्वम्, एवं मनोवाक्प्राणचक्षुःश्रोत्रविकलस्य मुमुक्षोरिति निरूपयदाह, 'सोऽकामयत जाया मे स्यात् अथ प्रजायेय अथ वित्तं मे स्यात् अथ कर्म कुर्वीयेति। एतावान् वै कामः। तस्यो कृत्स्नता — मन एवास्यात्मा वाग् जाया प्राणः प्रजा चक्षुर्मानुषं वित्तम् चक्षुषा हि तद् विन्दते, श्रोत्रं दैवम् श्रोत्रेण ह्येतच्छृणोति आत्मैवास्य कर्म आत्मना हि कर्म करोती'ति। शरीरमन्तरा कर्मणामाचरणं न संभवतीति यत् अपेक्षितं साधनं शरीरं चेष्टाश्रयः, तदिह आत्मपदेन विवक्षितमिति व्यक्तं भाष्ये। 'मन एवात्मे'त्यत्र पुनः मनसि स्वाभेदाध्यवसायः मनसः सर्वापेक्षयाऽन्तरङ्गसार्वकालिकोपकरणभावात्। बुभुक्षोर्मुमुक्षोश्चापेक्षिताः परिकराः चक्षुर्व्यापारणेन संपाद्या भवन्ति कतिचित्, अन्ये लौकिकवैदिकोपदेशश्रवणेनाधिगन्तव्या इति वित्तं चक्षुःश्रोत्ररूपेण द्विधा व्यभाजि। तदेवं बृहदारण्यके पञ्चकमिदं किञ्चिद् विविच्य वेदितं भवति।

अथ चैषु पञ्चसु त्रयाणां प्रधानतरत्वं प्रतिबोधयितुं सप्तान्नब्राह्मणं प्रवर्तते। तत्र सप्तस्वन्नेषु प्रकृतपञ्चकान्तर्गतं वाङ् मनः प्राण इति त्रितयम्, छान्दोग्येऽपि, 'अन्नमयं हि सोम्य मनः आपोमयः प्राणः तेजोमयी वाक्' इति अन्नापेजसामशितानामणिष्ठांशाप्यायिततया प्राधान्येन कीर्तितम्, 'त्रीण्यात्मनेऽकुरुतेति। मनो वाचं प्राणम्; तान्यात्मनेऽकुरुते'ति संकीर्त्य, चक्षुःश्रोत्रयोः, 'अन्यत्रमना अभूवम्, नादर्शम्; अन्यत्रमना अभूवम् नाश्रौष'मिति मनो विना व्यापरणवैधुर्यात् ज्ञानेन्द्रियेषु मनसः प्राधान्यात् मनोमात्रस्य, कर्मेन्द्रियेषु प्राधान्यात् वाचश्च ग्रहणमधिगमय्य, पूर्वोक्तरीत्या वाङ्मनसयोर्दम्पत्योः प्राणं पुत्रं निर्दिश्य, 'स इन्द्रः, स एषोऽसपत्नः' इति प्राधानतमत्वं प्राणस्य प्रतिबोध्य अन्ते, 'एकमेव व्रतं चरेत् प्राण्याच्चापान्याच्चे'ति प्राणायामरूपस्य योगाङ्गस्य आयुष्यारोग्यकरणजय-मनःप्राणिधानादिसर्वनिर्वाहकतया प्राणस्य ज्येष्ठस्य श्रेष्ठस्य विषये प्रकृष्टमादरं दर्शयति।

वागादयः, 'प्राणस्यैव सर्वे रूपमभवन्' इति प्राणा इत्येव यथा कीर्त्यन्ते, तथा जीवोऽपि बद्धः प्राणभावनीयस्त्वभव्यतया प्राण इत्येव भण्यत इति च प्राणस्य प्रशंसामभिसंधत्ते। एवमुपर्यध्यस्य पञ्चकस्य संकीर्तनं द्रष्टव्यम्। मुख्या-

मुख्यसर्वप्राणकलहकथावर्णनस्य बहुत्र स्थितावपि प्राणप्राधान्यमित्थमिदं बृहदारण्यकमेव प्रपञ्चयति ।

एवम्भूतज्येष्ठश्रेष्ठप्राणविषये उपासनमिव मन्थकर्मापि किञ्चिदिह छान्दोग्य इव व्यधायि । परन्तु ततोऽत्र तस्य कियानपि विस्तरः । आदित्योपस्थानादि ह्यधिकमत्र वर्णितमस्ति । एतत्संदर्भसमीक्षणे च नूनं याज्ञवल्क्य उद्दालकादिमं प्राणोपासनप्रकारमेवाधीत्यानुष्ठाय प्राणवशीकरणेनादित्यस्योपासितस्यानुग्रहेणापूर्वाणि यजूंष्यवापेति स्यादिति तर्क्यते । तदेवं सिद्ध्यत्यस्यातिशयः ।

विद्याः पुनश्छान्दोग्य इवेहापि बह्व्यः प्रादर्शिषत । तत्रापि पुंसामिव स्त्रीणामपि समस्ति ब्रह्मविद्यायामधिकार इति गार्गीवादनिबन्धनेन तथा मैत्रेयी ब्राह्मणस्य, न सकृदेव, किन्तु द्विर्निबन्धनेन च निदर्शयत्, 'सीतायाश्चरितं महत्' इति सीताचरितसंग्रथनेन श्रीमतो रामायणस्य महत्त्वमिव स्वस्य बृहत्त्वं स्फुटयति । अत एवान्तेऽपि अनेकविधवेदाध्यायिपुत्रोत्पादन इव पण्डितदुहितृत्पादनेऽपि पन्थाः प्रदर्श्यतेऽत्र बृहदारण्यके । तदिदं बृहदारण्यकमेव प्रमाणीकृत्य विद्यायां पुंसामिव स्त्रीणामप्यधिकारमपशूद्राधिकरणेऽन्वमन्यन्त वैदिकास्तिकविमर्शकाः । एवम्भूतबृहदारण्यकघटित शुक्लयजुःशाखाध्यायिकुलसंबन्धादिव औत्तरस्त्रियो दाक्षिणात्यवैलक्षण्येन बृन्दशो भगवद्गाने बहिरपि भृशप्रवृत्ता लक्ष्यन्ते ।

तदेवं सिद्ध्यत्यस्य शब्दाधिक्यत इवार्थप्रकर्षतोऽपि बृहत्त्वम् ॥

अपिच बृहदारण्यकमिदमन्या उपनिषद इवापवर्गविद्यानुबन्धिवर्णनेनात्मानं न समापयति । किंनाम, अन्तिमेऽध्याये शास्त्रीयगर्भाधानसुपुत्रजननाद्युपायविस्तरणेन अधीयानानामैहिक श्रेयस्समृद्धिलम्भकमप्यस्तीति । तत् स्वन्तं शुभावसानं बृहदिदं दशमोपनिषदं भावयन्तः एवम्भूतान्तिमोपनिषद्घटितमुपनिषद्दशकमेवालं प्रजानां पुरुषार्थप्रापणायेति प्राञ्चः पर्यशीलयन्निव ।

## परविद्यापरिगणनपरीक्षणम्

का नाम विद्याः, या इह छान्दोग्य इवानेकाः प्रदर्शिताः कथ्यन्ते ? श्रूयतां तावत् । विद्या नाम विधिचोदितो ज्ञानविशेषः । तत्प्रतिपादकशब्दराशेरपि

ताच्छब्द्यमुपचारादित्यन्यदेतत् । सा च मुख्यर्था अन्यार्था चेति द्वयी । आद्या ब्रह्मविद्यैव मुख्या तत्त्वार्थगोचरा । अन्यार्था पुनः मनसि ब्रह्मदृष्टिः, उद्गीथे प्राणदृष्टिरित्येवं ब्रह्माब्रह्मारोपरूपाऽपि भवति यथायथम् । तत्र, कुत्र कति विद्याः कथिता इति विवेचनं वृथाविस्तरभियोपेक्ष्य विशिष्य वक्तव्यं परं विवक्षामः—

अद्वैतिभिः निर्गुणविद्या सगुणविद्येति द्वैधमध्यवसीयते । तत्र सगुणविद्या मुक्तिपर्यवसायिन्यपि न साक्षान्मुक्तये कल्पत इति चास्थीयते । तत्र निर्गुणविद्या नाम न काचिदस्तीति तदन्येषां निर्णयः । तदिहाप्युपरि मात्रया वर्णयिष्यामः । सामान्यतस्तावत् परमार्थविद्याः द्वात्रिंशदिति प्राच्यग्रन्थानारूढा पारम्परिकी साम्प्रदायिकी प्रसिद्धिरस्ति । का इमा द्वात्रिंशदिति विशिष्य निर्देशे तु न लक्ष्यत ऐकमत्यम् । तत्रास्माकं हस्तं गता काचित् पूर्वलिखिता पट्टिका विद्या एवं निर्दिशति—

(१)

| | |
|---|---|
| १. ईशावास्यविद्या | ईशावास्योपनिषत् |
| २. परमपुरुषविद्या | कठ. ३. ऋतं पिबन्तौ ; पुरुषान्न परम् |
| ३. सद्विद्या | छान्दोग्यम् ६-२-७. |
| ४. आनन्दमयविद्या | तैत्तिरीयम् |
| ५. अन्तरादित्यविद्या | छान्दोग्यम्. १-६-६ ; बृहदा. ७-५-१. |
| ६. आकाशविद्या | ,, १-९ ; ८-४. |
| ७. प्राणविद्या | ,, १-११-५. |
| ८. ज्योतिर्विद्या | ,, ३-१३-७. |
| ९. प्रतर्दनविद्या | कौषीत. ३-१. |
| १०. शाण्डिल्यविद्या | छान्दो — ; बृहदा — ; अग्निरहस्यम् |
| ११. पर्यङ्कविद्या | कौषीत. १. |
| १२. नाचिकेतविद्या | कठ. २. |
| १३. उपकोसलविद्या | छान्दो. ४-१०. |

| | | |
|---|---|---|
| १४. | उद्दालकान्तर्यामिविद्या | बृहदा. ५-७. |
| १५. | अक्षरविद्या | मुण्डकोपनिषत् |
| १६. | वैश्वानरविद्या | छान्दो. ५-११. |
| १७. | भूमविद्या | „ ७-१. |
| १८. | गार्ग्यक्षरविद्या | बृहदा. ५-८-८. |
| १९. | सत्यकामविद्या | छान्दो. ४-४. |
| २०. | दहरविद्या | „ ८-१-६; तैत्ति. २३; नारायणोपनिषत् १०. |
| २१. | अङ्गुष्ठप्रमितविद्या | कठ. २-४-१२; २-६-१७; श्वेताश्वतर. ५-८. |
| २२. | मधुविद्या | छान्दोग्य. 'असावादित्यो देवमधु' ३. |
| २३. | संवर्गविद्या | छान्दो. ४-३. |
| २४. | ज्योतिषां ज्योतिर्विद्या | बृहदा. ६-४-१६. |
| २५. | बालाकिविद्या | „ ४-१. |
| २६. | मैत्रेयीविद्या | „ ४-४; ६-५. |
| २७. | गायत्रीविद्या | छान्दो. ३-१२. |
| २८. | उषस्तकहोलविद्या | बृहदा. ५-४-५. |
| २९. | पञ्चाग्निविद्या | छान्दो. ५-३; बृहदा. |
| ३०. | अक्षिविद्या | „ ४-१५. |
| ३१. | भार्गवी वारुणी विद्या | तैत्ति. भृगुवल्ली. |
| ३२. | श्रीमन्न्यासविद्या | „ नारायण. ४९—५२. इति। |

(२)

अधिकरणसारावल्युपोद्धाते मुद्रितायाम् अधिकरणक्रमानुसारिपद्धिकायां तु, सत्-आनन्द-अन्तरादित्य-आकाश-प्राण-गायत्रीज्योतिः-इन्द्रप्राण-

शाण्डिल्य - अत्तृ - उपकोसल - अन्तर्यामि - अक्षरपर - वैश्वानर - भूम - गार्ग्यक्षर - प्रणवोपास्यपरमपुरुष - दहर - अङ्गुष्ठप्रमित - देवोपास्यज्योतिः - मधु - संवर्ग - अजाशरीरकब्रह्म - बालाकि - मैत्रेयी - द्रुहिणरुद्रादिशरीरकब्रह्म - पञ्चाग्नि - आदित्यस्थाहर्नामकब्रह्म - अक्षिस्थाहंनामकब्रह्म - पुरुष - ईशावास्य - उषस्तिकहोल - व्याहृतिशरीरकब्रह्म पदघटनेन द्वात्रिंशत् विद्याः, त्रयस्त्रिंशी च न्यासविद्या परिगणिताः सन्ति ।

(३)

**अधिकरणरत्नमाला**पुस्तकसंयोजितायां पुनः अकारादिक्रमनिबद्धायां **पट्टिकायाम्** —, अक्षर - अक्षिस्थ सत्यब्रह्म - अङ्गुष्ठप्रमित - अन्तरादित्य - आकाश - आनन्दमय - ईशावास्य - उद्दालकान्तर्यामि - उपकोसल - उषस्तिकहोल - गायत्री - गार्ग्यक्षर - ज्योतिषां ज्योतिः — त्रिमात्रप्रणव - दहर - नाचिकेत - न्यास - पञ्चाग्नि - परंज्योतिः - पर्यङ्क - प्रतर्दन - प्राण - बालाकि - भूम - मधु - मैत्रेयी - वैश्वानर - व्याहृति - शाण्डिल्य - संवर्ग - सत्यकाम - सत् इत्येवंनामभिर्विद्याः द्वात्रिंशत् गणिताः सन्ति । अत्र पट्टिकायाम्, अन्यत्र क्वचित् स्थितो भेदोऽप्युदटङ्कि ।

तत्र प्रथमपट्टिकां किञ्चित् परिशीलयेम — प्रसिद्धं व्याहृतिब्रह्मविद्यात्रिमात्रप्रणवविद्यादिकं परित्यक्तमिह । परमपुरुषविद्या तु प्रश्नोपनिषदुदितत्रिमात्रप्रणवविद्यारूपा नात्राभिसंहिता; किंतु कठवल्ल्याम्, 'पुरुषान्न परं किञ्चित्' इत्युक्ता । अन्यदपि । नाचिकेतविद्या, अङ्गुष्ठप्रमितविद्येति विद्याद्वयमत्र परिगणितमस्ति । किं कृत्स्नाऽपि कठोपनिषत् नचिकेतसे एकां विद्यां मृत्यूपदिष्टामाह, उत नानेति विचारणायाम् - एकमित्येव स्वरसम्, तावतैव प्रश्नस्य पूरणात् । अत्त्रधिकरणे च, 'प्रकरणात् पूर्वोक्तः परमात्मैव अत्ता; तृतीयस्याम् ऋतवल्ल्यामपि स वर्णित' इत्यसूत्रि । अभाषि च तत्र, "तद्विष्णोः परमं पद'मित्यन्तेन विद्यामुपदिश्य तदपेक्षितांश्च विशेषानुपदिदेशे" ति । एवञ्च आनुमानिकाधिकरणे पृथग्विचारेऽपि न विद्याभेद इति प्रथमवल्लीत्रयमेकविद्याविषयमिति निर्विवादम् । द्वितीयोऽध्यायोऽपि

वल्लीत्रयात्मकः । तत्र अङ्गुष्ठप्रमितवाक्यमादावन्ते च स्थितं गृहीत्वा प्रमिताधिकरणे जीवपरत्वेन प्रत्यवस्थाने परमात्मपरत्वं प्रत्यपादि । एवञ्च कठोपनिषदन्ते तृतीय-वल्ल्युक्तरीत्या वशीकारविधां पुनरुपवर्ण्य, 'मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिञ्च कृत्स्नम्' इति श्राव्यमाणं कृत्स्नोपनिषदुपसंहारपक्षे स्वरसम् । एवञ्च प्रथमाध्यायोक्तार्थवैशद्यमेव द्वितीयेऽध्याये क्रियत इति साम्प्रतम् । 'पराञ्चि खानि व्यतृणत्' इत्युपक्रमबलादपि, द्वितीयोऽध्यायो योगविधिरूपार्थैदम्पर इति नाचिकेतविद्या – योगविधिरूपार्थद्वयमध्यायद्वयेनाभिधीयत इति चावगम्यते । एवं विमर्शे च प्रथमाध्यायोक्तविद्यातोऽन्या अङ्गुष्ठप्रमितविद्या नाम कुतो भविष्यति, कुतस्तराञ्च परमपुरुषविद्या, नाचिकेतविद्या, अङ्गुष्ठप्रमितविद्येति तिस्रो विद्याः । एवं तावत् स्वरसगतिरदर्शि । अध्यायभेदेन विद्याभेद इत्यध्यवसानेऽपि न विद्यात्रैध-मिति तु भाव्यम् ।

अथान्तरादित्यविद्या, आकाशविद्या, प्राणविद्येति यदगणि विद्यात्रयम्, तत् ब्रह्मदृष्टिरूपम्, न परविद्येति छान्दोग्यप्रकरणपरामर्शिनां सुगमम् । नारायणप्रश्न-बृहदारण्यकभणिता पुनरन्तरादित्यविद्या तदन्या । न खलु, 'सर्वलोककामेशत्व-उन्नामकत्व - कप्यासपुण्डरीकाक्षहिरण्मयदिव्यमङ्गलविग्रहविशिष्टत्व - आदित्य-मण्डलान्तर्वर्तित्वाद्याश्चर्यानेकगुणविशिष्टत्ववर्णनं केवलं ब्रह्मदृष्ट्यर्थं कथङ्कारं घटत' इति कृत्वाऽस्माभिरसंतुष्टैर्वचनमुल्लङ्घ्य परविद्यात्वमन्तरादित्यविद्याया अस्याः कल्प्येत । अभाषि च भगवता भाष्यकृता, "न वा प्रकरणभेदात् परोवरीयस्त्वा-दिवत्" इति सूत्रे, उद्गीथावयवे प्रणवे हिरण्मयदृष्टिविधिरिहेति । एवमपि केचिदन्तरादित्यविद्यागतम्, 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' इति उन्नामविधानार्थवादं प्रकरणात् पृथक्कृत्य, सिद्धानुवादबलात् वाक्यान्तरं वा परि-कल्प्य, दृष्टिरूपेव, अदृष्टिरूपा सती सकलविशेषविशिष्टादित्यान्तर्वर्तिपुरुषविषयेयं परमपुरुषार्थसाधनपरविद्याऽपीति साधने प्रयस्यन्ति चेत् — अस्तु कामम् । अथापि आकाशप्राणविद्ययोः उद्गीथप्रस्तावगोचरयोः केवलदृष्टिविद्यात्वमेवेति न तद्गणनस्याव-सरोऽस्ति । या तु भूमविद्याकुहरकथिता काचित् प्राणविद्या, सा जीवगोचरा; या चेन्द्रियकलहप्रकरणभाविता, सा ज्येष्ठश्रेष्ठमुख्यप्राणवायुविषयिणी । ततस्तयोः

प्राणविद्ययोरिह गणनं नैव प्रसजति । ज्योतिर्विद्याऽपि, कौक्षेयज्योतिश्शरीरकद्यु-संबन्धिज्योतीरूपपरमात्मविषयिण्यपि, आभिरूप्यकीर्तिमत्त्वरूपफलार्थोपासनाविशेषः न मोक्षार्थविद्या ।

अथाक्षरविद्या । तत्र मुण्डकोक्ताक्षरविद्याविशेषात् बृहदारण्यकगतगार्ग्यक्षर-ब्रह्मविद्या अन्येति कुतोऽध्यवसीयते ? यावता — सर्ववेदान्तप्रत्ययाधिकरणे, मुण्डके शिरोव्रतश्रवणाद् विद्या भिद्यत इति पूर्वपक्षं प्रवर्त्य तस्य व्रतस्याध्ययनार्थतया न वेदा-न्तरविहितविद्याभिन्नेयं विद्येति राद्धान्तितमिति वैश्वानरादिविद्यानामपि वेदभेदान्न भेद इति गमयदिदमधिकरणम्, शिरोव्रतं यत्र विद्यायां श्रूयते तस्या अक्षरविद्यायाः सर्व-वेदान्तप्रतीताया ऐक्यं कथङ्कारं न गमयिष्यतीत्येव विमृश्यमस्ति । 'अक्षरधिया'मिति सूत्रे च भाष्ये उभयत्र मुण्डके बृहदारण्यके च स्थितं वाक्यजातमेकीकृत्यान्ववादि ।

ज्योतिषांज्योतिर्विद्येति, याज्ञवल्क्येन जनकं प्रति क्रियमाणदहरविद्योप-देशमध्यगतं श्लोकमवलम्ब्य गण्यते पट्टिकायाम् । तत्र पृथग्विद्यात्वे प्रमाणमन्वे-ष्टव्यम् । अन्यथा, 'य एवं विदुरमृतास्ते भवन्ती' ति पूर्ववाक्येऽपि विद्यान्तरं किं न विधीयेत ? यदि पुनः केनोपनिषदुक्तविद्यैवेहानूद्यते, 'ज्योतिषांज्योतिरायु-र्होपासत' इति इति निरूपयितुं पार्यते, 'प्राणस्य प्राणमुत चक्षुषश्चक्षु'रिति अत्रत्य मन्त्रे, 'श्रोत्रस्य श्रोत्र'मिति केनोपनिषन्मन्त्रे चेषदर्थभेदेऽपि उभयत्र आयुषः=प्राणस्य इन्द्रियाणाञ्च ग्राह्यतया अन्तत एकार्थपर्यवसानं संभवतीति — तदा केनापि नाम्ना काममियं विद्याऽपि काचिद् गणनपदमध्यास्ताम् ।

भार्गवी वारुणी विद्याऽपि यदि मोक्षफला, तदा आनन्दमयविद्यातो न भिद्यते इति कथं पार्थक्येन परिगणनमिति प्रश्नोऽवतरति ।

एवं प्रथमपट्टिकागते परिगणनप्रकारे दौःस्थ्यं परिशीलयद्भिः पट्टिकान्तर-गणितक्रमेऽपि विवेको यथायथं सहृदयीभूय स्वयं कार्यः । तत्र उषस्तिकहोलविद्येति काचित् विद्या निरदेशि । तत्स्थाने उषस्तकहोलविद्येति निर्देशो भाव्यः । सर्वा-न्नानुमत्यधिकरणसंदर्शितं विषयवाक्यमपहाय च अन्तराभूतग्रामाधिकरणदर्शितं विषय-वाक्यं तत्प्रतिपादकं परिग्राह्यमित्यलमधिकेन ।

तदिह प्रकारान्तरनिरीक्षणाय उपनिषत्सु दशसु श्रुताः प्रधानविद्याः परिगण्यन्ते —

| | | | |
|---|---|---|---|
| १. | ईशावास्यविद्या - सर्वावासवासुदेवरूपविचित्रशक्तिपरमात्मविषयिणी | ईशोपनिषदि | 1 |
| २. | प्राणप्राणविद्या - अत्र प्राणशब्दो मुख्यामुख्यसर्वप्राणपरः | केनोपनिषदि | 2 |
| ३. | नाचिकेतविद्या-अध्यायभेदेन विद्याभेदे तु विद्याद्वयम् | कठोपनिषदि | 3 |
| ४. | त्रिमात्रप्रणवार्थपरमपुरुषविद्या - प्रश्नषट्कमप्येतदर्थम् | प्रश्नोपनिषदि | 4 |
| ५. | भूतयोन्यक्षरविद्या - बृहदारण्यकगार्गिब्राह्मणगताऽपि इयम् | मुण्डकोपनि. | 5 |
| ६. | अकारादिपादयुक्तप्रणवविद्या | माण्डूक्योप. | 6 |
| ७. | मनोमयामृतविद्या - व्याहृत्युपासनाङ्गिका | तैत्ति-शिक्षा. | 7 |
| ८. | आनन्दमयविद्या - भार्गवी वारुणी विद्या नान्या | तैत्ति-आन. | 8 |
| ९. | दहरविद्या - छान्दोग्यबृहदाण्यकोक्ता | तैत्ति-नाराय. | 9 |
| १०. | आदित्यान्तर्वर्ति हिरण्मयपुरुषविद्या | ,, | 10 |
| ११. | न्यासविद्या - अत्रत्यपुरुषविद्या तु न पृथग्भूता | ,, | 11 |
| १२. | [इदन्द्र] प्रज्ञानात्मब्रह्मविद्या | ऐतरेयोपनिष. | 12 |
| १३. | उद्गीथे अमृताभयदृष्टिः | छान्दोग्ये. १. | |
| १४. | ,, आदित्यहिरण्मयपुरुषदृष्टिः; अन्तरादित्यविद्या | ,, | |
| १५. | उद्गीथे अक्षिपुरुषदृष्टिः - अन्तरक्षिविद्या | ,, | |
| १६. | ,, परोवरीयस्त्वादिविशिष्टाकाश (परमात्म) दृष्टिः | ,, | |
| १७. | प्रस्तावे प्राण (परमात्म) दृष्टिः | ,, | |
| १८. | प्रणवकरणकब्रह्मोपासनम् | छान्दोग्ये. २. | |
| १९. | मधुविद्या - वस्वादिपदप्राप्तिपूर्वकमुक्त्यर्था | ,, ३. | 13 |

| | | | | |
|---|---|---|---|---|
| २०. | गायत्रीविद्या - परमात्मनि गायत्रीसादृश्यानुसंधानरूपा | ,, | | 14 |
| २१. | दिव्यकौक्षेयज्योतिर्विद्या - फलान्तरार्था | ,, | | |
| २२. | शाण्डिल्यविद्या - अग्निरहस्य बृहदारण्य गता | ,, | | 15 |
| २३. | पुरुषविद्या । ब्रह्मविद्यान्वयि पुरुषविद्यान्ते श्रुता | ,, | | |
| २४. | मनोब्रह्मदृष्टिः | ,, | | |
| २५. | आकाशब्रह्मदृष्टिः | ,, | | |
| २६. | आदित्यब्रह्मदृष्टिः | ,, | | |
| २७. | संवर्गविद्या - रैक्वोपदिष्टा | ,, | ४. | 16 |
| २८. | षोडशकलब्रह्मविद्या - सत्यकामगृहीता | ,, | | 17 |
| २९. | उपकोसलविद्या - अग्निविद्याङ्गिका | ,, | | 18 |
| ३०. | पञ्चाग्निविद्या - बृहदारण्यकेऽपि | ,, | ५. | 19 |
| ३१. | वैश्वानरविद्या | ,, | | 20 |
| ३२. | सद्विद्या - श्वेतकेतव उपदिष्टा | ,, | ६. | 21 |
| ३३. | भूमविद्या । नारदायोपदिष्टा | ,, | ७. | 22 |
| | (दहरविद्या । तैत्तिरीयबृहदारण्यकस्था ।) | ,, | ८. | |
| ३४. | अग्न्यश्वमेधयोरर्कादित्यब्रह्मदृष्टिः | बृहदा. | ३-२. | |
| ३५. | पुरुषविधात्मोपासनम् - अहं ब्रह्मास्मीति | ,, | ३-३+४. | 23 |
| ३६. | अन्नजनयितृक्षितिविद्या | ,, | ३-५. | 24 |
| ३७. | बालाकिविद्या | ,, | ४-१. | 25 |
| ३८. | मूर्तामूर्तरूपब्रह्मविद्या | ,, | ४-३. | 26 |
| ३९. | मैत्रेयीविद्या | ,, | ४-४; ६-५. | 27 |
| ४०. | कक्ष्यमधुविद्या - अत्रोपासनं स्पष्टं न श्रूयते | ,, | ४-५. | |
| ४१. | उषस्तकहोलविद्या | ,, | ५-४+५. | 28 |
| ४२. | अन्तर्यामिविद्या | ,, | ५-७. | 29 |

४३. प्रतिष्ठाकाष्ठाभूतौपनिषद्पुरुषविद्या - उपासनश्रवणं
न स्पष्टम् „ ५-९.

४४. सविराट्केन्धविद्या „ ६-२. 30

४५. व्याहृतिशरीरकाहर्नामकादित्यब्रह्मविद्या „ ७-५. 31

४६. „ अहंनामकाक्षिब्रह्मविद्या „ „ 32

४७. विद्युद्ब्रह्मदृष्टिः „ ७-७.

४८. विरब्रह्मदृष्टिः - अन्नप्राणोभयोपासनम् „ ७-१२.

४९. गायत्रीतुरीयपादपरोरजउपासनम् „ ७-१५.

बृहदारण्यकगताः अक्षरविद्यादहरविद्याशाण्डिल्यविद्यापञ्चाग्निविद्याः वेदान्तर-श्रुतपूर्वपरिगणितविद्यानतिरिक्ता इति कृत्वा न पृथग् गणिताः। एवं ज्योतिर्विद्याऽपि। अत्र कासुचिदुपासनविधेरश्रवणेन मोक्षार्थोपासनानवधारणात् , अन्यासां कासाञ्चिन् दृष्टिरूपत्वस्य फलान्तरार्थत्वस्य च विस्पष्टत्वात् परिशेषात् अत्र गणिता एव मोक्षार्थाः परविद्या भवन्तीति तासां द्वात्रिंशत्तया दशोपनिषदुपदिष्टाः परविद्यास्तावत्य इति पर्यालोचनया द्वात्रिंशत्त्वप्रवादः संगमनीयः। परंत्वत्र परविद्या एवान्याः, पुरुषसूक्त-विद्येव, पर्यङ्कविद्याप्रतर्दनविद्यादयः कौषीतक्यादिगता अपि गणनाद् भ्रश्यन्ति। अस्तु ; किं तेन? द्वात्रिंशत्ता तावत् प्रसिद्धोपनिषन्मात्रादरणेन निरूढा। अधिका अपि विद्या अन्योपनिषदुद्धृष्टा अशेषपरिगणनावसरे परिग्रहभाजनीभविष्यन्ति। सेयमेका गमनिका।

अथ शारीरकशास्त्रे कति विद्या भगवता बादरायणेन भणिता इति विषय-वाक्यानि तत्र तत्राभिमतान्यनुरुध्य विमर्शे विधीयमाने इत्थं परिगणय्य कथनं संपद्यते—

आदौ शास्त्रारम्भार्थायां चतुःसूत्र्यां वृत्तायाम्—

१. सद्विद्या ईक्षत्यधिकरणे १-१-५.
(गतिसामान्यसूत्रे ऐतरेयतैत्तिरीयादिविद्याः।)

२. आनन्दमयविद्या आनन्दमयाधिकरणे १-१-६.

| | | |
|---|---|---|
| ३. अन्तरादित्यविद्या | अन्तरधिकरणे | १-१-७. |
| ४. अन्तरक्षिविद्या च | | |
| ५. आकाशविद्या | आकाशाधिकरणे | १-१-८. |
| ६. प्राणविद्या | प्राणाधिकरणे | १-१-९. |
| ७. दिव्यकौक्षेयज्योतिर्विद्या | ज्योतिरधिकरणे | १-१-१०. |
| ८. गायत्रीविद्या च | | |
| ९. प्रतर्दनविद्या | इन्द्रप्राणाधिकरणे | १-१-११. |
| १०. शाण्डिल्यविद्या | सर्वत्रप्रसिद्ध्यधिकरणे | १-२-१. |
| ११. नाचिकेतविद्या | अत्त्रधिकरणे | १-२-२. |
| १२. उपकोसलविद्या | अन्तराधिकरणे | १-२-३. |
| १३. अन्तर्यामिविद्या | अन्तर्याम्यधिकरणे | १-२-४. |
| १४. भूतयोन्यक्षरविद्या | अदृश्यत्वादिगुणकाधिकरणे | १-२-५. |
| १५. वैश्वानरविद्या | वैश्वानराधिकरणे | १-२-६. |
| (भूतयोन्यक्षरविद्या | द्युभ्वाद्यधिकरणे | १-३-१.) |
| १६. भूमविद्या | भूमाधिकरणे | १-३-२. |
| (अक्षरविद्या | अक्षराधिकरणे | १-३-३.) |
| १७. त्रिमात्रप्रणवपुरुषविद्या | ईक्षतिकर्माधिकरणे | १-३-४. |
| १८. दहरविद्या | दहराधिकरणे | १-३-५. |
| (नाचिकेतविद्या | प्रमिताधिकरणे | १-३-६.) |
| १९. मधुविद्या | मध्वधिकरणे | १-३-८. |
| २०. ज्योतिषां ज्योतिर्विद्या च | | |
| २१. संवर्गविद्या | अपशूद्राधिकरणे | १-३-९. |
| (दहरविद्या | अर्थान्तरत्वव्यपदेशाधिकरणे | १-३-१०.) |
| (नाचिकेतविद्या | आनुमानिकाधिकरणे | १-४-१.) |

| | | | |
|---|---|---|---|
| २२. | श्वेताश्वतरविद्या | चमसाधिकरणे | १-४-२. |
| | (ज्योतिषां ज्योतिर्विद्या | संख्योपसंग्रहाधिकरणे | १-४-३.) |
| २३. | अव्याकृतब्रह्मविद्या | कारणत्वाधिकरणे | १-४-४. |
| २४. | बालाकिविद्या | जगद्वाचित्वाधिकरणे | १-४-५. |
| २५. | मैत्रेयीविद्या | वाक्यान्वयाधिकरणे | १-४-६. |
| | (सद्विद्या | प्रकृत्यधिकरणे | १-४-७.) |
| | (हिरण्यगर्भशिवादिपदघटित-विद्याः | सर्वव्याख्यानाधिकरणे | १-४-८.) |
| २६. | पञ्चाग्निविद्या | तदन्तरप्रतिपत्त्यधिकरणे | ३-१-१. |
| २७. | मूर्तामूर्तरूपब्रह्मविद्या | उभयलिङ्गाधिकरणे | ३-२-५. |
| २८. | उद्गातृप्राणविद्या } | अन्यथात्वाधिकरणे × × | ३-३-२. |
| २९. | उद्गीथप्राणविद्या च } | | |
| ३०. | ज्येष्ठश्रेष्ठप्राणविद्या | सर्वाभेदाधिकरणे × | ३-३-३. |
| | (आनन्दमयविद्या | आनन्दाद्यधिकरणे | ३-३-४.) |
| | (प्राणवासोनुसंधानम् | कार्याख्यानाधिकरणे | ३-३-५.) |
| | (शाण्डिल्यविद्या | समानाधिकरणे | ३-३-६.) |
| ३१. | व्याहृतिशरीरकादित्यब्रह्मविद्या } | संबन्धाधिकरणे | ३-३-७. |
| ३२. | ,, अक्षिब्रह्मविद्या } | | |
| ३३. | पुरुषविद्या | पुरुषविद्याधिकरणे × | ३-३-९. |
| ३४. | पर्यङ्कविद्या | साम्परायाधिकरणे | ३-३-१२. |
| ३५. | उषस्तकहोलविद्या | अन्तराभूतग्रामाधिकरणे | ३-३-१५. |
| | ( दहरविद्या | कामाद्यधिकरणे | ३-३-१६.) |
| ३६. | उद्गीथविद्या | तन्निर्धारणानियमाधिकरणे × | ३-३-१७. |
| | ( दहरविद्या | प्रदानाधिकरणे | ३-३-१८.) |

| | | | |
|---|---|---|---|
| ३७. प्रजापतिविद्या | शरीरेभावाधिकरणे | × | ३-३-२१. |
| ( क्रत्वङ्गाश्रितोपासना | अङ्गावबद्धाधिकरणे | | ३-३-२२.) |
| ( वैश्वानरविद्या | भूमज्यायस्त्वाधिकरणे | | ३-३-२३.) |
| ३८. ईशावास्यविद्या | पुरुषार्थाधिकरणे | | ३-४-१. |
| ( प्राणविद्या | सर्वान्नानुमत्यधिकरणे | | ३-४-७.) |
| ३९. ब्रह्मदृष्टिः | प्रतीकाधिकरणे | × | ४-१-३. |
| ४०. आदित्यादिदृष्टिः | आदित्यादिमत्यधिकरणे | × | ४-१-४. |

अत्र कुण्डलितानां न पृथक्परिगणना, पौनरुक्त्यात् । अथ संख्यातासु आसु कासां परिसंख्यानम्, कासां परिग्रहणमिति विमर्शे, प्रतिनियतस्थानगुण-विशेषविशिष्टब्रह्मविषयकमुपासनं दृष्टिरूपं पारमार्थिकं वा यत्, तत् सर्वं गण्यते ; अन्यादृशं मनोब्रह्मदृष्ट्यादिरूपम्, तथा अब्रह्मगोचरञ्चोपासनं न परिग्राह्यमिति × एवं चिह्नितानां त्यागे द्वात्रिंशत् संपद्यन्ते । सर्वव्याख्यानाधिकरणे उक्तानुक्तविद्यानां हिरण्यगर्भरुद्राद्यनेकगोचराणां विद्याविधायकविलक्षणानाञ्च तत्त्वमात्रप्रतिपादनपराणां वाक्यजातानां ग्रहणान्न तत्र विशिष्य किञ्चिद्विद्याग्रहणावधारणावकाशः । पूर्वविकल्पाधिकरणगुणसूत्रखण्डेन, 'मृत्युवन्न हि लोकापत्तिः' इत्यनेन दृष्टान्ततया दर्शितमस्ति किञ्चित् आदित्यमण्डलस्थपुरुषविषयमग्निरहस्यगतमुपासनम्, तत् कीदृश-वस्तुगोचरम्, किं मुक्त्यर्थम्, आहो अन्यार्थमिति विचार्य निर्णेयम्; न सूत्रे प्राधान्येन मीमांसितम्; केवलं तु तत्रत्यं मृत्युपदमेकं न्यदर्शीति, न तदुपासनं गणनीयकोटिमाटीकते । पराधिकरणे उन्मानपदेन षोडशकलब्रह्मविद्यैव विशिष्य ग्राह्येति न स्पष्टम्; 'पादोऽस्य सर्वा भूतानी' त्येवं गणितगायत्रीविद्यादि-दर्शितोन्मानविषयतयाऽपि यतस्तदुपपद्यते इति न षोडशकलब्रह्मविद्या तत इह विशिष्य गणनमर्हति । पुरुषविद्याधिकरणगृहीतयोश्च विद्ययोः तैत्तिरीयोक्तायाः पुरुषविद्यायाः मुक्तिविद्याङ्गताप्रयुक्तायाः मुक्त्यर्थतायाः, छान्दोग्योक्तायाः पुरुषविद्याया अनुष्ठातुः उपायान्तरेण देहावसाने मुक्त्यवगमेन मुक्त्यर्थवसायितायाश्च स्थितावपि न काऽपि पुरुषविद्या साक्षात् परविद्येति न तद्गणनं प्रसजति । पुरुषार्थाधिकरणे, 'नावि-

शेषात्', 'स्तुतयेऽनुमतिर्वे' ति सूत्रद्वयी यद्यपि स्वतन्त्रकर्मनियमनिषेधपरा, न परविद्याविशेषविषयविचारात्मिका, अथापि विद्यास्तुतिवर्णनात् प्रकरणे विद्यां विधेयां सूचयतीति ईशावास्यविद्यायास्ततः संख्यानं साम्प्रतम्। यथाकथमपि द्वात्रिंशत्त्व-मुपपाद्यमिति अभिनिवेशमपसार्य औचित्यपरिशीलनया एवंरीत्या विमृशतामिदं निष्प-द्येत, यत् विशिष्टब्रह्मविषयिण्यो विद्याः द्वात्रिंशद् भगवता बादरायणेन शारीरके मीमांसनमार्गमानायिषतेति। तत् तदनुरोधी प्राचाम्, 'विद्याः द्वात्रिंशत्' इति व्याहार इति। अत्र दृष्टिविद्याः काश्चिदन्तर्निविशन्ते, माण्डूक्यैतरेयादिगताः परविद्याः परिगणनात् भ्रश्यन्तीति च नेयं पूर्णवास्तवविद्यागणना; किन्तु शारीरकमादाय द्वात्रिंशत्तोपपादनमात्रम्।

यदि कश्चिदत्रोपपादनसरणौ मनाग् विमनायमानः गृहीतकिञ्चिद्विद्योपेक्षणेन उपेक्षितविद्यान्तरग्रहणेन संख्यानं विधाय विधान्तरेण द्वात्रिंशत्त्वं विवक्षेत्, कामं कथयतु। सर्वथा दशोपनिषन्मात्रदर्शनेन वा शारीरकशास्त्रस्पृष्टसंकलनेन वा स्यादयं प्रवादः प्राप्त इति परिशीलनं प्राप्तरूपम।

तावता सर्वासूपनिषत्सु, सर्वत्र वा श्रुतौ द्वात्रिंशदेव विद्या विहिता इति तु नियन्त्रयितुं नैव पारयामः। सत्यं विभिन्नशाखाविहितानामैक्यं संभाव्यते। समर्थि-तञ्च अक्षरदहरशाण्डिल्यवैश्वानरादिविद्यासु प्रत्येकं शाखाभेदेऽप्यैक्यं गुणोपसंहारपादे—अथाप्यनन्तमहाविभूतेः असंख्येयकल्याणगुणगणमहार्णवस्य अपरिसंख्येयव्यूहविभव-हार्दादिविविधदिव्यरूपस्य स्वाभिमतानुरूपरूपरमाद्यनन्तपरिग्रहादिपरिवृतस्य परस्सहस्र-नाम्नः परस्यः पुंसः प्रतिवेदविभक्ताभिः परिगणनदूराभिः सर्वाभिः शाखाभिः द्वात्रिंशदेव परविद्याः प्रतिपादिता इति निष्कर्षणं हि दुष्करमेव प्रतिभाति। न च किञ्चित् प्रमाणवचनं पश्यामः। अत एव वेदान्तपुष्पाञ्जलावस्माभिरेवमभ्यधायि —

> द्वात्रिंशत् सन्ति विद्यास्तव पदभजनेऽत्रेति भूयान् प्रवादः
> वेदेऽनन्ते तदर्थे त्वयि बहुजननेऽनन्तकल्याणपूर्णे।
> संख्याने कः समर्थः स्वयमिह नतरामद्य निष्कर्षशक्तिः
> भीष्मान्तो भक्तियोगो भुवि बत यदि वा श्रीश नाथान्त एषः॥

इति । परिशिष्टोपनिषद्भाष्यमुद्रणात् पश्चाच्च तत्रत्याः परविद्याः परिगणय्य तत्सर-भूमिकायामवशिष्टमभिधित्सामः ।

## औपनिषदं तत्त्वम्

एवमसङ्ख्यासु परविद्यासु वेद्यं परं ब्रह्म सगुणं श्रियःपतिर्नारायण इति विशिष्टाद्वैतिनां निर्णयः । तत्र किञ्चिदिह संगृह्य सर्वेषां हृदये समर्पयितुमिष्यते । एवं प्रधानतया परिगृहीतासु दशस्वासु उपनिषत्सु यत् तत्त्वं प्रत्यपादि, तदेव परास्वप्युपनिषत्सु प्रतिपाद्यतया प्रतिपत्तव्यम् । अविरुद्धं पुनरन्यत् अन्यतोऽप्यादरण-मर्हति ।

तत्र ब्रह्मजिज्ञासेत्युपक्रम्योपनिषदो मीमांसमानो भगवान् बादरायणो ब्रह्म प्रधानप्रतिपाद्यमिति स्पष्टमेव प्रदर्शयामास । तद् ब्रह्म निर्गुणं सगुणं वा, सगुण-मप्यरूपं सरूपं वा, सरूपमपि चतुर्मुखादिरूपं विष्णुर्वेत्येवंरूपा विवादास्तावद-नन्तरमनूद्गच्छन्ति, येषां व्युदसनमप्यनन्तरसूत्रेष्वनुसंहितेष्वनायासेन सेत्स्यति । तथाहि — ब्रह्मणो लक्षणं प्रदिदर्शयिषुर्हि परमर्षिः न, 'नेति नेती' ति विषय-वाक्यं जग्राह । किं तर्हि ? प्रपञ्चजन्मादिहेतुतया ब्रह्मदर्शकमेव लक्षणवाक्यम् । तेन नानाविधकारणत्व—तदाक्षिप्तानन्तकल्याणगुणगणभूषितं ब्रह्म ब्रह्मशब्दव्युत्पत्ति-वर्णनानुगुणमद्गृणन् कथं नाम निर्गुणमाकलयेत्? आनन्दमयाधिकरणे चापरि-च्छिन्नानन्दशेवधिमनुवर्णयन् अशेषपरिकरसंपत्तिमुपलक्षयामास । अनन्तरमन्त-रधिकरणे च आ केशात् आ प्रणखाच्च सुवर्णं प्रफुल्लपुण्डरीकदलामलायतलोचन-मादित्यमण्डलमध्यमध्यासीनं परं ब्रह्मेति प्रतिपादयन्, 'नारूपं ब्रह्म, न च पुण्डरीकाक्षाद्विष्णोरन्यत्' इति निखिलशङ्काकलङ्काङ्कुरनिरोधनेन निरवशेषं निर्धारया-मासेति किमत्र क्लेशकल्प्यमस्ति ? सर्वव्याख्यानाधिकरणटीकादिकमावर्तयताञ्च आनायासवेद्यमिदम्, यत् पराक्रान्तं प्राच्यैराचार्यैः परमर्षिबादरायणसूत्राणां नारायणपरत्वप्रख्यापन इति । तद् वयमिहोपनिषत्सु कीदृशं तत्त्वमदर्शीति परं संजिघृक्षामः —

जगन्मिथ्येति तावत् उपनिषदि न कुत्राप्यवादि । केवलमेकत्वं तत्रोदितं जगन्मिथ्यात्वस्यानभिमतौ न सिद्ध्येदिति तदप्यारोपयन्त्यद्वैतिनः । तत्र — 'एकत्व-

मिदं प्रत्यक्षदृष्टप्रपञ्चापलापं विनैव सेत्स्यति । न खलु घटशरावादीनां मृदा स्थित-मैक्यम्, कटकमकुटादीनां कनकेनैक्यम्, सांख्यसरण्याऽपि महदादिप्रपञ्चस्य मूल-प्रकृत्यैक्यं कार्याणां सत्यतायां न घटत इति कश्चिदनुभवतत्त्ववेदी कलङ्कितचेतनः स्यात्' इति भास्करादिमतस्थानां प्रत्यवस्थानं पदं लेभे । अथ विशिष्टाद्वैतसिद्धान्त-निष्णातैः भगवन्नाथमुनिप्रभृतिपरमाचार्यैरित्थं प्रत्यबोधि — 'सत्यम्, मिथ्यात्वकल्पनं जगतः सर्वथा न घटते । स्वाप्नपदार्थानामपि सत्यत्वमास्थाय परमात्मनः प्रकृ-ष्टाश्चर्यशक्तिप्रतिपादनेदम्परासु सतीषु उपनिषत्सु निर्बाधनित्यानुभवगोचरं निखिल-मिमं प्रपञ्चमपलपितुं कथं प्रवर्तेमहि । एकत्वं तु सर्वसत्यत्वेऽपि संपद्यत इति सम्यगेव। परंतु तदपि यथा परस्य ब्रह्मणः प्रकृष्टकल्याणगुणाकरस्य समाभ्यधिकर-हितस्य सर्वेश्वररूपेणैव सतः, नित्यनिर्विकारस्यैव सतः, निखिलजडदुःखिविलक्षणस्यैव च सतः संपद्येत, तथाविधमेकत्वं भवितुमर्हती'ति ।

अथ च घटकश्रुतिसमधिगतं शरीरात्मभावं तन्निबन्धनमैक्यव्यवहारञ्चानुप-चरितं बहुविधप्रमाणतर्कप्रत्यक्षव्यवहारपरिपाटीप्रदर्शनेन प्रतिपाद्य भगवद्रामानुजा-चार्याः शाङ्करभास्करादिसर्वमतनिरासेन व्याससमासाभ्यां वेदवेदान्तशारीरकसूत्र-यथावस्थितार्थभाषणेन, प्राज्ञपरिवृढपरश्शतशिष्यमुखविहितेन च प्रचारेण तमेव प्राच्यं सिद्धान्तं प्रतिष्ठापयामासुः । अथैतं प्रचारं प्रतिष्ठाञ्चासहमानानाम् अन्यमतस्थायिना-माहोपुरुषिकाः प्रशमय्य, अस्मिन् सिद्धान्ते प्रमाणप्रमेयपरिस्थितिं निष्कृष्य, परमतेषु सर्वत्र प्रमाणप्रमेयदौःस्थ्यं प्रपञ्च्य, परतत्त्वहितयोः प्रसक्तं क्षोभञ्च परिहृत्य, अल्पज्ञ-प्रभृत्यभिमुक्तपर्यन्ताशेषवेद्यमेनं सिद्धान्तं विदधिरे वादकेलिभिरिव विविधग्रन्थ-विरचनवैखरीभिरपि श्रीभगवद्रामानुजाचार्यप्रवर्तितोभयवेदान्तस्थापनाचार्याः सर्वतन्त्र-स्वतन्त्राः कवितार्किककेसरिणो द्रमिडवाङ्मयपारदृश्वानः श्रीमन्तो वेदान्तदेशिकाः ।

एवञ्च, 'यस्तु सर्वाणि भूतानि आत्मैवाभूद् विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इतीशोपनिषद्वाक्यं जगद्ब्रह्मणोरेकत्वं वददपि न जग-न्मिथ्यात्वं निर्गुणब्रह्ममात्रस्थितिञ्चोपक्रमविरुद्धं वेदयिष्यति । केनोपनिषत्तु विदिता-विदितविलक्षणं मतामतविलक्षणं विज्ञाताविज्ञातविलक्षणं ब्रह्म वदन्ती, पश्चात् तस्य अग्न्यादीनां पुरस्तादतिगौरवार्हेण रूपेणाऽऽविर्भावम् तथापि तेषां तत् पश्यतामेव

तत्प्रभाववेदनविरहञ्च विशदयन्ती विस्पष्टमाह विदिताविदितानेकांशपूर्णमपरिच्छिन्नं ब्रह्मेति। न तत्र तदद्वैतमतं लक्ष्यते। अंशतो ज्ञेयत्वं हि ज्ञाप्यते इह; न पुनस्तदीषदपि न ज्ञेयमिति।

कठोपनिषदि श्रूयते, 'मनसैवेदमाप्तव्यं नेह नानाऽस्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति। बृहदारण्यकेऽप्येष मन्त्रः श्रूयते। अत्र परमतवर्णितस्यैवार्थस्यादरणेऽपि, 'ब्रह्मानेकं न भवती' त्येतावदेवार्थतत्त्वं सिद्ध्यति, न जगदपलाप इति उपनिषद्भाष्यकारैर्विशदमुपापादि। किञ्च विवेचयत—श्रुत्या एकत्वं विधीयते, नानात्वञ्च निषिध्यते। तत्र विधीयमानमेकत्वं यादृग्रूपं निर्धार्यते, तादृग्रूपप्रत्यनीकमेव नानात्वं निषेधगोचरीभवितुमर्हति, तेनोभयोरपि वाक्ययोः सामरस्यं संपद्यत इति। न च जगतो ब्रह्मणश्च तत्तत्स्वरूपगतो भेदः शास्त्रविहितस्य शरीरात्मभावनिबन्धनैक्यस्य प्रत्यनीकः। प्रत्युत तदुपजीव्य इति न स निषिद्ध्यते इति।

प्रश्ने मुण्डके चाद्वैतशङ्काङ्कुरावकाशावभासकमपि न किञ्चिल्लक्ष्यते।

तत्र शैब्यप्रश्ने, 'यत् तच्छान्तमजरममृतमभयं परञ्चे' ति परः पुरुषः प्रणवोपास्यो नित्यकविनिवहनिरीक्ष्यब्रह्मलोकनिषण्ण एव परं ब्रह्म वर्ण्यत इति न तत्र मृषावादस्य तुषमपि पश्यामः। न हि शान्तमिति शब्दश्रवणमात्रेण प्रपञ्चः सर्वः प्रलीनो बाधित इति सिद्ध्येत्। शान्तोऽयं महात्मेति यदि जगति कश्चिन्निर्दिश्येत, तर्हि नष्टं जगत् सर्वमिति किं निर्धारयेम? सर्वथा तादृगेवेदमपि। यच्च प्रश्नान्ते, यथा नद्यः स्यन्दमानाः समुद्रायणाः नामरूपरहिताः समुद्र इत्येव प्रोच्यन्ते, तथा पुरुष इत्येव प्रोच्यन्त इति श्रुतम्, ततो न जीवब्रह्मैक्यं शङ्कितुं शक्यम् — तत्र हि जीवसंबन्धिनीनां प्राणादीनां जडानां पुरुषे विलयः, पुरुष इत्युच्यमानता च वर्ण्यते; न जीवानाम्। मुण्डके पुनः, 'यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान् नामरूपाद्विमुक्तः परात् परं पुरुषमुपैति दिव्यम्' इति नदीसमुद्रप्राप्तिदृष्टान्तो जीवब्रह्मप्राप्तावदर्शि। परंतु, 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः' इति दिवि शाश्वतस्थाने स्तब्धं जगदारम्भशीलव्यूहविलक्षणमविचाल्यं स्थितमाकृतिविशेषविशिष्टं पुरुषमक्षरं प्रागुक्तं 'दिव्यं पुरुष' मिति गृहीत्वा तदुपगमो

विदुषो वर्ण्यत इति कथमिदं निर्गुणब्रह्मैक्यरूपं भाव्येत। उपायनश्चेदं नैक्यम्, किंतु परमसाम्यमात्रमिति च तत्रैव प्राक्तनवाक्यप्रतिसंधानपूर्वं पठतां बुद्ध्यारूढं भविष्यति; यतः प्रागेवं तत्र श्रूयते, 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति।

एवं तावत् – मुण्डकपर्यन्तासूपनिषत्सु प्रतिपदं भेद एव प्रतीयते; विधीयते च; अन्विष्य कथञ्चिदद्वैतसमर्थनार्थे शकले गृहीतेऽपि तदनुकूलोऽर्थस्तत्र दुःस्थो भवतीत्यवादिष्म। एवम्भूतपूर्वोत्तरसकलोपनिषदपेक्षया माण्डूक्यं तेषां मनोरञ्जनं मन्येत, यदेवं स्पष्टमद्वैतमाह, 'ऐकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यते' इति। अत्र भेदवादिनः किं ब्रूयुरिति भवेदेव बुभुत्सा विमर्शकानाम्। त एवं ब्रूयुः – प्रणवे पादत्रयं तत्तदर्थभूतांश्च त्रीन् पुरुषानुपवर्ण्य चतुर्थं गृहीत्वा तत्र पुरुषम् अद्वैतमिति निर्दिशन्ती श्रुतिरियं पूर्वत्र द्वैतं मन्यत इति तावत् स्वरसगम्यमेव। एवञ्च तेषु पुरुषेष्वैकात्म्यप्रत्ययसारता शान्तता शिवता तथैवाद्वैतता च न सन्तीति कथने ते पुरुषाः विश्वादयोऽनिरुद्धाद्यपरपर्यायाः व्यूहावतारत्वादाविर्भवन्ति तिरोभवन्ति प्रादुर्भवन्ति चेति प्रतिकल्पं प्रादुर्भावात् सजातीयसाहित्यात् स्वसजातीयद्वितीयराहित्यरूपमद्वैतं न भजन्ते। स तु परमपुरुषः परवासुदेवः नित्यविभूतौ निषण्णः प्राकृतप्रपञ्चव्यापारविधुरः स्तब्धः शान्तात्मा स्वयमुपजनोपशमविदूरो नित्यस्सन् स्वसजातीयद्वितीयराहित्यात् अद्वैत एव राजते इत्येवार्थसतत्त्वं प्रकरणानुगुणं प्रमाणान्तरसंवादि सुखमेव प्रतीयते। यदिदं मुण्डकेऽपि प्रागश्रावि, 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः' इति। अतो न निर्गुणब्रह्ममात्रपरिशेषः।

छान्दोग्योपनिषत्प्रतिपादनपद्धतिं तावत् तद्भूमिकायामेव प्रादर्शयाम। तत्रैव सद्विद्यायां तत्त्वमसीति महावाक्यमस्ति, यदेकं गृह्णन्तो जीवब्रह्मैक्ये श्रद्दधते, यत्र द्वैतिनः, अतत् त्वमसीति पदच्छेदमादृत्य द्वैतमेव ततोऽपि साधयन्ति; यस्याद्वैतिसंमताखण्डार्थपरत्वे वाक्यलक्षणहानात् वाक्यतैव नास्ति, कुतो महावाक्यतेत्याक्षिपन्ति च परे सर्वे अद्वैतप्रतिपादनप्रवृत्तान्। विशिष्टाद्वैतिनस्तत्र विशिष्टैक्यस्थापकाः पूर्वोत्तरवाक्यप्रत्यायित प्रत्ययितार्थपरित्यागमयुक्तं पश्यन्तः, 'सर्वं खल्विदं ब्रह्मे'ति शाण्डिल्यविद्यादर्शितजडप्रपञ्चैक्यतुल्ययोगक्षेममेव जीवैक्यमपि ब्रह्मणि परिकल्पयन्तः ततोऽन्यस्याद्वैतस्यानवकाशमेव प्रदर्शयन्तीति च तत्रैवोक्तप्रायम्।

तदिह बृहदारण्यकमवशिष्यते । उपनिषदन्तरवत्; उच्चावचभेदप्रपञ्चनकरमिदमपीति सर्वसंप्रतिपन्नम् । अथापि तत्रतत्रैवात्रापि वाक्यशकलमद्वैतमतानुकूलमस्ति न वेति अन्वेषयतामन्यान्यप्रकरणगतानीमानि वाक्यान्युद्धारणीयानि भवन्त्येव । यथा —

'ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेत् अहं ब्रह्मास्मी'त्युपक्रम्य, देवानामृषीणां मनुष्याणाञ्च अहं ब्रह्मास्मीति वेदनं फलेग्रहि अभूत् भवति चेत्यदर्शि । तेन जीवब्रह्मैक्यसिद्धिः । तथा, 'अन्योऽसावन्योऽहमस्मी'ति भेदवेदनं प्रतिषिद्ध्यते च । 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र वा अस्य सर्वमात्मैवाभूत्, तत् केन कं पश्ये'दिति च मैत्रेयीब्राह्मणे । एवम्, 'मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ एकधैवानुद्रष्टव्यम्' इति च जनकं प्रत्युपदेशे ।

अत्र विशिष्टाद्वैतमतानुरोधेन वर्णनीयं संक्षिप्योपक्षिप्यते । अद्वैतिनां द्वैधमस्ति, एकजीववादो नानाजीववादश्चेति । एकजीववादे 'ब्रह्म वै'इत्युपात्तश्रुतिर्न घटते, यत इयं केषाञ्चिदात्मनां प्राङ् मोक्षस्य निष्पन्नतामन्येषां केषाञ्चिदद्य निष्पत्तिसंभवञ्च शंसति । तत् नानाजीववादे स्थित्वा किञ्चिदामर्शनीयम् । अत्र नाधिकं वक्तव्यमस्ति, यतो विशिष्टाद्वैतिनोऽपि अहं ब्रह्मास्मीत्यनुसंधानमेवाद्रियन्ते, नान्यादृशमनुसंधानम् । अर्थवैषम्ये सत्यपि अनुसंधानाभिलाप उभयेषामविशिष्टः । विस्तरो भाष्ये परिष्कारे च द्रष्टव्यः । अन्यदपि किञ्चिदत्रावधेयमस्ति—अस्यानुसंधानस्य किं तावत् फलं श्रुतिराह? परं ब्रह्म स्वयम् अहं ब्रह्मास्मीत्यनुसंधाय सर्वमभवत्; तत् य एवमद्यत्वेऽप्यनुसंधत्ते स इदं सर्वं भवतीति सर्वभावम् । जीवब्रह्मैक्यानुसंधाने सर्वप्रपञ्चनिवृत्त्या अद्वैतपरिशेषः फलं परेषाम् । तद्विपरीतमिदं श्रुतिदर्शितं फलम् अहं ब्रह्मास्मीत्यनुसंधातुः सर्वप्रपञ्चभावः प्रपञ्चाविलापनेन प्रपञ्चैक्यरूपः । न चेदमैक्यं प्रपञ्चाभेदरूपं भवितुमर्हति । न हि देहात्मविवेकपूर्वं व्याप्रियमाणो जीवो जडप्रपञ्चभावाय ब्रह्मज्ञानं प्रार्थयते । तस्माद् ब्रह्मणि सर्वान्तर्यामित्वप्रयुक्तसर्वप्रकारकत्वसत्त्वेन अहमित्यनुसंधीयमानतां विदुषः तुल्यनयात् स्वात्मनि ब्रह्मणि सर्वप्रपञ्चप्रकारकत्वनिबन्धनं सर्वमित्यनुसंधानं फलं

संपत्स्यत इति दर्शयन्तो श्रुतिरियं सर्वप्रपञ्चविशिष्टपरब्रह्मानुभवं परमं फलं मुक्तिरूपं प्रतिजीवं संभवदाहेति प्रतिपत्तव्यम्। अनयैव दिशा, 'सर्वमात्मैवाभू'दित्यादिकमपि सुबोधम्।

अपिच तत्तदुपनिषत्त उपात्तं वाक्यमिदं सर्वं तत्र तत्रोपासनप्रकरण एव श्रूयमाणम्। निर्गुणञ्च ब्रह्म अनुपास्यमातिष्ठमानानां मते तत्प्रकरणे तादृशं ब्रह्म कथं कथ्येत? तत्त्वमसीति छान्दोग्यवाक्यमपि नानुपासनप्रकरणेऽस्ति; यतस्तत्राप्युपक्रम एव, 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात' मिति श्रवणमनननिध्यानानि निरदेशिषत। अथोपासनं निर्गुणस्यापीष्यत इत्येव स्वीक्रियते, तत्रापि वक्तव्यं प्रागेवोक्तमासीत्, छान्दोग्यभूमिकायामपि। एवञ्च—

**'उत्तरस्मिंस्तापनीये शैब्यप्रश्नेऽथ काठके।**
**माण्डूक्यादौ च सर्वत्र निर्गुणोपास्तिरीरिता॥'**

इति (३७२.) भाष्ये दर्शितो निर्गुणवादश्लोको निराधार इति निर्ज्ञातमासीत्। दशानामुपनिषदामविरोधेनैव परा उपनिषदः परिग्राह्या इति न नृसिंहतापनीये उत्तरस्यावलम्बनेन निर्गुणसाधने संरब्धव्यम्। अन्यसर्वोपेक्षणेन आदावस्योत्तरस्य परिगणनमेवान्यत्र निर्गुणसाधकदुर्भिक्षं लक्षयति। उत्तरतापनीयनिरसनञ्चास्मदाचार्यैः **तृतीयश्रीरङ्गरामानुजमुनिभिर्भेदसाम्राज्ये** विशदं व्यधायीति तत एव तत् अन्यच्चापेक्षितमनुसंधेयम्। आस्वपि चोपनिषत्सु अद्वैतमतानुकूलतया प्रतीयमानेषु वाक्येषु भाष्यमाणेष्विमे प्रथमे श्रीरङ्गरामानुजमुनय एव तत्रतत्रैव तन्मतानाञ्जस्यमतिनिपुणमाविष्कृतवन्तः सन्ति। अस्माभिः पुनरिहैकत्र एतानि विभिन्नश्रुतिगतानि वाक्यानि संकलय्य कया चिद् गमनिकया तद्विमर्शे दिक् प्रादर्शि।

तदेवं सगुणमेव भवतु ब्रह्म सरूपं विष्णुरूपञ्चेत्यपि आभ्य एवोपनिषद्भ्यो निर्धार्यते। न वयमेकैकाऽप्युपनिषत् विष्णुमेव परं तत्त्वं विस्पष्टवचनव्यक्त्या तदेकप्रसिद्धविष्णुनारायणरमारमणादिपदैरेव प्रतिबोधयतीति ब्रूमः। क्वचिदुपनिषदि तथैव कथ्यते। क्वचित्तु तत्परतया प्रमाणनिर्धारितेन पदेन परं तत्त्वमुच्यते। यथैवं निर्धारणे सामग्री उपलभ्यते, न तथा, ततः किञ्चिन्न्यूनभावेनापि वा देवतान्तर-

निर्धारणे सामग्रीति तु तत्त्वमाविश्चिकीर्षामः । सर्वप्रपञ्चसृष्टिस्थितिसंहारादिसर्वांश-निरूपणपरेषु वेदान्तेषु, देवतान्तराणि नाम्नाऽपि न निर्दिश्येरन्निति को नाम मन्येत ? तदत्र कारणप्रकरणेषु मुक्तिफलौपयिकोपासनविधानप्रकरणेषु वा का देवता कथ्यमानाऽस्तीत्येव तावत् एतन्निर्धारणप्रवृत्तैरस्माभिरधिजिगमिषितव्यम् ।

तत्र ईशोपनिषदि प्रथमं प्रयुक्तमीट्पदं पश्चात् प्रयुक्तमात्मपदञ्च न निर्विचिकित्सं तत्त्वं समर्पयेत् । [अत्र च आदौ ईट्पदमेव; न तु ईशपदम् । ईशा वास्यमिति च पदद्वयम्; नैकं पदम्; पदपाठादिप्रामाण्यादिति श्रीदेशिकभाष्य एव व्यक्तमस्ति ।] उपरि तु पूषमण्डले तेजोव्यूहनसमूहनप्रार्थनेन किञ्चिदुक्तमस्ति, 'यत् ते रूपं कल्याणतमम्, तत् ते पश्यामि, योऽसावसौ पुरुषः सोऽहमस्मी' ति । तत्र दिव्यमङ्गलविग्रहः कश्चित् विस्पष्टं निर्दिष्टः । तच्च रूपं कस्येति जिज्ञासमानैरादित्यमण्डले कस्य रूपं प्रमाणान्तरेषु प्रसिद्धमस्तीति परीक्षणीयम् । तद् विष्णोरेवेति विष्णुपुराणादयो विशदमेव वर्णयन्ति । छान्दोग्येपि एष हिरण्मय-पुरुषः पुण्डरीकाक्ष इति प्रादर्शि । तथा पुरुषपदमप्यत्र प्रयुज्यमानं भगवन्तं नारायण-मेव ग्राहयति । 'अथ पुरुषो ह वै नारायणोऽकामयत' इत्यादिश्रुतिप्रसिद्धः पुरुषो नारायणः । अत एवोत्तरनारायणाख्येन 'अद्भ्यः संभूतः' इत्यनुवाकेन लक्ष्मी-पतित्वेन लक्षितं पुरुषं प्रतिपादयत् सूक्तं पुरुषसूक्तमित्येव प्रथते । ज्योतिरधिकरण-श्रुतप्रकाशिकायां पुरुषसूक्तस्य भगवत्परत्वे तस्यैव नारायणस्य पुरुषपदमुख्यार्थत्वे च यावद् वक्तव्यं प्रकाशितमस्तीति नेह तन्यते । स्कान्दे च शङ्करशब्दो महादेवे रूढ इति, पुरुषशब्दं वासुदेवे रूढं दृष्टान्तीकृत्य प्रतिबोधितमस्तीति च तत्र प्राकाशि, 'यथा पुरुषशब्दोऽयं वासुदेवे प्रतिष्ठितः । तथा शङ्करशब्दोऽयं महादेवे प्रतिष्ठितः' इति । एवं दृष्टान्तीकरणादत्र निर्विवादप्रसिद्धिरवगमिता भवति । पुरुष-शब्दस्य तिर्यगादिविसजातीये मनुष्यादिरूपे शरीरे प्रयोगश्च बहुलं श्रुतिषु प्रसिद्धः । तथा प्रकृतिपुरुषविवेकप्रकरणादिषु चेतनसामान्येऽपि स शब्दः प्रयु-ज्यते । तत् सकलचेतनविलक्षणतया कस्मिंश्चित् पुरुषे श्रुतिभिः प्रतिपाद्यमाने स क इति जिज्ञासायां प्रमाणप्रसिद्धिमनुसृत्य परवासुदेव एव प्रकृष्टपुरुषाकारो ग्राह्यो भवति । भगवान् बादरायणश्च वैश्वानराधिकरणे, 'पुरुषमपि चैनमधीयते',

'अत एव न देवता भूतञ्चे' ति सूत्रयन् पुरुषशब्दबलेन भूतव्यावृत्तिमिव देवतान्तरव्यावृत्तिमपि दर्शयन् सर्वचेतनविलक्षणव्यक्तिविशेषे विश्रमं दर्शयति पुरुषपदस्येति स क इति विचारे, 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः' इति गीतवन्तं भगवन्तं पुरुषोत्तममेव पुरुषमध्यवसातुं प्रभवामः । 'ईशावास्यमिदं सर्व' मित्युपक्रमश्च वासुशब्दार्थं व्यनक्तीति भवत्ययं वासुदेवः पुरुषः । एवं विभावयद्भिरीशोपनिषदः कीदृशपरदेवताप्रतिपदनैदम्पर्यमिति स्वयं निर्धार्यम् ।

केनोपनिषत्तु ब्रह्मशब्दमेव प्रयुङ्क्ते, नान्यमिति न तत्र झटिति निर्धारणप्रसक्तिः । पुराणवचनप्रामाण्यात्तु विष्णुरेवाध्यवसित इति वर्णयेयुः । यथा स्मर्यते, 'वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि । तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने' इति ।

कठोपनिषदस्माभिः परमानुकूलं परिग्राह्याऽस्ति । सा हि ब्रह्मशब्दम्, पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' इति पुरुषशब्दञ्च यथा, तथा, 'सोऽध्वनः पारमाप्नोति तद् विष्णोः परमं पदम्' इति विवादलेशस्याप्यवकाशमप्रदाय मुक्तकण्ठं विष्णुशब्दमेव प्रयुज्य वक्तव्यमाह । तस्य विष्णोः पदमेव परमम्; तदेवाध्वनः पारभूतम्; यत् तमसः पारं दर्शयति श्रुतिरन्यत्र; अन्यासां देवतानां तु पदं न परमम्; न च पारभूतमिति विस्पष्टमेतेन । एवञ्च सामान्यश्रुतीनामत्र विशेषे पर्यवसानं सुज्ञानमेव । 'ईशानो भूतभव्यस्य' इति ईशानशब्दप्रयोगेऽपि तत्र रुद्रो न ग्राह्यः; भूतभव्यस्येत्येतदन्वयाय ईशनरूपधात्वर्थस्य ग्राह्यतया रूढिस्त्याज्येति स इह न रुद्रवाचीति हि सर्वमतभाष्यसंप्रतिपन्नमेतत् ।

प्रश्नोपनिषदि परं ब्रह्म अन्वेषमाणान् प्रति प्रजापतिं प्रजानां स्रष्टारं प्रथममाह पिप्पलादः । प्रजापतिशब्दश्च श्रुतिषु चतुर्मुखे चतुर्भुजे चोभयत्रैव प्रसिद्धः, दक्षादिप्रजापतिषु च; न पशुपत्यादौ । 'सप्तदश प्राजापत्यान् पशूनालभत' इत्यत्र 'श्यामा एकरूपा भवन्ति, एवमिव हि प्रजापतिः' इति वाक्यशेषः श्यामवर्णमेकरूपं प्रजापतिशब्दविवक्षितं दर्शयन् नीलतोयदनिभं नारायणमेव प्रतिपादयति । एवं येयजामहादौ द्रष्टव्यमिति श्रीस्तोत्रभाष्ये, 'कः श्रीः श्रियः' इति श्लोके श्रीदेशिक-

भाषितम् । एवमुपर्यपि प्रश्नोपनिषदि, 'जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते' इति अर्चिरादिमार्गेणाऽऽदित्यं संपन्नस्य लोकविशेषप्राप्तिपूर्वमनुभाव्यं पुरुषशब्देन निर्दिशति । पुरुषशब्दः परवासुदेवपरः इति प्रागेवावोचाम ।

एवं मुण्डकोपनिषदपि सत्यमक्षरं दिवि तिष्ठन्तं दिव्यमेकं पुरुषपदेनैव पौनःपुन्येन निर्दिशति । 'ब्रह्मा देवानां प्रथमः संबभूव विश्वस्य कर्ता भुवनस्य गोप्ता' इत्युपक्रमे उत्पन्नदेवगणतुल्यं चतुर्मुखस्योत्पत्तिवर्णनेन परं ब्रह्म न चतुर्मुख इति स्पष्टमेव । स यतः संबभूव, स इह विवक्षितः पुरुष इति चौचित्यात् ज्ञायते । स च पद्मनाभ एव ।

माण्डूक्ये तु शिवशब्दः स्पष्टं श्रूयते, 'शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते', 'प्रपञ्चोपशमः शिवोऽद्वैतः' इति । तत्र शिवस्य वा सगुणस्य ग्रहणम्, अद्वैतस्य वा निर्गुणस्येति विमर्शे, तृतीयः प्रकारः प्रादुरस्ति, उपक्रमानुरोधेनोभयमपि ह्युपेक्ष्यम् इति काचित् वैष्णवानां समाधिसरणिः । कीदृगसावुपक्रमः ? उच्यते । प्रणव-निविष्टानामक्षराणामभिधेयतयाऽभिमताः विश्वतैजसप्राज्ञाः प्रक्रमे कीर्त्यन्ते । ते च श्रीभागवते (१२-११.) वासुदेवमूर्तिव्यूहा व्युदपादिषत, 'स विश्वस्तैजसः प्राज्ञ-स्तुरीय इति वृत्तिभिः' इति । तत्रोक्तस्तुरीय एवायं चतुर्थ इति साम्प्रतमिति । अलमनेन प्रयासेन । सुखं पुनरिद वक्तुं श्रोतुञ्च, यत् ईडादिपदविलक्षणः ब्रह्म-पुरुषादिशब्दविसदृशश्च विष्णुशब्दो विस्पष्टार्थः कठोपनिषदि मुमुक्षूपास्ये मुक्त-भोग्ये प्रपञ्चकारणे परतत्त्वे प्रायोजि । तदविरोधेन शिवशब्दस्यापि समञ्जसेऽर्थे जाग्रति किमिति विरुन्धानमर्थमनुरुन्धानैः कलहायितव्यम् । प्रसिद्ध्यति च शिवशब्दो यथा शङ्करे, तथा मङ्गलेऽप्यविशेषं रूढ्या, 'रात्रिः शिवा काचन संनिधत्ते', 'शिवश्च पन्थाः', 'शिवः शिवानामशिवोऽशिवाना' मित्येवम् । तस्य च विष्णोः परवासुदेवस्य परमे पदे भ्राजमानस्य प्रापञ्चिकोपप्लवप्रहाणेन प्रादुर्भूत-ब्राह्मरूपैः सर्वप्रकारभोग्यस्य पुष्कलं शिवत्वमिति शंसनीयमेवैतदिहोपनिषत्संदर्भे । रुद्रकपर्दिपशुपत्यादिपदप्रयोगे तत्त्वान्तरशङ्का समुन्मिषति, न साधारणे शिवशब्दे इति निभाल्यताम् ।

अथ तैत्तिरीयम् । अत्राप्यन्यस्य प्रकृतनिर्धारणानुपयुक्तत्वात् मोक्षार्थविद्या-प्रकरणपठितपदमात्रं परिशीलनीयम् । तत्र, 'तस्मिन्नयं पुरुषो मनोमयः अमृतो हिरण्मयः' इति पुरुषपदं प्रथमं श्रूयते । 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद' इत्यत्र अनन्तपदं योगशक्त्या त्रिविधपरिच्छेदरूपान्तराहितीमवगमयदेव रूढ्या विष्णुमपि स्फोरयतीति च वदन्ति । तत्रैवानन्तरप्रश्ने, 'अम्भस्यपारे', 'यमन्तःसमुद्रे कवयोऽवयन्ती'ति समुद्रशायी श्रियःपतिः प्रक्रम्यते । सहस्रशीर्षानुवाके च, 'नारायणं महाज्ञेयम्', 'नारायण परं ब्रह्म तत्त्वं नारायणः परः', 'नारायण परो ज्योतिरात्मा नारायणः परः', 'व्याप्य नारायणः स्थितः', 'अनन्तमव्ययं कविं समुद्रेऽन्तं विश्वशम्भुवम्' इत्येवं दहरविद्यासंदर्भे सर्वविद्यावेद्यो नारायण एवानन्तः समुद्रशायी; अन्तःप्रवेशबलात् खलु यस्य वैश्वानरवह्निशिखा नीलतोयद-मध्यस्था विद्युल्लेखेव विभाति; य एवमन्तर्यामी भवन् ब्रह्मशिवेन्द्रादिशब्दैः ब्रह्म-विद्यादिषु विवक्ष्यते इति नीलमेघश्यामलो नारायणः श्रियःपतिर्मुक्तकण्ठं घुष्यत इति कथं प्रमाणशरणानामपेताभिनिवेशानामन्यदेवतापारम्यशङ्काकलङ्कलेपावकाशलेशोऽपि । एवञ्च, 'तस्य प्रकृतिलीनस्य यः परः स महेश्वरः' इति महेश्वरशब्दः, 'तमीश्वराणां परमं महेश्वरम्' इतीश्वरेषु महान् ईश्वरोऽयं परमत्वात् इति व्युत्पादितार्थपरस्सन् नारायणे स्थास्यति ।

उपरि, 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः' इति विरूपाक्षपदमप्यत एव शीतोष्णचन्द्रसूर्यनेत्रतया विष्णावेव समन्वितमभाषि । विरूपाक्षान्तर्यामिग्रहणं वा क्रियताम् । साक्षाद् विरूपाक्षमेव सर्वज्ञं शम्भुमनुसंधाय प्रणम्य तदनुग्रहभावितपरमार्थज्ञानो वा ब्रह्मविद्यामवतरतु मुमुक्षुः । न पुनरेतन्मन्त्रे रुद्रश्रवणमात्रेण मुक्तये मुख्यतया मुमुक्षूपास्यत्वं तस्य सेत्स्यति । यथा अधस्तात्, 'तत्पुरुषाय विद्महे महादेवाय धीमहि' इति मन्त्रो नापेक्षितकिञ्चित्साधकः, तत्र, 'नारायणाय विद्महे वासुदेवाय धीमही'त्यपि श्रवणात्, दुर्गिदन्तिगरुडनिर्विशेषं पाठाच्च — तथैवायमपि मन्त्रः ।

अथ पुनरादित्यमण्डलान्तर्वर्तित्रयीतनुहिरण्मयपुरुषोपासनं तत्सायुज्यसार्ष्टिता-फलप्रदं विधीयते । आदित्यमण्डलान्तर्विराजमानश्च विष्णुरिति प्रागेव प्राकाशि ।

ऐतरेयोपनिषदि तु आत्मादिपदानि साधारणान्येव सन्ति व्याख्यातभागे। अव्याख्यातभागे तु तत्रैव, 'अ इति ब्रह्म' इति परस्य ब्रह्मणः अकारशब्दवाच्यत्वमावेदि। 'अ इति भगवतो नारायणस्य प्रथमाभिधान' मिति तु अवेदान्तिनोऽपि विदन्तीति किमत्र निरूपणीयमस्ति।

छान्दोग्ये (बृहदारण्यके च) आत्मब्रह्मपुरुषशब्दा एव श्रूयन्ते। अपहतपाप्मा पुरुषोऽयं पुण्डरीकाक्षत्वादिना प्रसिद्ध इति च, 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः हिरण्यकेश आ प्रणखात् सर्व एव सुवर्णः। तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम। स एष सर्वेभ्यः पाप्मभ्य उदितः' इत्यत्र व्यक्तम्। मधुविद्यायाम्, 'तद्धैतद् ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे' इति ब्रह्मोपनिषदुपदेष्टॄणां मध्ये ब्रह्मा परिगणित इति स न परं ब्रह्मेति स्वरससिद्धम्। गायत्रीविद्यायां श्रियःपतिपरपुरुषसूक्तगतः, 'तावानस्य महिमे' ति मन्त्र उपात्तः। पुरुषविद्यायाम्, 'कृष्णाय देवकीपुत्रायोक्त्वा' इत्यत्र आराध्यतया श्रीकृष्णो विवक्षित इति चाभिप्रयन्ति; एवं संवर्गविद्यायाम्, 'हिरण्यदंष्ट्रो बभसोऽनसूरिः' इति हिरण्यकशिपुहृदयभेदकवद्व्रातभयङ्करदंष्ट्राभासुरः श्रीनृसिंह इति च। वैश्वानरविद्यायां पृथिव्यादिपादादिवर्णनेन विश्वरूपो वैश्वानरो वेदितः, यः विष्णुरिति महाभारतादौ स्मर्यते। तदेवं विष्णुपारम्यस्यैव छान्दोग्यादावपि यथायथमुल्लेखः स्पष्टं वा कथमपि वा; नान्यस्य।

पुरुषशब्दनिर्वचनं तु बृहदारण्यके, 'स यत् पूर्वोऽस्मात् सर्वस्मात् सर्वान् पाप्मन ओषत तस्मात् पुरुषः' इति सर्वपूर्वस्थितत्व सर्वपाप्मप्रदाहकत्वाभ्यां परमात्मन्यकारि। एवञ्जातीयानि बहूनि निर्वचनानि पुराणादिवर्णितानि ज्योतिरधिकरणटीकादिषु द्रष्टव्यानि। एवम्भूतस्य पुरुषस्य सूर्यमण्डलमध्ये समुल्लसतो रूपमपि, 'तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वासः, यथा पाण्ड्वाविकम्, यथेन्द्रगोपः, यथाऽग्न्यर्चिः, यथा पुण्डरीकम्, यथा सकृद्विद्युत्त' मित्यनेकप्रकारं प्राकाशि। सर्वरूपाश्रयसहस्रकिरणमण्डनस्य सर्वमपि रूपं संभाव्यते। सर्वथाऽपि सरूप एव स परः। मधुब्राह्मणे च, 'युक्ता ह्यस्य हरयः शता दश' इति, 'कृष्णरूपाण्यनन्तानि' इतिवत् अन्तर्यामिणो हरेरनन्तानि रूपाणि दर्श्यन्ते। तत्र हरिशब्दो

विष्णौ असाधारण इति आबालमधिगतोऽर्थः। उपरि शाकल्यब्राह्मणे, 'तं त्वौपनिषदं पुरुषं पृच्छामी' ति शाकल्यं पर्यनुयुञ्जानो याज्ञवल्क्यः उपनिषदां प्रतिपाद्यो मुख्योऽर्थः पुरुष एव, यथा पुरुषसूक्तस्येति प्रख्यापयति। पुरुषश्च वासुदेव इति प्रागावेदितम्। उपरि पूर्णब्राह्मणे च अक्ष्यादित्यमण्डलस्थः पुरुषः प्रत्यपादि।

तदेवं कठतैत्तिरीयकण्ठोक्त विष्णुनारायणादिपदाभिधेय परमपुरुषविषयकतया पूर्वोत्तरोपनिषद्गतानां साधारणशब्दानामाञ्जस्येन संगमनात् अन्यादृशदैवतैकप्रसिद्धस्य पदस्य परविद्याप्रकरणे क्वचिदपि दशस्वपि आसूपनिषत्सु प्रयोगानुपलम्भात् उपनिषद इमा विष्णुपरा इति एतदनुरोधेन इतरा उपनिषदो निर्वाह्या इति, विशिष्य निरूपणे चोपनिषदन्तराण्यपि विष्णुपारम्यस्य प्रायोऽनुकूलानीति च विभाव्य तदिह संगृह्य साम्प्रतं सहृदयहृदयसंप्रीणनाथ शंसनीयम्, अनाग्रहेण शंसितवानस्मि। तत्र आस्तिकोऽनसूयुः प्रमाणम्।

अस्य परस्य ब्रह्मणो विष्णोरनपायिनी श्रीश्च तत्र तत्रेहोपनिषत्सु गूढमुपदिश्यते। आदित्यमण्डलेऽऽन्तर्हृदये च हिरण्मयं पुरुषं प्रतिपादयन्ति बहून्येतदुपनिषदन्तर्गतानि वाक्यानि भगवतः नित्यश्रीसंपर्कं निपुणं दर्शयन्तीति संप्रदायविदः। तैत्तिरीये अन्तर्यामिणो नारायणस्य निरूपणे प्रवृत्तोऽनुवाकः, 'तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः - नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा। नीवारशूकवत् तन्वी पीताभा स्यात् तनूपमा' इति श्रुतिहृदयमपि निमील्य नेत्रे निपुणं भावनीयम्। बृहदारण्यके च याज्ञवल्क्यो जनकं प्रति, 'इन्धो नाम, यमिन्द्र इत्याचक्षते परोक्षेण' इति भगवन्तमिव, 'वामेऽक्षिणि तस्य पत्नी विराट्' इति तत्पत्नीमप्युपदिश्य तयोरेष संस्तावः, अन्नम्, प्रावरणम्, सृतिः सञ्चरणीत्येवमन्तर्हृदये द्वयोरनयोर्दम्पत्योः सानन्दनिवासं सम्यगवगमयतीत्यलमधिकेन। श्रियः प्रभावः श्रीसूक्तादिपरश्शतप्रमाणान्तर - तद्भाष्यादिपरिज्ञेयस्तु नेह प्रस्तूयते।

## हितम्

अस्य च श्रियःपतेरहरहरभ्यासाधेयातिशयं दर्शनसमानाकारं प्रीतिरूपापन्नं ध्यानमुपासनापर्यायं प्रागुक्तमिव प्रपदनमपि परमपुरुषार्थोपाय इति प्राचामादेशः।

अयमप्यंशस्तत्र तत्र निगूढः । यथा ईशोपनिषदि अन्ते, 'ओं क्रतो स्मर कृतं स्मर' इति, 'भूयिष्ठां ते नमउक्तिं विधेम' इति च । कठोपनिषदि, 'यच्छेद् वाङ् मनसी प्राज्ञः — तद्यच्छेच्छान्त आत्मनी' ति वैष्णवं पदमधिगन्तुं, तद्वशीकरणमुपायः प्रदर्श्यते । 'तस्य च वशीकरणं तच्छरणागतिरेवे' ति च विदितवेदितव्यैर्वेदितम् । मुण्डकोपनिषदन्ते च, 'संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः । ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाऽऽविशन्ती' ति संपूर्णज्ञानान् संयमिनः समाधिलभ्यपरमपुरुषार्थान् प्रोच्य समनन्तरमेव, 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगात् यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे' इति महाविश्वासशालिनां परमामृतात् परमपुरुषादेव भक्तिस्थानापन्नात् मुक्तिं प्रेप्सतां प्रतिपादितः संन्यासः प्रपत्तियोग एवेति युक्तं प्रतिपत्तुम् । 'संन्यासस्त्याग इत्युक्तः शरणागतिरित्यपी' ति संन्यासशब्दो भरन्यासे हि प्रसिद्ध एव ।

तैत्तिरीयोपनिषदन्ते, 'न्यासः प्रोक्तोऽतिरिक्तं तपः' इति च सुप्रसिद्धम् । तत्र हि सत्यतपोदमशमाद्यविशेषं मानसमपि भक्तियोगं परिगणय्य, 'न्यास इति ब्रह्मा ब्रह्मा हि परः' इति न्यासस्य सर्वत उत्कर्षं संकीर्त्य, आवृत्तिरहितस्य, अचिरेणानावृत्तिहेतोः पुरुषापेक्षामनुरुध्य यथार्हं प्रारब्धपरिक्षपणक्षमस्य अकिञ्चनधनस्यास्य भक्तियोगादतिरेकम् ,'तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः' इति बहुसंवादसूचनपूर्वमुपपाद्य, विधाय च तम् , पुनरपि प्रशंसने प्रवृत्तिरधीयत, 'एतद्वै महोपनिषदं देवानां गुह्यम्' इत्यादिनेति न्यासप्रमाणनिगमगणगणनावसरे कनिष्ठिकामधितिष्ठति नस्तैत्तिरीयमिति निष्प्रपञ्चमेतत् ।

ऐतरेयोपनिषद्यपि अव्याख्याते भागे मुमूर्षानिमित्तदर्शिनो मोक्षहेतुमन्त्रजपो विहितोऽस्ति । तथा छान्दोग्यमपि मध्य एव पुरुषविद्याप्रकरणे षोडशाधिकवर्षशतजीवनं विद्याफलमुपवर्ण्य, 'अपिपास एव स बभूव । सोऽन्तवेलायामेतत् त्रयं प्रतिपद्येव' इति मन्त्रत्रयमुपदिश्य, 'उद् वयं तमसस्परि — अगन्मज्योतिरुत्तमम्' इत्यनायासेन अव्याक्षेपेण मोक्षस्थानसंप्राप्तिं संदर्शय्य नूनं न्यासमेव विद्यामभिसंधत्त इति निरूपणनिपुणानां निर्विंशयनिर्धार्यमिदम् । परीक्षिन्महाराजः सप्तरात्रत एव श्रेयो लिप्सुः श्रीशुकमहर्षिपरमानुग्रहपात्रीभूय ब्रह्मभूयं गत

इति श्रीभागवते प्रोक्ताम्, श्रीविष्णुपुराणे (४-४) वर्णिताञ्च, 'खट्वाङ्गो नाम कश्चिद् राजर्षिः अच्युतात्मकमेव जगदशेषं प्रागधिगतवानपि देवासुरसंग्रामे देवैः साहाय्यकायाभ्यर्थितः तेषां प्रियं विधाय तान् दित्सितवरान् आत्मनः शिष्टमायुः-प्रमाणमनुयुज्य, 'मुहूर्तमात्रमवशिष्टमस्ती'ति ततः समाकर्ण्य तत्क्षण एवास्खलित-गतिना विमानेन मर्त्यलोकमागम्य, 'भगवन्तं प्राप्स्यामी' त्यध्यवसाय भगवति वासु-देवे स्वात्मानं युयोज, तत्रैव च लयमवाप' इति कथामनुसंदधतां स्वरसावगम्यमे-तत्, यदनेकजन्मसंसिद्धानवरतावर्तितेन भक्तियोगेनेव अन्येनापि केनचित् कालानुगुणेन योगेन अकालकाल्यं स्थानं सुप्रापमिति। अत एव खट्वाङ्गः प्रशंसितः, "खट्वाङ्गेन समो नान्यः कश्चिदुर्व्यां भविष्यति। येन स्वर्गादिहागम्य मुहूर्तं प्राप्य जीवितम्। त्रयोऽतिसंहिता लोका बुद्ध्या सत्येन चैव हि" इति। नूनं मायाप्रधान-महासुरसंहारसमर्थेन धानुष्कधुरन्धरेण खट्वाङ्गेन ब्रह्मलक्ष्यमपि मायामयप्रधानकवच प्रच्छन्नं प्रणवादिधनुस्संहितेन प्रत्यङ्मयेन बाणेन क्षणमात्रेण विध्यता परब्रह्म-परिपूर्णानुभवपरिवाहभूतं परिचरणसाम्राज्यमात्मसादकारि। तदीदृश एवेह छान्दोग्यपुरुषविद्यावसानेपि तैत्तिरीयपुरुषविद्याप्रक्रम इव कश्चिदुपायोऽभिसंहित इति स्थिते, सोऽयं न्यास इति न्यासविधायिनानाप्रमाणानुसारेण निर्णीयते। अन्ते चास्या उपनिषदः श्रूयते, 'श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्ये' इति घन-श्यामे भगवति प्रपत्तिः, फलञ्च, 'धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवा-मी' ति, 'प्रजापतेः सभां वेश्म प्रपद्ये,' 'लिन्दु माभिगा' मिति च।

बृहदारण्यकेऽपि ब्रह्मप्रधानविद्यानामवसाने ईशोपनिषन्मन्त्रः, 'भूयिष्ठां ते नमउक्तिं विधेमे'ति प्रपत्तिपरः श्रूयत एव। तदेवम्, श्वेताश्वतरोपनिषदोऽन्ते यथा, 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति मोक्षकामस्य भगवति प्रपत्तिरुपायोऽदर्शि, तथा बह्वीष्वीशाद्युपनिषत्स्वपि आस्विति परामर्शी नूनमिद-मपि निवेदनीयं भवति, यत् तत्रभवता श्रीमन्निगमान्तमहादेशिकेन उपनिषत्स्विव भगवद्गीतासूपनिषत्सु चरमानुसंधापितस्य शरणागतिश्लोकस्य व्याख्यानारम्भे विहिते मङ्गलश्लोके —

'य उपनिषदामन्ते यस्मादनन्तदयाम्बुधेः
त्रुटितजनताशोकः श्लोकः स्वयं समजायत।'

इति भगवत उपनिषद्विदीप्तस्योपनिषदामन्ते विराजमानतावर्णनम्, तत् तस्य गीतोपनिषदामन्ते मुख्योपनिषदामन्ते चोक्तरीत्या भक्तिस्थानापत्त्या भरस्वीकार-परायणतया स्थितिं सुदूरं परिशील्यैवेति। कस्मादयमर्थः एषु वाक्येषु प्रधानभूत-प्रपत्तीदम्परताप्रख्यापनपूर्वं प्राच्यैराचार्यैर्न प्रत्यपादीति चेत् — यस्माद् भगवता भाष्यकृता पुरुषविद्याधिकरणे तैत्तिरीयवाक्यप्रस्ताव इव भगवद्गीताचरमश्लोकेऽपि गद्यग्रन्थाभिसंहितोऽप्यर्थः स्पष्टं नाभाष्यतेति सञ्चिन्त्य संतोष्टव्यम्।

## पुरुषार्थः

प्रदर्शिते तत्त्वहिते। पुरुषार्थोऽवशिष्यते। स इह निःश्रेयसात्मा। स च तमसःपरस्तादवस्थिते पुनरावृत्तिरहितं बन्धनिर्मुक्तपुरुषपरिषत्परिरक्षणानुगुणस्थेमभाजि परमे पदे हिरण्मये परमकारणस्य परस्य पुंसः परिचरणेनानुसञ्चरणेन च भवन् परमानन्द इति संग्रहः। प्राय उपनिषत्सु परमं पदमिदं यथायथं प्रतिपादितमे-वास्ति। किं बहुना? ईशोपनिषदन्तश्रुतो मन्त्र एकस्तावत् क्रियासमभिहारेण अर्थानुसंधानपथमानीयताम्। अधिकरणसिद्धान्तनयेनाशेषा अप्यर्था अधिगता भविष्यन्ति। अधिकरणसिद्धान्तो नाम उच्यमानः कश्चिदर्थः स्वान्यथानुपपत्त्या यान् अनेकान् अर्थानवगमयति, यान् खल्वर्थान् आश्रित्यायमेकोऽर्थोऽवतिष्ठते, तेषा-मपि सिद्धिः। पश्यतेहैव, 'अग्ने अग्रनेतः! परमात्मन्! मां नय' इत्यनेन उपरि-तनं स्थानविशेषं प्रति नयनं यदि न भवेत्, न भवेदेव मोक्ष इति सिद्ध्यति। सुपथेत्यनेन, यद्यपि स्थानं तत् मार्गान्तरेणापि गम्येत, तथापि स्थिरावस्थानकामेन पुंसा शोभनेन पथा गन्तव्यमिति गम्यते। राये इतीदम्, अनपायिधनं भोगोप-करणं बहुलं तत्रास्तीति बोधयति। 'विश्वानि देव वयुनानि विद्वा' निति च यथा तैस्तैरनुष्ठीयमाना उपायाः ज्ञानरूपाः, तथा अयमपि मयाऽनुष्ठितो भक्तियोगः प्रपत्तियोगो वा किञ्चित् विहितं वेदनमेवेति न मे उपेक्षणं भवतो युक्तमिति भगवन्तं प्रति निवेदनं सूचयति। 'युयोध्यस्मत् जुहुराणमेनः' इति च, 'सर्वपापविधूननपूर्वकं प्राप्यं तव स्थानम्। अतः तत्र संभवन् भोगः सर्वोऽपि न कर्माधीनः' इति

गमयति । 'भूयिष्ठां ते नम उक्तिं विधेमे' त्यनेन चेदमखिलमनुदर्शितं भवति, यत्—एकं नमः प्रपदनाख्यमिह कृतवन्तः, 'बद्धाञ्जलिपुटा हृष्टा नम इत्येव वादिनः' इति रीत्या भूयोभूयो नमो मनसा वाचा कायेन च करिष्यन्त एव स्थास्यन्ति; यस्मै नम इह कृतवन्तः, तस्मा एव तत् तत्रापि करिष्यन्तीति प्रापकः प्राप्यश्चैक एव। यस्मान्नमः क्रियते, तस्मात्, 'नीचोच्चयोः स्वभावोऽयं नन्तृनन्तव्यतात्मकः । प्रह्वीभवति नीचो हि परे नैच्यं विलोकयन्' इत्युक्तरीत्या परावरभेदः सार्वकालिक इति । उक्तिमिति कथनेन, वाग्व्यापारस्य विविधस्थानकरणसाध्यस्य करणकलेबरसव्यपेक्षतया, प्रागेनोविधूननस्य वृत्ततया च तत्र कर्मनिरपेक्षकमनीय-विग्रहपरिग्रहो मुक्तस्य ज्ञापितो भवति । **विधेमे**ति महोत्साहव्यञ्जनेन परिचरणस्य प्रकामभोग्यत्वं प्रख्याप्यते ।

एवमत्रोपनिषदि व्यञ्जितानामर्थानामुपरितनीषु यथायथं कण्ठोक्तिरस्तीति न केवलमेतावत्, अचिन्तापदान्यपि अनेके अंशाः प्रतिपादिताः सन्ति । यथा —स्वर्गे लोके ज्येये प्रतितिष्ठति (केन. ४-९.) स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वं —(कठ. १-१२.), तद् विष्णोः परमं पदम् (कठ. ३-९.), स सामभिरुन्नीयते ब्रह्मलोकम्, पुरिशयं पुरुषमीक्षते, यत् तत् कवयो वेदयन्ते (प्रश्न. ५.), वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः, हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्, (मुण्डक. १-१; २-२.), परमे व्योमन् सोऽश्नुते सर्वान् कामान्, एतत् साम गायन्नास्ते (तै.आ), यदक्षरे परमे प्रजाः (तै. १-२. प्र.), तमसः पारं दर्शयति भगवान् सनत्कुमारः, स एकधा भवति त्रिधा भवति पञ्चधा — शतञ्च दश चैकश्च सहस्राणि च विंशतिः, न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् । सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः, स यदि पितृलोककामो भवति — यं यमन्तमभिकामो भवति सोऽस्य संकल्पादेव समुत्तिष्ठति । तेन संपन्नो महीयते, सर्वं तदत्र गत्वा विन्दते, सकृद् विभातो ह्येवैष ब्रह्मलोकः, अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि । तदैरम्मदीयं सरः तदश्वत्थः सोमसवनः तद-पराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मयम्, परंज्योतिरुपसंपद्य स्वेन रूपेणाभि-निष्पद्यते । स उत्तमः पुरुषः । स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा

यानैर्वा, प्रजापतेः सभां वेश्म प्रपद्ये ’ (छा) इत्येवमादिषु । संप्रत्युपस्थितकतिपयस्थल-निर्देशमात्रमत्र विस्तरभीरुणा कृतम् । कौषीतक्युपनिषत्प्रकाशे च विशदं विज्ञास्यते ।

एवम्भूतपरतत्त्वहितपुरुषार्थतत्परा इमा उपनिषद इत्थं भाष्यपरिष्कार-परिष्कृता मुद्रिताः । अत्र स्थितानि भगवन्नामानि गुणविख्यातानि गणयित्वा सम-नन्तरे सरे प्रकाशयितव्यानि, यत्रान्यासामपि कासाञ्चिदुपनिषदां पुरुषसूक्तस्य च प्राच्यैराचार्यैः शारीरकादिषु संवादार्थं समाहृत्योद्धृतानां भाष्यं मुद्रणपथमानेष्यते ।

एषाञ्च **श्रीरङ्गरामानुजमुनिवराणां** श्रीवरदविष्णवाचार्या इति प्राचीनाश्रमे नामधेयमित्यभ्यूहितुमवकाशं ददति एतद्विरचितायाः भावप्रकाशिकायाः तालकोशा इति किञ्चित् संप्रत्युपक्षिपामि, यत् परस्ताद् विमृश्य निर्णेयं भविष्यति ।

यथा छान्दोग्यस्य, यथा च बृहदारण्यकस्य, तथैव यथावत् परिशिष्टोप-निषत्सरस्यापि परिष्कृत्य मुद्रणम् , परमेण आदरेण पारमार्थिकस्य परमपुरुषश्रीनिवास-प्रतिपादकस्य सिद्धान्तस्य प्रपञ्चक्षेमाय परितः प्रचारे बद्धश्रद्धया **विशिष्टाद्वैत-भाष्यप्रकाशकसमित्या** समुचितमभ्यर्थिता अपेक्षां व्याजीकृत्यानर्गलमधिकेनोत्साहेन स्वयमेव प्रवृत्ता **श्रीवेङ्कटेशदेवस्थानसमितिः** समादिष्टवदस्ति । तदनयोः द्वयोरपि समित्योर्विषये कर्तव्यं कृतज्ञतानुसंधानं तत्रैव यथावत् करिष्यन् इदमेवात्र निबिभन्त्सामि, यत् —

**पवित्राग्र्यवेदान्ततद्भाष्यमालां**
**परिष्कारहृद्यार्थ्यसंदर्भभव्याम् ।**
**समेष्यद्भिरेवं सरैः संघटय्य**
**स्वयं धर्तुमिच्छत्वयं श्रीनिवासः ॥**

श्रीपदपुरी
१०–१२–’५२.

इति,
**उत्तमूर्. ति. वीरराघवाचार्यः**
( उभयवेदान्तग्रन्थमालासंपादकः )



# बृहदारण्यकविषयशारीरकस्थलसूची



| बृह. | शारी. | बृह. | शारी. |
|---|---|---|---|
| १-२. अध्यायौ. | ३-३-१०. | ५-८-७. | ३-३-१४. |
| ३-१. | ४-१-४. | ६-३-९+१०. | ३-२-१. |
| ३-२. | १-४-८. (श्रु. प्र.) | ६-४-२. | ४-२-८. |
| ३-३. | ३-३-२. | ६-४-६. | ३-१-२. |
| ३-४. | १-४-८. (श्रु. प्र.) | ,, | ३-१-२. |
| ३-४-७. | १-४-४. | ६-४-१६. | १-३-८. (३१) |
| ,, | ४-१-२. | ६-४-१७. | १-४-३. |
| ३-४-१०. | ,, | ६-४-२१. | ३-३-१६. |
| ३-५-३. | २-४-४. | ६-४-२२. | ३-४-१. (१५) |
| ३-५-१३. | २-४-३. | ६-५. | १-४-६. |
| ४-१. | १-४-५. | ७-५. | ३-३-७. |
| ४-१-१९. | ३-२-२. | ७-६. | ३-३-६. |
| ४-२-३. | १-४-२. | ७-१०. | ४-३-१. |
| ४-३. | ३-२-५. (२१) | ८-१. | ३-३-३. |
| ४-४. | १-४-६. | ८-१-१४. | ३-३-५. |
| ५-२-१०+११. | ४-२-५. | ,, | ३-४-७. |
| ५-४+५. | ३-३-१५. | ८-२. | ३-१-१. |
| ५-५. | ३-४-१२. | ८-२-१५. | ४-३-१३. |
| ५-७. | १-२-४. | ,, | ४-३-४. |
| ५-७. | १-३-३. | ८-२-१६. | ३-१-२ |

## बृहदारण्यवाक्यानां श्रुत्यन्तरसंवादादिस्थलसूचो

| बृ. ३—१. | तै. ३. अ. अन्ते. | बृ. | |
|---|---|---|---|
| ३-३. | छा. १-२. | ६-४-१४. | केन. २-५; कठ. ६-४ |
| ३-३-१९—२१. | ,, १-२-१०—१२ ; | ,, | श्वे. ३. |
| | ऐ. २-२. | ६-४-१५. | कठ. ४-५. |
| ३-४-१. | ऐ. आत्म. १. | ६-४-१८. | केन. १-२. |
| ३-४-४. | सुबा. २. | ६-४-१९. | कठ. ४-११. |
| ३-४-७. | तै. आ. तदात्मानं | ६-४-२१. | छा. ८-४-१. |
| | स्वयमकुरुत. | ७-३. | ,, ८-३-३. |
| ४-१. | कौषी. ४. | ७-४. | ,, ८-३-५. |
| ४-१-१८. | प्रश्न. ३-४. | ७-६. | ,, ३-१४. |
| ४-१-१९. | सुबा. ४. | ७-९. | ,, ३-१३-८. |
| ५-८-७. | ,, ३; प्र. ३-६. | ७-१५-१—४. | ई. १५-१८. |
| ६-२-२. | ऐ. आत्म. ३. | ८-१. | छा. ५-१ ; कौ. ३. |
| ६-४. यदा सर्वे. | कठ. ६-१५. | ८-२. | ,, ५-३. |
| ६-४-१०. | ई. ९. | ८-३. | ,, ५-२-४. |
| ६-४-११. | ,, ३. | ८-४-१. | ,, १-१-२. |

## बृ. ऋषिदेशादिनामानि.

| | | | |
|---|---|---|---|
| अयास्य आङ्गिरसः | पु. २९ | गौतमः | पु. १४४ |
| वामदेवः | ६५ | भरद्वाजः | ,, |
| बालाकिर्गार्ग्यः | ११६ | विश्वामित्रः | ,, |
| अजातशत्रुः काश्यः | ,, | जमदग्निः | ,, |

| | | | |
|---|---|---|---|
| वसिष्ठः | पु. १४४ | उद्दालक आरुणिः | २३४, ४५१, ४५४ |
| कश्यपः | ,, | कबन्ध आथर्वणः | २३५ |
| अत्रिः | ,, | काश्यः, वैदेहः उग्रपुत्रः | २५० |
| मैत्रेयी | १५५ - ३८४ | विदग्धः शाकल्यः | २९४ - २६० |
| कात्यायनी | १५५ ,, | जित्वा शैलिनिः | २८९ |
| दध्यङ् आथर्वण | १९० | उदङ्कः शौल्बादनः | २९१ |
| अश्विनौ | ,, | बर्कुः वार्ष्णः | २९२ |
| जनको वैदेहः | १९९ | गर्दभीविपीतो भारद्वाजः | २९३ |
| कुरवः | ,, | कौरव्यायणीपुत्रः | ३९३ |
| पञ्चालाः | ,, | प्रातृदः | ४०९ |
| अश्वलः | २०१ | श्वेतकेतुः आरुणेयः | ४२८ |
| जारत्कव आर्तभागः | २०९ | प्रवाहणो जैबलिः | ,, |
| भुज्युः लाभ्यायनिः | २१७ | गौतमः | ४३१ |
| पतञ्चलः काप्यः | ,, २३४ | वाजसनेयो याज्ञवल्क्यः | ४५१ |
| गन्धर्वः | ,, २३५ | मधुकः पैङ्ग्यः | ,, |
| सुधन्वा आङ्गिरसः | ,, | चूलो भागवित्तिः | ,, |
| पारिक्षिताः | ,, | जानकिः आयस्थूणः | ,, |
| उषस्तः चाक्रायणः | २२० | सत्यकामो जाबालः | ,, |
| कहोलः कौषीतकेयः | २२३ | नाको मौद्गल्यः | ४५४ |
| गार्गी वाचक्नवी | २४९ - २३२ | कुमारहारितः | ,, |
| | | | * |


*वंशब्राह्मणं स्थलत्रये ( ४. ६; ६. ६.; ८ ५. ) पठितमस्ति । तत्र बहूनां गुरूणां नामधेयान्येव निर्दिश्यन्त इति तत्रैव तानि द्रष्टव्यानि ।

## शोधनिका.

| पृ. | पं. | शुद्धम् | पृ. | पं. | शुद्धम् |
|---|---|---|---|---|---|
| १४. | १५. | कर्म ( कर्मसु ) | १७२. | २. | (अभिवदतीति पूर्वम्, श्रृणोतीति च पश्चात् क्वचित् पठ्यते एव-मुपरि ७४ पुटेऽपि ) |
| २५. | २५. | तत्रैकस्यैव | | | |
| २८. | २१. | रूपफल | | | |
| २९. | १९. | दूरत्वं | | | |
| ५०. | २२. | प्रकारान्तरस्पष्टात् | १८१. | ९. | जीवब्रह्माभेदपक्षेऽपि |
| ७४. | २२. | दर्शनवेदनो | १९९. | ५. | पञ्चालानां |
| ७७. | ५. | निमृणाति | ,, | १५. | पञ्चाल |
| ९२. | ८, ९. | नोदाननसमानना | २११. | १९. | केवलास्वप्सु |
| १०३. | २. | स यद्यनेन | | | |
| १६९. | ११. | विज्ञानघनः (विज्ञा-नमयेति पूर्वकोशेषु स्थितमशुद्धम् ?) | २५२. | २, ४. | यद्भूतञ्च |
| | | | २५४. | २२. | जीवस्य शासना |
| | | | २६९. | ८, १९. | पञ्चालानां |
| २९४. | २२. | प्रा (प्र) साद ( प्रसादस्थनीयेति कोशान्तरेषु पाठः ) | | | |
| ३५३. | १८. | य इदं मध्वदमिति मन्त्रे ( अत्र अङ्गुष्ठमात्र इतीदमशुद्धम् ) | | | |

## कतिपयमुख्यप्रमाणाकरसूची.

| पृ. | प्रतीकम् | आकरः | पृ. | प्रतीकम् | आकरः |
|---|---|---|---|---|---|
| ८. | निमित्त. | वि. पु. १-४-५१. | ३७३. | वर्षायुतैः. | म.भा.कर्ण. ८-३-१५ |
| ७९. | काठिन्य. | ,, १-१४-२८ | ,, | यथारत्ना. | वामनपु. ७४-४० |
| १५२. | आकाश. | याज्ञ. ३-१४३ | ,, | तेजोबल. | वि. पु. ६-५-८५ |
| ,, | एक एव | ,, ३-१४४ | ,, | यद्ब्रह्मणः. | तत्त्वसार. |
| १८५. | आदित्यः | ऐ. आत्म. २ | ,, | समस्त. | वि. पु. ६-५-८४ |
| ३००. | अनन्ताः, | याज्ञ. ४-६६ | ,, | नान्तं | ,, २-५-२४? |
| ३६५. | वेदोऽनृतः. | शारी. भास्क. भा. | | | |

## बृहदारण्यकोपनिषद्गतश्लोकानामधांशाः


| | पृ. |
|---|---|
| यत् सप्त | ८१ |
| एकमस्य | ,, |
| त्रीण्यात्मने | ,, |
| तस्मिन् सर्वं | ,, |
| कस्मात् तानि | ८२ |
| यो वै ताम् | ,, |
| स देवान् | ,, |
| यतश्चोदेति | १११ |
| तं देवाश्चक्रिरे | ११२ |
| अर्वाग्बिलः | १४२ |
| तस्यासते | ,, |
| तद्वां नरा | १९१ |
| दध्यङ् ह | ,, |
| आथर्वणाय | १९२ |
| स वां मधु | ,, |
| पुरश्चक्रे | १९३ |
| पुरः स पक्षी | १९४ |
| रूपं रूपं | १९५ |
| इन्द्रो मायाभिः | ,, |
| यथा वृक्षः | २८४ |
| तस्य लोमानि | ,, |
| त्वच एवास्य | ,, |
| तस्मात् तदातृण्णात् | २८४ |
| मांसान्यस्य | ,, |
| अस्थीन्यन्तरतो | ,, |
| यद् वृक्षः | २८५ |
| मर्त्यः सन् | ,, |
| रेतस इति | ,, |
| धानारुहः | ,, |
| यत् समूलं | ,, |
| जात एव | ,, |
| विज्ञानमानन्दं | २८६ |
| स्वप्नेन | ३१७ |
| शुक्रमादाय | ,, |
| प्राणेन | ,, |
| स ईयते | ,, |
| स्वप्नान्ते | ,, |
| उतेव स्त्रीभिः | ,, |
| आराममस्य | ,, |
| तदेव सक्तः | ३४२ |
| प्राप्यान्तं | ,, |
| तस्माल्लोकात् | ,, |
| यदा सर्वे | ३४७ |
| अथ मर्त्यः | ,, |

| | पृ. | | पृ. |
|---|---|---|---|
| अणुः पन्थाः | ३४८ | मनसो ये | ३५६ |
| तेन धीराः | ३४९ | मनसैव | ३५८ |
| तस्मिन् शुक्लं | ,, | मृत्योः सः | ,, |
| एष पन्थाः | ,, | एकधैव | ३६५ |
| अन्धं तमः | ३५० | विरजः परः | ३६६ |
| ततो भूयः | ,, | तमेव धीरः | ,, |
| अनन्दा नाम | ,, | नानुध्यायात् | ,, |
| तांस्ते प्रेत्य | ,, | एष नित्यः | ३८० |
| आत्मानं चेत् | ३५१ | तस्यैव | ,, |
| किमिच्छन् | ,, | पूर्णमदः | ३९१ |
| यस्यानुवित्तः | ,, | पूर्णस्य | ,, |
| स विश्वकृत् | ३५२ | हिरण्मयेन | ४१९ |
| इहैव | ,, | तत् त्वं पूषन् | ,, |
| य एतत् | ,, | पूषन्नेकर्षे | ,, |
| यदैतम् | ३५३ | यत् ते रूपम् | ४२० |
| ईशानं | ,, | वायुरनिलम् | ,, |
| यस्मादर्वाक् | ,, | ओं क्रतो | ,, |
| तं देवाः | ,, | अग्ने नय | ,, |
| यस्मिन् पञ्च | ३५४ | युयोध्यस्मत् | ४२१ |
| तमेवमन्यः | ,, | द्वे सृती | ४२९ |
| प्राणस्य | ३५६ | ताभ्यामिदम् | ,, |


मन्थकर्मादि–अब्रह्मविषयभागगता मन्त्राः अमुख्यत्वादिह न प्रदर्शिताः । ते ४४९, पुटप्रभृति ग्रन्थ एव द्रष्टव्याः ।

॥ श्रीः ॥

# बृहदारण्यकोपनिषदर्थसंग्रहकारिकाः



शुक्ले वाजसनेयाख्ये यजुषि ब्राह्मणं स्थितम् ।
नाम्ना शतपथम्; तत्र बृहदारण्यकं शिरः ॥ १ ॥

काण्वे माध्यन्दिने चात्र काण्वं भाष्यैर्विभूषितम् ।
अब्रह्मार्थं विसृज्याऽऽद्यं प्रवर्ग्याध्याययोर्द्वयम् ॥ २ ॥

ब्राह्मणान्यत्र संख्यातान्येवं तार्तीयकादिषु ।
षट् च षट् च नवैवं षट् पञ्चयुग्दश पञ्च च ॥ ३ ॥

III· (१) अश्वमेधाश्वसंस्पृष्टमुषःप्रभृतिदर्शनम् ।
उक्तमाद्ये (२) ततो मृत्योरर्काच्चित्याग्निसंभवम् ॥ ४ ॥

संवत्सरस्य तज्जस्य यष्टुरङ्गस्य चाश्वताम् ।
विदतोऽग्नावश्वमेधे मृत्य्वर्कादित्यदर्शनम् ॥ ५ ॥

(३) असुरस्पर्धिदेवेष्टौ वागाद्युद्गातृवैकलीम् ।
प्राणदाक्ष्यञ्च विज्ञायोद्गातरि प्राणभावने ॥ ६ ॥

पाप्महानिं प्राणनानोपासा अन्ते जपं वरम् ।
असतः सद्गतेर्याच्ञापरञ्चाह तृतीयकम् ॥ ७ ॥

(४) अथो तृतीयतुर्यात्तु साक्षाद् ब्रह्मनिरूपणम् ।
आत्मा पूर्वमहम्भूतः पुरुषो मिथुनात्मना ॥ ८ ॥

प्रादुर्भूयाकरोत् सृष्टिं विसृष्टिं देवगोचराम् ।
अतिसृष्टिं तथा श्रेयोदेवरूपामिदं यतः ॥ ९ ॥

अव्याकृतं व्याकृतं सत् प्रविश्यान्तर्विराजते ।
अत आत्मेत्युपासीत पदनीयं प्रियञ्च तत् ॥ १० ॥

अहं ब्रह्मास्मीत्युपासापराः सर्वं भवन्ति च ।
उपासितुरभूत्यै तु नैव देवा अपीशते ॥ ११ ॥

अन्यः सोऽन्योऽहमित्येवं न विद्यात् यस्त्वतत्त्ववित् ।
पशुर्भवेत् स देवानाम् ब्रह्म क्षत्रादिसृष्टिकृत् ॥ १२ ॥

देवलोकेऽप्यतः क्षत्रक्षत्रं धर्मस्त्यजेन्न तम् ।
आत्मा नाविदितः पाति जायापुत्रधनक्रियाः ॥ १३ ॥

मनस्स्विनस्त्विमा यानि वाक् प्राणोऽक्षि श्रवो वपुः ।
(५) अथैतत्पञ्चमे प्रोक्तं सप्तान्नब्राह्मणे त्विदम् ॥ १४ ॥

प्रसिद्धमन्नं सर्वार्थम् देवार्थे द्वे हुतादिके ।
पश्वाद्यर्थं पयश्चान्यत् त्रयं त्वात्मार्थकल्पितम् ॥ १५ ॥

अक्षितिः पुरुषोऽक्षीणमेतत्स्रक् भुक्तिमुक्तिदः ।
ते त्रयो वाङ्मनःप्राणाः तान् नाना साधु भावयेत् ॥ १६ ॥

अथ संप्रत्तिकर्मोक्तं पित्रा पुत्रानुशासनम् ।
प्रयता दिव्यवागादि लिप्सुनाऽथ च तनूये ॥ १७ ॥

प्राणस्याश्राम्यतः श्रैष्ठ्यम्, वायोश्चास्तं हि नैति सः ।
तस्मात् प्राण्यादपान्याच्च (६) नामरूपक्रियामयः ॥ १८ ॥

IV. (१) तुरीयाद्ये तु बालाकिविद्या यत्र व्यपोहति ।
आदित्यपुरुषादीनां ब्रह्मत्वम् तत्त्वमाह च ॥ १९ ॥

अजातशत्रुर्बालाकिं सुषुप्तिस्थानबोधनात् ।
(२) शिशुः सदामस्थूणादिर्विचित्रचमसस्थितः ॥ २० ॥

उक्तो द्वितीये (३) तार्तीये मूर्तामूर्तवपुः परम् ।
(४) तुर्ये प्रोक्ता च मैत्रेयीविद्या ज्ञानघनात्मदृक् ॥ २१ ॥

(५) मिथो मधूनि भूतानि पृथ्व्यादीनि च तद्गतम् ।
ब्रह्मामृतमयं प्राह दध्यङ्ङश्वोऽश्विनौ मधु ॥ २२ ॥

(६) स्वयम्भुब्रह्मपर्यन्तो गुरुवंशस्ततः श्रुतः ।

V. (१) गवां सहस्रं जनको ब्रह्मिष्ठायेति दत्तवान् ॥ २३ ॥

अन्येषु जोषम्भूतेषु याज्ञवल्क्य उदाकरोत् ।
अश्वलो नाम होता तमारेभे च परीक्षितुम् ॥ २४ ॥

अतिमोक्षान् संपदश्च सोप्राक्षीदृत्विगाश्रितान् ।

(२) ग्रहानतिग्रहानार्तभागोऽपृच्छत् तथेतरत् ॥ २५ ॥

प्राप्तोत्तरं, 'मृतः कुत्र भवे'दित्यपि पृच्छकम् ।
नीत्वा रहसि संमन्त्र्य यथाकर्मेत्यभाषत ॥ २६ ॥

(३) पारिक्षिताः क्वेति भुज्युः अश्वमेधिगतिं परः ।

(४) पृष्टे ब्रह्मण्युषस्तेन त्वपरोक्षेऽखिलान्तरे ॥ २७ ॥

प्राणनादिकरं जीवस्यान्तरं तादृशं जगौ ।

(५) तथैवाथ कहोलेन पृष्टो मृत्युन्तदूरगम् ॥ २८ ॥

बाल्यमौनादिमद्वेद्यं परं ब्रह्म जगौ पुनः ।

(६) अबादिलोकाधाराणां प्रश्नाः गार्ग्याः समाहिताः ॥ २९ ॥

(७) उद्दालकमवोचत्तु सूत्रं वायुः समस्तधृत् ।
अन्तर्याम्यमृतो जीवात् परश्चिदचितामिति ॥ ३० ॥

(८) पुनर्गार्ग्या सर्वकार्याधारं पृष्टस्त्वभाषत ।
अव्याकृताकाशमथ त्वक्षरं ब्रह्म शासकम् ॥ ३१ ॥

(९) प्रष्टुं ब्रह्मिष्ठमप्येनं विदग्धः प्रत्यवस्थितः ।
देवसंख्यादि पप्रच्छ पुरुषानष्ट च क्रमात् ॥ ३२ ॥

लब्धोत्तरोऽप्यपृच्छत् तं क्रुद्धं दिग्देवतादिकम् ।
अथ पृष्टा समानान्ता तत्प्रतिष्ठापरम्परा ॥ ३३ ॥

सर्वमुक्त्वौपनिषदं पुरुषं पुरुषातिगम् ।
पृष्ट्वा विदग्धमाहैष मूर्धपातमनुत्तरे ॥ ३४ ॥

तस्याज्ञस्यापतन्मूर्धा तस्यास्थीन्यहरन् परे ।
मृते देहे जन्महेतुं पृष्ट्वा विप्रान् जिगाय सः ॥ ३५ ॥

VI. (१) अण्वन्तान् जनकाच्छ्रुत्वा तत्र सूक्ष्मांशवादिना ।
(२) याज्ञवल्क्येन कथित इन्द्रोऽक्षिस्थो गतिश्रिताम् ॥ ३६ ॥

(३) किञ्ज्योतिरिति पृष्टश्च सूर्यश्चन्द्रोऽनलश्च वाक् ।
ज्योतिः पुंस इति स्माह स्वप्ने ज्योतिः स्वमित्यपि ॥ ३७ ॥

विमोक्षं पृष्ट आह स सुषुप्तिं (४) मरणं तथा ।
निष्कामस्य ब्रह्मभोगमिहामुत्र च विस्तृतम् ॥ ३८ ॥

(५) मैत्रेयीब्राह्मणं (६) वंशब्राह्मणञ्चेषदन्यथा ।
VII. (१) प्रणवोपासनं (२) दान्तिदयादानार्थशिक्षणम् ॥ ३९ ॥

(३–४) हृदयोपासनं द्वेधा (५) व्याहृतित्रयरूपिणः ।
अहर्नाम्नोऽहमाख्यस्य सूर्यगस्याक्षिगस्य च ॥ ४० ॥

सत्यस्य ब्रह्मणो मुख्ये विहिते द्वे उपासने ।
(६) शाण्डिल्यविद्या (७) ब्रह्मत्वं विद्युतो (८) वाचि धेनुता ॥ ४१ ॥

(९) उदर्याग्नेरुपशमो (१०) वाय्वाद्यादर्शिताध्वना ।
अशोकलोकसंप्राप्तिः (११) व्याधिपीडादिकं तपः ॥ ४२ ॥

(१२;१३) विरचिन्तोक्थादिचिन्ता (१४) गायत्रीब्रह्मवेदनम् ।
पादत्रये तुरीयेऽद्धे दृष्टिः (१५) पूषादियाचनम् ॥ ४३ ॥

VIII. (१) ज्येष्ठश्रेष्ठप्राणविद्या (२) ततः पञ्चाग्निविद्गतिः ।
(३) मन्थकर्म महत्त्वार्थम् (४) महितापत्यलब्धये ॥ ४४ ॥

कर्तव्यानि (५) ततो वंशः कूटस्थादित्यशोभितः ।
तदन्यरीतिरप्येवं बृहदारण्यकस्थितिः ॥ ४५ ॥

* २३७, २८७, पुटयोः स्थिताः कारिका अपि द्रष्टव्याः ।

॥ श्रीः ॥

# सभाष्यपरिष्कारबृहदारण्यकविषयसूची


आरम्भे शान्तिपाठः — मङ्गलम् .... १

अवतरणिका—वेधाद्यधिकरणम् ❀ .... २

## ३—१. अश्वब्राह्मणम्

अश्वमेधीयाश्वस्याङ्गेषु उषआदिदृष्टिः .... ३, ४

आदित्यादिमत्यधिकरणम् ❀ .... ३

अश्वानुबन्धिषु दृष्टिः .... ५, ६

## ३—२. अश्वमेधब्राह्मणम्

अश्वमेधादौ दृष्टिविधानाय मृत्युकर्तृकसृष्टिवर्णनम् .... ६—८

प्रयोजनवत्त्वाधिकरणम् ❀ .... ८

मृत्युब्रह्मणोऽर्कत्वनिर्वचनम् .... ९

चित्याग्निसृष्टिः .... १०

तदङ्गेषु दृष्टिः .... ११

मृत्युकर्तृकसंवत्सरसृष्टिः .... १२

संवत्सरकर्तृकसर्वसृष्टिः .... १४

संवत्सरेण यज्ञार्थं स्वशरीरस्याश्वीकरणम् .... १६

अश्वमेधे चित्याग्नौ च आदित्यस्य प्रागुक्तार्कस्य च दृष्टिः .... १७

अर्कादित्ययोरेव मृत्युदेवतात्वम् .... १८

## ३—३. उद्गीथब्राह्मणम्

मुख्यप्राणदृष्टिविधानाय देवासुरस्पर्धाख्यायिका .... १९

अन्यथात्वाधिकरणम् ❀ .... २०

वागादिकं प्रति देवोक्तवाक्येषु श्रीभाष्यार्थविचारः .... २३

वागादीनामसुरपराभूतत्वम् .... २६
मुख्यप्राणस्य असुरपरिभवितृत्वम् .... २७
उद्गातरि मुख्यप्राणदृष्टिः .... २८
मुख्यप्राणस्य दूर्नामकत्वम् .... २९
मुख्यप्राणेन वागादिष्वापादितदोषबहिष्करणम् .... ३०
तेन वागादीनां यथावत् रक्षणम् .... ३१
तेन स्वार्थगृहीतस्यान्नस्य वागादिभ्योऽपि विभजनम् .... ३२
मुख्यप्राणस्यानेकर्ष्यादिनामनिर्देशेन तन्निर्वचनम् .... ३४—३८
मुख्यप्राणाणुत्वाधिकरणम् ❀ .... ३६
अभ्यारोहमन्त्रः .... ३७


## ३—४. आत्मब्राह्मणम्


सर्गारम्भे आत्मसद्भावः .... ४२
अहमस्मीति तदातनव्याहरणस्यार्थविमर्शः .... ४३
पुरुषशब्दनिर्वचनम् .... ४४
स्त्रीपुरुषरूपेणाविर्भूय मनुष्यादिसृष्टिः .... ४७
अग्न्यादिदेवतासृष्टिरूपविसृष्टिः .... ५०
अतिसृष्टिः .... ५१
अव्याकृतरूपेण आदौ स्थितिः .... ५२
स्वस्य नामरूपाभ्यां व्याकृतत्वम् .... ५३
तस्यात्मनः सर्वत्वान्तःप्रवेशः .... ५४
तस्यैव प्राणवागादित्वम् .... ५५
कारणत्वाधिकरणम् ❀ .... ५६
स्मृत्यधिकरणम् ❀ .... ५७
रचनानुपपत्त्यधिकरणम् ❀ .... ५८
एकैकोपासननिषेधेन आत्मत्वोपासनविधिः .... ६०—६१
आत्मनः पदनीयत्वं प्रेयस्त्वञ्च .... ६२

अहंब्रह्मास्मीत्युपासनविधानोद्धातः .... ६१
एतदुपासनौचित्यनिरूपणम् .... ६४–६५
उपासकस्य देवैरनभिभाव्यत्वम् .... ६५
अन्येषां देवपशुत्वम् .... ६६
आत्मत्वोपासनाधिकरणार्थतत्त्वम् ❀ .... ६७–६८
देवलोके इन्द्रादिक्षत्रसृष्टिः .... ६९
तत्र वैश्यादिसृष्टिः .... ७१
क्षत्रक्षत्रभूतधर्मसृष्टिः .... ७२
लोकद्वयेऽपि ब्राह्मणादिविभागः .... ७३
ब्रह्मणः अविदितत्वे अरक्षकत्वम् .... ७४
जीवात्मनोऽपि सर्वभूतलोकत्वम् .... ७६
आत्मनो जायापुत्रवित्तकर्मापेक्षा .... ७८
मुमुक्षोः वागादीनामेव जायादिरूपत्वम् .... ८०

## ३—५. सप्तान्नब्राह्मणम्

अन्नसप्तकसृष्टिः .... ८१
अन्नसप्तकविवरणारम्भः .... ८२
अन्नसप्तकस्रष्टृक्षितिपुरुषोपासनम् .... ८८
आत्मार्थक्लृप्तमनोवाक्प्राणात्मकान्नत्रयविवेचनम् .... ८९
मनआदिषु त्रिष्वनेकविधदृष्टिः .... ९४
मनआदित्रयस्य आधाराधिष्ठातृनिरूपणम् .... ९५
अनन्तत्वोपासनम् .... ९७
षोडशकलचन्द्रसाम्यं पुरुषस्य .... ९८ – ९९
लोकत्रयलम्भकं संप्रत्तिकर्म .... १०० – १०२
पुत्रबलेन पितुः देवलोके दिव्यमनआदिप्राप्तिः .... १०३
इन्द्रियाणां श्रमप्रसक्तिः .... १०७
मुख्यप्राणस्य अपरिश्रान्तत्वम् .... १०९

इन्द्रियाणां प्राणशब्दभागित्वम् .... ११०
इन्द्रियदेवतानां सार्वदिककार्यकरणसामर्थ्याभावः .... १११
प्राणदेवताया अनस्तमितत्वम् .... ,,
प्राणनापानविधानम् .... ११२

### ३—६.

आत्मनो नामरूपकर्मत्रयात्मत्वम् .... ११३

### ४—१. बालाकिविद्या

बालाकिना अजातशत्रवे आदित्यपुरुषादि-स्वज्ञातब्रह्मनिरूपणम्
अजातशत्रुणा सर्वस्य तस्य अब्रह्मत्वबोधनञ्च .... ११६–१२३
बालाकिना तत्त्वज्ञानायाजातशत्रूपसदनम् .... १२४
क्षत्रियेण ब्राह्मणायानुपनीयोपदेशः .... १२५
सुप्तपुरुषप्रबोधनम् .... १२५
संबोधनविशेषाणामर्थविशेषविस्तरः .... १२६
भाष्याशयाविष्करणम् .... १२७
सुप्तपुरुषस्थानभूतपरमात्मोपदेशारम्भः .... १२८
कर्त्रधिकरणम् ❀ .... १३२
तदभावाधिकरणम् ❀ .... १३५
प्रबोधकाले परमात्मतः सर्वप्रादुर्भावः .... १३७
परमात्मनः 'सत्यस्य सत्य' मिति रहस्यनाम .... १३९

### ४—२. शिशुब्राह्मणम्

मुख्यप्राणस्य शिशुत्वेन रूपणेन दामस्थूणादिविवरणम् .... १४०
अर्वाग्बिलचमसविशेषप्रतिबोधनम .... १४२

### ४—३. मूर्तामूर्तब्राह्मणम्

अधिदैवतमध्यात्मञ्च मूर्तामूर्तसारनिरूपणम् .... १४४
अक्ष्यादित्यगतपुरुषरूपनिदर्शनानि .... १४८

नेतिनेतीति ग्रहणम् सत्यस्य सत्यमित्येतद्विवरणम् .... १४९
उभयलिङ्गाधिकरणम् ❀ .... १५०
पराधिकरणम् ❀ .... १५४


## ४—४. प्रथममैत्रेयी ब्राह्मणम्


संन्यासप्रवृत्तेन याज्ञवल्क्येन मैत्रेय्यै द्रव्यविभजनम् .... १५५
विरक्तया मैत्रेय्या विद्योपदेशप्रार्थना .... १५६
पत्यादिप्रियत्वस्य आत्मकामाधीनत्वनिरूपणम् .... १५७
आत्मनस्तु कामायेत्येदर्थविस्तरः .... १५९
आत्मोपासनोपदेशः .... १६१
सर्वस्य आत्मतादात्म्यव्युत्पादनम् .... १६३
दुन्दुभ्यादि दृष्टान्तीकरणेन इन्द्रियनिग्रहोपदेशः .... १६५
सर्वस्य महाभूतपरमात्मनिःश्वसितरूपता .... १६६
उदकप्रास्तसैन्धववत् परमात्मनो विज्ञानघनात्मत्वम् .... १६९
न प्रेत्य संज्ञाऽस्तीत्येतदर्थनिरूपणम् .... १७१
यत्र हि द्वैतमिति श्रुत्यर्थविवेकः .... १७२
वाक्यान्वयाधिकरणम् ❀ .... १७५
पारिप्लवाधिकरणम् मध्ये ❀ .... १७६
नैकस्मिन्नसंभवाधिकरणम् ❀ .... १७७
अंशाधिकरणम् ❀ .... १८०


## ४—५. मधुब्राह्मणम्


मिथो मधुभूतेषु पृथिव्यादिषु चतुर्दशसु, भूतान्तर्गतेषु च
तावत्सु तेजोमयामृतमयपुरुषस्थितिनिरूपणम् .... १८४ – १८८
तस्य सर्वभूताधिपतित्व—सर्वाधारत्वादि .... १८९
मधुब्राह्मणमहिमनिरूपणाय दध्यङ्ङाथर्वणवृत्तवर्णनम् .... १९०
परमात्मनः सर्वशरीरित्वविशदीकरणम् .... १९३

## ४—६, वंशब्राह्मणम्

गुरुपरम्परानिर्देशः .... १९७

## ५—१. अश्वलब्राह्मणम्

जनकयज्ञे कुरुपञ्चालदेशीयब्राह्मणसमवायः .... १९९
जनकेन ब्रह्मिष्ठाय गोसहस्रप्रदानम् .... २००
याज्ञवल्क्येन शिष्यद्वारा गवामुदजनम् .... २०१
सदसि परीक्षारम्भे अश्वलस्य मृत्युमोचकहोत्रादिविषये प्रश्नाः याज्ञवल्क्यस्योत्तराणि च .... २०२

## ५—२. आर्तभागब्राह्मणम्

आर्तभागस्य ग्रहातिग्रहविषये प्रश्नः उत्तरञ्च .... २०९
मृत्युर्यस्यान्नम्, तत्प्रश्नः उत्तरञ्च .... २११
मरणकाले प्राणोत्क्रमणभावाभावप्रश्नः उत्तरञ्च .... २१२
मृतपुरुषापरित्यागिवस्तुविषयप्रश्नः उत्तरञ्च .... २१३
मृतपुरुषभवनस्थानप्रश्नः .... २१५
आर्तभागं सजनात् रहसि नीत्वा संमन्त्र्य कर्मानुगुणमित्युत्तरकथनम् .... २१६

## ५—३. भुज्युब्राह्मणम्

भुज्युना पारिक्षिताः कुत्र गता इति प्रश्नकरणम् .... २१७
तदुक्तगन्धर्वाभिहितरीत्या अश्वमेधयाजिगतिस्थानादिवर्णनेन प्रत्युत्तरणम् .... २१८

## ५—४. उषस्तब्राह्मणम्

उषस्तेन अपरोक्षसर्वान्तरब्रह्मप्रश्नः .... २२०
प्राणितृत्वादि विशिष्टान्तरात्मनिरूपणम् .... २२१
उषस्ताशयादिवर्णनं न दृष्टेरिति श्रुत्यर्थ विचारश्च .... २२१ – २२२

## ५—५. कहोलब्राह्मणम्


| | | | |
|---|---|---|---|
| कहोलेन उषस्तप्रश्नस्य पुनरनुवादः | | .... | २२३ |
| अशनायाद्यतीतत्वादिवर्णनेनोत्तरणम् | | .... | २२४ |
| एषणात्रयव्युत्थानवर्णनम् | | .... | २२५ |
| बाल्यपाण्डित्यमौनविधानम् | | .... | २२७ |
| अनाविष्काराधिकरणम् | ❃ | .... | २२८ |
| सहकार्यन्तरविध्यधिकरणम् | ❃ | .... | ,, |
| अन्तराभूतग्रामाधिकरणम् | ❃ | .... | २२९ |


## ५—६. प्रथमगार्गीब्राह्मणम्


| | | | |
|---|---|---|---|
| गार्ग्या अबाद्याधाराणां प्रश्नाः उत्तराणि च | | .... | २३२ |
| अतिप्रश्नकरणात् गार्गीभर्त्सनम् | | .... | |


## ५—७. उद्दालकब्राह्मणम्


| | | | |
|---|---|---|---|
| उद्दालकस्य सूत्रान्तर्याम्युभयविषयकः प्रश्नः | | .... | २३५ |
| वायुः सूत्रमिति प्रत्युत्तरम् | | .... | २३७ |
| पृथिव्याद्यन्तर्वर्तिनः परस्यामृतस्यान्तर्यामित्वोक्तिः | | .... | २३८ |
| प्रघट्टार्थविवरणम् | | .... | २४० |
| अन्तर्यामिणः अदृष्टत्वविशिष्टद्रष्टृत्वादिवर्णनम् | | .... | २४३ |
| अन्तर्याम्यधिकरणम् | ❃ | .... | २४४ |
| ज्ञाधिकरणम् | ❃ | .... | २४४ |
| परायत्ताधिकरणम् | ❃ | .... | २४७ |
| ज्योतिराद्यधिष्ठानाधिकरणम् | ❃ | .... | २४९ |


## ५—८. द्वितीयगार्गीब्राह्मणम्


| | | | |
|---|---|---|---|
| पुनुर्गार्ग्या सर्वकार्याधारप्रश्नः | | .... | २५० |
| अव्याकृताकाशकथनेन प्रत्युत्तरम् | | .... | २५१ |
| पुनः तदाधारप्रश्नः | | .... | २५२ |

अक्षरस्य प्रशासितुः प्रतिपादनेन प्रत्युत्तरम् .... २५३

गार्ग्या ब्राह्मणान् प्रति याज्ञवल्क्यस्य अजय्यत्वनमस्कार्यत्वयो-
राविष्करणम् .... २५७

अक्षराधिकरणम् ❀ .... ,,

आनन्दाद्यधिकरणम् ❀ .... २५८

संभृत्यधिकरणम् ❀ .... २५९


## ५—९. शाकल्यब्राह्मणम्


विदग्धेन शाकल्येन देवसंख्यादिप्रश्नाः उत्तराणि च .... २६०

आयतनलोकज्योतिःकथनपूर्वकमष्टानां पुरुषाणां विषये क्रमेण
प्रश्नाः उत्तराणि च .... २६५

तर्जितेनापि शाकल्येन पुनः प्राच्यादिदिग्देवतादिप्रश्नाः उत्तराणि च २६९

सर्वत्र प्रतिष्ठात्वेनोक्तस्य हृदयस्य प्रतिष्ठाप्रश्नः .... २७३

क्रमेण समानपर्यन्तप्रतिष्ठापरम्परोक्तिः .... २७४

अथ याज्ञवल्क्येन अनुत्तरे मूर्धपातशापपूर्वकं पूर्वोक्ताष्टपुरुषा-
द्यतिक्रान्तौपनिषदपुरुषप्रश्नः .... २७५

शास्त्रयोनित्वाधिकरणम् ❀ .... २७६

शिष्टापरिग्रहाधिकरणम् ❀ .... ,,

महद्दीर्घाधिकरणम् ❀ .... ,,

समुदायाधिकरणम् ❀ .... २७८

पशुपत्यधिकरणम् ❀ .... २८२

योगप्रत्युक्त्यधिकरणम् ❀ .... ,,

विदग्धशाकल्यस्य प्रत्युत्तरासमर्थतया मूर्धपातः शिष्यानीता-
नामस्थ्नां तस्करैरपहारश्च .... ,,

याज्ञवल्क्येन सर्वान् ब्राह्मणान् प्रति प्रश्नारम्भः .... २८३

वृक्षदृष्टान्तविवरणेन शरीरे गते पुनः प्रादुर्भावकारणतत्त्वप्रश्नः २८४

विज्ञानानन्दब्रह्मवचनम् .... २८५

**सर्वस्यैतस्यात्ता भवति, सर्वमस्यान्नं भवति, य एवमेतददितेरदितित्वं वेद ॥ (५)**

**सोऽकामयत भूयसा यज्ञेन भूयो यजेयेति । सोऽश्राम्यत्; स तपोऽतप्यत। तस्य श्रान्तस्य तप्तस्य यशोवीर्यमुदक्रामत्। प्राणा वै यशोवीर्यम् । तत् प्राणेषूत्क्रान्तेषु शरीरँ श्वयितुमध्रियत । तस्य शरीर एव मन आसीत् ॥ (६)**

---

सर्वात्तृत्वं देवादितिशब्दप्रवृत्तिनिमित्ताद[1]दितित्वमित्यर्थः । नामनिरुक्त[2]ज्ञानस्य फलमाह **सर्वस्य — वेद** । **अत्ता भवति** अनुभविता भवति। **अन्नं भवति** अनुभाव्यं भवति । न चैकस्य भोक्तृत्वोक्तौ तत्प्रतिसंबन्धिन इतरस्य भोग्यत्वं सिद्धमिति तत्कथनवैयर्थ्यं शङ्कनीयम् । तद्दार्ढ्यार्थतया तत्प्रपञ्चनरूपत्वेन अदोषात् ॥ ५ ॥

एवमश्वमेधाङ्गभूतयोरग्निसंवत्सरयोः सृष्टिप्रकारादिकमुक्त्वा अश्वस्य सृष्टिप्रकारं अश्वमेधनिर्वचनं अश्वमेधे आदित्यदृष्टिञ्च वक्तुमारभते — **सोऽकामयत** । **सः** प्रजापतिशरीरकः परमात्मा अकामयत । किमिति । **भूयसा** — महता **यज्ञेन** परमात्मानं **भूयः** — मुहुर्मुहुः **यजेयेति** । यद्वा **भूय**श्शब्दो भूमवाची । भूमानं परमात्मानं यजेयेतीत्यर्थः । **सोऽश्राम्यत्** । महायज्ञसामग्र्यसंपत्त्या श्रान्त इवाभवत्। **स तपोऽतप्यत** । परमात्मानमुद्दिश्य तपश्चचारे[3]त्यर्थः । **तस्य श्रान्तस्य — उदक्रामत्** । यशश्च वीर्यञ्च यशोवीर्यम् । यशोवीर्यशब्दार्थमेवाह — **प्राणा वै यशोवीर्यम्** । यशसो वीर्यस्य च प्राणायत्तत्वात् प्राणा एव **यशोवीर्य**मित्यर्थः । ततश्च **यशोवीर्यमुदक्राम**दित्यस्य प्राणा उदक्रामन्नित्यर्थः । **तत् प्राणेषूत्क्रान्तेषु— अध्रियत** । प्राणेषूत्क्रान्तेषु सत्सु **तत्**—प्रजापतेश्शरीरं **श्वयितुमध्रियत**—उच्छूनतां गन्तुं प्रवृत्तम् । **तस्य शरीर एव मन आसीत्** । तस्य प्रजापतेः शरीरात् निर्गतस्यापि तस्मिन्नेव शरीरे मन आसीत्। मया त्यक्तं स्थूलं शरीरमुच्छूनं हेयमासीदिति शरीरविषय एव चिन्ता सर्वदा संवृत्तेत्यर्थः ॥ ६ ॥

1. निमित्तमदितित्वम् क. 2. निरुक्ति ग. 3. चकार ग.

**सोऽकामयत—मेध्यं म इदँ स्यात्, आत्मन्व्यनेन स्यामिति। ततोऽश्वस्समभवत्। यदश्वत्[1] तन्मेध्यमभूदिति। तदेवाश्वमेधस्याश्वमेधत्वम्। एष ह वा अश्वमेधं वेद, य एनमेवं वेद। तमनवरुध्यै[2]वामन्यत। तँ संवत्सरस्य परस्तादात्मन आलभत।**

1. अश्वयत्. पा०. 2. अनवरुध्येव. मा.

---

**सोऽकामयत – स्यामिति।** एवं चिन्ताविशिष्टः प्रजापतिः **मे** – मदीयमिदं शरीरं **मेध्यं** – यज्ञार्हं स्यात्। अनेन च शरीरेणाहं **आत्मन्वी** – शरीरी स्यामित्येवं **अकामयत** – समकल्पयत्। एवं सङ्कल्प्य पुनरपि सप्राणः सन् प्रजापतिः तत्र प्रविष्ट इति भावः। **ततोऽश्वस्समभवत्।** ततः प्रजापतिना पुनरनुप्रविष्टात् स्थूलशरीरात् उपादानभूतादश्वरूपस्सन् प्रजपतिरुत्पन्न इत्यर्थः। **यदश्व[य]त् – अभूदिति तदेव – मेधत्वं।** **यत्** – यस्मात्कारणात् प्रजापतेः शरीरमुत्क्रान्तेषु प्राणेषु **अश्वयत्** – उच्छूनम्, तत एव मेध्यञ्चाभवत्, तदेव पश्चादश्वरूपं मेध्यमभूत्। तत एवास्याश्वरूपस्य प्रजापतेरश्वमेधत्वं। अश्वयदित्यश्वः। मेधार्हत्वान्मेधः। यद्यप्यश्वमेधशब्दो यागनाम, तथापि यागद्रव्ययोरभेदोपचारात् तथोक्तिरुपपद्यत इति द्रष्टव्यम्। 'यागपरत्वेऽपि न दोषः, यज्ञार्थकमेधशब्दस्वारस्यात' इति वदन्ति। **एष हवै–वेद।** य **एनं** पशुं **एवं** यथोक्तनिर्वचनं वेद, स एवाश्वमेधवेत्ता (दिता?), नान्य इत्यर्थः। **तमनवरुध्यैवामन्यत।** **तं** – अश्वरूपं पशुं **अनवरुध्य** – अवरोधनमकृत्वा संवत्सरमात्रमुत्सृष्टबन्धनमेव कृत्वा, परमात्मानमनेन यक्ष्य इत्यमन्यतेत्यर्थः। **तं संवत्सरस्य –आलभत।** **संवत्सरस्य परस्तात्** – पूर्णे संवत्सरे ततः परं प्रजापतिः, **आत्मने** – स्वान्तर्यामिणे परमात्मने। **तं**–अश्वं **आलभत।** अश्वालम्भं कृतवान्।

---

नन्वस्याश्वत्वमेधत्ववेदनं प्रसिद्धाश्वमेधयागवेदनरूपं कथमित्याशङ्कते **यद्यपीति।** **यागपरत्वेऽपीति।** तदा **तदेवाश्वमेधस्याश्वमेधत्व**मित्यस्य ईदृशमेध्याश्वकत्वमेवाश्वमेधयागस्याश्वमेधत्वमित्यर्थः। अश्वोत्पत्तिप्रकारविस्तरबलात्, **तमनवरुध्यैवे**त्यत्र तमिति अश्वस्य प्राधान्यत्वात् **एष वा अश्वमेध** इत्यादिलयदृष्टिरश्वे युज्यते। अङ्ग एव दृष्टेरौचित्याच्च। 'आदित्यादिमतयश्चाङ्ग' इति च सूत्रम्। तथाच प्रथममप्यश्वमेधस्येति पदमश्वपरं युक्तमिति स्वाभिप्रायः।

**पशून् देवताभ्यः प्रत्यौहत् । तस्मात् सार्वदै[1]वत्यं प्रोक्षितं प्राजापत्यमालभन्ते ।**

**एष [2]वा अश्वमेधो य एष तपति; तस्य संवत्सर आत्मा । अयमग्निरर्कः; तस्येमे लोका आत्मानः । तावेतावर्काश्वमेधौ ।**

1. सर्वदैवत्यं. पा०. सर्वदेवत्यं ? 2. एष ह वा. पा०.

---

**पशून्–प्रत्यौहत् ।** ग्राम्यानारण्यानप्यन्यान् **पशून्** अग्नीन्द्रादिभ्यः **देवताभ्यः प्रत्यौहत्**–[1]प्रति विभज्यालभतेत्यर्थः । **तस्मात्सार्वदैवत्यं प्रोक्षितं प्राजापत्यमालभन्ते ।** तस्माद्धेतोरिदानीन्तना अपि यजमानाः सर्वदेवतासमष्टिभूतप्रजापतिरूपपरमात्मदेवताकत्वेन **सार्वदैवत्यं**[2] प्रोक्षणपर्यग्निकरणादिसंस्कृतं प्रजापतिदेवताकमश्वमालभन्ते इत्यर्थः ।

**एष [ह] वा अश्वमेधो य एष तपति ।** तपत आदित्यस्य दृष्टिरश्वमेधे कर्तव्येत्यर्थः । तत्र युक्तिमाह – **तस्य संवत्सर आत्मा । तस्य** – अश्वमेधशब्दितस्याश्वस्य संवत्सर आत्मा । "अश्वस्य मेध्यस्ये" ति पूर्वब्राह्मणे उक्तत्वात् संवत्सरात्मकत्वं सिद्धम् । संवत्सरादिकालचक्रप्रवर्तकस्या [प्या] दित्यस्य संवत्सरात्मकत्वात् संवत्सरात्मके मेध्येऽश्वे संवत्सरात्मकादित्याध्यासो युज्यत इत्यर्थः । **अयमग्निरर्कः ।** अयं चित्याग्निः **अर्कः** पूर्वं अर्कशब्दनिर्दिष्टः परमात्मेत्यर्थः । तत्र तदध्यासः कर्तव्य इति यावत् । तत्र युक्तिं वक्ति–**तस्येमे लोका आत्मानः । तस्य** – अध्यस्यमानस्य परमात्मनः स्वर्गाद्या इमे लोका **आत्मानः** – शरीरभूता इत्यर्थः । 'द्यौः पृष्ठमन्तरिक्षमुदर' मित्यादिना चित्याग्नेः सर्वलोकशरीरकत्वस्य प्रतिपादितत्वात् द्युलोकादिशरीरके चित्याग्नौ प्रतीके तादृशस्य परमात्मनोऽध्यसनम्, अश्वस्य च 'संवत्सर आत्मे' त्युक्तत्वात् तस्मिन्नश्वमेधे संवत्सरात्मकादित्याध्यसनञ्च युज्यत इति भावः । **तावेतावर्काश्वमेधौ ।** अर्कशब्देन 'अयमग्निरर्क' इत्यर्कशब्दितश्चित्याग्निरुच्यते । **तावेतौ** चित्याग्न्यश्वमेधौ प्रागुक्तेदृशमहिमशालिना-

1. परिविभज्य. क. 2. सर्वदेवताकं. ख.

**सो पुनरेकैव देवता भवति मृत्युरेव ।**

**अप पुनर्मृत्युं जयति, नैनं मृत्युराप्नोति, मृत्युरस्यात्मा भवत्येतासां देवतानामेको भवति ॥**

इति तृतीयाध्याये द्वितीयं ब्राह्मणम् ।



## ३—३.

**द्वया ह [ वै ] प्राजापत्या देवाश्चासुराश्च ।**

---

वित्यर्थः । **सो पुनरेकैव देवता भवति** । उशब्दोऽवधारणार्थः । अग्न्यश्वमेधाभ्यामेतादृशदृष्टिविशिष्टाभ्यां प्रीणनीया देवतैकैव भवतीत्यर्थः । सा केत्याशङ्क्याह — **मृत्युरेवेति** । परमात्मैवेत्यर्थः । यद्वा — तावेतावग्न्यश्वमेधौ अप्ययकाले मृत्युशब्दितः परमात्मैवेत्यर्थः । एतादृशानुसन्धानविशिष्टाग्न्यश्वमेधयोः प्रयोजनमाह — **अप पुनर्मृत्युं जयति** । अपमृत्युं जयतीत्यर्थः । **नैनं मृत्युराप्नोति** । एनं संसारो नाप्नोतीत्यर्थः । ननु ब्रह्मज्ञानसध्यायाः संसारनिवृत्तेः कथ दृष्टिविशिष्टचित्याग्न्यश्वमेधसाध्यत्वमित्यत्राह — **मृत्युरस्यात्मा भवति** । **मृत्युः** परमात्मा **अस्य** अश्वमेधा(धस्या)नुष्ठातुः **आत्मा भवति** आत्मत्वेनावगतो भवतीत्यर्थः । नित्यसिद्धस्यात्मत्वस्यासाध्यत्वात् । ततश्चाग्न्यश्व [मेध] योर्ब्रह्मात्मकत्वावगमद्वारा संसारनिवृत्तिहेतुत्वमुपपद्यत इति भावः । **एतासां — भवति** । अग्नीन्द्रादिसायुज्यकामस्य तदपि भवतीत्यर्थः ॥ ३-२ ॥

अथ कर्माङ्गभूतोद्गातरि मुख्यप्राणदृष्टिं विधातुमाख्यायिकामाह — **द्वया ह [वै] प्राजापत्या देवाश्चासुराश्च** । हशब्दो वृत्तार्थस्मरणे । प्रजापतेरपत्यानि प्राजापत्याः । 'दित्यदित्यादित्ये' त्यादिना अपत्यार्थे ण्यप्रत्ययः । द्वयाः = द्विविधाः । द्विप्रकारा इत्यर्थः । 'द्वित्रिभ्यां तयस्यायज्वे' त्ययच्प्रत्ययः । के ते ?

---

सोपुनरिति वाक्यं अग्न्यश्वमेधयोः मृत्युभूतार्कादित्यदृष्टिविधानव्युत्पादनार्थं स्यात् । **अपमृत्युं जयतीत्यर्थ** इति । शाङ्करे **पुन**श्शब्दावैयर्थ्याय **पुनर्मृत्युं** पुनर्मरणमपजयतीत्यर्थ उक्तः । ''प्रतिषेधा''दिति सूत्रश्रुतप्रकाशिकायां (४-२-१०) 'अपपुनर्मृत्युं जयती'ति वाक्यस्य मृत्युमपजयतीत्येवार्थ उक्तः । तद्वदिह **अपे**त्यस्योपसर्गत्वमेव युक्तम् । अथापि **नैनं मृत्युराप्नोती**त्यनेनापौनरुक्त्याय **अपमृत्युं जयती**त्यर्थवर्णनमिति ग्राह्यम् ।

**ततः कानीयसा एव देवाः, ज्यायसा असुराः । त एषु लोकेष्वस्पर्धन्त । ते ह देवा ऊचुर्हन्ताऽसुरान् यज्ञ उद्गीथेनात्ययामेति ॥ (१)**

---

देवाश्चासुराश्च । **ततः कानीयसाः — असुराः ।** **ततः** तत्र तेष्वित्यर्थः । **देवाः कानीयसाः** — कनीयांसः । स्वार्थे अण् । अल्पीयांस इति यावत् । ज्यायसाः = ज्यायांसः, भूयांसः । 'भूयांसोऽसुरा' इति श्रुत्यन्तरात् । **त एषु लोकेष्वस्पर्धन्त ।** **ते** देवासुराः **एषु लोकेषु** — त्रैलोक्यराज्यनिमित्ते **अस्पर्धन्त** — परस्परविजिगीषां कृतवन्त इत्यर्थः । **ते ह देवा ऊचुः — अत्ययामेति ।** हन्तेत्यसुरविजयोपायदर्शनजहर्षे । अत्रोद्गीथशब्दः उद्गातृपरः । उत्तरत्रोद्गातुरेवाध्यस्तप्राणभावस्योपास्यताप्रतीतेः । **त्वं न उद्गाय, उद्गात्रात्येष्यन्तीति** उत्तरत्र बहुकृत्व उद्गातृशब्दस्याभ्यसिष्यमाणतया तदनुरोधेन प्रक्रमस्थस्याप्यस्योद्गीथशब्दस्योद्गातृ[1]परत्वस्य वक्तव्यत्वात् । सति बाधके कर्मवाचिशब्दस्य लक्षणया कर्तृपरत्वयोगात्[2] । (यद्वा भगवता भाष्यकृता, 'अन्यथात्वं शब्दात्' इत्यधिकरणे, "न चोद्गातुरुपास्यत्वे उद्गीथेनेत्युपक्रमविरोधः शङ्कनीयः । उद्गीथस्योद्गानकर्मभूतस्यावश्यापेक्षितत्वात् तस्यापि परपरिभवाख्यफलं प्रति हेतुत्वात्" इति भाषितत्वात्, श्रुतप्रकाशिकायाम्, 'बृहदारण्यकेऽध्यस्तप्राणभावस्योद्गातुरुपास्यत्वे उपक्रमविरोधः' इत्याशङ्क्य, 'न ह्युपक्रमाधिकरणे उपक्रमानवगतमुपसंहारावगतं त्याज्यमित्युक्तम्; किन्तु उपक्रमावगतस्य

1. लक्षणयोद्गातृ. ख. ग. 2. त्वस्य युक्तत्वात् ग. एतदुपरि यद्वेत्यारभ्य कुण्डलितं पाठान्तरं ख. ग. कोशयोः भाष्यश्रुतप्रकाशिकाप्रदर्शनपूर्वं लक्षणां विना निर्वाहपरं वक्ष्यमाणयद्वेत्यादिस्थाने । तत्र भाष्यानुवादादिकमपि नास्ति ।

---

**कानीयसाः ज्यायसाः** इत्यत्र यद्यपि अनन्तरोत्पन्नत्वरूपः पूर्वोत्पन्नत्वरूपश्चार्थोपि क्रमाद् ग्रहीतुं शक्यते । असुराणां पूर्वदेवत्वात् । पूर्वमृजुमार्गे स्थिता असुरा ऐश्वर्यमदेन अन्यथाभूता इति च महाभारते इन्द्रं प्रति लक्ष्मीराह । अत एव प्रजापतिविद्योक्तरीत्या बुद्धिविपर्यासात् सत्यपि ज्यायस्त्वे त्रैलोक्याधिपत्यक्षतिस्तेषाम् । न च देवसामान्यस्य कनीयस्त्वम्, असुरसामान्यस्य ज्यायस्त्वञ्च कथमिति शङ्क्यम् — प्रधानभूतयोर्ज्यायस्त्वकनीयस्त्वसिद्धौ अन्येषां तदीयत्वेन ज्यायसत्वकानीयसत्वसंभवात् । अत एव न स्वार्थे अणित्यस्य स्वीकार्यतापि — अथापि भूयांसोऽसुरा इति शाङ्करदर्शितश्रुत्यन्तरसंवादादर्थान्तरमुक्तम् । न चासुराणां पूर्वं कदाचित् देववत् साधुत्वपरवचनमात्रेण तेषां पूर्वजत्वसिद्धिरपि । तदपेक्षया प्रकृतवाक्यत एव तत्सिद्धिरिति तु युक्तं वक्तुम् । श्रुत्यन्तरैकरस्याय त्वेवमुक्तम् ।

भङ्गो न कार्य इति । अत्र तु उपक्रमावगतमधिकञ्च स्वीक्रियते । **उद्गीथेनात्ययामे**ति उद्गातुरुद्गीयमानोद्गीथे तात्पर्य' मित्युक्तत्वाच्च नोद्गीथशब्दस्योद्गातृलक्षकत्वम् । अपितु उद्गीथशब्दः उद्गातृविशेषणभूतोद्गीथपरः ; न तु, 'तद्ध देवा उद्गीथमाजह्रुः अनेनैनानभिभविष्याम' इति छान्दोग्यगतोद्गीथशब्दवत् स्वतन्त्रोद्गीथपर इति वदन्ति ॥ १ ॥)

यद्वा उद्गीथशब्दः उद्गातृविशेषणभूतोद्गीथपर इति न लक्षणा। तथाच असुरान् अस्मिन् यज्ञे यज्ञाङ्गभूतेनो**द्गीथेन** अध्यस्तप्राणभावेनोद्गानकर्त्रा — यज्ञाङ्गभूतोद्गातरि प्राणदृष्टिरूपोपासनेनेति यावत् — **अत्ययाम** — अतितरेम, जयेम ; अन्यथा भूयसामसुराणां अल्पीयोभिः स्वैः दृ (दुः?) ष्टोपकरणैर्जेतुमशक्यत्वादिति देवा हर्षेणान्योन्यमुक्तवन्त इत्यर्थः ।

तथा हि गुणोपसंहारपादे अन्यथात्वाधिकरणे —'अत्रोद्गीथशब्दः केवलोद्गीथपर' इति "अन्यथात्वं शब्दादिति चेन्नाविशेषात्" इति सूत्रेण पूर्वपक्षं कृत्वा "न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्, संज्ञातश्चेत्तदुक्तमस्ति तु तदपि, व्याप्तेश्च समञ्जस"-मिति त्रिभिः सूत्रैः, 'अत्रोद्गीथशब्दस्योद्गातृगीयमानोद्गीथपरतया कृत्स्नोद्गीथगानकर्तरि मुख्यप्राणदृष्टिरूपाया अस्या उद्गीथविद्याया उद्गीथाङ्गभूते प्रणवे मुख्यप्राणदृष्टिरूपा छान्दोग्योपात्तोद्गीथविद्या भिद्यत इति सिद्धान्तितम् । इत्थं हि तत्र भाष्यम्—

"अस्ति ह्युद्गीथविद्या वाजिनां छन्दोगानाञ्च । वाजिनां तावत् — 'द्वया ह प्राजापत्या देवाश्चासुराश्चे' त्यारभ्य 'ते ह देवा ऊचुः हन्तासुरान् यज्ञ उद्गीथेनात्ययामे' त्युद्गीथेनासुरविध्वंसनं प्रतिज्ञाय, उद्गीथे वागादिमनःपर्यन्तदृष्टावसुरैरभिभवमुक्त्वा 'अथ हेममासन्यं प्राणमूचु' रित्यादिनोद्गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा, 'भवत्यात्मना परास्य द्विषन् भ्रातृव्यो भवति य एवं वेदे' ति शत्रुपराजयफलायोद्गीथे प्राणदृष्टिर्विहिता । एवं छन्दोगानामपि, 'देवासुरा ह वै यत्र संयेतिर' इत्यारभ्य 'तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम' इत्युद्गीथेनासुरपराभवं प्रतिज्ञाय तद्धदेवोद्गीथे वागादिदृष्टौ दोषमभिधाय, 'अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपा-

साञ्चक्रिर' इत्यादिनोद्गीथे प्राणदृष्ट्याऽसुरपराभवमुक्त्वा 'यथाश्मानमाखणमृत्वा विध्वंसते एवं ह वै स विध्वंसते य एवंविदि पापं कामयत' इति शत्रुपराभवायोद्गीथे प्राणदृष्टिर्विहिता । वेदनविषयविधिप्रत्ययाश्रवणेपि फलसाधनत्वश्रवणात् वेदनविषयो विधिः कल्प्यते । उद्गीथविद्यायाः क्रत्वर्थत्वेन क्रतुसाद्गुण्यफलकत्वेऽप्यार्थवादिकमपि फलं तदविरुद्धं ग्राह्यमेवेति देवताधिकरणे प्रतिपादितम् । तत्र संशय्यते, किमत्र विद्यैक्यम् उत नेति ।

किं युक्तं? विद्यैक्यमिति । कुतः? उभयत्रोद्गीथस्यैवाध्यस्तप्राणभावस्य उपास्यत्वश्रवणात् चोदनाद्यविशेषात् । फलसंयोगस्तावत् शत्रुपरिभवरूपो न विशिष्यते । रूपमप्यध्यस्तप्राणभावोद्गीथाख्योपास्यैक्यादविशिष्टम् । चोदना च विदिधात्वर्थगताऽविशिष्टा । आख्या चोद्गीथविद्येत्यविशिष्टा । अत्र सिद्धान्तच्छायया परिचोद्य परिहरति, "अन्यथात्वं शब्दादिति चेन्नाविशेषात्" इति । यदुक्तं विद्यैक्यमिति, तन्नोपपद्यते, रूपभेदात् । रूपान्यथात्वं हि शब्दादेव प्रतीयते । वाजसनेयके हि—"अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगाय" दित्युद्गानस्य कर्तरि प्राणदृष्ट्या असुरपराभवमुक्त्वा, 'य एवं वेदे'ति कर्तर्येव प्राणदृष्टिरेवंशब्दादवगम्यते । छान्दोग्ये — 'अथ ह य एवायं मुख्यप्राणस्तमुद्गीथमुपासांचक्रिरे' इत्युद्गानस्य कर्मण्येवोद्गीथे प्राणदृष्टिर्विहिता । अत एकत्र कर्तरि प्राणदृष्टिशब्दात्, अन्यत्र कर्मणि प्राणदृष्टिशब्दाच्च रूपान्यथात्वं स्पष्टम् । रूपान्यथात्वे च विधेयभेदे सति केवलचोदनाद्यविशेषोऽकिञ्चित्कर इति विद्याभेद इति चेत्—तन्न । अविशेषात् । अविशेषेण ह्युभयत्रोद्गीथसाधनकः परपरिभव उपक्रमे प्रतीयते । वाजसनेयके—"ते ह देवा ऊचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामे" त्युपक्रमे श्रूयते । छान्दोग्येऽपि — "तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम" इति । अत उपक्रमाविरोधाय "तेभ्य एष प्राण उदगाय" दित्यध्यस्तप्राणभाव उद्गीथः उद्गानकर्मभूत एव पाकादिष्वोदनादिवत् सौकर्यातिशयविवक्षया कर्तृत्वेनोच्यते । अन्यथा उपक्रमगत उद्गीथशब्दः कर्तरि लाक्षणिकः स्यात् । अतो विद्यैक्यमिति प्राप्ते प्रचक्ष्महे —

"न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्"। न वेति पक्षं व्यावर्तयति। न चैतदस्ति, यत् विद्यैक्यमिति। कुतः? प्रकरणभेदात्। "ओमित्येतदक्षरमुद्गीथमुपासीते"ति प्रकृतमुद्गीथावयवभूतं प्रणवं प्रस्तुत्य "एतस्य वा अक्षरस्योपव्याख्यानं भवति। देवासुरा ह वै यत्र संयेतिरे" इत्यारभ्य, "अथ ह य एवायं मुख्यप्राणस्तमुद्गीथमुपासांचक्रिर" इत्युद्गीथावयवभूतप्रणवविषयमुपासनं छन्दोगा अधीयते। वाजसनेयिनस्तु तादृशप्राचीनप्रकरणाभावात् "हन्तासुरान् यज्ञ उद्गीथेनात्ययामे"ति कृत्स्नमुद्गीथं प्रस्तुत्य "अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गाये"त्यादि कृत्स्नोद्गीथविषयमधीयते। ततः प्रकरणभेदेन विधेयभेदः, विधेयभेदे च रूपभेद इति न विद्यैक्यम्। किञ्च "अथ ह य एवायं मुख्यप्राणस्तमुद्गीथमुपासाञ्चक्रिर" इति पूर्वप्रकृत उद्गीथावयवभूतः प्रणव एवाध्यस्तप्राणभावः छन्दोगानामुपास्यः; वाजिनां तु कृत्स्नस्यैवोद्गीथस्य कर्तोद्गाता प्राणदृष्ट्योपास्य इति। "अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति, तथेति तेभ्य एष प्राण उदगाय" दित्युद्गातरि प्राणाध्यासं निर्दिश्य, य एवं वेदे"त्युद्गातैवाध्यस्तप्राणभाव उपास्यो विधीयते। अतश्च रूपभेदः। न चोद्गातर्युपास्ये विहिते 'उद्गीथेनात्ययामे'त्याख्यायिकोपक्रमविरोधः शङ्कनीयः। उद्गातुरुपासने उद्गीथस्योद्गानकर्मभूतस्यावश्यापेक्षितत्वात् तस्यापि परपरिभवाख्यं फलं प्रति हेतुत्वात्। अतो रूपभेदाद्विद्याभेद इति चोदनाद्यविशेषेऽपि न विद्यैक्यम्। "परोवरीयस्त्वादिवत्"। यथा एकस्यामेव शाखायामुद्गीथावयवभूते प्रणवे परमात्मदृष्टिविधानसाम्येऽपि हिरण्मयपुरुषदृष्टिविधानात् परोवरीयस्त्वादिगुणविशिष्टदृष्टिविधानमर्थान्तरभूतम्॥

"संज्ञातश्चेत्तदुक्तमस्ति तु तदपि"। उद्गीथविद्येति संज्ञैक्यात् तत् विद्यैक्यमुक्तञ्चेत्, तत् संज्ञैक्यं विधेयभेदेऽप्यस्त्येव। यथा अग्निहोत्रसंज्ञा नित्याग्निहोत्रे कुण्डपायिनामयनाग्निहोत्रे च। यथा चोद्गीथविद्येति छान्दोग्यप्रथमप्रपाठकोपात्तासु बह्वीषु विद्यासु॥

"व्याप्तेश्च समञ्जसम्"। छान्दोग्ये प्रथमप्रपाठके उत्तरास्वपि विद्यासूद्गीथावयवस्य प्रणवस्य प्रथमप्रस्तुतस्योपास्यत्वेन व्याप्तेश्च तन्मध्यगतस्य "तद्ध देवा उद्गीथमाजह्रुः" इत्युद्गीथशब्दस्य प्रणवविषयत्वमेव समञ्जसम्। अवयवे च समुदायशब्दः पटो दग्ध इत्यादिषु दृश्यते। अतश्चोद्गीथावयवभूतः प्रणव एवोद्गीथशब्दनिर्दिष्ट इति

**ते ह वाचमूचुस्त्वं न उद्गायेति । तथेति तेभ्यो वागुदगायत् ।**

---

स एव प्राणदृष्ट्योपास्यः छान्दोग्ये प्रतिपत्तव्यः । वाजसनेयके तु कृत्स्नोद्गीथविषय उद्गीथशब्द इति कृत्स्नोद्गीथस्य कर्तोद्गाता प्राणदृष्ट्योपास्य इति विद्यानानात्वं सिद्धम् " इति ।

अतोऽत्रोद्गीथशब्दः उद्गातृगीयमानोद्गीथपर एव । न तु "तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्यामः" इति छान्दोग्यगतोद्गीथशब्दवत् स्वतन्त्रोद्गीथपर इति द्रष्टव्यम् ॥ १ ॥

**ते ह वाचमूचुस्त्वं न उद्गायेति ।** त्वं न उद्गाता भवेति वागभिमानिनीं देवतां प्रार्थितवन्त इत्यर्थः । **तथेति तेभ्यो वागुदगायत् ।** तथेत्यङ्गीकृत्य **तेभ्यः** देवेभ्यो वाक् उद्गानं कृतवतीत्यर्थः । दृष्टिविधिप्रकरणत्वात् [असंभवदर्थकत्वाच्च] "आदित्यादिमतयश्चाङ्ग उपपत्ते" रिति न्यायेन क्रत्वङ्गभूते उद्गातरि

---

**ते ह वाचमूचुरि**त्यादि । नन्वस्तु तावदुद्गातरि प्राणदृष्टिरत्र विधीयत इति । अथापि, 'ते ह वाचमूचुः त्वं न उद्गायेति । तथेति तेभ्यो वागुदगायत्' इत्यादिवाक्येषु अन्यथात्वाधिकरणपूर्वपक्षे अध्यस्तवागादिभावे उद्गीथे उद्गानकर्मणि उद्गानकर्तृत्वोपचार इति, सिद्धान्ते उद्गातरि वागादिदृष्ट्योपासनं वाक्यार्थं इति किमर्थं क्लिष्ट गतिराश्रीयते; यथाश्रुतार्थत एव सामञ्जस्यात् । तथाहि—**उद्गीथेनात्ययामे**ति उद्गीथस्यैव शत्रुपराजयसाधनत्वं प्रागुदितम् । तादृशोद्गीथनिर्वर्तनाय वागादयो देवताः देवैः प्रार्थिताः । उद्गीथनिर्वर्तनकाले च असुरैर्विद्धासु तासु मुख्यप्राण एकः उद्गानं निरवीवृतत्, यतोऽसुराः तं व्यध्दुं न प्राभूवन् । ततो देवाः फलं प्रापुरिति यथाश्रुतवाक्यार्थः । न चोद्गीथस्य कर्माङ्गस्य कर्मफलेन फलवतः कथं शत्रुपराजयरूपफलान्तरसाधनत्वमिति वाच्यम्—"(२८) अथातः पवमानानामेवाभ्यारोहः' इत्यत्र वक्ष्यमाणरीत्या पवमानातिरिक्तस्तोत्रेषु गानकाले स्वात्मसंबन्धिफलकामनायाः, पवमानेषु याजमानफलकामनायाश्च उद्गातरि अवगमेन शत्रुपराजयरूपफलकामनया उद्गीथकरणोपपत्तेः । वचनबलेन अस्यापि फलस्य आयुरादिमन्त्रेष्विव स्वीकारात् । तर्हि वागादिभिः कृते उद्गीथे कथं न तत् फलमिति न शङ्क्यम्—शत्रुभिरास्कन्दनाद् वागादिभिस्तदनिर्वर्तनादेव न फलमिति प्रतीतेः । न तु अनुष्ठानेऽपि न फलमिति—

अत्रोच्यते । कः पुनरस्योपाख्यानस्योपयोगः ? न हि वागादीन् विहाय प्राण एवोद्गातृतया वरणीय इत्यस्मान् प्रति उपदेशार्थमिति वक्तुं शक्यते । अतोऽस्मद्वृते उद्गातरि तादृशप्राणदृष्टौ तत् फलं भवतीति **य एवं' वेदे**ति वाक्येन ज्ञापनात् तदर्थमिदमुपाख्यानमिति वक्त-

व्यम्। तत्र किं प्राणदृष्टेरिदं फलम्, उतोद्गीथस्य? अन्त्ये आर्त्विकोद्गातृकृतोद्गीथवशात् फलसिद्ध्या प्राणप्रशंसनोपाख्यानस्य वैयर्थ्यमेव। आद्ये प्राणदृष्टेरेव फलसाधनत्वे प्राणकृता-दुद्गीथात् विद्यारहितात् कथं देवानां तत् फलमासीत्? तदा तस्य तथात्वे कथमिदानीं तन्न भवेत्? अतः **य एवं वेद**इत्येतदनुसारेण प्रागपि वेदनादेव फलं विवक्षणीयम्। एवञ्च **उद्गीथेनात्ययामे**त्यस्य उद्गीथसंबन्धिविद्यया फलमित्येवार्थः। **एवमुद्गीथेने**त्यस्य यथाश्रुतार्थे निवर्तिते, उद्गीथविषयकप्राणदृष्ट्या वा उद्गीथकर्तृविषयकप्राणदृष्ट्या वा कया दृष्ट्या फलमित्यन्यतर-निर्धारणे कार्ये, अन्यथात्वाधिकरणं प्रवृत्तम्। तत्र उद्गीथविषयकप्राणदृष्ट्यंगीकारेऽपि छान्दोग्यस्योद्गीथावयवप्रणवमात्रपरतया तद्विद्यैक्यस्येहायोगात्, प्राणस्योद्गीथताया उपर्यनुक्तेः **उदगाय**दिति उद्गातृताया उक्तेः, य एवं वेदेत्यस्य उद्गाता प्राण इति वेदनेनेत्यर्थावगतेश्च उद्गातरि प्राणदृष्टेरित्यर्थोऽवधार्यते।

यत्तु **उदगाय**दित्यत्र यथाश्रुतार्थत्यागः कथमिति—तत्रोच्यते। यथाश्रुतार्थस्याबा-धितत्वे उपाख्यानार्थस्योपेक्षणायोगात् वागादीनां गानासामर्थ्यं प्राणस्य गातृत्वञ्च कण्ठोक्तं ग्राह्यमेव। अन्वयानुपपत्त्यभावे, 'औदुम्बरो यूपो भवती' त्यादाविव वाच्यार्थस्य स्थितेः। परन्तु विद्यायां तात्पर्यस्योक्तरीत्याऽऽवश्यकत्वात् अत्र वाक्ये विद्यापर्यन्तार्थविवक्षाऽपि लक्षणया। तत्र पूर्वपक्षे, वागादिकं स्वकृतोद्गीथे स्वदृष्टिमकरोदित्यर्थः। सिद्धान्ते तु, 'य एवं वेदे' ति वाक्येन उद्गाता प्राण इत्येवंविदः फलकीर्तनात्, उद्गीथः प्राण इत्येवंविदः फलमित्यनवगमात्, उद्गा-त्रात्येष्यन्तीति पुनःपुनरुक्तेश्च वागादिकमुद्गातृ भूत्वा उद्गातरि स्वाभेदमपश्यदिति वाक्यार्थः। 'यो वाचि भोगः तं देवेभ्य आगाय' दिति वाक्यतोपि सोऽर्थो ज्ञायते। **तमागाय**दित्यस्य तत्फलसाधनभूतोपासनाश्रयं गानमकरोदित्यर्थात्। **वाचि भोग** इत्यस्यापि वागादिदृष्ट्यधीनं फलमित्यर्थः। तथाच वागादिकं कल्याणवदनादिसामर्थ्यं स्वस्मिन्नाशास्य तथाभूतवागादिदृष्टिं विधाय देवेभ्यः फलमदित्सत्। असुराश्च कल्याणवदनादिवैकल्यमापाद्य वागादिकमसमर्थं कृत्वा दृष्टिं न्यरुन्धन्निति विशिष्टार्थः। दृष्टिरियं यथार्था अयथार्था वेत्यन्यदेतत्।

एवञ्च वागुदगायदित्यादेः वागादिकं दृष्टिविशेषविशिष्टोद्गानकर्तृ अभूदित्येव वाक्यार्थः सुवच इति श्रीभाष्ये कर्मणि कर्तृत्वोपचारादिकल्पनप्रयासः किमर्थमाश्रित इति शङ्का परमवशिष्यते।

तत्रेदं वक्तव्यम्—वागादिपदेनाचेतनमात्रग्रहणे तत्रोद्गानकर्तृत्व—दृष्टिकर्तृत्वबाधात् श्रीभा-ष्योक्ता लक्षणा सुस्था। उपरि, 'सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत' इत्यादिवाक्ये प्राणाधीनशक्तिसंपत्त्यनन्तरमेव वागादिनियामकत्वस्याग्न्यादौ वागाद्यचेतनस्यैव प्राङ्मृत्युमत्त्वस्य च प्रतीतिरित्यादिकमनेकं अचेतनदृष्टौ नियामकं विमृश्यम्। अत एव भावप्रकाशिकायां मुख्य-प्राणस्योद्गातृत्वं बाधितमित्युक्तम्। परन्तु अत्र "वागभिमानिनीं देवतां प्रार्थितवन्तः" इति वागादिपदस्य देवतापरत्वं स्वारस्यसिद्धं गृहीत्वैव व्याख्यानात् तद्बाधो दुर्वचः। देवानामपि कर्माधिकारात्। तदयं श्रीभाष्याशयः—छान्दोग्य इवेहापि उद्गीथे वागादिदृष्ट्या फलमिति वदन् पूर्वपक्षी इदमपि मन्यते, 'उद्गीथे वाग्दृष्टिः वाचैव कार्या, प्राणदृष्टिस्तु प्राणेन, चक्षुर्दृष्टि-श्चक्षुषे' ति विशेषव्यवस्थायां प्रमाणाभावात् वाग्दृष्ट्यर्थं वाचं प्रति प्रार्थनम्, अन्यदृष्ट्यर्थमन्यं प्रति

**यो वाचि भोगस्तं देवेभ्य आगायत् ; यत् कल्याणं वदति तदात्मने । ते ऽविदुरनेन वै न उद्गात्राऽत्येष्यन्तीति । तमभिद्रुत्य पाप्मनाऽविध्यन् ।**

---

वाग्दृष्टिं कृतवन्त इत्यर्थः । **यो वाचि भोगस्तं देवेभ्य आगायत् यत् कल्याणं वदति तदात्मने ।** वाचि निमित्ते **यो भोगः** गानादिजन्यो यः सुखानुभवः, तं भोगं देवेभ्य आगायत् । देवानां भोगमुद्दिश्यागायत् गानं कृतवती । गानेन देवानां भोगं संपादितवतीति यावत् । यत् कल्याणवार्ताभिलपनरूपं वागिन्द्रियकार्यम्, तदप्यात्मने वाक् संपादितवतीत्यर्थः । **तेऽविदुः – अत्येष्यन्तीति । ते** असुराः **अविदुः** ज्ञातवन्त इत्यर्थः । किमिति ? **अनेन** वाग्रूपेणोद्गात्रा **नः** अस्मान् **अत्येष्यन्ति** जेष्यन्तीति । **तमभिद्रुत्य पाप्मनाऽविध्यन् । तं** – उद्गातारं **अभिद्रुत्य** शीघ्रं प्राप्य **पाप्मना अविध्यन्** – पापेन संयोजितवन्तः । **स यः**

---

इत्येवं प्रतीतोऽर्थोऽनपेक्षितत्वादुपेक्ष्यते । वागादिषु केनापि वा अद्यतनोद्गात्रेवान्येनापि वा अपेक्षित-दृष्टिकरणसंभवात् । अतः **ते ह वाचमूचुरि**त्यादेः, त्वमुद्गीथो भवेति वाचमूचुः ; वाक् च तथेति उद्गीथोऽभूदित्येवमेवार्थः । अतः कर्मणि कर्तृत्वोपचारः । देवाः उद्गीथं वागादिरूपेणोपासाञ्च-क्रिर इति तु तात्पर्यार्थ इति । इमं पूर्वपक्ष्याशयमनुरुन्धानेन च सिद्धान्तिना, त्वमुद्गीथो भवेति न स्वरसोऽर्थः ; अपितु त्वमुद्गाता भवेत्येव ; अत उद्गातर्येव वागादिदृष्टिरिति प्रति-विहितमिति । अत्र सिद्धान्ते श्रीभाष्याविरुद्ध एवमप्यर्थो भवेत् – **वाचमूचुः** = स्वस्मिन् वाक्त्वाध्यासकरणनिपुणं कञ्चिदुद्गातारमूचुः, त्वं न उद्गायेति । तथेति **वाक्** वागध्यासनिपुणः उदगायत् । **यो वाचि भोगः तं देवेभ्य आगायत्** = स उद्गाता वाग्गतं भोगं देवेभ्य उपासनेन संपादयितुमारभत । **यत् कल्याणं वदति तदात्मने** = वाग्गतं कल्याणवदनं स उद्गाता स्वस्मै आगायदिति । यदुचितम्, तद् ग्राह्यम् । वागादिकमुत्कृष्टं मत्वा तद्दृष्टिरुद्गातरि क्रियते । ततः तत्र निकर्षकल्पनार्थं पाप्मना वेधनं वागादेरसुरकृतम् । अत्र भाष्ये **दृष्टिविधि-प्रकरणत्वादित्येतदनन्तरं असंभवदर्थकत्वाच्चे**ति पाठः क्वाचित्कः । तत्राचेतनस्योद्गातृ-त्वोक्तौ असंभवः स्पष्टः । चेतनदेवताग्रहणे तु श्रीभाष्याशयवर्णने दर्शितो व्यवस्थाया असंभवो ग्राह्यः । किञ्चात्र घ्राणदेवता वायुरेवोक्तः ; न सुबालोपनिषदीव पृथिवी । 'मुख्यप्राणदेवताऽपि वायुरेव, 'सैषाऽनस्तमिता देवता यद् वायु'रिति वक्ष्यते । तत्रकस्यैव वायोः पाप्मविद्धत्वा-विद्धत्वे दुर्वचे । अतो दृष्टिविशेषविवक्षयैव दशाभेदेन तन्निर्वाह्यमित्यप्याशयः स्यात् ।

स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव । स पाप्मा ॥ ( २ )

अथ ह प्राणमूचुस्त्वं न उद्गायेति । तथेति तेभ्यः प्राण उदगायत् । यः प्राणे भोगस्तं देवेभ्य आगायत्; यत् कल्याणं जिघ्रति तदात्मने । तेऽविदुरनेन वै न उद्गात्रात्येष्यन्तीति । तमभिद्रुत्य पाप्मनाऽविध्यन् । स यः स पाप्मा यदेवेदमप्रतिरूपं जिघ्रति स एव । स पाप्मा ॥ ( ३ )

अथ ह चक्षुरूचुस्त्वं न उद्गायेति । तथेति तेभ्यश्चक्षुरुदगायत् । यश्चक्षुषि भोगस्तं देवेभ्य आगायत्; यत् कल्याणं पश्यति तदात्मने । तेऽविदुरनेन वै न उद्गात्राऽत्येष्यन्तीति । तमभिद्रुत्य पाप्मनाऽविध्यन् । स यः स पाप्मा यदेवेदमप्रतिरूपं पश्यति स एव । स पाप्मा ॥ ( ४ )

अथ ह श्रोत्रमूचुस्त्वं न उद्गायेति । तथेति तेभ्यश्श्रोत्रमुदगायत् । यः श्रोत्रे भोगस्तं देवेभ्य आगायत्; यत् कल्याणँ शृणोति तदात्मने । तेऽविदुरनेन वै न उद्गात्राऽत्येष्यन्तीति । तमभिद्रुत्य पाप्मनाऽविध्यन् । स यः स पाप्मा यदेवेदमप्रतिरूपं शृणोति स एव । स पाप्मा ॥ ( ५ )

अथ ह मन ऊचुस्त्वं न उद्गायेति । तथेति तेभ्यो मन उदगायत् । यो मनसि भोगस्तं देवेभ्य आगायत्; यत् कल्याणँ सङ्कल्पयति तदात्मने । तेऽविदुरनेन वै न उद्गात्रात्येष्यन्तीति । तमभिद्रुत्य पाप्मनाऽविध्यन् । स यः स पाप्मा यदेवेदमप्रतिरूपँ सङ्कल्पयति स एव । स पाप्मा ॥

---

**स पाप्मा—स पाप्मा** । यः **स पाप्मा** तद्वेधनसाधनभूतः, स तु यदेवेदं **अप्रतिरूपं** अनुचितमश्लीला[1] नृतपैशुन्यादि वदति, **स एव** तद्रूप एव; स पाप्मेत्यर्थः । अयं भावः—वागिन्द्रियमसुराः क्रोधाद्युत्पादनद्वारा परुषातिवादपैशुन्यादिदूषितमकुर्वन्निति । [2] ततश्चासुरबुद्धिकार्या तत्तदिन्द्रियाणां पापप्रवृत्तिरिति भावः ॥ २ ॥

**अथ ह प्राणमूचुरित्यादि । प्राणं** घ्राणम् । शिष्टं स्पष्टम् ॥ ३+४+५– ॥

1. मशिवा. क. 2. नेदं वाक्यं ग कोशे ।

---

वेधनसाधनं पाप्मैवेत्युपपाद्यते **स य** इति । **यः सः पाप्मे**त्यत्र **स** इत्यस्य वेधनसाधनभूत इत्यर्थः । यस्स पाप्मेत्युक्तः, स क इति चेत्—यदेवेदमप्रतिरूपं वदति **स** एव । अप्रतिरूपवदनस्य पाप्मत्वं प्रसिद्धमित्याह **स पाप्मे**ति । तथाच पाप्मनैवाविध्यन्नितीदमुपपादितं भवति ।

**एवमु खल्वेता देवताः पाप्मभिरुपासृजन् । एवमेनाः पाप्मनाऽविध्यन् ॥ ( ६ )**

**अथ हेममासन्यं प्राणमूचुस्त्वन्न उद्गायेति । तथेति तेभ्य एष प्राण उदगायत् । तेऽविदुरनेन वै न उद्गात्रात्येष्यन्तीति । तमभिद्रुत्य पाप्मनाऽविव्यत्सन्[1] । स यथाऽश्मानमृत्वा लोष्टो विध्वँसेत, एवँ हैव विध्वँसमाना विष्वञ्चो विनेशुः । ततो देवा अभवन् पराऽसुराः ।**

1. अवित्सन् . पा०

---

उक्तमर्थं निगमयति – **एवमु – उपासृजन्** । उशब्दोऽवधारणे । एवमेव खलु=उक्तया रीत्या एता देवताः वागाद्याः उक्ता अनुक्ताश्च पाप्मभिः अनृतवदनादिलक्षणैः **उपासृजन्** उपगतवन्त[1] इत्यर्थः । **एवमेनाः पाप्मनाऽविध्यन्** । **एवं** उक्तया रीत्या । असुराः **एनाः** वागादिदेवताः । **पाप्मना अविद्धयन्** अनृतादिपाप्मना वेधनं कृतवन्त इत्यर्थः ॥ ६ ॥

**अथ हेममासन्यं प्राणमूचुः** । **आसन्यम्** आसन्नं = मुख्यमित्यर्थः । यद्वा आस्ये भवः – **आसन्यः** । आस्यशब्दस्य ' पद्दन् ' इत्यादिना आसन्नादेशः । मुख्यमिति यावत् । तं प्राणं देवा **ऊचुः** उक्तवन्तः । किमिति ? **त्वं न उद्गायेति** । स्पष्टोऽर्थः । **तेभ्य एष प्राण उदगायत्** । उद्गातरि मुख्यप्राणदृष्टिं कृतवन्त इत्यर्थः । तथैव हि व्याख्यातं **व्यासार्यैः**, " अन्यथात्वं शब्दात्–"इत्यधिकरणे । **तेऽविदुः– अविव्यत्सन्** । **अविव्यत्सन्**[2] व्यद्धुमैच्छन् । व्यध ताडने । तस्मात् सनि नेट् । अकित्त्वात् न संप्रसारणम् । शिष्टं स्पष्टम् । **स यथाऽश्मानमृत्वा लोष्टो विध्वंसेत– विनेशुः** । यथा अश्मचूर्णनाय प्रक्षिप्तो **लोष्टः** पांसुपिण्डः **अश्मानं** पाषाणं **ऋत्वा** प्राप्य **विध्वंसेत** चूर्णीभवेत् । **सः** दृष्टान्तो यथा, तथा अध्यस्तमुख्यप्राणभावोद्गातुपासनानिष्ठान् देवान् प्राप्य **विध्वंसमानाः** चूर्णीभवन्तः **निष्वञ्चः** नानागतयः विनष्टा अभवन्नित्यर्थः । **ततो देवा अभवन् पराऽसुराः** । ततः परं देवाः **देवा** जाताः । द्योतमाना अभवन्नित्यर्थः । यद्वा देवाः **अभवन्** – सत्तामलभन्तेत्यर्थः । विजयिनोऽभवन्निति वाऽर्थः । असुरास्तु **पराऽभवन्** — पराभूता अभवन् ।

1. उपगतवन्तः क.　　2. अवित्सन् वेद्धुमैच्छन् क.

**भवत्यात्मना, पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद ॥ ७ ॥**

---

**भवत्यात्मना पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद**[[1] यः उद्गातारमध्यस्तप्राणभावमुपास्ते, स **आत्मना भवति** उत्तरो भवतीत्यर्थः। यद्वा, **आत्मना**—मनसा समीचीनेन युक्तो भवतीत्यर्थः।] **अस्य द्विषन्**— 'द्विषश्शतुर्वावचन' मिति कर्मणि षष्ठी — एनं प्रति द्वेषं कुर्वन् शत्रुः पाप्मा च पराभूतो भवतीत्यर्थः। "भवत्यात्मना परास्य द्विषन् भ्रातृव्यो भवति य एवं वेदेति शत्रुपराजयफलायोद्गीथे प्राणदृष्टिर्विहिते"ति भाष्यस्योपलक्षणतया पाप्मपराभवस्य, आत्मना भवनस्य च फलत्वप्रतिपादनस्य न विरोध इति द्रष्टव्यम्। यद्वा अस्य द्विषन् भ्रातृव्य **आत्मना** स्वत एव पराभवति, **पाप्मा च भवति**—निन्दादियुक्तश्च भवतीत्यर्थः ॥ ७ ॥

1. ख. ग. कोशयोः भवत्यात्मनेत्येतदर्थवर्णनं न।

---

**भवत्यात्मनेति**। यथा पितृतुल्यः पितृव्यः, तथा भ्रातृतुल्यो भ्रातृव्यः सपत्न्या मातुः पुत्रः। स यदि देवान् असुरा इव स्वात्मानं द्विषन् स्यात्, पराभवति। तत्पराभवने स्वस्य स्वरूपेण भवनमर्थसिद्धं **भवत्यात्मने**त्यनूद्यते। यदि तु परपराभवेपि स्वभवनस्यार्थिकत्वमसिद्धम्, तर्हि तदपि फलत्वेन विवक्षणीयम्। तदा च पाप्मपराभवोऽपि पृथक् फलं समुच्चीयताम्। पाप्माभिन्नत्वस्य भ्रातृव्ये बाधेन समुच्चयस्यैव युक्तत्वात्। 'द्विषन् पाप्मा भ्रातृव्य' इति पाप्मशब्दघटितश्रुतिपाठस्यैव शाङ्करेऽप्यादृतत्वात्। अयं च पाप्मपराभवः किंरूप इति च 'सा वा एषा दूर्नामे' त्यादिविस्तराद् ज्ञास्यते इत्याशयेन द्रष्टव्यमित्यन्तमुक्तम्। **अस्येत्यस्य** सन्निहिते द्विषन्नितिपदेऽन्वयसंभवे व्यवहित**भ्रातृव्य**पदान्वयो न युक्त इति **कर्मणि षष्ठीत्युक्तम्**। शत्रुपराजयरूपफलमात्रस्वीकारेणैव निर्वहति **यद्वेति**। अस्मिन् पक्षे वक्ष्यमाणं पाप्मापहतिरूपं फलं दूरत्वानुसंधानजन्यं भाव्यम्। वस्तुतस्तु **द्विषन् पाप्मा भ्रातृव्य** इत्यत्र पाप्मैव, देवानामसुर इव, द्विषन्भ्रातृव्योऽस्माकमिति रूपणे तात्पर्यमिति पाप्मपराभव एव शत्रुपराभवत्वेन देवलब्धफलसाम्याय श्रीभाष्ये निर्दिष्टः। प्राणदृष्टेः ब्रह्मविद्योपयोगिसर्वकरणवशीकरणार्थताया एव प्रकृते युक्तत्वात्। एवं विरोधिभूतपाप्मश्लिष्टत्वादेव हि इन्द्रियेषु अरिषड्वर्ग इति व्याहार इति।

**ते होचुः, क नु सोऽभूत्, यो न इत्थमसक्तेति । अयमास्येऽन्तरिति । सोऽयास्य आङ्गिरसः । अङ्गानाँ हि रसः ॥ ८ ॥**

**सा वा एषा देवता दूर्नाम । दूरँ ह्यस्या मृत्युः । दूरँ ह वा अस्मान्मृत्युर्भवति य एवं वेद ॥ ९ ॥**

---

**ते होचुः क नु सोऽभूद्यो न इत्थमसक्तेति ।** ते ह देवाः ऊचुः । किमिति ? । यः मुख्यप्राणः **नः** अस्माकं **इत्थं** उक्तरूपं शत्रुपराजयं **असक्त** संयोजितवान् । षञ्जेः सिचि व्यत्ययेनात्मनेपदे 'झलो झली' ति सिज्लोपे तस्य छान्दसेन[1] सिद्धत्वेन अनिदितामित्यनुनासिकलोपः; कुत्वम् । यः संयोजितवान्, स **क नु** कस्मिन् देशे प्रतिष्ठितः इत्यूचुः [2]संमन्त्रयाञ्चक्रुरित्यन्वयः । एवं संमन्त्र्य ददृशुः, **अयमास्येऽन्तरिति—रसः** । अन्तरास्येऽयमिति प्रत्यक्षतो दृष्टो यः प्राणः सोऽयास्यः **आ० रसोऽङ्गानाँ हि रसः** । अङ्गानां प्राणो हि रसः, अतः आङ्गिरस इत्यर्थः ॥ ८ ॥

**सा वा एषा देवता दूर्नाम दूरँ ह्यस्या मृत्युः । हि** यस्मात् कारणात् अस्याः मुख्यप्राणरूपाया देवतायाः मृत्युर्दूरं भवति, तस्मात् प्राणस्य दूर्नामत्वमित्यर्थः । दूर्नामकत्वेन प्राणविद्यायाः फलमाह — **दूरं ह वा — वेद** । स्पष्टोऽर्थः ॥ ९ ॥

1. छान्दसेन त्रित्वे सिद्धत्वेन. क. 2. मन्त्र. क.

---

तादिदं पाप्मापहतिरूपं फलमुद्दिश्य दूस्त्वासंनुध्यानमपि सह घटयिष्यन् प्राणस्य दूश्शब्दवाच्यं दूस्त्वं न पुरुषदूरवर्तित्वात् तस्य, किन्तु पाप्मदूरवर्तित्वादित्युपपादयितुं पुरुषान्तःस्थत्वात् पुरुषदूरवर्तित्वं न भवतीति गमयन् प्राणस्य अयास्याङ्गिरसनाम किञ्चिदाह **ते होचुरिति** । एतेन 'अयास्यनामकथनं बृहस्पत्यादिनामनिर्देशस्थले समुचितावसरम्; करिष्यते च तत्र समनन्तरमिति कथमत्र कथनम्' इति शङ्का शमिता । दूस्त्वकथनशेषत्वादिहैतस्य ।

**षञ्जेरिति** । षच समवाये इति धातोः सेट्त्वात् आत्मनेपदसत्त्वेऽपि तदुपेक्षा । शक मर्षणे इत्यस्य शसयोरभेदेन ग्रहणे तु अशक्तेति रूपं सिद्ध्यति । तदा यः **नः** अस्माकं मध्ये **अशक्त** समर्थोऽभूदित्यर्थः । ननु सिज्लोपस्यासिद्धत्वात् ङितो लुङः परत्वाभावात् अनिदितामिति नलोपो न भवति । न च, 'सिज्लोप एकादेशे सिद्धो वक्तव्य' इतिवत् अत्र लोपस्यासिद्धत्वाभावानुशासनमस्ति । तत्राह **छान्दसेन सिद्धत्वेनेति** । **संयोजितवानिति** तात्पर्यार्थः । वाच्यार्थस्तु — यो **नः** असभ्यमित्थमसक्त आसक्तिमान् अभूदिति ।

**सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य [1] यत्रासां दिशामन्तस्तद्गमयाञ्चकार । तदासां पाप्मनो विन्यदधात् ।**

**तस्मान्न जनमियात्, नान्तमियात्; नेत् पाप्मानं मृत्युमन्ववायानीति ॥ १० ॥**

1. यत् तासां. मा.

---

**सा वा एषा — गमयाञ्चकार** । सा उद्गातरि अध्यस्योपासिता **एषा** मृत्युदूरत्वेन दूर्नामिका मुख्यप्राणरूपा देवता पूर्वमसुरैः अनृतादिपाप्मभिः संयोजितानां वागादिदेवतानां **मृत्युं** मरणादिदुःखहेतुतया मृत्युशब्दितं पाप्मानं **अपहत्य** वागादिदेवताभ्य आच्छिद्य, यत्र **आसां दिशामन्तः** सर्वदिगन्तप्रदेशः तद्गमयाञ्चकार । दूर्नामत्वाद्दूरं मृत्युं निनायेत्यर्थः । **तदासां पाप्मनो विन्यदधात्** । **आसां** वागादिदेवतानां **पाप्मनः** पापानि **तत्** तेषु दिगन्तदेशेषु **विन्यदधात्** विशिष्य निधानं कृतवतीत्यर्थः ।

**तस्मान्न जनमियान्नान्तमियात्** । यस्मात् कारणात् प्रत्यन्तदेशानां वागादिदेवताविनिर्मुक्तानृतादिलक्षणपापनिधानाश्रयतया म्लेच्छदेशत्वम्, अत एव तत्र देशे **जनं** जननं — उत्पत्तिमिति यावत् — **अन्तं** मरणं च **नेयात्** न प्राप्नुयात् । तत्र देशे उत्पत्तिमरणे अशोभने इति इति यावत् । **नेत् पाप्मानं मृत्युमन्ववायानीति** । **नेत्** — नैवेत्यर्थः । पाप्मानं मृत्युं नैवान्ववायानि=नानुगच्छेयमिति भीतस्सन्नुत्पत्तिमरणे तत्र न प्राप्नुयादित्यन्वयः । उत्पत्तिमरणे तादृशदेशे[1] यथा न भवतः, तथा यतेतेति यावत् ॥ १० ॥

1. तादृशे यथा. क.

---

**तस्मादिति** । तस्मिन्निति सप्तम्यन्तमवश्यमपेक्षितम् । अस्य तु पञ्चम्यन्तत्वात् हेतुपरत्वेनैतत् गृहीत्वा **तत्र देशे** इत्यर्थसिद्धाध्याहारः कृतः ।

सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्याथैना मृत्युमत्यवहत् ॥ ११ ॥

स वै वाचमेव प्रथमामत्यवहत्, सा यदा मृत्युमत्यमुच्यत, सोऽग्निरभवत् । सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते ॥ १२ ॥

अथ प्राणमत्यवहत् । स यदा मृत्युमत्यमुच्यत, स वायुरभवत् । सोऽयं वायुः परेण मृत्युमतिक्रान्तः पवते ॥ १३ ॥

अथ चक्षुरत्यवहत् । तद् यदा मृत्युमत्यमुच्यत, स आदित्योऽभवत् । सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति ॥ १४ ॥

अथ श्रोत्रमत्यवहत् । तद्यदा मृत्युमत्यमुच्यत, ता दिशोऽभवन् । ता इमा दिशः परेण मृत्युमतिक्रान्ताः ॥ १५ ॥

---

**सा वा एषा — मृत्युमत्यवहत्** । सैषा मुख्यप्राणदेवता । **आसां** वागादिदेवतानां पाप्मानं मृत्युं **अपहत्य** तत आच्छिद्य **अथ** तदनन्तरं **एनाः** वागादिदेवताः मृत्युमतीत्यावहत, मृत्युमतिक्रान्तं स्वरूपं प्रापयदित्यर्थः ॥ ११ ॥

तदेव प्रपञ्चयति — **स वै वाचमेव** । — **सः** प्राणः **प्रथमां** इतरदेवतासु प्रधानभूतां वाचं **अत्यवहत्** मृत्युमत्यकामयदित्यर्थः । **सा वाक् यदा मृत्युमत्यमुच्यत** मृत्योरतिमुक्ता अत्यन्तमुक्ता आसीत्, **सोऽग्निरभवत्** । तदेति शेषः । **स** इत्यग्न्यपेक्षया पुल्लिङ्गनिर्देशः । यद्यपि वागभिमानिनी देवता सर्वदा अग्निरेव — तथाप्यपगतदोषतया अग्रनयनादिप्रवृत्तिनिमित्तपौष्कल्यशालितयाऽग्निरभवत् । 'अद्य रामस्य रामत्व' मित्यादिवदिति भावः । तदेवाह — **सोयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते** । एवं मृत्युमतिक्रान्तोऽग्निः निरस्तपापरूपमलतया **मृत्युं परेण** मृत्योः परस्ताद्दीप्यत इत्यर्थः ॥ १२ ॥

एवमुत्तरत्रापि द्रष्टव्यम् । **अतिक्रान्ताः** । अत्र भान्तीति शेषः । **दिक्**छब्दो दिग्देवतापरः ॥ १३+१४+१५ ॥

---

**प्रधानभूतामिति** । उपरि प्राणस्य वाग्विशिष्टतयाऽनुसंधानस्य वक्ष्यमाणत्वात् वाचः इतरापेक्षया प्राधान्यम् ।

**अथ मनोऽत्यवहत्। तद्यदा मृत्युमत्यमुच्यत, स चन्द्रमा अभवत्। सोऽसौ चन्द्रः[1] परेण मृत्युमतिक्रान्तो भाति। एवँ ह वा एनमेषा देवता मृत्युमतिवहति, य एवं वेद ॥ १६ ॥**

**अथात्मनेऽन्नाद्यमागायत्। यद्धि किञ्चान्नमद्यते, अनेनैव तदद्यते। इह प्रतितिष्ठति ॥ १७ ॥**

1. चन्द्रमाः–पा०

---

**एवं ह वा एनमेषा देवता मृत्युमतिवहति य एवं वेद**। यः पुमान् वागाद्यभिमान्यग्न्यादिदेवतानां मृत्य्वतिवहनकर्म[1] वेद, तमेनमेषा प्राणदेवता **मृत्युमतिवहति** [2]अतितारयतीत्यर्थः। [शिष्टं स्पष्टम्] ॥ १६ ॥

**अथात्मनेऽन्नाद्यमागायत्** —। 'यो वाचि भोगस्तं देवेभ्य आगायत् यत् कल्याणं वदति तदात्मने' इति यजमानगामिफलव्यतिरिक्तं कल्याणवदनादिकं यथा वागाद्या देवता आगायन्, तथा प्राणोऽप्यात्मने अन्नाद्यमागायत्। अन्नमत्तीत्यन्नादः। तस्य भावः अन्नाद्यम्। आदिवृद्ध्यभावः छान्दसः। अथवा अन्नञ्च तत् आद्यञ्च अन्नाद्यम्। **आद्यं** अदनार्हम्। भक्षणार्हमित्यर्थः। **आगायत्** गानसामर्थ्येन [3]उपास्थापयत्। संपादितवानित्यर्थः। **यद्धि किञ्चान्नमद्यते, अनेनैव तदद्यते**। अत्र अनशब्दः प्राणवाची। अद्यमानं सर्वं प्राणेनैवाद्यत इत्यर्थः। **इह प्रतितिष्ठति**। इह अन्ने सत्येव प्राणः प्रतिष्ठितो भवतीत्यर्थः। तस्मादन्नस्य प्राणाहारत्वादन्नादत्वं सिद्धमिति भावः ॥ १७ ॥

1. कर्म. ग. 2. अतिक्रामयति. ख. 3. आपयत्. ग.

---

एवं तावत् दूरत्वविशिष्टप्राणदृष्टेरुद्गातरि कृतायाः याजमानं फलं पाप्मरूपद्विषद्भ्रातृव्यपराभव इत्युक्तम्। अथोद्गातुरात्मीयं फलं प्राणदृष्टिजन्यं दर्शयति **अथात्मने** इति। आगायदित्यत्र प्राण इति कर्तुरनुषङ्गः। प्राणाध्यासकरणनिपुण उद्गातेति तत्पर्यवसितार्थो भवेत्।

**आदिवृद्ध्यभाव** इति। अन्नपदेनैव आद्यस्यापि ग्रहणसंभवात्, पूर्वं 'यत् कल्याणं जिघ्रती'त्यादिवत् यदन्नमत्तीत्येवात्र वक्तव्यत्वात्, 'अन्नमद्यते' इत्युपर्युक्तेश्चैवं व्याख्या। सर्वत्रान्नाद्यपदश्रुतिशैलीमङ्क्षेशव्यानुसृत्य द्वितीया।

ते देवा अब्रुवन्, एतावद्वा इदँ सर्वं यदन्नम्। तदात्मन आगासीः। अनु नोऽस्मिन्नन्न आभजस्वेति। ते वै माऽभिसंविशतेति। तथेति तँ समन्तं परिण्यविशन्त। तस्माद्यदनेनान्नमत्ति, तेनैतास्तृप्यन्ति। एवँ ह वा एनँ स्वा अभिसंविशन्ति, भर्ता स्वानाँ श्रेष्ठः पुर एता भवत्यन्नादोऽधिपतिर्य एवं

---

**ते देवा अब्रुवन्**। वागाद्याः ते देवाः प्राणमब्रुवन्। किमिति? **एतावद्वा इदँ सर्वं—आभजस्वेति**। यदिदमन्नमस्ति, एतावद्वै सर्वमिदम्। **तत्** तादृशमन्नमात्मने स्वार्थं आगासीः। वयञ्चान्नार्थिनः, अन्नं विना स्थातुमशक्यत्वात्। तस्मादस्मिन्नन्ने **अनु** त्वद्भोगानन्तरं **नः** अस्मान **आभजस्व**—आङ् ईषदर्थे अन्तर्भावितण्यर्थोऽयं भजिः — भाजय, अल्पाल्पभागवतः कुर्वित्यर्थः॥

[स] एवमुक्तः प्राणः प्रत्याह—**ते वै माऽभिसंविशतेति**। **ते वै** तादृशाः अन्नार्थिनः यूयं **मा** माम् **अभि** अभितः **संविशत** उपविशतेत्यब्रवीत्। **तथेति तं समन्तं परिण्यविशन्त**। वागाद्या देवताः तथेति प्रतिश्रुत्य समन्तात् परितः **न्यविशन्त** निविष्टा इत्यर्थः। भागिनश्चाभवन्निति भावः। **तस्माद्यदनेनान्नमत्ति तेनैतास्तृप्यन्ति**। तस्माद्धेतोर**नेन** प्राणेन सहितस्सन्[1] जीवो यदन्नमत्ति, तेनैवान्नेन वागाद्याः तृप्यन्ति। प्राणे अन्नेनाऽऽप्यायिते वागाद्याः प्राणा अन्नेनाप्यायिता भवन्तीत्यर्थः।

एतद्वेदनस्य फलमाह **एवं ह वा एनं—वेद**। यस्त्वेवं **वेद** उपास्ते, तादृश**मेनं** विद्वांसम्, यथा वागाद्याः प्राणस्य परितो निविष्टाः, एवं **स्वाः** ज्ञातयः **अभितस्संविशन्ति** परित उपासते; [एषः?] **स्वानां** ज्ञातीनां **भर्ता** पोषकः श्रेष्ठश्च **पुरएता** अग्रेसरः **अन्नादः** अरोगदृढगात्रतया अभिमतान्नभोक्ता अन्येषा-

1. सहितस्सन् इत्येतत्स्थाने 'करणेन' इति क.

---

अन्नादोऽधिपतिरिति। सर्वमिदमुद्गातुरात्मगतं फलम्।

**वेद। य उ हैवंविदँ स्वेषु प्रति प्रति[1]बुभूषति, न हैवालं भार्येभ्यो भवति। अथ य एवैतमनुभवति, यो वै तमनु भार्यान् बुभूर्षति, स हैवालं भार्येभ्यो भवति ॥ १८ ॥**

**सोऽयास्य आङ्गिरसोऽङ्गानाँ हि रसः। प्राणो वा अङ्गानाँ रसः। प्राणो हि वा अङ्गानाँ रसः। तस्मात् यस्मात् कस्माच्चाङ्गात् प्राण उत्क्रामति, तदेव तच्छुष्यति। एष हि वा अङ्गानाँ रसः ॥ १९ ॥**

1. प्रतिपत्तिः पा.

---

मधिपतिश्च भवतीत्यर्थः। **य उ हैवंविदं स्वेषु प्रति प्रति बुभूषति न हैवालं भार्येभ्यो भवति।** **एवंविदं** एतादृशप्राणविद्यानिष्ठं प्रति **स्वेषु** ज्ञातिषु **प्रति** प्रतिभटः — छान्दसस्सुलोपः — **बुभूषति** भवितुमिच्छति, प्रतिस्पर्धी भवितुमिच्छतीत्यर्थः। **प्रतिपत्तिर्बुभूषतीति** पाठेऽपि स एवार्थः। **सः भार्येभ्यः** भर्तव्यभार्यापुत्रादिभ्यः—भार्यापुत्रादिभरणायेति यावत्—**नालं भवति**। पुत्रकळत्रादिभरणेप्यसमर्थो भवतीत्यर्थः। **अथ य एवैतमनुभवति यो वैतमनु भार्यान् बुभूर्षति**। अथशब्दः प्रकृतमपेक्ष्यार्थान्तर[पर]त्वे। ज्ञातीनां मध्ये **य एतं** प्राणविदमनु **भवति** अनुगतो भवति, **यो** वा **एतं** प्राणविदम् **अनु** अनुसृत्य **भार्यान्** भर्तव्यान् पुत्रकळत्रादीन् **बुभूर्षति** भर्तुमिच्छति। भृञः सनि 'उदोष्ठ्यपूर्वस्य' त्युत्वम्। **स एवालं भार्येभ्यो भवति।** उक्तोऽर्थः ॥ १८ ॥

पूर्वमुक्तमेवायास्यत्वमाङ्गिरसत्वञ्च विद्याभेदभ्रमापनुत्तये पुनराह — **सोयास्य** इत्यादिना। **सोऽयास्य आङ्गिरसोऽङ्गानां हि रसः** इत्यन्तेन उक्त एवार्थः स्मारितः। पुनस्तमेवार्थं प्रसिद्ध्योपपादयति **प्राणो हि वा—रसः**। **हि** यस्मात् प्राणानामङ्गरसत्वम्, **तस्मात् यस्मात् कस्माच्चिदङ्गात् प्राण उत्क्रामति, तदेव** तदङ्गं **शुष्यति**। नीरसत्वादिति भावः ॥ १९ ॥

**एष उ एव बृहस्पतिः। वाग्वै बृहती। तस्या एष पतिः। तस्मादु बृहस्पतिः ॥ २० ॥**

**एष उ एव ब्रह्मणस्पतिः। वाग्वै ब्रह्म। तस्या एष पतिः। तस्मादु ब्रह्मणस्पतिः ॥ २१ ॥**

**एष उ एव साम। वाग्वै सा अमैषः। सा चामश्चेति तत् साम्नस्सामत्वम्। यद्वेव समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण, तस्माद्वेव[1] साम।**

1. तस्माद्वेव मा.

---

**एष उ एव बृहस्पतिः।** उश्चार्थे। बृहस्पतिश्च एष एवेत्यर्थः। तत्र हेतुमाह **वाग्वै बृहती — बृहस्पतिः।** बृहत्याख्यच्छन्दसो वाग्रूपत्वादिति भावः। **तस्याः** तादृश्या वाचः **एषः** प्राणः **पतिः** रक्षक इत्यर्थः। वागादिसत्तायास्तदधीनत्वादिति **भावः** ॥ २० ॥

**एष उ एव—ब्रह्मणस्पतिः।** ब्रह्मशब्दो वेदपरः। शिष्टं पूर्ववत्॥ २१ ॥

**एष उ एव साम। एष उ एव** = वाग्विशिष्टो मुख्यप्राण एव **साम;** सा चामश्चेति सामशब्दनिर्वचनात्। **सा** इति स्त्रीलिङ्गेन तच्छब्देन वाक् परामृश्यते। "अम गतिभाजनशब्देषु" इति गमनार्थाद[1]मतेरः। **अमति** गच्छतीत्यमः प्राणः। तदुपपादयति **वाग्वै सा अमैषः—।** [उक्तोऽर्थः।] प्रकारान्तरेण सामशब्दनिर्वचनमाह **यद्वेव—तस्माद्वेव साम। यद्वेव** यत् उ एव इति पदच्छेदः। उशब्दो वार्थः। यस्मादेव वा **प्लुषिणा** पुत्तिकाशरीरेण समः, मशकशरीरेण समः, हस्तिशरीरेण समः, समष्टिजीवभूतत्रैलोक्यशरीरकब्रह्मणः शरीरेणापि समः, देवमनुष्यादिसर्वप्राणिशरीरेणापि समः, यथा घटप्रदीपप्रभा तावन्मात्रव्यापिनी, प्रासादप्रदीपप्रभा च प्रासादव्यापिनी, एवं प्राणोऽपि ब्रह्मादिपिपीलिकान्तशरीरेषु तत्तच्छरीरानुरूपव्याप्तिमत्त्वेन समः, **तस्माद्वेव साम** = तस्मादेव वा सामेत्यर्थः।

1. अमतेरः। ग. अमतेः क.

अश्नुते साम्नः सायुज्यँ सलोकतां जयति, य एवमेतत् साम वेद ॥ २२ ॥

एष उ वा उद्गीथः । प्राणो वा उत् । प्राणेन हीदँ सर्वमुत्तब्धम् । वागेव गीथा उच्च गीथा चेति स उद्गीथः ॥ २३ ॥

तद्धापि ब्रह्मदत्तश्चैकितायनेयो राजानं भक्षयन्नुवाच—अयं त्यस्य

---

एतदेव वाक्यमवलम्ब्य मुख्यप्राणस्य विभुत्वं पूर्वपक्षीकृत्य इन्द्रियाणामिव मुख्यप्राणस्याप्युत्क्रान्त्यादिश्रवणादणुत्वमिति प्राणपादे "अणुश्च" इति सूत्रेण सिद्धान्तितम् ।

एतज्ज्ञानस्य फलमाह — **अश्नुते साम्नः सायुज्यं सलोकतां जयति य एवमेतत् साम वेद** । **साम्नः** सामशब्दितप्राणस्य **सायुज्यं** प्राणदेवता-समानभोगतां अश्नुते, **सलोकतां जयति** सालोक्यं प्राप्नोति, य एवं **वेद** सामशब्दनिरुक्तं[1] सर्वदाऽनुसन्धत्ते ॥ २२ ॥

**एष उ वा उद्गीथः** । एष उ वै=एष एव वाक्प्राणसमुदायः **उद्गीथः** उद्गीथाख्यसामभक्तिरित्यर्थः । तदुपपादयति **प्राणो वा उत्—स उद्गीथः** । **उत्तब्धं** धृतमित्यर्थः । शिष्टं स्पष्टम् ॥ २३ ॥

**तद्धापि ब्रह्मदत्तश्चैकितायनेयो राजानं भक्षयन्नुवाच** । **तत्** तत्र । आख्यायिकेति शेषः । हशब्दः प्रसिद्धौ । आख्यायिकाऽपि प्रसिद्धाऽस्तीत्यर्थः । **चैकितायनेयः** । [2] चिकितस्यापत्यं चैकितिः । "अत इञ्" । [3] तस्य गोत्रापत्यं युवा चैकितायनः । [4] फक् । तस्यायनादेशः । चैकितायनस्यापत्यं चैकितायनेयः । चैकितायनेयो ब्रह्मदत्तनामा ऋषिः **राजानं** सोमं भक्षयन्नुवाच । किमिति ? **अयं त्यस्य राजा मूर्धानं विपातयतात्** । **अयं** भक्ष्यमाणः **राजा** सोमः **त्यस्य**

1. निरुक्ति. ग. 2. चीकितस्य. क. 3 तस्यापत्यं ग. 4. 'यञिञोश्च' इति फक् ख. ग.

---

तद्धापि ब्रह्मदत्त इति वाक्यमेकोनविंशकण्डिकया अयास्याङ्गिरसत्वेनोपपादनपूर्वमुक्तस्य

राजा मूर्धानं विपातयतात्, यदितोऽया[1]स्याङ्गिरसोऽन्येनोदगायदिति। वाचा च ह्येव स प्राणेन चोदगायदिति ॥ २४ ॥

तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वम्। तस्य वै स्वर एव स्वम्। तस्मादार्त्विज्यं करिष्यन् वाचि स्वरमिच्छेत।

स तया वाचा स्वरसंपन्नयाऽऽर्त्विज्यं कुर्यात्। तस्माद्यज्ञे स्वरवन्तं

1. अयास्य आङ्गिरसः शां. पा०।

---

अन्यस्य शिरः विपातयतु। ननु किं तेनापराद्धमित्याशङ्क्याह—यदितोऽयास्याङ्गिरसोऽन्येनोदगायदिति। यत् यस्मात् कारणात् (यत् यः) इतः अस्मात् अयास्याङ्गिरसः मुख्यप्राणात् अन्येन देवतान्तरेण [अन्यः] उदगायत् उद्गानं कृतवान्। अयास्याङ्गिरसशब्दितमुख्यप्राणवेदनमन्तरेण देवतान्तरदृष्टिं कृत्वा यस्तूद्गायति, तस्य सोमं पिबतो मूर्धा पतत्वित्यर्थः। इतिशब्दो ब्रह्मदत्तवचस्समाप्तौ। वाचा च ह्येव स प्राणेन चोदगायत्। हि यस्माद्धेतोः सोमं पिबन् शपथं कृतवान्, तस्मात् ब्रह्मदत्तः अयास्याङ्गिरसशब्दितवाक्सहितप्राणवेदनमेव कृत्वा उद्गानं कृतवानित्यर्थः ॥ २४ ॥

तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वम्। एतस्य प्रकृतस्य सामशब्दवाच्यस्य तस्य प्राणस्य यः स्वं वेद, तस्य स्वं धनं भवति इति प्रथमतः प्रलोभ्य शुश्रूषामुत्पाद्याह — तस्य वै स्वर एव स्वम्। स्वरः कण्ठध्वनिः। तस्मादार्त्विज्यं करिष्यन् वाचि स्वरमिच्छेत। ऋत्विजः कर्म आर्त्विज्यं औद्गात्रादिकं करिष्यन् वाचि स्वरं कण्ठध्वनिमिच्छेत्। इच्छेतेति पदव्यत्ययश्छान्दसः। यथा कण्ठध्वनिर्भवति, तमुपायं मधुपिप्पलीसेवादिलक्षणं कुर्यादित्यर्थः। स तयेत्यादि स्पष्टम्। तस्माद्यज्ञे स्वरवन्तं

---

प्राणस्य विंशैकविंशद्द्वाविंशत्रयोविंशकण्डिकादर्शितरीत्या वाग्विशिष्टतयाऽनुसंधानकर्तव्यत्वपरम्। मूले इत इत्यस्य वाग्विशिष्टादित्यर्थः।

तस्य हेत्यादि। प्राणब्राह्मणेऽत्र गीतिरूपसामग्रहणेऽनौचित्यात् तस्य हैतस्य साम्न इति साम्नि प्राणरूपत्वकथनात् उपरि, 'वाचि ह खल्वेष एतत्प्राणः प्रतिष्ठितो गीयत' इति प्राणरूपत्वकथनाच्च द्वाविंशकण्डिकोक्तरीत्या सामभूतप्राणपरतयैवेदं व्याख्यातम्। स्वरः कण्ठध्वनिरिति। कण्ठगतं माधुर्यमिति शाङ्करम्।

**दिदृक्षन्त एव; अथो यस्य स्वं भवति। भवति हास्य स्वम्, य एवमेतत् साम्नः स्वं वेद ॥ २५ ॥**

**तस्य हैतस्य साम्नो यस्सुवर्णं वेद, भवति हास्य सुवर्णम्। तस्य वै स्वर एव सुवर्णम्। भवति हास्य सुवर्णम्, य एवमेतत् साम्नः सुवर्णं वेद ॥ २६ ॥**

**तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद, प्रति ह तिष्ठति। तस्य वै वागेव प्रतिष्ठा। वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयते**

---

**दिदृक्षन्त एव**। यस्मात् स्वर एव साम्नः स्वम्, तस्माद्यज्ञे स्वरवन्तमेव स्तोतारं दिदृक्षन्ते। जना इति शेषः। **अथो यस्य स्वं भवति**। यस्य **स्वं** धनमस्तीत्यर्थः। **अथो**शब्दो वाक्यान्तरोपक्रमे। अत्यल्पमिदमुच्यते स्वरवन्तं दिदृक्षन्त इति; [1]यस्य यस्य स्वं धनमस्ति, तं सर्वं दिदृक्षन्त इत्यर्थः। अतः स्वर एव स्वमिति निर्दिष्टस्वरवतो दिदृक्षितत्वं युज्यत इत्यर्थः। सामस्वरे स्वत्ववेदनस्य फलमाह — **भवति हास्य स्वं — वेद**। स्पष्टोऽर्थः ॥ २५ ॥

**तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णम्।** [2]**साम्नः** प्रकृतस्य सामशब्दितस्य प्राणस्य। अन्यः स्पष्टार्थः। एवं फलप्रदर्शनेन शुश्रूषामुत्पाद्याह — **तस्य वै स्वर एव सुवर्णम्**। कुष्टप्रथमादिलक्षणसाम[3]-स्वरविदः स्वर एव सुवर्णं भूषणमित्यर्थः। सामस्वरे सुवर्णत्वज्ञानस्य फलमाह — **भवति हास्य सुवर्णं — वेद**। स्पष्टोऽर्थः ॥ २६ ॥

**तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति**। एवं फलप्रदर्शनेन [4] पूर्ववच्छुश्रूषामुत्पाद्याह—**तस्य वै वागेव प्रतिष्ठा**। [ **तस्य** सामशब्दितस्य प्राणस्येत्यर्थः।] कुत इत्यत्राह—**वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयते** [ऽन्ने]

1. यस्य यस्य. ग. यस्य. क. 2. स्पष्टोऽर्थः इत्येतावदेव ग कोशे। 3. सप्त. ख. 4. पूर्वं. ग.

---

**अथोशब्दो वाक्यान्तरोपक्रम** इति। अप्यर्थोऽपि ग्राह्यः, यथा ४-१४, वाक्ये। स्वरः स्वं=धनम्। स्वरवानपि दिदृक्ष्यते लोके; स्ववानपि। तस्मात् दिदृक्षाविषयत्वसाम्यात् स्वरः स्वमिति। **भवति हे**त्यादिना पूर्वोक्तफलोपसंहारः उपक्रान्तस्य अत्र समाप्तिद्योतकः।

**इत्युहैक आहुः (गीयतेऽन्न[1]इत्युहैक आहुः) ॥ २७ ॥**

**[2]अथातः पवमानानामेवाभ्यारोहः । स वै खलु प्रस्तोता साम प्रस्तौति । स यत्र [3]प्रस्तुयात्, तदेतानि जपेत् – असतो मा सद्गमय, तमसो मा ज्योतिर्गमय, मृत्योर्माऽमृतं गमयेति ।**

1. तस्माद्वेव. मा. 2. अयं पाठः शां. 3 प्रस्तूयात्. मा.

---

**इत्यु हैक आहुः** । **एष** मुख्यप्राणो **वाचि** वागिन्द्रियस्थानभूतजिह्वामूलादिस्थानेषु प्रतिष्ठितस्सन् **एतत्साम गीयते** सामभावमापन्न उद्गीयत इत्येक आहुः । उशब्दो ऽवधारणे । पूर्वत्र इह प्रतितिष्ठतीति प्राणस्यान्नप्रतिष्ठितत्वोक्तेः वाक्छब्दित-जिह्वामूलादिप्रतिष्ठितत्वं एकीयमतमिति भावः ॥ २७ ॥

एवमुद्गातृप्राणविद्योपदेशानन्तरं एवम्भूत[1]प्राणविदमुद्गातारं प्रति प्रार्थनारूपाणां ब्रह्मलोकाभ्यारोहहेतुतया अभ्यारोहशब्दितानां मन्त्राणां प्रयोगकालं मन्त्रार्थञ्चाह **अथातः पवमानानामेवाभ्यारोहः** । बहिष्पवमानमाध्यन्दिनपवमानाऽऽर्भवपवमान-भेदभिन्नानां त्रयाणां पवमानानामेवा**भ्यारोहः** अभ्यारोहमन्त्रः । [[2]इति संज्ञेति शेषः ।] नेतरेषामाज्यपृष्ठादिस्तोत्राणामित्यर्थः । एतेषामभ्यारोहमन्त्राणां जपकालं वक्तुं प्रथमं प्रस्तोतृसंज्ञार्थमाह–**स वै खलु प्रस्तोता साम प्रस्तौति** । यः साम प्रस्तौति, स एव खलु प्रस्तोतेत्यर्थः । **स यत्र प्रस्तु[3]यात्तदेतानि जपेत्** । सः प्रस्तोता **यत्र** यदा प्रस्तौति, तदा **एतानि** यजूंषि यजमानो जपेदित्यर्थः । **यजूंषि** पठति–**असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्माऽमृतं गमयेति** ।

1. एवंभूतं ग. 2. इदं क. कोशे । 3. प्रस्तू. ख.

---

**इत्युहैक** आहुरिति पाठो भाष्यसंमतो लक्ष्यते ; वाचि प्रतिष्ठितत्वस्यैव एकीयमतत्वे-नोक्तेः । **अन्न इत्युहैक आहुरि**ति शाङ्करपाठः । प्राणस्य वाग् वा प्रतिष्ठा, अन्नं वेति सर्वसंमतम् । अत्रान्नशब्देनान्नमयस्य देहस्य ग्रहणं प्राक् शाङ्करोक्तम् । वाक्छब्दश्चेह जिह्वामूलादिस्थानपर उक्तः ; वागिन्द्रियस्य प्राणाधीनतया प्राणप्रतिष्ठात्वायोगात् । तथाच देहे जिह्वामूलादौ प्रतिष्ठित इति अविरोधसंभवे विकल्पः कथमुक्त इति चेत् – एवमविरोधेऽपि वाक्प्रतिष्ठानं वा भावनीयम्, सामान्यतो देहप्रतिष्ठानं वेत्यनुष्ठानविकल्प इति । एषा तावत् सामभूतप्राणप्रतिष्ठा । सामगति-विश्रान्तिभूमिस्तु आकाशः परमात्मेति शिलकादिकथान्ते निर्णीतं छान्दोग्ये (१–९.) ।

एवमुद्गातृकर्तृकं वेदनमुक्तम् । अथ यजमानकर्तव्यो मन्त्रजपः कथ्यते **अथात** इति । **पवमानानामेव** । येषु उद्गाता याजमानं फलमागायति, तेषामेवेत्येवकाराभिप्रायः । मन्त्रत्रय-

**स यदाहासतो मा सद्गमयेति, मृत्युर्वा असत् सदमृतं मृत्योर्माऽमृतं गमय अमृतं मा कुर्वित्येवैतदाह। तमसो मा ज्योतिर्गमयेति। मृत्युर्वै तमो ज्योतिरमृतम्। मृत्योर्माऽमृतं गमय अमृतं मा कुर्वित्येवैतदाह। मृत्योर्माऽमृतं गमयेति। नात्र तिरोहितमिवास्ति।**

**अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत्। तस्मादु तेषु**

---

एतानि यजूंषि स्वयमेव व्याचष्टे – **स यदाह असतो मा सद्गमयेति मृत्युर्वा असत् सदमृतं मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवैतदाह। मा असतः सद्गमय** = मां मृत्योरमृतं कुरु। **मृत्योः** संसारादुद्धृत्यामृतं कुर्वित्यर्थः। **स यदाह** अनेन मन्त्रेण यत् प्रतिपाद्यमाह, तदमृतं मा कुर्वित्येतदाहेत्यन्वयः[1]। एवमुत्तरत्रापि द्रष्टव्यम्। **मृत्योर्माऽमृतं गमयेति नात्र तिरोहितमिवास्ति।** तृतीयपर्यायः स्पष्टार्थ इत्यर्थः।

**अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत्॥** यस्मात् कारणात् त्रिष्वपि पवमानेषु उद्गाता एभिर्यजुर्मन्त्रैः यजमानेन स्वगतं फलं याचितः, अतः यजमानगामि फलमुद्दिश्यैवागायेत्। पवमानत्रयव्यतिरिक्तेषु आज्यादिषु नवसु स्तोत्रेषु **आत्मने** स्वार्थमन्नाद्यमुद्दिश्यागायेदित्यर्थः। **तस्मादु तेषु**

1. त्यर्थः ख.

---

मेकार्थकमित्याह **सयदाहे**त्यादिना; नानाफलानां युगपत् काम्यत्वायोगात्। पूर्वं प्राणवेदनस्य पाप्मापहतिः फलमित्युक्तम्। पाप्मा मृत्युरिति च पश्चाद् दर्शितम्। तदेव फलं मृत्युशब्द-प्रयोगेणेह विवक्षतीति ज्ञायते। तथाचामृतप्राप्त्युपयोगिमृत्युरूपपाप्मापहतिफलसंपत्तौ वाग्घ्राण-चक्षुश्श्रोत्रमनोमुखैर्विपाप्मभिः सहकारिभिः संपन्नः प्रधानभूतं मुख्यप्राणमाश्रयन् देही ब्रह्मवेदनं यथावल्लब्ध्वा अमृतं गच्छतीति सारोऽत्र सिद्धः। वागादीनां ब्रह्मवेदनकरणतया प्रतिवेदान्तं श्रवणञ्च केनोपनिषदुपक्रमप्रभृति वेदितमेव। इहापि बृहदारण्यके तेषां तथात्वोपदेशेन प्राणप्राधान्यं दर्शयिष्यते च। व्यक्तीभविष्यति चेदमनया दृष्ट्या यथावदुपरितनभागानामनुसंधान इत्यलम्।

**वरं वृणीत यं कामं कामयेत तम्। स एष एवंविदुद्गाताऽऽत्मने वा यजमानाय वा यं कामं कामयते तमागायति।**

**तद्धैतल्लोकजिदेव। न हैवालोक्यताया आशास्ति, य एवमेतत् साम वेद॥ २८॥**

इति तृतीयाध्याये तृतीयं ब्राह्मणम्॥

---

**वरं वृणीत यं कामं कामयेत तम्।** तस्माद्धेतोः तेषु पवमानव्यतिरिक्तस्तोत्रेषु यं कामं कामयेत तं वरं वृणीतेत्यर्थः। **स एष एवंविदुद्गाता — तमागायति** तमुद्दिश्यागायति। आगानेन तं संपादयतीत्यर्थः। **तद्धैतल्लोकजिदेव।** [ह प्रसिद्धं] पूर्वोक्तं **तदेतत्** प्राणवेदनं **लोकजिदेव** ब्रह्मलोकसाधनमेवेत्यर्थः। **न हैवालोक्यताया आशास्ति, य एवमेतत् साम वेद।** सामशब्दनिर्दिष्टं प्राणं **एवं** अयास्याङ्गिरसत्वादिप्रागुक्तगुणविशिष्टं **यो वेद** य उपास्ते सः, **अलोक्यतायाः —लोक्यता** लोकार्हता तदभावः **अलोक्यता**—ब्रह्मलोकार्हत्वाभावतो भीत्या **न हैवाशास्ति** नैवाशास्ते। साधनान्तरं नाभिलषति, तस्य कृतार्थत्वादिति भावः॥ २८.॥ ३—३.

अथ नारायण—तदुपासन—तत्प्राप्तीनां परमतत्त्वहितपुरुषार्थत्वम्, तत्प्रसङ्गात् सनकादियोगीश्वरविषयसृष्टि[1]लक्षणातिसृष्टे र्विसृष्ट्यपेक्षयाऽतिशयितत्वं च वक्तुमुपक्र-

1. सृष्टिपदं क कोशे न।

---

न हैवालोक्यताया आशास्तीति। शासुधातुरनुशिष्टिरूपेऽर्थे परस्मैपदी। इच्छारूपे आत्मनेपदी; तदा आङ्पूर्वकत्वं प्रायिकम्। अत इव शाङ्करे आशा अस्तीति पदच्छेदः कृतः। इह भाष्ये तु व्यत्ययाश्रयणेन स आशास्ते इति व्याख्यातम्। आशा अस्तीति छेदे स इत्यनुक्त्वा तस्येति प्रयोज्यम्। अलोक्यतायै इति चतुर्थी शाङ्करे इष्टा; अत्र पञ्चमी। अलोक्यता स्यादिति हेतोरिति तदर्थः। य एवमेतत् साम वेदेति। सामशब्द-विवक्षितं प्राणं यो वेदेत्यर्थः। यद्वा सामप्रस्तावे प्रस्तोतृकर्तृके यजमानजप्यमन्त्रविशेषसद्भावं यो वेदेत्यर्थः। तद्वेदने हि याजमानो जपः औद्गात्रं वेदनं च निष्पद्येयातामिति भावः।

## ३—४.

**आत्मैवेदमग्र आसीत् पुरुषविधः । सोऽनुवीक्ष्य नान्यदात्म-**

---

मते **आत्मैवेदमग्र आसीत् पुरुषविधः** । **इदं** जगत् **अग्रे** सृष्टेः प्राक् पुरुषविध आत्मैवासीत् । अस्य वाक्यस्य कारणवाक्यत्वादात्मशब्दो नारायण-परः । 'स यो हैतमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद', 'अन्वयं पुरुषविधः' इत्यादौ पुरुषविधशब्दस्य भगवति प्रयुक्तत्वाच्च[1], पुरुषस्य विधेव विधा यस्य स **पुरुषविधः** पुरुषाकार इत्यर्थः । "अस्यात्मनः पुरुषविध-त्वञ्चाऽऽनन्दमयत्वं ज्ञापयति, 'आत्मन आकाशः संभूत' इत्युपक्रम्य, अन्योऽन्तर आत्माऽऽनन्दमय' इत्युक्त्वा तस्य पुरुषविधत्वप्रतिपादनात" इति **व्यासार्यैः** सर्व-व्याख्यानाधिकरणे ह्युक्तम् ।

**सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्** । सः पुरुषः **अनुवीक्ष्य** अन्वीक्ष्य (अन्वीक्षमाणः) साक्षात्कुर्वन् आत्मनोऽन्यं विभक्तं नापश्यत् । सृष्टेः प्राक् 'तमः

1. चकारो न ग. कोशे ।

---

अश्वमेधाङ्गे अश्वे विश्वरूपदृष्टिः, तत्र अग्नौ च अर्कादिपदवाच्यब्रह्मदृष्टिः, उद्गातरि ब्रह्मलोकप्राप्त्यर्थविद्यापेक्षितकरणशुद्धिरूपशत्रुपराजयार्थप्राणदृष्टिश्च ब्राह्मणत्रयेण विहिता । अथ साक्षात् ब्रह्मनिरूपणमेवारभ्यते **आत्मैवे**त्यादिना । एतदन्ते च उक्तप्राणाद्युपकरणानामुपयोगोऽपि दर्शयिष्यते । तस्यानुक्तस्य समुच्चयार्थः **अतिशयितत्वञ्चे**ति **चकारः** । अत्र सृष्टिनिरूपण-व्याजेन सोमवदस्मात् अन्नं विभाव्य अदतां देवानां यजनरूपात् काम्यकर्मणः उपरम्य सनकादिवत् आत्ममात्रप्रवणैरस्माभिर्भाव्यमित्युपदिश्यते आदौ ॥

नात्र द्युमूर्धत्वादिना पुरुषविधत्वमुच्यते, लोकानामितः परमेव स्रष्टव्यत्वात् । किन्तु, तस्य प्रियमेव शिरः' इत्यादिकल्पिताकारेण ; तस्याऽऽनन्दमये नित्यत्वादिति दर्शयन्ति **अस्या-त्मन** इत्यादिना ।

एकैकस्यापि आत्मनः स्वं स्वं प्रति प्रत्यक्त्वेनाहमर्थत्वात् परमात्मनोऽपि तत्त्वमक्षतम् ; 'हन्ताहमिमास्तिस्रो देवताः' 'बहूनि मे व्यतीतानि' इत्यादौ प्रसिद्धश्च । तन्निबन्धनः अहमस्मीति व्याहारः न केवलमग्रे, किन्तु अद्यापीति सर्वदा । अतः **अग्रे** इत्येतदनुसारेणार्थान्तरं विवक्षित्वा अस्मीत्येतदपि स्यामिति परिवर्तितम् ।

**नोऽपश्यत् । सोऽहमस्मीत्यग्रे व्याहरत् । ततोऽहन्नामाभवत् ।**

परे देव एकीभवती' त्युक्तरीत्या अयःपीताम्बुवत् चिदचित्प्रपञ्चस्य परमात्मनोऽ[1]-विभक्तत्वादिति भावः । **सोऽहमस्मीत्यग्रे व्याहरत् ततोऽहन्नामाभवत्** । अह-मिति हिरण्यगर्भनाम । अहमभिमानाश्रयव्यष्टिपुरुषाणां प्रथमजत्वाद्धिरण्यगर्भस्य । उक्तञ्च मोक्षधर्मे भृगुभरद्वाजसंवादे —

'तस्मात् पद्मात् समभवत् ब्रह्मा वेदमयो निधिः ।
अहङ्कार इति ख्यातः सर्वभूतात्मभूतकृत् ॥'

इति । तस्मादयमर्थः—**अहमस्मि** अहङ्कारः स्याम्, चतुर्मुखस्स्यामिति सङ्कल्प-वाक्यं **अग्रे** ब्रह्मसृष्टिपूर्वकाले व्याजहार । ततोऽ**हन्नामा** चतुर्मुखोऽभवदिति ।

---

**मोक्षधर्म** इति । अत्र इदमपि महाभारतवचनमनुसन्धेयम् —

तदण्डमभवत् हैमं सहस्रांशुसमप्रभम् ।
अहङ्कृत्वा ततस्तस्मिन् ससर्ज प्रभुरीश्वरः ॥
हिरण्यगर्भं विश्वात्मा ब्रह्माणं जलवन्मुनिम् । (अनु. ३८-४४.)

इति । अत्र, 'अहङ्कृत्वे' ति अहं स्यामिति संकल्पकथनात् । यद्यपि सङ्कल्पमात्रमलम्, अथापि तद्दार्ढ्यायैव तथा व्याहारः, 'स भूरिति व्याहरत्' इतिवत् ।

अत्र श्रुतप्रकाशिकायां आनन्दाद्यधिकरणे अत्रत्य**पुरुषविध**पदस्य हिरण्यगर्भद्वारा सशरीर इत्यर्थः पक्षान्तरपरीक्षावसरे अन्यैरुक्तोऽनूदितः; न तु दूषितः । अतःसर्वव्याख्यानाधिकरणे स्वोक्तरीत्या 'अहंनामाभव' दिति हिरण्यगर्भकथनात् पुरुषविध इति न तद्ग्रहणमिति दूषणाकरणात् तदर्थानुमतिरपि गम्यते । तदित्थमपि प्रकरणार्थः पर्यालोचनीयो भवति—**नान्य-दात्मनोऽपश्य**दितीदं तावत् स्वरसतः **सोबिभे**दित्यनेनान्वितम्; अन्यादर्शनस्य भयहेतुत्वात् । **एवं स वै नैव रेमे** इत्यत्रापि तदन्वयः; औचित्यात् । तत्र यदि अन्यादर्शनानन्तरं चतुर्मुखसृष्टिः कृता स्यात्, तर्ह्यन्यदर्शनात् भयमरतिश्च न भवतः । अन्यादर्शनं परमात्मनः, भयादि तु चतुर्मुखस्येति वैयधिकरण्यं वा कल्प्यम् । अतः पूर्वमेव चतुर्मुखद्वारकमेवान्यादर्शने उक्ते सति चतुर्मुखेतरसृष्टेः प्राक् भयारतिवर्णनं घटते । तस्मात् **पुरुषविध** इति हिरण्य-गर्भशरीरकपरमस्तु । सप्तदशकण्डिकावक्ष्यमाणरीत्या जायादिसंपत्त्युपयोगिपुरुषत्वमपि चतुर्मुखे **पुरुषविध** इति पदेन ज्ञाप्यते । **अहमस्मी**त्यस्य तु अहं केवलोऽस्मीत्यर्थः । यद्वा सोऽह-मस्मीत्यादिवाक्यं अन्यादर्शनवतोऽन्यदर्शनसंपादनसामग्रीसाहित्यप्रदर्शनार्थम् । अन्यदर्शनं हि अन्यजीवसृष्ट्या कार्यम् । तत्सृष्टिश्च जीवानामज्ञत्वनिबन्धना तदज्ञत्वनिवर्तनफला, अन्यथा नैर्घृण्यापत्तेः । तादृशसृष्टौ स्वस्य शक्तत्वमप्यपेक्षितम् । शक्तिश्चोपकरणसत्त्वे । तत् सर्वमत्रो-

**तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाऽथान्यन्नाम प्रब्रूते यदस्य भवति ।**

**स यत् पूर्वोऽस्मात् सर्वस्मात् , सर्वान् पाप्मन औषत् , तस्मात् पुरुषः ।**

---

**तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाऽथान्यन्नाम प्रब्रूते यदस्य भवति ।** यस्माद्धेतोर्भगवता[1] प्रथमतश्चतुर्मुखे अहंशब्दः प्रयुक्तः, तस्माद्धेतोः **एतर्ह्यपि** अस्मिन्नपि काले केनचित् पुंसा आमन्त्रितोऽयं जनः अहमित्येवाग्रे उक्त्वा **अथ** पश्चात् अस्य यत् पित्रादिकृतं नाम भवति तद् वदतीत्यर्थः ॥

**स यत् पूर्वोऽस्मात् सर्वस्मात्, सर्वान् पाप्मन औषत्तस्मात् पुरुषः।** **सः** आत्मा यस्मात् कारणात् **अस्मात्** दृश्यमानाज्जगतः सर्वस्मात् पूर्वः, यस्माच्च हेतोः सर्वान् पाप्मन **औषत्** अदहत्—“ उष दाहे”—तस्मात् कारणात् पुरुषशब्दवाच्य इत्यर्थः ।

अत्र स इत्यनेन नाव्यवहितस्या [ष्य] हन्नाम्नो ग्रहणमुचितम्; तस्य कर्मवश्यस्य[2] स्वयं सर्वपापप्रदाहकत्वाद्यसंभवादिति द्रष्टव्यम् । पूर्वत्वं चात्र कारणत्वम् । ततश्च सर्वकारणत्वे सति सर्वपापप्रदाहकत्वं पुरुषशब्दप्रवृत्तिनिमित्तमिति भावः ।

“ पुरसंज्ञे शरीरेऽस्मिन् शयनात् पुरुषो हरिः ।
शकारस्य षकारोऽयं व्यत्ययेन प्रयुज्यते ॥ ”

इति भगवदसाधारणपुरुषशब्देनोपक्रमात् इयमुपनिषत् नारायणपरेत्यवगन्तव्यम् । तद्वे-

1. परमात्मना. क. 2. स्वयं कर्मवश्यस्य पाप्म. ग.

---

च्यते । सः चतुर्मुखशरीरकपरमात्मा देहात्मभ्रमरूपाहमभिमानाश्रयजीवसृष्टिप्रयोजकाहङ्कारतत्त्वाभिमान्यस्मीति व्याहृत्य स्वस्य तथाविधशक्तिं निश्चिकाय । अतोऽहन्नामाऽभवत् । ईदृशाहङ्काराभिमानित्वव्याहारस्य तेन पदेन स्वस्मिन् कृतत्वात् तत् पदं रूढ्या प्रत्यगात्मवाच्यपि निरूढलक्षणया तदसाधारणनाम संपन्नमित्यर्थं इति ।

‘ भवत्वस्य शक्तिः । एवं खलु दुःखयोनौ जगति जीवान् चतुर्मुखद्वारा सृजन् निर्घृणः स्यात् ’ इत्यत्र तत्सृष्टिः सर्वपाप्मप्रदाहरूपमोक्षपर्यवसानार्थेति श्रुतिः स्वयं तस्य पुरुषनामनिर्वचनेन दर्शयति **स यत् पूर्व** इत्यादिना । **पूर्वोऽस्मा**दिति निर्वचनेन अवश्यमस्यैवैतत्संविधानं प्राप्तमिति दर्श्यते । तथाच पूर्वत्वे सति पाप्मदाहकत्वं पुरुषत्वमिति निरुक्तं भवति ।

**ओ( औ )षति ह वै स तं योऽस्मात् पूर्वो बुभूषति, य एवं वेद ॥ १ ॥**

**सोऽबिभेत् । तस्मादेकाकी बिभेति । स हायमीक्षाञ्चक्रे – यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति । तत एवास्य भयं वीयाय । कस्माद्ध्यभेष्यत् ? द्वितीयाद्वै भयं भवति ॥ २ ॥**

---

दनस्य फलमाह–**औषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य एवं वेद ।** य एवं पुरुषत्वनिरुक्तिक्रमं **वेद** निरन्तरमनुसन्धत्ते, स **तमौषति** दहति । क[1]मित्यत्राह **योऽस्मात् –। पूर्वो बुभूष**ति श्रेष्ठो भवितुमिच्छति । **योऽस्मात्** उपासकात् श्रेष्ठो भूयासमितीच्छति इत्यर्थः । विजिगीषुं तिरस्करोतीति पिण्डितार्थः ॥ १ ॥

**सोऽबिभेत्** । **सः** अहन्नामा चतुर्मुखः **अबिभेत्** आत्मन एकाकितां दृष्ट्वा अस्थानभयाविष्टोऽभवदित्यर्थः । अत्र **स** इति न परमप्रकृतस्य परमात्मनः परामर्शः संभवति, तस्यापहतपाप्मत्वेन भयसंबन्धाभावादिति द्रष्टव्यम् । **तस्मादेकाकी बिभेति** । अत एव हि लोके अद्यतनो[2]ऽप्यसहायो बिभेतीत्यर्थः । **स हायमीक्षाञ्चक्रे** । हशब्दः वृत्तार्थस्मरणे । **सो**ऽयं चतुर्मुखः एव**मीक्षाञ्चक्रे** इत्थमचिन्तयदित्यर्थः । किमिति ? **यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति** । **यत्** यस्माद्धेतोः **मत्** मत्तः **अन्यत्** मत्प्रतिद्वंद्वि वस्त्विह नास्ति, कुतोऽहं बिभेमीति । लोके हि प्रतिद्वंद्विसत्त्वे असहायत्वं भयहेतुः । तदभावे तु असहायत्वं न भयहेतुरिति भावः । **तत एवास्य भयं वीयाय** । तत एव विवेकरूपात् ज्ञानादस्य हिरण्यगर्भस्य भयं **वीयाय** वीतमित्यर्थः । उक्तमर्थं श्रुतिः स्वयमेवानुमोदते–**कस्माद्ध्यभेष्यत् द्वितीयाद्वै भयं भवतीति** । द्वितीयस्य प्रतिद्वन्द्विन एव भयहेतुत्वम्, अतस्तस्यैवाभावे कुतो भयं प्राप्स्यतीति भावः ।

हिरण्यगर्भस्यापि शरीरपरिग्रहानन्तरमेव भयोत्पत्तेः शरीरित्वं कष्टमिति भावः ।

अत्र अद्वैतसाक्षात्काराद्भयं निवृत्तमिति नार्थः । तथासति आत्मरतेस्तस्योत्तरत्र 'नैव रेमे' इत्यादिना अरतिरिरंसाप्रतिपादनविरोधात् । प्रारब्धवशादरतिरिरंसानुवृत्तौ भयमपि तद्वशात् कुतो नानुवर्ततेत्यास्तां तावत् ॥ २ ॥

1. किमि. क. 2. अद्यत्वेऽपि. ख. ग.

---

**पूर्वो** बुभूषतीत्यस्य पूर्वं जनितुमिच्छतीत्यर्थस्यासंभवात् अर्थान्तरमाह **श्रेष्ठो भवितुमिच्छती**ति ।

**स वै नैव रेमे। तस्मादेकाकी न रमते। स द्वितीयमैच्छत्। स हैतावानास, यथा स्त्रीपुमांसौ संपरिष्वक्तौ। स इममेवात्मानं द्वेधाऽपातयत्।**

---

**स वै नैव रेमे।** सः चतुर्मुखः **नैव रेमे**। इष्टार्थसंयोगजा प्रीतिः रतिः; तां न लब्धवानित्यर्थः। **तस्मादेकाकी न रमते**। यस्मादेकाकिनश्चतुर्मुखस्य न रतिः, अत एवाद्याप्यसहायस्य रतिर्नोपलभ्यत इत्यर्थः। **स द्वितीयमैच्छत्**। **सः** प्रजापतिः द्वितीयं रन्तुमैच्छदित्यर्थः। **स हैतावानास यथा स्त्रीपुमांसौ संपरिष्वक्तौ**। हशब्दो वृत्तार्थस्मरणे। **यथा** – **लोके** स्त्रीपुंसौ रत्यर्थं संपरिष्वक्तौ – यत्परिमाणौ स्याताम्, तत्परिमाणो विवृद्धो बभूवेत्यर्थः। **स इममेवाऽऽत्मानं द्वेधाऽपातयत्**। **सः** प्रजापतिः इमं विवृद्धमात्मानं शरीरं द्वेधा अपातयत्। ततः पतनादेव पतिपत्नीशब्दवाच्यौ दम्पती अभवतामित्यर्थः। उक्तञ्च श्रीविष्णुपुराणे—

"ब्रह्मणोभून्महान् क्रोधः त्रैलोक्यदहनक्षमः।
भ्रुकुटीकुटिलात् तस्य ललाटात् क्रोधदीपितात्।
समुत्पन्नस्तदा रुद्रो मध्याह्नार्कसमप्रभः।
अर्धनारीनरवपुः प्रचण्डोऽतिशरीरवान्।
विभजाऽऽत्मानमित्युक्त्वा तं ब्रह्माऽन्तर्दधे ततः।
तथोक्तोऽसौ द्विधा स्त्रीत्वं पुरुषत्वं तथाऽकरोत्॥"

---

भयस्य चतुर्मुखद्वारैवोपपादनीयत्वेऽपि अरतेः परमात्मनि साक्षादप्युपपादनं भवति। सृष्टेः प्राक् सृष्ट्यधीनलीलारसाननुभवरूपाया अरतेः सुवचत्वात्। अत एव परमात्मविषयतया एतद्वाक्यग्रहणं **स्तोत्रभाष्यादिषु**।

**पतनादेवे**ति। पतिपत्नीशब्दौ पतधातुमादाय निर्वाच्याविति भावः। एवं पतनप्रयुक्त-पतिपत्नीशब्दप्रयोगविषयभावयोः तयोः प्रसिद्धपतित्वपत्नीत्वे अप्यभूतामित्युक्तं भवति। **अभून्महान् क्रोधः**, सनकादिषु वीतरागेषु सृष्टिविमुखेषु लोके प्रजाभिवृद्धिविरहदर्शनात्।

**अर्धनारीनरवपुरि**ति। अर्धनारीश्वररूपं यथा पादादिशिरोन्तं एकतोऽर्धपुरुषाकारम्, अन्यतोऽर्धनारीमयञ्च, तथेति नार्थः; किंतु पूर्णं नारीवपुरेकं नरवपुरेकञ्च मिथः परिष्वक्तं पिण्डितमेकं यथा स्यात्, तथा पूर्णनारीनररूपार्धद्वयविशिष्टमित्यर्थः। प्रकृतमूलश्रुत्यनुरोधात्। एवं जाते पुरुषं स्त्रियञ्च पृथक् पृथग्विभज्य विभक्तशरीरात् क्रोधांशापनयार्थमेकादश शरीराण्या-विर्भाव्य पृथक्कृत्य क्रूरांशेष्वेवं गतेषु तत् नरवपुः स्वयम्भूललाटात् पूर्वमाविर्भूतं शुद्धमासीत्। अस्यैव स्वायम्भुवमनुत्वेन कल्पनं सहजातनारीवपुषा संगमनञ्च ब्रह्मणा विहितम्; यद् वक्ष्यति

**ततः पतिश्च पत्नी चाभवताम् । तस्मादिदमर्धबृगलमिव स्व इति ह स्माह याज्ञवल्क्यः। तस्मादयमेकांशः (माकाशः) स्त्रिया पूर्यत एव। ताँ समभवत्। ततो मनुष्या अजायन्त ॥ ३ ॥**

---

इति । श्रीभागवते च —

> "कस्य रूपमभूद्द्वेधा यत् कायमभिचक्षते ।
> ताभ्यां रूपविभागाभ्यां मिथुनं समपद्यत ॥ " इति ।

**तस्मादिदमर्धबृगलमिव स्व इति ह स्माह याज्ञवल्क्यः** । तस्माद्धेतोः **इदं** शरीरं **स्वः** स्वस्य – आत्मन इतियावत् । विभक्तिव्यत्ययश्छान्दसः– विवाहात् प्राक् **अर्द्धबृगलमिव** अर्धविदळमिव इति ह याज्ञवल्क्य **आह स** उक्तवान् । **तस्मादयमेकांशः स्त्रिया पूर्यत एव** । यस्मात् विवाहात्प्रागर्द्धविदळम्, तस्मा**देकांशः** पुरुषशरीरार्धभागः विवाहे सति स्त्रिया पूर्यते । "अर्द्धो वा एष आत्मनो यत् पत्नी" इति श्रुतेरित्यर्थः । '**आकाशः स्त्रिया पूर्यत**' इति पाठेऽपि **आकाशः** पूरणीयावकाश इत्यर्थः । **तां समभवत्** । **तां** शतरूपाख्यां आत्मनो दुहितरं स प्रजापतिः **समभवत्** मैथुन्यमुपगतवान् । **ततो — अजायन्त** । **ततः** तस्मात् सङ्गमात् मनुष्या उत्पन्ना इत्यर्थः । उक्तञ्च विष्णुपुराणे—

> "शतरूपाञ्च तां नारीं तपोनिर्धूतकल्मषाम् ।
> स्वायम्भुवो मनुर्देवः पत्नीत्वे जगृहे प्रभुः ॥ " इति ॥ ३ ॥

---

शतरूपाञ्चेति श्लोकप्रदर्शनेन । **तस्मादिदमर्धबृगलमिव स्व** इति । बृगलशब्दो विकारार्थ इत्यानन्द**गिरिः** । **बृगलं** विदलम् एको भागः । अर्धभूतं बृगलमर्धविदलम् । **तस्मात्** ब्रह्मोत्पन्नविराट्छरीरे एवं दर्शनात् **इदं** लौकिकपुरुषशरीरमपि **स्वः** संपरिष्वक्तस्त्रीपुरुषसमुदायरूपेणैव स्वशब्दात्मशब्दवाच्यस्यार्धविदलमर्धरूपो भागः । **विभक्तिव्यत्यय** इति । स्वशब्दात् परस्य ङसः प्रत्ययस्य आदेशं विना प्रयोगे स्व इति रूपं भवेदपि । तदपेक्षया शब्दसाधुत्वाय व्यत्यय एव युक्तः । स्वशब्दोऽमरस्वरसात् नपुंसकलिङ्ग इव ; मेदिनीकोशात् पुल्लिङ्गोऽपि । 'पूर्वादिभ्यो नवभ्यो वे' ति सूत्रात् स्वशब्दस्य स्वे इति सप्तम्यां रूपमिति **स्वे** आत्मनि इदमर्धबृगलमिवेत्यपि सुवचम् ।

**सो हेयमीक्षाश्चक्रे–कथन्नु माऽऽत्मन एव जनयित्वा संभवति ? हन्त तिरोऽसानीति । सा गौरभवत्, ऋषभ इतरः । ताँ समेवाभवत् । ततो गावोऽजायन्त । वडबेतराऽभवत्, अश्ववृष इतरः; गर्दभीतरा, गर्दभ इतरः । ताँ समेवाभवत् । तत एकशफमजायत । अजेतराऽभवत्, बस्त इतरः; अविरितरा, मेष इतरः । तांताँ समेवाभवत् । ततोऽजावयोऽजायन्त । एवमेव यदिदं किञ्च मिथुनमा पिपीलिकाभ्यः, तत् सर्वमसृजत ॥ ४ ॥**

---

**सो हेयमीक्षाश्चक्रे** । सा उ ह इयमिति पदच्छेदः । सेयं ह प्रसिद्धा शतरूपा कन्या **ईक्षाश्चक्रे** इत्थमचिन्तयदित्यर्थः । चिन्ताप्रकारमेवाह–**कथन्नु माऽऽत्मन एव जनयित्वा संभवति** । **नु** इति वितर्के । **कथं नु**=कथं वा **मा** मां **आत्मन एव**ोत्पाद्य **संभवति** उपगच्छति । इति वितर्क्य, ततस्तत्रोपायं निश्चित्याह–**हन्त तिरोसानीति** । हन्तेत्युपायदर्शनजहर्षे । **तिरोसानि** जात्यन्तरेण तिरोहिता भवानीति निश्चितवतीत्यर्थः । इतीक्षित्वा **सा** शतरूपा **गौरभवत्** । **वृषभ इतरः** । **इतरः** मनुः **वृषभः** पुंगवोऽभूत् । **तां** गोरूपां शतरूपां **समेवाभवत्** समभवदेव । पुनरपि मैथुन्यमुपगतवानित्यर्थः । **ततो गावोऽजायन्त** । स्पष्टोऽर्थः । **बडबेतराऽभवत्** । **इतरा** शतरूपा **बडबा** अश्वा अभवत् । **अश्ववृष इतरः** । **इतरस्तु** मनुः **अश्ववृषः** पुमश्वोऽभवदित्यर्थः । **वृषः**–"वृष सेचने"–रेतस्सेक्तेत्यर्थः । **गर्दभी**—**एकशफमजायत** । अश्वाश्वतरगर्दभाख्याः (भादयः) अजायन्तेत्यर्थः । इतरत् स्पष्टम् । **अजेतराभवद्बस्त इतरः** । **बस्तः** छागः । **तां तां समेवाभवत्** । [तां तामिति वीप्सा] **तां** अजां तां अविञ्च समभवदेवेत्यर्थः । **ततो–असृजत** । [इतरस्य] स्पष्टोऽर्थः ॥ ४ ॥

---

**आत्मन एव जनयित्वेति** । ननु ब्रह्मण उत्पन्नविराट्छरीरे मिथुनाकारे द्विधाभूते पुरुषांशो मनुः अंशान्तरं शतरूपां समभवत् । न तु ब्रह्मा । तत् कथमुच्यते **आत्मन एव जनयित्वेति** । उच्यते । पितैव पुत्ररूपेण जायत इत्युभयोरभेदकल्पनयेदम् । शतरूपा तं पितृतुल्यं गौरवितवती एवमाहेति भाव्यम् । अत एव श्रीविष्णुपुराणे, 'ततो ब्रह्माऽऽत्मसंभूतं पूर्वं स्वायम्भुवं प्रभुम् । आत्मानमेव कृतवान् प्राजापत्ये मनु'मिति मनौ तदभेदोक्तिः । यद्वा मनोरेव स्वस्मात् स्त्रीशरीरविभाजकत्वाज्जनयितृत्वम् । यद्यपि, 'तपोनिर्धूतकल्मशा'मिति, 'देव' इति च दोषपरिहारकत्वकारवत्त्वसिद्धौ संभवो न दोषाय–अथापि शास्त्रदोषपरिहारभावेऽपि आस्तिक्यातिरेकात् पूर्ववासनाकृतात् मनस्संकोचादेवमभिसंधिरुत्पन्न इति ।

**सोऽऽवै (वे)दहं वाव सृष्टिरस्मि, अहँ हीदँ सर्वमसृक्षीति। ततः सृष्टिरभवत्। सृष्ट्याँ हास्यैतस्यां भवति, य एवं वेद ॥ ५ ॥**

**अथेत्यभ्यमन्थत् स मुखाच्च योनेर्हस्ताभ्याञ्चाग्निमसृजत। तस्मादेतदुभयमलोमकमन्तरतः। अलोमका हि योनिरन्तरतः।**

---

**सोऽवै(वे)दहं वाव सृष्टिरस्मि अहं हीदं सर्वमसृक्षीति। हि** यस्मात् अहं इदं सर्वं जगत् **असृक्षि** सृष्टवानस्मि। तस्मात् अहं **वाव** अहमेव **सृष्टिः**। सृज्यत इति सृष्टिः जगदुच्यते। अहमेव सृष्टिरिति, [[1]मत्सृष्टमिदं जगदहमेवेति] **स** प्रजापतिर**वै(वे)त्** ज्ञातवानित्यर्थः। **ततः सृष्टिरभवत्**। यस्माद्धेतोः प्रजापतिः अहमेव सृष्टिरित्यभेदोपचारेण स्वस्मिन् सृष्टिशब्दं प्रायुङ्क्त, ततः स सृष्टिनामा अभवदित्यर्थः। **सृष्ट्यां हास्यैतस्यां भवति, य एवं वेद**। य एवं सृष्टिनिरुक्तिं वेद, सः **अस्य** प्रजापतेः एतस्यां सृष्टौ=ब्रह्मसृष्टौ ह प्रसिद्धः मुख्यो भवतीत्यर्थः ॥ ५ ॥

**अथेत्यभ्यमन्थत्**। स चतुर्मुखः **अथे**ति मङ्गळशब्दोच्चारणपूर्वकमभ्यमन्थत्। **स–असृजत**। एवं मुखाच्च हस्ताभ्याञ्च मन्थनं कृत्वा **योनेः** कारणभूतात् मुखात् हस्ताभ्याञ्चाग्निमसृजतेत्यर्थः। **तस्मादेतदुभयमलोमकमन्तरतः**। **एतदुभयं** फूत्कारनिर्मन्थनसाधनमुखहस्तात्मकमुभयं **तस्मात्** अग्नेर्योनित्वात् **अन्तरतः** मध्ये **अलोमकं** लोमशून्यमित्यर्थः। अग्नियोनित्वात् मुखस्य हस्तयोश्चान्तरतो लोमशून्यत्वसिद्ध्यर्थं योनेरन्तरतो निर्लोमकत्वप्रसिद्धिं दर्शयति–**अलोमका हि योनिरन्तरतः**।

1. कुण्डलितं. क. कोशे.

---

सृष्ट्यां भवनस्य प्रागेव स्थिततत्वात् विशेषेण भवनं वक्तव्यम्। तं हशब्दतो गृहीत्वाऽऽह ह प्रसिद्ध इति।

**अभ्यमन्थदि**ति। अग्निमन्थनं कस्येति चेत् हस्ताभ्यां मुखस्यैवेति शाङ्करम्। मुखस्य हस्तयोश्च योनित्वकथनात् अरणिवत् मथ्यमानत्वं गम्यते। लोकप्रसिद्धं फूत्कारनिर्मन्थनसाधनत्वमपि संभवादपरित्याज्यमत्रोक्तम्। मुखहस्तमथनवशात् तद्देहस्थोऽग्निरेवाग्निदेवत्वेनाविर्भावित

**तद् यदिदमाहुरमुं यजामुं यजेत्येकैकं देवम्, एतस्यैव सा विसृष्टिः। एष उ ह्येव सर्वे देवाः।**

**अथ यत् किञ्चेदमार्द्रम्, तद् रेतसोऽसृजत। तदु सोमः। एतावद्वा इदँ सर्वम्, अन्नञ्चैवान्नादश्च। सोम एवान्नमग्निरन्नादः।**

---

स्पष्टोऽर्थः। **तद्यदिदमाहुरमुं यज—विसृष्टिः।** **तत्** तस्माद्धेतोः यज्ञे याज्ञिकाः अमुं यज अमुं यजेति यदिदं वचनमेकैकं **देवं** इन्द्रादिलक्षणं निर्दिश्याऽऽहुः, **सा** तद्वचननिर्दिष्टेन्द्रादिदेवविषयिणी सर्वा **विसृष्टिः** विविधसृष्टिः **एतस्य** प्रजापतेरेव। [[1] अग्निद्वारा सर्वदेवतासृष्टिरपि प्रजापतिकर्तृकैवेत्यर्थः। सर्वस्य यष्टव्यदेवजातस्याग्न्यधीनसत्ताकत्वादिति भावः॥] **एष उ ह्येव सर्वे देवाः।** अत एव तत्सृष्टत्वादेव सर्वे देवाः **एष उ ह्येव** एष प्रजापतिरेव। कार्यकारणयोरभेदोपचारात् तथोक्तिः।

**अथ—रेतसोऽसृजत।** **अथे**ति वाक्यान्तरोपक्रमे। यत्किञ्चेदं कार्य**मार्द्रं** द्रवरूपं दृश्यते, **तद्रेतसोऽसृजत**=तत् रेतसा [2] प्रजापतिरसृजतेत्यर्थः। 'शिश्नाद्रेतो रेतस आपः' इति श्रुतेः। **तदु सोमः।** उरवधारणे। तदु तद् द्रवद्रव्यमेव **सोमः** सोमरसः। **एतावद्वा इदं सर्वम्।** इदं सर्वं कार्यजातं **एतावद्वै** एतावदेव। किं तत्? **अन्नं चैवान्नादश्च।** अन्नान्नादात्मकमित्यर्थः। सर्वस्य जगतोऽन्नान्नादात्मकत्वे अग्नीषोमात्मकत्वमायातमित्याह—**सोम एवान्नमग्निरन्नादः।** सोमस्य भक्ष्यमाणत्वादन्नत्वम्, अग्नेस्तद्दाहकतया अन्नादत्वम्। अतो जगत् अग्नीषोमात्मकमिति भावः।

1. कुण्डलितं क. कोशे। 2. रेतसः ग.

---

इत्येवंरीत्या सर्वे देवाः तद्देहांशा एव भाव्या इत्याह **तत् यदिदमिति।** **आहुरमुंयजामुं यजेति** कथनं परदेवतैकान्त्यं परित्यज्य ये काम्यकर्मप्रवणाः, तान् परिहसितुम्। **अथेत्यादिना** पूर्वं मनुष्यभावादिरूपेण भूत्वा मिथुनीभूय रेतस्सृष्टं सर्वं प्रकारान्तरसृष्टात् अग्न्यादेर्विलक्षणमिति ज्ञाप्यते। **तदु सोम** इत्यादिना अस्माकमन्नत्वं देवानामन्नादत्वञ्च सूच्यते। भोज्यं सर्वं सोमेनाप्यायितं स्वादु भवति, भोक्तारः सर्वे अग्निदेवेनोदरनिविष्टेनोपहिताः भुञ्जत इति अन्नान्नादरूपं सर्वमिदमग्नीषोमात्मकं भवति। एकैकोऽप्यद्यमानत्वावस्थया सोमः, अत्तृत्वावस्थयाऽग्निरिति भाव्यम्। **अथेति सोम** इत्यन्तमेकवाक्यमिति पक्षे **तद्रेतस** इत्येकं पदम्।

**सैषा ब्रह्मणोऽतिसृष्टिः, यच्छ्रेयसो देवानसृजत। अथ यन्मर्त्यस्सन् अमृतानसृजत, तस्मादतिसृष्टिः। अतिसृष्ट्याँ हास्यैतस्यां भवति, य एवं वेद ॥ ६ ॥**

---

**सैषा ब्रह्मणोऽतिसृष्टिर्यच्छ्रेयसो देवानसृजत**। यत् यस्मात् **श्रेयसः** श्रेष्ठान् ऊर्ध्वरेतसः सनकसनन्दनादीन् देवानसृजन, सैषा ब्रह्मणो**ऽतिसृष्टिः**। अतिशयिता सृष्टिरतिसृष्टिः। कथमतिशयितसृष्टित्वमित्यत आह—**अथ यन्मर्त्यस्सन्नमृतानसृजत, तस्मादतिसृष्टिः**। अथ **यत्** यस्मात् प्रजापतिः स्वयं **मर्त्यस्सन्** मरणधर्मा सन् **अमृतान्** मुक्तियोग्यान् ज्ञानवैराग्यादिसम्पन्नान् मुमुक्षून् सनकसनन्दनादीन् **असृजत,** तस्मात् सा अतिसृष्टिरित्यर्थः। **अतिसृष्ट्यां हास्यैतस्यां भवति य एवं वेद**। य एवंप्रकारेण ज्ञानवान्, स एतस्यां अस्य चतुर्मुखस्य अतिसृष्टौ ह प्रसिद्धः मुख्यो भवतीत्यर्थः। ज्ञानवैराग्यमुमुक्षासंपन्नो भवतीति यावत् ॥ ६ ॥

---

एवं सृष्टिर्विसृष्टिश्चोक्ता। उपरि अतिसृष्टिपदेनापि विसृष्टेरेव विवक्षितत्वे नामान्तरनिर्देश-वैयर्थ्यात्, प्रजापतेर्मर्त्यत्वनिर्देशपूर्वकमग्न्यादिदेवानाममृतत्वस्य **मर्त्यः सन्नमृतान्** इति वाक्ये विवक्षणायोगाच्च शाङ्करमुपेक्ष्य सनकादिविषयतया व्याख्याति **सैषेति**। अत एव **श्रेयस** इति देवान्तरव्यावर्तकं विशेषणं द्वितीयान्तम्; न तु पञ्चम्यन्तं ब्रह्मविशेषणम्; वैयर्थ्यात्। न चैकादशकण्डिकायां इन्द्रादीनां श्रेयोरूपत्वातिसृष्टिविषयत्वश्रवणात् विसृष्टिरेवातिसृष्टिरिति वाच्यम्—मर्त्यस्यामृतसृष्टेरिहोक्तया तदयोगात्। तत्र भूक्षत्रापेक्षया द्युक्षत्रेऽतिशयादिमत्या अतिसृष्टित्वोक्तिसंभवात्। तथा च **अमुंयजामुंयजे**ति परिहासस्य कृतत्वात्, 'तर्हि कथं भाव्य' मित्यत्र सनकादिवद् भाव्यमिति ज्ञापनायेदमारब्धमिति भावः। सृष्टिविषय इव विसृष्टि-विषये 'य एवं वेदे'ति फलाकीर्तनं ब्रह्मप्राप्त्युपायानुष्ठानानुकूलः सृष्ट्यन्तर्गतमुख्यमनुष्यभाव एषितव्यः; देवभावस्तु हेयत्वादुपेक्षितव्य इति सूचनाय। देवादिभावापेक्षायां तु सनकादि-भावापेक्षा युक्तेत्युच्यत इह।

**तद्धेदं तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यामेव व्याक्रियत असौनामाऽयमिदँरूप इति ।**

---

ननु आत्मैवेदमग्र आसीदित्ययुक्तम्,[1] 'यदिदं किञ्च मिथुनमा पिपीलिकाभ्यस्तत्सर्वंसस्रजते' ति स्रष्टतया निर्दिष्टस्य मिथुनादिरूपस्य प्रपञ्चस्येदंशब्दनिर्दिष्टस्य आत्मभिन्नत्वेन 'आत्मैवेदमग्र आसी' दिति वक्तुमयुक्तत्वादित्याशङ्क्य इदमादिनामरूपभाक्त्वादिदंशब्दवाच्यमपि तच्छरीरं ब्रह्मैव । तस्य च आत्मैवेदमग्र आसीदित्यात्मशब्दवाच्यसूक्ष्मचिदचिद्विशिष्टब्रह्माभेद उपपद्यत इत्येतदर्थोऽत्र[2] (?) सन्दर्भ आरभ्यते—**तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियत ।** हशब्दो वृत्तार्थस्मरणे । **तदिदं** मिथुनादिलक्षणं जगत् **तर्हि** तदा=सृष्टेः प्राक् **अव्याकृतमासीत्**=अव्यक्तमासीत्, अव्यक्तशरीरकं ब्रह्मासीदित्यर्थः; नामरूपाभ्यां न व्याकृतमिति व्युत्पत्त्या अव्याकृतशब्दस्याव्यक्तवचनत्वात् । अव्यक्तत्वञ्च नामरूपविशिष्टतयाऽनभिव्यक्तत्वम् । अव्याकृतशब्दस्य तच्छरीरकब्रह्मपरत्वे युक्तिः समनन्तरमेव स्पष्टयिष्यते । **तदेव** अव्याकृतशरीरं ब्रह्मैव—**नामरूपाभ्यामिति** इत्थंभावे तृतीया—नामरूपवत्तया **व्याक्रियत** व्याकृतमासीत् । व्याङ्भ्यामुपसर्गाभ्याम्, विविच्य समन्तात् कृतमासीदित्यर्थः । तदेव दर्शयति–**असौनामायमिदंरूप इति । असौनामा** देवमनुष्यादिनामा, **इदंरूपः** करचरणादिरूपवानित्येवं **अयं** पूर्वोक्त

1. एतदनन्तरं ग. कोशे, 'ब्रह्मणो मर्त्यत्वे तत्पुत्राणाममर्त्यत्वं सनन्दनादित्वे लिङ्गं ज्ञायत इत्युक्तम्' इति प्रक्षिप्तमस्ति । 2. तदर्थोत्तरसंदर्भ इति स्यात् । एतदर्थो ग्रन्थसंदर्भः ग.

---

एवं सनकादिवद्बुभूषुं प्रति इतःपरम्, **आत्मानमेवोपासीते**त्येवोपदेष्टव्यम् । मध्ये **तद्धेदं तर्ही**त्यादिकं प्रसक्तावान्तरशङ्कापरिहारार्थम् । तदाह **नन्विति** । '**नान्यदात्मनोऽपश्यद्**दिति प्रागुक्तयाऽन्यसृष्टिरेव कृतेत्यवगमात् **आत्मैवेद**मिति समानाधिकरणनिर्देशोऽनुपपन्नः; यद्वा प्रजापतेः **सृष्टिरस्मी**तिग्रहणवत् उपचरितार्थकम्' इति मतिव्युदासार्थं **तद्धेद**मित्यादिकमिति भावः । **नान्य**दित्यत्रान्यत्वं विशेषणीभूतचतुर्मुखान्यत्वरूपं वा प्रकृतविशिष्टविषयकप्रतीतिविषयत्वात्मकपारिभाषिकभेदरूपं वा विभक्तत्वं वेति भाव्यम् ।

**तदिदं मिथुनादिलक्षणं जग**दिति । ननु **तदिद**मित्यस्य जगदर्थकत्वे ब्रह्मणो व्याक्रियमाणत्वं कथं लभ्यते । उच्यते । अव्याकृतपदस्य अव्याकृतशरीरकब्रह्मेत्यर्थस्वीकारात् । 'स एषइह प्रविष्ट' इति **स** इतिपदेन चेतनग्रहणात्, पूर्वं तस्योक्तत्वस्यावश्यकत्वात् । वस्तुतः **इद**मित्यस्यैव मिथुनादिलक्षणं जगदित्यर्थः । तस्याभेदेनाव्याकृतेऽन्वयः **त**दित्यस्य **आत्मैवेद**मिति प्रस्तुत

**तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौनामायमिदँरूप इति ।**

आत्मैव व्याक्रियतेत्यर्थः । **तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौनामाऽयमिदंरूप इति** । अनेन वाक्येन सृष्ट्यादिकालिके अप्रत्यक्षे अव्याकृतनामरूपव्याकरणे सुग्रहत्वाय निदर्शनमुच्यते । **तत्** = पूर्वं तथा **नामरूपाभ्यां** व्याकरणाद्धेतोः **एतदपि** इदानीमपि **इदं** उत्पद्यमानं चराचरव्यक्तिजातम्, **इदंरूपोऽयं** एतादृशसंस्थानवानयम् **असौनामा** देवदत्तयज्ञदत्तादिनामवानिति नामरूपाभ्यामेव व्याक्रियते । इत्थमेव आदावपि नामरूपाभ्यां व्याकरणमवधेयमित्यर्थः । उभयत्र, **असौनामे**ति छान्दसोऽलुक् । अदोनामेति वक्तव्ये, असौनामेति लिङ्गव्यत्ययोऽपि छान्दसः । ततश्च नामरूपवत्त्वमव्याकृतशब्दितस्य ब्रह्मणः सिद्धमिति सर्वाणि च नामानि तत्प्रवृत्तिनिमित्तभूतानि च रूपाणि तदीयान्येव । अतः इदमादिशब्दैरपि तस्यैव निर्देशसंभवात् **आत्मैवेदमग्र आसी**दित्यभेदनिर्देशे नानुपपत्तिरिति भावः ।

**नामरूपाभ्यामेवे**त्यत्रैवकारो भिन्नक्रमः । तदेव नामरूपाभ्यां स्वयमेव

---

आत्मा अर्थः । इदमित्याद्यनुसारेण क्लीबनिर्देशः । पूर्वोक्त आत्मा जगदभिन्नाव्याकृतप्रधानमासीत् । तत् स आत्मा नामरूपाभ्यामेव व्याक्रियतेत्यर्थ इति नानुपपत्तिः । **छान्दस** इति । ननु **नाम**शब्दस्य समाख्याधीनप्रसिद्ध्यर्थकत्वम्, 'रामो नाम जनैः श्रुतः,' 'प्राणन्नेव प्राणो नाम भवति' इत्यादौ दृष्टमिति **असौ नाम** देवदत्तादिर्नाम इत्यर्थोऽस्तु । न । **अयमि**ति देवदत्तादेर्गृहीतत्वात् **नाम**पदेन नाम गृहीत्वा तद्विशेषणत्व**मे**वा**सा**वित्यस्य युक्तम् **इदंरूप** इतिवदिति ।

**भिन्नक्रम** इति । ननु **इदमप्येतर्हि नामरूपाभ्यामेवे**त्यत्र एवकारो न भिन्नक्रमः । तथासति तन्तुमृत्पिण्डादिकं स्वयमेव नामरूपाभ्यां व्याक्रियते इत्यर्थस्यापत्तेः । अतोऽत्रापि यथास्थानमेवास्तु । नामरूपवदेव व्याक्रियते, न तु नामान्तरवाच्यावयविरूपद्रव्यान्तरविशिष्टं व्याक्रियते इति तार्किकमतनिराकरण**मे**वकारफलमिति चेन्न – कार्यस्यात्मनश्च भेद इति शङ्कापरिहारार्थत्वादस्य संदर्भस्य, तदेव नामरूपाभ्यां व्याक्रियतेति भिन्नक्रमत्वे तस्य स्पष्टं प्रतीतिरित्याशयात् । तदेवेत्येवकारेण तद्भिन्नं नामरूपवन्नेत्येतावल्लभ्यते । कर्तृकर्मैक्यज्ञापकः स्वयमेवेत्यंशस्तु वस्तुस्वरूपविमर्शसिद्धः । आत्मनः कर्तृत्वस्य स्पष्टत्वात् आत्मनो नामरूपवत्त्वोक्तौ कर्तृकर्मैक्यसिद्धिः । मृत्पिण्डाद्येव नामरूपवदित्युक्तौ तु न तत्सिद्ध्यापत्तिः; मृत्पिण्डस्याकर्तृत्वात् । किंतु तत्रावयव्यन्तरनिषेधमात्रम् । इह तूभयसिद्धिरिति । ननु कर्तापि कर्त्रन्तराधीननामरूपव्याकरणकर्मास्त्विति चेन्न – आत्मैवेदमिति तदा कर्त्रन्तरनिषेधात्, 'तदात्मानं स्वयमकुरुत' इति श्रुत्यन्तराच्च कर्तृकर्मैक्यनिश्चयात् । एवञ्च कर्मकर्त्रर्थाविवक्षया कर्मण्येव लकारविवक्षायामपि कर्तृकर्मैक्यसिद्ध्या

**स एष इह प्रविष्ट आनखाग्रेभ्यः, यथा क्षुरः क्षुरधानेऽवहितः स्यात्, विश्वम्भरो वा विश्वम्भरकुलाये।**

---

व्याक्रियतेत्यर्थः। व्याक्रियतेत्यत्र कर्मकर्तरि लकारः। कर्त्रन्तराक्षेपे गौरवात्; "तदात्मानं स्वयमकुरुत" इत्यनेनैकार्थ्यात्। उक्तञ्च भगवता भाष्यकृता—"तदेवाविभक्तनामरूपं ब्रह्म[1] सर्वज्ञं सत्यसङ्कल्पं स्वेनैव विभक्तनामरूपं स्वयमेव व्याक्रियते-त्युच्यत" इति। ननु अव्याकृतमासीदित्यत्र क्तप्रत्ययस्य कर्मार्थकत्वमेव वक्तव्यम्; न तु कर्मकर्त्रर्थकत्वम्। न च कर्मकर्तर्यपि कर्मवद्भावेन क्तप्रत्ययसिद्धिरस्त्विति वाच्यम्—लान्तस्य यः कर्मणा तुल्यक्रियः कर्ता, तस्यैव कर्मवद्भावविधानात्। कृत्यक्त[2] खलर्थेषु कर्मवद्भावाभावात् अवश्यं कर्मण्येव क्तो वक्तव्यः। ततश्च [3]तद्वैरूप्याय व्याक्रियतेत्यत्रापि कर्मण्येव लकारोऽस्त्विति चेन्न — एवकारेण कर्त्रन्तरव्यवच्छेदात् कर्त्रन्तराक्षेपे गौरवाच्च व्याक्रियतेति लकारस्य कर्मकर्तर्ये-वाभ्युपगन्तव्यत्वात्, वैरूप्यस्यापि सोढव्यत्वात्।

नन्वात्मनः कथं देवमनुष्यादिनामरूपवत्त्वम्, देवमनुष्यादिशरीरे तस्य अवर्तमानत्वादितीमां शङ्कां व्यावर्तयति **स एष इह प्रविष्ट आनखाग्रेभ्यः।** **एषः** अव्याकृतशरीरकः **सः** पूर्वमात्मशब्दितः परमात्मा **इह** कार्यवर्गे **आनखाग्रेभ्यः प्रविष्टः** कारणावस्थायां चिदचितोर्व्याप्य स्थितत्वात् कार्यावस्थायामपि तयोः परिपूर्ण एव स्थित इत्यर्थः। **प्रविष्टः**। अन्तर्यामिरूपेणेति शेषः। तत्र दृष्टान्तमाह **यथा क्षुरः क्षुरधानेऽवहितः स्याद् विश्वम्भरो वा विश्वम्भरकुलाये।** क्षुरो धीयतेऽस्मिन्निति **क्षुरधानम्** [—अधिकरणे ल्युट्—] क्षुरकोशः। तस्मिन् यथा क्षुरः **अवहितः** पिहितप्रविष्टः, विश्वं बिभर्ति वैश्वानराग्नि[4]रूपेणेति **विश्वंभरः** अग्निः[5] तस्य विश्वंभरस्याग्नेः **कुलाये** नीडे—दारुणीति यावत्—यथा पिहितप्रविष्टः तथा

1. ब्रह्मसर्वज्ञं. पा. 2. कृत्यर्थखलर्थेषु. क. 3. तदैकरूप्याय. ग. 4. रागन्यादि-रूपेण. ग. 5. अग्निः। सः तस्य क.

---

तदविवक्षा न युक्तेति।

इदञ्च नामरूपवत्त्वं निर्विकारे ब्रह्मणि न साक्षात्, किन्तु शरीरात्मभावात्। न चात्मा तत्रावर्तमानः। क्षुरादिवत् अदृश्यमानत्वेऽप्यवर्तमानत्वाभावादित्युच्यते **स एष इति। सः**

**तं न पश्यति[1] अकृत्स्नो हि सः।**

**प्राणन्नेव प्राणो नाम भवति, वदन् वाक्, पश्यँश्चक्षुः, शृण्वन् श्रोत्रम्, मन्वानो मनः।**

1. श्यन्ति. शां.

---

इह प्रविष्ट इति पूर्वेणान्वयः। **तन्न पश्यत्यकृत्स्नो हि सः**। यस्तिलतैलवत् सर्वस्वरूपव्याप्तं परमात्मानं न पश्यति, सः **अकृत्स्नः** अपूर्णस्वरूपः। असत्कल्प इति यावत्।

परमात्मन एव सर्वनामरूपवत्त्वमुपपादयति **प्राणन्नेव प्राणो नाम भवति—कर्मनामान्येव। प्राणन्नेव** प्राणनक्रियां कुर्वन्नेव परमात्मा प्राणनामा भवति। प्राणितीति प्राण इति व्युत्पत्तेरित्यर्थः। **वदन् वाक्** = वदनक्रियां कुर्वन्नेव वाङ्नामा भवति। वक्तीति **वाक्**। **पश्यंश्चक्षुः** = दर्शनक्रियां कुर्वन् चक्षुर्नामा भवति। चष्ट इति **चक्षुः**। **शृण्वन्** सन् **श्रोत्रं भवति**। शृणोतीति[हि] **श्रोत्रम्**। **मन्वानः** मननं कुर्वन्नेव मनो भवति। मनुत इति [हि] मनः। [1] **तान्येतानि** प्राणादिनामानि **अस्य** परमात्मनः पाचकलावकादिवत् कर्मनामान्येव। अतः स परमात्मैव प्राणवागादिद्वारा प्राणनवदनादिकर्ता, तथा तत्तच्छब्दप्रवृत्तिनिमित्तभूतजातिगुणक्रियाद्याश्रयः स एवेति तस्यैव तत्तत्प्रवृत्तिनिमित्तकचराचरशब्द-

1. 'तानी' त्यारभ्य 'अवगन्तव्य' इत्यस्य स्थाने, 'तान्येतानि प्राणादीनि नामानि पाचकलावकादिवत् कर्मनामान्येवास्य अन्तःप्रविष्टस्य नारायणस्यैव। अतः सर्वनामरूपाश्रयत्वं परमात्मनोऽस्तीति भावः' इत्येतावदेव ग. कोशे।

---

आत्मैवेदमित्युक्तः। **एषः** तद्धेदमित्युक्तः। **अकृत्स्नो हि स** इति तच्छब्दस्य पूर्वप्रकृतपरामर्शित्वायोगादेकवाक्यत्वासंभवात् **न पश्यती**त्यत्र यच्छब्दाध्याहारेण तत्प्रतिसंबन्धित्वं तस्येष्यते। **अपूर्णस्वरूप** इति। कृत्स्नस्तु तं पश्येत्। कृत्स्नता च मनआदिसामग्र्याः यथावत् संपत्ताविति वक्ष्यते सप्तदशकण्डिकायाम्। एवं वक्ष्यमाणकृत्स्नत्वप्रयोजकतया प्राणादीनामकृत्स्नपदादुपस्थितत्वात्, पूर्वब्राह्मणे प्राणादीनां प्रस्तुतत्वात्, प्राणादीनां ब्रह्मज्ञानार्थमावश्यकतया सांप्रतमुपपाद्यमानानां ब्रह्मनियम्यतयैव कार्यकरत्वमिति केनोपनिषदुक्तरीति रुपदेष्टव्येत्यभिप्रायाच्च प्राणादीनां विशिष्य ग्रहणेन परमात्मनः सर्वान्तर्यामित्वं दर्शयति **प्राणन्नेवे**ति। **ननु** प्राणादिगतं रूपं तावत् प्राणनादिक्रियाकर्तुर्जीवस्य तत्क्रियाकरणत्वम्। तद्वत्त्वेन हि परमात्मनि नामरूपवत्त्वमुपपाद्यम्। तत् कथं प्राणनक्रियाकर्तृत्वमादाय तदुपपाद्यते। एवं हि सति मुख्य-

**तान्यस्यैतानि कर्मनामान्येव ।**

वाच्यत्वमपीति सर्वनामरूपाश्रयत्वं परमात्मनोऽस्तीति भावः । अत्र प्राणनादिकरणेषु प्राणादिषु कर्तृत्वोपचारः प्राधान्यादवगन्तव्यः ।

(१) इदञ्च वाक्यं "कारणत्वेन चाकाशादिषु"—इत्यधिकरणे समन्वयाध्याये चिन्तितम् । तथाहि—' "सदेव सोम्येदमग्र आसीत्" इति कचित् सत्पूर्विका सृष्टिराम्नायते । "असद्वा इदमग्र आसीत्"इति कचिदसत्पूर्विका । अतो वेदान्तेषु [1] सृष्टिरव्यवस्थितेति अगतो ब्रह्मैककारणत्वं निश्चेतुं न शक्यम् । "तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियते"ति अव्याकृतकर्तृकसृष्टेराम्नातायाः सांख्यस्मृत्यनुरोधित्वात् प्रधानमेव जगत्कारणम् । अत ईक्षणादयो गौणा नेतव्याः' इति पूर्वपक्षे प्राप्ते — "कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः", "समाकर्षात्" इति सूत्राभ्यां सिद्धान्तितम् । "जन्माद्यस्य यतः" इत्यादिसूत्रेषु प्रतिपादितं सर्वज्ञं सत्यसंकल्पं ब्रह्म **यथाव्यपदिष्ट**मित्युच्यते । तस्यैव, 'आत्मन आकाशस्संभूतः' इत्यादिषु वाक्येषु आकाशादिकारणत्वेनोक्तेः । "समाकर्षात्" । 'असद्वा इदमग्र आसीत्' इत्यत्र 'सोऽकामयते' ति प्रकृतस्य ब्रह्मण एव 'तदप्येष श्लोको भवती' ति समाकृष्य 'असद्वा इदमग्र आसीत्' इत्यभिधानात् असच्छब्दः सूक्ष्मचिदचिद्विशिष्टब्रह्मपरः ; 'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्यत्रापि अव्याकृतस्य 'स एष इह प्रविष्ट आनखाग्रेभ्यः, पश्यंश्चक्षु' इत्यादिनोत्तरत्र समाकृष्यमाणत्वात् ।

1. सृष्टेरव्यवस्थितेः ग.

प्राणादिगतरूपवत्त्वं नोक्तं स्यादित्यत्राह **अत्र प्राणनादिकरणेष्वि**ति । करणे मुख्यप्राणादौ कर्तृत्वमपि विवक्षित्वा तद्रूपस्य परमात्मन्युपपादनं कृतमिति भावः । अत्र प्राणंश्च प्राणश्च भवतीत्येवमश्रवणात् प्राणादिपदवाच्यत्वमेव परमात्मन उच्यत इति प्रतीयते । अत उपचारः स्वीकृतः । उपचारानिष्टौ च प्रघट्टार्थ एवं भाव्यः प्रतीयते । प्राणन्नेव प्राण इत्यादिवाक्यं परमात्मनः कर्तृकरणादिसर्वान्तर्यामित्वपरम् । पूर्वं, 'आनखाग्रेभ्यः प्रविष्ट' इत्युक्ततया तदनुवादसूचनार्थमेवकारः । एवं जीवान्तर्यामी भवन् यः प्राणन् वदन् पश्यन्निति वक्तव्यो भवति, स एवं भवन्नेव प्राणवाक्चक्षुरादिरपि भवति, करणान्तर्यामित्वस्यापि भावादिति । **तानी**त्यादेश्च, **तानि = प्राणन्निति प्राण** इति चैवमादीनि कर्तृत्वकरणत्वद्वारा कर्मपदवाच्यक्रियाप्रवृत्तिनिमित्तकानि नामानि अस्यैव भवन्तीत्यर्थ इति ।

**असच्छब्दः सूक्ष्मे**ति । 'सदेवे'तिवाक्ये तु सर्वमीक्षत्यधिकरणादौ व्यक्तमुक्तमेवेति भावः ।

[1]पश्यत्त्वादीनामचेतनेऽभावात् । अव्याकृतशब्दोऽप्यव्याकृतशब्दिताव्यक्तशरीरक-परमात्मपर एवेत्यर्थ इति निर्णीतम् ।

(२) तथा साङ्ख्यस्मृतिश्च नानुरोद्धव्येति, स्मृतिपादे, "स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्" इत्यधिकरणे स्थितम् । तत्र हि 'सदेव सोम्येदमग्र असीत्', 'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्येवंरूपश्रुतीनां परस्परविरुद्धार्थ-तया प्रतीयमानानां स्वतोऽर्थनिर्णयासमर्थानां तत्त्वप्रतिपादकसर्वज्ञकपिलप्रणीतस्मृ-त्यनुसारेणैवार्थो निर्णेतव्यः । इतरथा सांख्यस्मृतेर्मन्वादिस्मृतिवत् कर्मस्वरूपे[2] सावकाशत्वाभावेन अनवकाशत्वरूपो दोषः प्रसज्येतेति पूर्वपक्षं कृत्वा—, "यद्वै किञ्च मनुरवदत् तद् भेषजम्" इति श्रुतिप्रतिपादितप्रामाण्यानां श्रुत्यविरुद्धानां भूय-सीनां मन्वादि[3]स्मृतीनां प्रधानकारणवादेऽनवकाशप्रसङ्गेन श्रुतिविरुद्धायाः अता-दृश्या एकस्याः सांख्यस्मृतेरेवानादरणीयत्वमुचितम् । मन्वादिस्मृतयो हि ऐककण्ठ्येन सर्वज्ञं परमात्मानं जगत्कारणमभिदधति । यथाऽऽह मनुः — 'आसीदिदं तमोभूतम्' इत्यारभ्य —

> 'ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
> महाभूतादिवृत्तौजाः प्रादुरासीत् तमोनुदः ॥
> सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः ।
> अप एव ससर्जादौ तासु वीर्यमपासृजत् ॥' इति ।

भगवद्गीतासु च —

> 'अहं कृत्स्नस्य जगतः प्रभवः प्रळयस्तथा ।'
> 'अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते ॥' इति ।

महाभारते च —

> 'कुतः सृष्टमिदं सर्वं जगत् स्थावरजङ्गमम् ।
> प्रळये च कमप्येति तं मे ब्रूहि पितामह ॥'

1. हेतुरयं ग. कोशे । 2. स्वरूपेप्यवकाशाभावेन. ग. 3. मन्वादीनां. क.

इति पृष्ट आह —

'नारायणो जगन्मूर्तिरनन्तात्मा सनातनः ।' इति;

तथा —

'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम ।' इति;

'अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये संप्रलीयते ।' इति च ।

आह च भगवान् पराशरः —

'विष्णोः सकाशादुद्भूतं जगत् तत्रैव च स्थितम् ।
स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः ॥' इति ।

आह चाऽऽपस्तम्बः —

'पूः प्राणिनः सर्व [1]एव गुहाशयस्याहन्यमानस्य विकल्मषस्य'

इत्यारभ्य,

'तस्मात् कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकः स नित्यः'

इति। न च मन्वादिस्मृतीनां कर्मस्वरूपे सावकाशत्वम् । कर्माराध्यपरमात्मस्वरूपेऽपि तात्पर्यात् ॥

ननु कपिलेन मन्वाद्यभिमतस्य परमात्मनोऽनुपलब्धेः तस्याप्रामाणिकत्वमिति चेत्, तत्राह — "इतरेषाञ्चानुपलब्धेः" । इतरेषां मन्वादीनां वैदिकानां बहूनां साङ्ख्योक्तप्रकारेण तत्त्वानुपलब्धेः साङ्ख्योस्मृतिरननुरोद्धव्या इति सिद्धान्तः कृतः ॥

(३) तथा सांख्याभिमतस्य प्रधानस्य जगत्स्रष्टृत्वं न युक्तिसहमिति तर्कपादे "रचनानुपपत्तेः—" इत्यधिकरणे स्थितम् । तथाहि — "रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च" । सत्त्वरजस्तमोमयसुखदुःखमोहात्मकं जगत् तत्सरूपोपादानकं कार्यत्वादित्यनुमानसिद्धं सांख्याभिमतं प्रधानं न जगत्कारणम्—अनुमीयत इति व्युत्पत्त्या अनुमानशब्दः आनुमानिकप्रधानपरः—तादृशस्य प्रधानस्य तादृशस्वभावाभिज्ञचेतनानधिष्ठितत्वेन विचित्रप्रपञ्चरचनासामर्थ्यानुपपत्तेः । तादृशचेतनाधिष्ठितस्यैव दार्वादे-

1. 'सर्वगुहाशयस्य अहन्यमानस्य' इति पाठो वृत्तानुगुणः ।

रचेतनस्य कार्यप्रवृत्तेर्दर्शनाच्च न प्रधानं जगत्कारणमित्यर्थः । "पयोम्बुवच्चेत् तत्रापि"। ननु पयसश्चेतनानधिष्ठितस्यापि दधिभावेन परिणामवत्, वारिदमुक्तजलस्य नाळिकेररसाद्यात्मना परिणामवत् चेतनानधिष्ठितस्यापि प्रधानस्य परिणामः किं न स्यादिति चेन्न – तत्रापि प्राज्ञाधिष्ठानमस्त्येव; तस्यापि पक्षत्वादित्यर्थः। "अन्यत्राभावाच्च न तृणादिवत्"। धेन्वाद्युपयुक्ततृणादेः प्राज्ञानधिष्ठितस्यापि क्षीराकारेण परिणामदर्शनादित्युदाहरणान्तरावलम्बनेन शङ्का । धेन्वाद्युपयुक्ततृणवत् अनडुदाद्युपयुक्ततृणादेः क्षीरभावेन परिणामाभावात् तत्रापि प्राज्ञाधिष्ठानमपेक्षितमिति परिहाराभिप्रायः । "पुरुषाश्मवदिति चेत् तथापि"। दृक्छक्तियुक्तपुरुषसन्निधानात् दृक्छक्तिशून्योऽप्यन्धो यथा प्रवर्तते, यथा अयस्कान्ताश्मसन्निधानादयसोऽचेतनस्य प्रवृत्तिः, एवं चिन्मात्रात्मकपुरुषसन्निधानादचेतनं प्रधानं जगत्सर्गे प्रवर्तत इति चेत्—तथाऽपि प्रधानस्य स्रष्टृत्वं नोपपद्यते । पुरुषस्य चिन्मात्रवपुषः तदनुगुणोपदेशादिव्यापाराभावात्, सन्निधानमात्रस्य प्रयोजकत्वे नित्यसर्गप्रसङ्गात्। "अङ्गित्वानुपपत्तेश्च"। प्रळये साम्यावस्थानां सत्त्वरजस्तमसामुत्कर्षापकर्षलक्षणाङ्गाङ्गिभाववशेन जगत्सृष्टिर्वक्तव्या। सा नोपपद्यते। कालविशेषे अङ्गाङ्गिभावे नियामकाभावादित्यर्थः। "अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात्"। दूषितप्रकारातिरिक्तप्रकारेण प्रधानानुमानेऽपि ज्ञातृत्वशक्त्यभावात् जगत्स्रष्टृत्वं प्रधानस्य नोपपद्यते। "अभ्युपगमेऽप्यर्थाभावात्"। आनुमानिकप्रधानाभ्युपगमेऽपि पुरुषस्य तन्मते चिन्मात्रत्वेन निष्क्रियत्वेन भोगापवर्गयोरभावात् पुरुषभोगाद्यर्था प्रधानप्रवृत्तिरिति नोपपद्यते। अतो व्यर्थः [1] प्रधानाभ्युपगमः । "विप्रतिषेधाच्चासमञ्जसम्"। 'पुरुषो न संसरति, न मुच्यते' इत्युक्त्वा, पुरुषभोगाद्यर्था प्रधानप्रवृत्तिरित्याद्युपपादयत् सांख्यदर्शनं पूर्वोत्तरविरोधाच्च असमञ्जसमिति स्थितम्।

ततश्च सांख्याभिमतप्रधानस्य तुच्छत्वात्, 'तद्धेदं तर्ह्यव्याकृतमासी'दित्यत्र न तत्प्रतिपादकत्वशङ्कावकाशः । प्रकृतमनुसरामः—

1. प्रधानाद्युपगमः ग.

**स योऽत एकैकमुपास्ते, न स वेद। अकृत्स्नो ह्येषोऽत**

---

**स योऽत एकैकमुपास्ते न स वेद।** [1]**अतः** अस्माद्धेतोः सर्वनामरूपविशिष्टं परमात्मानं विहाय, **एकैकं** एकैकनामरूपविशिष्टं जीवमुपास्ते [ यः? ], न स वेद = स नोपास्ते। तदुपासनमुपासनमेव न भवतीत्यर्थः। उपासनशब्दमध्यपठितत्वाद्विदिरुपासनपरः। उक्तं च **व्यासार्यैर्लघुसिद्धान्ते**—'न स वेदे'त्यस्य, 'स योऽत एकैकमुपास्ते' इत्येतद्वाक्यपूर्वकत्वादुपक्रमोपसंहारयोरुपासनशब्दः, मध्ये वेदनशब्दः' इति। कुत इत्यत्राह—**अकृत्स्नो ह्येषोऽत एकैकेन भवति। अतः** ब्रह्मण एव सर्वनामरूपविशिष्टतया सर्वात्मत्वात् **एकैकेन** नामरूपेण विशिष्टः **एषः** जीवः **अकृत्स्नः** अपूर्णो भवतीत्यर्थः। एकैकेनेति इत्थंभूतलक्षणतृतीया। तस्माद्धेतोः, **आत्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्ति।** एकैकनामरूपं जीवं विहाय सर्वनामरूपभाजं परमात्मानमुपासीत। **अत्र** परमात्मनि **हि** यस्मात् सर्वे पदार्थाः शरीरतया **एकं भवन्ति।** न तु स्वरूपैक्यम्, जडाजडयोरैक्यासंभवात् * शरीरशरीरिणोश्च पृथक्स्थित्याद्यभावेन एकत्वव्यवहारस्य दृष्टत्वादिति द्रष्टव्यम्। ततश्च देवदत्तस्यात्मा यज्ञदत्तस्यात्मेति किञ्चित्प्रतियोगिकतयोपासने हि न सर्वान्तर्भावः, आत्मत्वेनैवोपासने संकोचकाभावात् असङ्कुचितं सर्वात्मत्वं लभ्यत इति भावः।

यद्वा—**स योऽत एकैकमुपास्ते न स वेद।** यस्मान्नामरूपात्मकप्रपञ्चविशिष्टं ब्रह्म, अतः यः एकैकं विशेषणांशं विशेष्यांशं वा पृथक्सिद्धतयोपास्ते, न स वेद। तत् उपासनमेव न भवतीत्यर्थः। कुत इत्यत्राह—

1. स य इत्यादेरत्रत्या प्रथमव्याख्या ग. कोशे नास्ति।

---

**उक्तञ्च व्यासार्यैरिति।** अत्रोद्धृतः श्रुतप्रकाशिकापाठः प्रकृतोपनिषदानुपूर्व्यनुसारी। मुद्रितभावप्रकाशिकाग्रन्थादृतो मुद्रितश्रुतप्रकाशिकापाठस्त्वन्य इत्यलमिदानीम्।

**देवदत्तस्यात्मेति।** देवदत्तशरीरस्यात्मेत्यर्थः। एकैकनामरूपत्वात् जीवस्य तदुपासनेष्टौ देवदत्तात्मेत्येवंरीत्योपास्यम्; न तु आत्मेति। केवलेनात्मशब्देन हि जीवनिर्देशो न स्वरस इत्याशयः। अत्रास्वरसात् पक्षान्तरं यद्वेति। अन्योसावन्योऽहमस्मीत्युपासनं न कार्यमिति

**एकैकेन भवति। आत्मेत्येवोपासीत। अत्र ह्येते सर्वे एकं भवन्ति।**

---

**अकृत्स्नोऽह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीत। हि** यस्मात् **एषः** विशिष्ट-पदार्थः **एकैकेन** विशेषणांशेन विशेष्यांशेन वा **अकृत्स्नः** अपूर्णो भवति—केवलविशेषणांशेऽपि पूर्णता नास्ति, केवलविशेष्यांशेऽपि पूर्णता नास्ति [ यतः ], अतः **आत्मेत्येव** नामरूपात्मकचिदचित्प्रपञ्चापृथक्सिद्धविशेष्यत्वेनैवोपासीतेत्यर्थः। **अत्र ह्येते सर्वे एकं भवन्ति।** अत्र हि विशिष्टे सर्वे पदार्थाः **एकं भवन्ति**=अन्तर्भवन्तीत्यर्थः। विशिष्टे विशेषणविशेष्ययोरन्तर्भूतत्वादिति भावः। एतदेवाभिप्रेत्य "आत्मेति तूपगच्छन्ती" त्यत्र **व्यासार्यैः**, 'अकृत्स्नः अपूर्णः। विशिष्ट एव हि पूर्णः' इत्युक्तम्।

---

विशिष्टार्थः। अत्र पक्षे व्यासार्यसूक्तिं प्रमाणयति **एतदेवेति**। पूर्वं चेतनाचेतनोभयान्तर्यामित्वं प्राणन्नेवेत्यादिना विवक्षितमिति स्वीकारे **स योत** इत्यादेरेवमर्थः स्यात्। अत्र चेतनाचेतनयो-रेकैकं चेतनमचेतनं वा य उपास्ते—यः प्रतीकालम्बनो भवतीति यावत्—, न स वेद। **हि** यस्मात् चेतनाचेतनमात्रोपासनेन एषः अकृत्स्नः, तस्मात् यथावस्थितोपासकत्वाभावात् आत्मे-त्येवोपासीतेति। **एकपदं** विशेष्यविशेषणद्वयान्तर्गतविशेषणमात्रार्थकम्। वीप्सा चेतनाचेतनयोः पृथक्पृथक् विवक्षया। पूर्वं द्वयोः प्रकृतत्वात्। नेतिनेतीतिवत्। व्यासार्यसूक्तेश्च, 'यस्माद् विशिष्ट एव पूर्णः, तस्माद् गुणभूतविशेषणमात्रोपासको न पूर्ण इति अकृत्स्न' इत्यर्थ इति। अथापि विशेषणमात्रोपासननिषेधपक्षे, आत्मानमेवोपासीतेत्येव विध्यानुपूर्वी स्यात्। **आत्मेत्ये-वेति इतिशब्दनिर्देशात्** आत्मत्वप्रकारं विहाय ब्रह्मण एव प्रकारान्तरमात्रेणोपासननिषेधः प्रतीयते। इदमेव श्रुतिवाक्यम्, "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति सूत्रकारेण गृहीतम्। तत्रात्मत्वादन्येन प्रकारेणोपास्यम्, 'आत्मेति' इति **इतिशब्देन** मनो ब्रह्मेत्युपासी-तेत्यत्रेव आत्मत्वस्यारोपितत्वप्रतीतेरिति पूर्वपक्षे, यत् उपास्यं ब्रह्म तत्रात्मत्वरूपप्रकारो न त्याज्य इति प्रकृते आत्मत्वदार्ढ्यमेव ततः सिद्ध्यतीति सिद्धान्तात्। तथाच, 'अन्योसावन्योह-मस्मीति न स वेद' इति दशमकण्डिकावाक्ये, अत्र च वाक्ये क्रियमाणो निषेध एकविषयकः। अत एव 'अन्योसा' विति निषेधवाक्यग्रहणपूर्वकं 'आत्मेत्येवोपासीते' ति प्रकृतविधिवाक्यस्य **भाष्यादौ** तत्र तत्र निर्देशः। प्रकृतनिषेधवाक्यस्य तन्निषेधवाक्यैकार्थ्यज्ञापनार्थत्वात् तथा कृत्वा निर्देशस्य। एवमभिप्रेत्य पृथक्त्वेनोपासननिषेधपरतयैवं व्याख्यातमिति ध्येयम्। **एकशब्दस्य** 'एके मुख्यान्यकेवलाः' इति अन्याद्यर्थकत्वमप्यस्तीति अन्यान्यतयोपास्य इत्यर्थोऽपि भवेत्।

**तदेतत् पदनीयमस्य सर्वस्य, यदयमात्मा। अनेन ह्येतत् सर्वं वेद। यथा ह वै पदेनानुविन्देत्, एवम्। कीर्तिं श्लोकं विन्दते, य एवं वेद ॥ ७॥**

**तदेतत् प्रेयः पुत्रात् [प्रेयो मित्रात्[1]] प्रेयो वित्तात् प्रेयोऽन्यस्मात् सर्वस्मादन्तरतरो[2] यदयमात्मा। स योऽन्यमात्मनः प्रियं ब्रुवाणं**

1. प्रेयोमित्रादिति न शांकरे. न च माध्वे 2. अन्तरतरं. शां. मा.

---

**तदेतत् पदनीयमस्य सर्वस्य।** तदेतत् परमात्मस्वरूपम् **अस्य सर्वस्य** नामरूपात्मकप्रपञ्चस्य **पदनीयं** प्रपदनीयम्, प्रपत्तव्यमित्यर्थः। पदेर्धातोः अनीयर् प्रत्ययः। अथवा **पदनीयं** ज्ञातव्यमिति वाऽर्थः। तत्र हेतुमाह—**यदयमात्मा। अस्य सर्वस्ये**त्येतदत्रापि काकाक्षिन्यायेनान्वेति। यत्=यस्मात् कारणात् अस्य सर्वस्यायमात्मा, अत इत्यर्थः। 'तमेवैकं जानथात्मान'मिति आत्मन एव ज्ञातव्यत्वाभिधानादिति भावः। **अनेन ह्येतत् सर्वं वेद। अनेन** आत्मनाऽभिज्ञातेन **सर्वं वेद** सर्वज्ञो भवतीत्यर्थः। अत्र दृष्टान्तमाह — **यथा हवै पदेनानुविन्देदेवम्।** हवैशब्दः[1] प्रसिद्धौ। यथा चोराद्यपहृतं गवादिधनं **पदेन** तत्पदाङ्कितप्रतिपदेन लभते, एवं पदनीयत्वेन प्राङ्निर्दिष्टेन सर्वस्य पदभूतेन ब्रह्मणा सर्वमनुविन्देत् वेदेत्यर्थः। अनुषङ्गिकञ्च फलमाह—**कीर्तिं श्लोकं विन्दते य एवं वेद। कीर्तिं** ख्यातिसामान्यम्, **श्लोकं** पुण्यश्लोकत्वञ्च लभत इत्यर्थः ॥ ७ ॥

**तदेतत् प्रेयः पुत्रात् प्रेयो मित्रात् प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरो यदयमात्मा। यत्** यस्मात्कारणात् अयं सर्वेषा[2]**मन्तरतरः** अभ्यन्तरतरः अत्यन्तान्तरङ्गः—मुख्य इति यावत्—तादृश आत्मा, **तत्** तस्माद्धेतोः **एतत्** एषः पुत्रमित्रादिप्रियान्तरापेक्षयाऽतिप्रियतर इत्यर्थः। **स योऽन्यमात्मनः प्रियं ब्रुवाणं**

1. ह वै शब्दौ. ग. 2. अन्तरः अभ्यन्तरः आप्तो मुख्यः ग.

---

उक्तात्मत्वप्रयुक्तप्रियत्वातिशयभाक्त्वादपि तस्योपास्यत्वमित्याह **तदेतदिति**। आत्मत्वं शेषित्वे सति स्यात्। शेषित्वञ्च स्वगतातिशयमात्रार्थतया शेषवत्त्वम्। तस्मात् विवेकिनः शेषस्य शेष्येव प्रियतम इति। **रोत्स्यतीतीश्वर** इत्यत्र क्रियायाः कर्तृसापेक्षत्वात् **इतिशब्द**मीश्वरपदादनन्तरं योजयित्वा वाक्यार्थ उक्तः। शाङ्करे तु **प्रियं रोत्स्यति** प्रियं नङ्क्ष्यतीति यदि ब्रूयात्, तथैव स्यात्; **ईश्वरो ह**=यस्मात् वक्ता वक्तुं समर्थ इति व्याख्यातम्। ईश्वरपदं क्षिप्रवाचीति केचिदुक्तञ्चाप्रसिद्ध्या दूषितम्। पक्षद्वयेऽपि **स य** इति वाक्यारम्भे यच्छब्दस्य प्रतिसंबन्धि किमिति विचार्यम्। **यः** इत्यस्य यः कश्चिदिति शाङ्करेऽर्थ उक्तः

**ब्रूयात् प्रियँ रोत्स्यतीतीश्वरो ह तथैव स्यात् । आत्मानमेव प्रियमुपासीत । स य आत्मानमेव प्रियमुपास्ते, न हास्य प्रियं प्रमायुकं भवति ॥ ८ ॥**

**तदाहुः — यद् ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते, किमु तद् ब्रह्मावेत्[1], यस्मात् तत् सर्वमभवदिति ॥ ९ ॥**

1. अवेत् इति सर्वत्र शांकरे, माध्वे च

---

**ब्रूयात् प्रियं रोत्स्यतीतीश्वरो ह तथैव स्यात्** । **स यः**=एवंवित् **आत्म**-**नो**ऽपि परमात्मापेक्षयाऽपि अन्यत् प्रियमस्तीति ब्रुवाणं प्रति [1]व **ईश्वरः प्रियं रोत्स्यति**=प्रियनिरोधमीश्वरः करिष्यतीति यदि ब्रूयात्, तथैव भवेदित्यर्थः । **आत्मानमेव प्रियमुपासीत** । तस्माद्धेतोः निरतिशयप्रियं परमात्मानमेवोपासीते-त्यर्थः । परमात्मनोऽ[2]नुभूयमानस्य निरतिशयानन्दतया प्रियत्वमानन्दवल्ल्यादिसिद्धं द्रष्टव्यम् । **स य आत्मानमेव—भवति** । **प्रमायुकं** प्रकृष्टं मायुः मरणं यस्य तत् । प्रमायुकं न भवति=अविनष्टं भवतीत्यर्थः । शिष्टं स्पष्टम् ॥ ८ ॥

**तदाहुः** । तत् वक्ष्यमाणं आहुः पप्रच्छुरित्यर्थः । **यद् ब्रह्मविद्यया— सर्वमभवत्** । इदं हि वक्यं व्यासार्यैः, "**यद्ब्रह्मविद्यया सर्वं भविष्यन्तः**= सर्वशब्दवाच्यपरमात्मपर्यन्ताविर्भावकामाः मनुष्या मन्यन्ते, **किमु तद्ब्रह्मावैत् यस्मा-त्तत्सर्वमभवदिति**=तत् ब्रह्म किं वेद्यं वस्त्वन्तरमवैत् यस्माद्वेदनात् तत् सर्वमभव-दिति ब्रह्मणोऽपि परं तदुपास्यं वस्त्वस्ति न वेति बुभुत्सा उत्थापिता" इति **सर्वव्याख्यानाधिकरणे** व्याख्यातम् ॥ ९ ॥

1. वः इति न ग. कोशे । 2. परमात्मनो हि. क.

---

**स य** इति यच्छब्देन सहैव तच्छब्दं निवेश्य बहुलं प्रयोगेऽपि, उपरि प्रतिसंबन्धिपदान्तर-प्रयोगो नियमेन दृष्टः । न चेदिदमेव **स** इति पदं तथा ग्रहीतुमुचितम् । एवञ्च **स** इत्यस्य **तथैव** स्यादित्यत्रान्वयः । तथाच, 'अयमात्मनोऽन्यमतिशयितप्रियं ब्रूते, आत्माऽस्य प्रियं रोत्स्यती' ति परमात्मनो रोधकत्वं तत्त्ववित्त्वादयमाह । एवं वदन्नयं **तथैव** वाग्द्वारा रोधक एव स्यात् इति श्रुत्यर्थः । तत्रेश्वरपदस्य पूर्वमपकर्षे तत् पदं परमात्मपरम् । यथास्थानं स्थितौ वक्तृगतसामर्थ्यपरम् । यद्वा **स ईश्वरः** तदन्तर्यामी भवन् ईश्वरः=तथा रोधक एव स्यादित्यर्थ इति । **स यः** यस्सः = यादृशतादृश इत्यर्थे तु यदिशब्दाध्याहारादिक्लेशोऽस्ति ।

**ब्रह्म वा इदमग्र आसीत् । तदात्मानमेवावैदहं ब्रह्मास्मीति । तस्मात् तत् सर्वमभवत् ।**

**तद् यो यो देवानां प्रत्यबुध्यत, स एव तदभवत्; तथर्षीणाम्; तथा मनुष्याणाम् । तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवँ**

---

**ब्रह्म—सर्वमभवत् ॥** इदमपि वाक्यं व्यासार्यैः "उपास्यान्तरशून्यमित्युत्तरमाह—**तदात्मानमेवावैदहं ब्रह्मास्मीति, तस्मात्तत्सर्वमभवदिति ।** आत्मानमेवावैत् । न त्वन्यदुपास्यम् । तस्मात् तत् सर्वमभवदित्यर्थः । अन्यवेदनस्योपायत्वनिषेधे तात्पर्यम्; न तु स्ववेदनस्योपायत्वविधाने । यथा, 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' इति कारणान्तरनिषेधेन परमकारणत्वसिद्धिः, एवमुपास्यान्तरनिषेधेन ब्रह्मणः परमोपास्यत्वमिह विवक्षितम्"इति सर्वव्याख्यानाधिकरणे विवृतम् । अत्रात्मेतरन्नावैदिति वक्तव्ये, 'आत्मानमेवावैदहं ब्रह्मास्मीती'त्युक्तिः, 'तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मी'त्यादिना वक्ष्यमाणब्रह्मवेदनप्रशंसाहेतुसिद्ध्यर्था । 'ब्रह्म वा इदमग्र आसी'दिति तस्य ब्रह्मणो जगत्कारणत्वोक्तिश्च, 'कारणं तु ध्येयः' इति कारणस्यैव ध्येयतया सर्वकारणस्य ब्रह्मणः कारणान्तराभावादेव ध्येयान्तरं नास्तीति द्योतनार्थेति तात्पर्यं द्रष्टव्यम् ।

एवमुपास्यान्तरशून्यं ब्रह्म ज्ञातवतः फलमाह—**तद्यो यो देवानां—तथा मनुष्याणाम् ।** देवानामृषीणां मनुष्याणां वा मध्ये योयो ब्रह्म प्रत्यबुध्यत, स सर्व एव **तदभवत्** सर्वमभवत् । सर्वशब्दवाच्यपरमात्मपर्यन्ताविर्भाववान् अभवदित्यर्थः । सर्वात्मभूतपरमात्मात्मकोऽभवत् । सर्वेणैकात्म्यं प्राप्तवानिति यावत् । ऐकात्म्यस्य नित्यप्राप्तस्य प्राप्तव्यत्वासंभवात् तत्साक्षात्कारः फलमिति फलति । तदेवाह—**तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति ।** हशब्दो वृत्तार्थस्मरणे । **तदेतत्** ब्रह्म पश्यन् उपासीनो वामदेवर्षिः **अहं मनुरभवं सूर्यश्चेति** मदात्मैव मन्वादीनामात्मेति प्रतिपेदे । मन्वादिना सर्वेण स्वस्यैकात्म्यं साक्षात्कृत-

---

एवं तावत् आत्मत्वात् प्रियतमत्वात् अस्माकञ्च तच्छेषत्वात् तदनुकूलमेवास्मदनुकूलम्, तत्प्रतिकूलं प्रतिकूलमिति सुज्ञानमिति आत्मत्वस्योपास्याकारत्वे आदरोऽदर्शि । अथ तत्रापि ब्रह्म ममात्मेत्येवंरूपं नोपासनम्, किंतु अहं ब्रह्मास्मीत्येवमिति दर्श्यते ब्रह्मवा इति । ब्रह्मणा अहं ब्रह्मास्मीति वेदितुं युक्तम्; तस्य ब्रह्मत्वात् । अस्माभिस्तु अस्ति ब्रह्मेत्येवोपास्यम्, न त्वहं

**सूर्यश्चेति। तदिदमप्येतर्हि य एवं वेद अहं ब्रह्मास्मीति, स इदँ सर्वं भवति। तस्य ह न देवाश्चनाभूत्या ईशते। आत्मा ह्येषाँ स भवति।**

---

वानित्यर्थः। **तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति।** एतर्ह्यपि एतस्मिन्नपि काले **तदिदं ब्रह्म अहम** [स्मि सर्वात्मक-ब्रह्मात्मकोऽहम[1]] स्मीत्येवं योयो वेद, स सर्वोऽपि **इदं सर्वं भवति** एतत्सर्वा-त्मकब्रह्मपर्यन्ताविर्भाववान् भवतीत्यर्थः। ततश्च ब्रह्मात्मकत्वोपासनस्य सर्वैकात्म्य-साक्षात्कारहेतुत्वं पूर्वकाल एव, नास्मिन् काल इति न मन्तव्यमिति भावः॥

**तस्य ह न देवाश्चनाभूत्या ईशते।** तस्य ब्रह्मविदः **देवाश्चन** देवा अपि **अभूत्यै** मुक्तैश्वर्यविघाताय **नेशते** न समर्थाः; कुतोऽन्ये इति भावः। [[2]**चन**शब्दोऽप्यर्थः। व्यवधानं छान्दसम् (?)।] तत्र हेतुमाह— **आत्मा ह्येषां स भवति। सः** ब्रह्मवित् यस्मात् देवानामपि **आत्मा** नियन्ता भवति। ब्रह्मविद्याप्रभावेन वशित्वादिसिद्धिमत्तया तानपि नियन्तुं शक्त इत्यर्थः। [अत-स्तस्य मुक्तैश्वर्यव्याघाते न कोऽपि समर्थ इत्यव्याहता एवंविदो मुक्तिरिति भावः।]

1. कुण्डलितं न ग. कोशे। योय इति वीप्साऽपि न। 2. कुण्डलितं न ग. कोशे।

---

ब्रह्मास्मीति; जीवपरयोर्भेदादिति न मन्तव्यम्—यत्र व्यक्तौ ब्रह्मत्वं ब्रह्मणा गृह्यते, तत्रैवा-स्माभिरपि तद् ग्राह्यम्। परन्तु न 'परं ब्रह्मास्ती'ति औदासीन्येन ग्रहणम्, किंतु स्वगत-तच्छेषत्वप्रतिपत्तिसंवलितं 'अहं ब्रह्मास्मी'ति ग्रहणं स्वमुक्त्युपयोगि इति दर्श्यते, **य एवं वेदाहं ब्रह्मास्मीति**। स्वाहमर्थे ब्रह्माभेदः मन्वाद्यभेदवत् अहंशब्दस्य विशिष्टपरतया संपाद्य इति **अहं मनुरभव**मित्यादिना सूचितम्। यादृशे अहंब्रह्मास्मीत्यनुसंधाने जीवपरयोर्भेदोऽपि भावितो भवेत् तादृशमनुसंधानं कार्यमिति च, 'पृथगात्मानं प्रेरितारञ्च मत्वा'इति श्रुत्या दर्शितम्। तर्हि किमनेन प्रयासेन? ममात्मा ब्रह्म, अहमन्यः सोऽन्य इत्येव विशदं गृह्यतामिति चेत्—तथासति सर्वप्रकारब्रह्मपारतन्त्र्यं स्वस्मिन्ननुसंहितं न भवेत्। अतः स्वातन्त्र्यस्य लेशतोऽप्यभानाय अहं ब्रह्मास्मीत्यनुसंधानम्। तदुक्तमाचार्यैर**धिकरणसारावलौ,**

"व्यक्तिर्जीवेशभेदे व्यधिकरणपदैर्भाव्यते स्यात् तथापि
ब्रह्मायत्तस्वरूपप्रमितिसुदृढतासिद्ध्येऽद्धाहोक्तिः"॥ इति।

**आत्मा ह्येषां स भवती**त्यस्य, 'एतदुपास्यस्यैव देवान् प्रत्यप्यात्मत्वात् तस्यात्मनः प्रेरणाविरहे देवानामपि विघ्नविधानप्रवृत्त्ययोगात् न ते अभूत्या ईशते' इत्यर्थवर्णनापेक्षया रस्यतरमर्थान्तरमाह **स ब्रह्मवि**दित्यादिना। एवमात्मत्वोपासकस्यानुषङ्गिकमात्मत्वाविर्भावरूपं फलं प्रदर्श्य, कुतो देवाः मनुष्याणामभूत्यै प्रवर्तन्त इत्यत्र कारणमेवमनुपासकस्य निन्दनमुखेनाह

**अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति, न स वेद। यथा पशुरेवँ स देवानाम्। यथा हवै बहवः पशवो मनुष्यं भुञ्ज्युः, एवमे[ वै ]कैकः पुरुषो देवान् भुनक्ति।**

एवं ब्रह्मात्मविदां कृतार्थतामुक्त्वा अतादृशा[ना]मनर्थं दर्शयति–**अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्**। यः पुमान् धारकत्वनियन्तृत्वादिना स्वस्मात् आत्मत्वेनान्यां देवतां परमात्मरूपाम्, असौ देवतारूपः[1] **अन्यः** धारकत्वनियन्तृत्वादिना आत्मभूतादन्यः, अहं च धार्यत्वनियाम्यत्वादिप्रयुक्ततच्छरीरत्वाश्रयाद**न्यः** भिन्न इत्युपास्ते, न स वेद = सः अज्ञ इत्यर्थः। **यथा — देवानाम्**। यथा लोके पशुः मनुष्याणां शेषभूतः, एवं स देवानां पशुः। तत्किङ्करतया शेषभूत इत्यर्थः। **यथा हवै— भुञ्ज्युरेवमेकैकः पुरुषो देवान् भुनक्ति** । हवैशब्दः[2] प्रसिद्ध्यर्थे । यथा बहवः पशवः एकं मनुष्यं दोहवाहादिक्रियाभिः **भुञ्ज्युः** परिपालयन्ति, एवमेकैकः अब्रह्मवित् पुरुषः शुश्रूषयाऽग्नीन्द्रादीन् देवान् **भुनक्ति** परिपालयति, प्रीणयति। तत्किङ्करो भवतीति यावत्। एतावांस्तु विशेषः – बहवः पशवः एकस्य किङ्कराः।

1. देवता. क. 2. हवैशब्दौ. ग.

**अथय** इति। अयमर्थः—अमुंयजामुंयजेति प्रोत्साहनवशविसृतैः काम्यकर्मभिः स्वर्गं नीतो यत्र देवानां पशुवत् कार्यकरो भवति। अयं विशेषः—मनुष्येण दोहवाहादिकमपेक्षितं कार्यं बहुपशुद्वारा निष्पाद्यते। देवास्तु एकैकं यष्टारं बहुपशुस्थाने परिकल्प्य बहु साधयन्ति। किञ्च भुवि कस्यचित् पशुः तदैव पृथगन्यस्य कार्याय नोपयुज्यते। यत्र तु स्वर्गे एकैकस्यापि देवस्य कार्येषु नियम्यते। अतो मनुष्यस्य पशुहानौ यद् दुःखम्, तादृक् दुःखं बहुगुणं भवति एकयष्टृहानावपि प्रतिदेवम्। अतस्ते ब्रह्मवेदने विघ्नमाचरन्ति। तदुक्तम्, 'संसारन्यूनता-मीतास्त्रिदशाः परिपन्थिनः' इति। एवञ्च यदि ब्रह्मवेदने प्रवृत्तः परमात्मानं तमनात्मानं मन्येत, तर्हि यथावस्थितज्ञानविकलं ते पशूकुर्युरेवेति।

अत्र **अन्यां देवतामुपास्त** इत्यस्य परमात्मनोऽन्यां देवतां वस्तुगत्या तस्याः स्वस्य च भिन्नत्वात् अन्योऽसौ अन्योऽहमिति यथावदुपास्ते इति नार्थः। तस्य देवतान्तरवेदिनः परमात्मवेदनाभावस्यानुक्तिसिद्धतया, **न सवेदे**ति निषेधाप्रसक्तेः। अतः उक्तसर्वान्तरात्मत्वरूपपरमात्मभावं विना वेदनमवेदनत्वेन निन्द्यत इति युक्तम्। **अन्योऽसा**विति पुल्लिङ्गनिर्देशः देव इति विशेष्याभिप्रायेण। **अन्योऽसावन्योऽह**मित्यस्य ब्रह्म न मे शुद्धस्यात्मा, नाहं तच्छरीरभूत इत्यर्थः।

**एकस्मिन्नेव पशावादीयमानेऽप्रियं भवति; किमु बहुषु? तस्मादेषां तन्न प्रियम्, यदेतन्मनुष्या विद्युः ॥ १० ॥**

---

अब्रह्मवित् पुरुषस्तु एकैक एव सर्वदेवानां किङ्कर इति । ततः फलितमाह— **एकस्मिन्नेव पशावादीयमानेऽप्रियं भवति; किमु बहुषु । तस्मादेषां तन्न प्रियम्, यदेतन्मनुष्या विद्युः** । लोके हि पशुस्वामिन आच्छिद्य राजचोरादिभिः, एकस्मिन् पशावादीयमाने गृह्यमाणे अप्रियं भवति, किमुत बहुषु पशुषु ह्रियमाणेषु । **तस्मादेषां** देवानां तत् प्रियं न भवति । **मनुष्या ब्रह्म विद्युः** ब्रह्मज्ञानिनो भवन्तीति यदेतत्, तन्न प्रियमित्यन्वयः । अतः स्वकिङ्करतया पशुभूता मनुष्याः ब्रह्मविद्यां प्राप्य पशुभावान्मुच्येरन्निति बुद्ध्या यथाशक्ति देवास्तेभ्यो विघ्नमाचरन्तीति भावः । अत, 'श्रेयांसि बहुविघ्नानी' ति न्यायेन विघ्नबाहुल्यजटिलेऽपि ब्रह्मज्ञाने विघ्नवारणक्षमभगवत्प्रणामार्चनादिकमनुतिष्ठन् अवहितो ब्रह्मविद्यायां यतेतेति भावः ।

आत्मेत्येवोपासीतेति वाक्यं भगवता बादरायणेन चतुर्थाध्याये चिन्तितम् । तत्र हि — 'पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेती' ति जीवेश्वरपृथक्त्वज्ञानस्यामृतत्वसाधनत्वश्रवणात् स्वात्मानं प्रति अपृथक्सिद्धविशेष्यत्वलक्षणमात्मत्वं ब्रह्मणो नास्त्येव । अत एव 'आत्मेत्येवोपासीते' ति इतिकरणेन दृष्टिविधिरयं

---

आत्मत्वं ब्रह्मणो नास्त्येवेति । ननु अंशो नानाव्यपदेशादित्यादिबह्वधिकरणसिद्धस्य शरीरात्मभावस्य कथं सहसा प्रतिक्षेप इति चेत्—अयं भावः—नामरूपव्याकरणश्रुत्यादिनैव शरीरात्मभावोपदेशात् उपादानोपादेयभावोपयोगी शरीरात्मभावः ज्ञानसंकोचरूपसांसारिकावस्थाविशिष्टजीवविषयकः । शुद्धावस्थं प्रति तु न स आत्मा; पृथक्त्वेनोपासनस्य विहितत्वात् । मुक्त्यर्थं च शुद्ध एवानुसंधेय इति तं प्रति आत्मत्वं ब्रह्मणो नास्त्येवेति ।

अत्रायं पूर्वपक्ष्याशयः—अहं ब्रह्मास्मीत्यनुसंधानं न परविद्यारूपम्, ब्रह्मणः शुद्धं प्रति अनात्मत्वात् । अभेदस्य च सर्वथैवायोगात् । किञ्च 'यद् ब्रह्मविद्यया सर्वं भविष्यन्त' इत्युपक्रम्य पठितम्, **अहं ब्रह्मास्मी**ति वाक्यम्, तत्र ब्रह्मकर्तृकं तथानुसंधानं यथा अहमर्थे ब्रह्माभेदविषयकम्, तद्वत् मनुष्यादिकर्तृकं तदनुसंधानमपि तत्तदहमर्थे ब्रह्माभेदविषयकमेव युक्तम्, न तु अहमर्थान्तर्यामि ब्रह्मेति; वैरूप्यात् । तथा च तत्र ब्रह्माभेदस्यारोपितत्वात् दृष्टिरूपमिदम् । तत्फलञ्च **आत्मा ह्येषां स भवती**त्युक्तं ब्रह्मवत् कश्चित् कालं देवपर्यन्तनियमनशक्तत्वम् । तदुपरि, **योऽन्यां देवतामुपास्त** इत्यदिना च परमात्मातिरिक्तदेवतोपासकस्योक्तविधवेदनविरहात् देवपशुत्वमुच्यते । ननु **आत्मेत्येवोपासी**तेति आत्मत्वोपासनविधानात् आत्मत्वं

सूच्यते । तादृशी च दृष्टिर्न मोक्षार्थोपासनविषया । ततश्च मोक्षोपासने तात्त्विक-विषयत्वावष्टम्भभावेन अतस्मिंस्तदारोपरूपदृष्टिविधेरयुक्तत्वात् पृथक्त्वेनैवानुसन्धानं कार्यम्, न तु अपृथक्सिद्धविशेष्यत्वरूपात्मत्वेनेति पूर्वपक्षे, [1]पठति —" आत्मेति तूप-गच्छन्ति ग्राहयन्ति चे " ति । 'त्वं वा अहमस्मि भगवो देवते, अहं वै त्वमसि भगवो देवते' इति पूर्वे उपासितारः आत्मत्वेनोपगच्छन्ति = उपासत इत्यर्थः । 'य आत्मनि तिष्ठ' न्नित्यादीनि च शास्त्राणि प्रत्यगात्मापेक्षया आत्मतां ग्राहयन्ति= प्रतिपादयन्ति[2] । न च पृथक्त्वानुसन्धानस्य विरोधः शङ्कयः । किञ्चिज्ज्ञत्वसर्वज्ञत्वादि-लक्षणभेदकाकारस्य पारमार्थिकत्वात् भेदरूपं पृथक्त्वमस्त्येव । नियमेनाधारत्व-लक्षणमपृथक्सिद्धविशेष्यत्वरूपमात्मत्वमप्यस्त्येव । न हीदृशमात्मत्वं भेदविरोधि । अतः आत्मेत्येवोपासीतेति विधिवशादात्मत्वेनैवोपासनं कर्तव्यमिति स्थितम् ॥ प्रकृतमनुसरामः ॥ १० ॥

1. वदति. ग. 2. पदमिदं न क. कोशे ।

---

तात्त्विकं सार्वदिकमिति, अत एव शुद्धावस्थवाचि अहम्पदमपि परमात्मपर्यन्तमिति च ज्ञायते इति अहं ब्रह्मास्मीति तादृशं मुक्त्यर्थोपासनं संभवतीति चेन्न—**आत्मेती**ति इतिकरणात् दृष्टिविधित्व-प्रतीतेः । तथाच संसारदशायां यः स्वं प्रति आत्मा, तद्दृष्टिः स्वस्मिन् विधीयते । तत्फलञ्च **कीर्तिं श्लोकं विन्दते य एवं वेदे**त्युक्तं कीर्त्यादि । पूर्वं **एकैकमुपास्ते न स वेदे**त्यनेन स्वस्मिन् आत्माभ्यासं दृष्टिं परित्यज्यान्यथोपासनं न प्रकृतविवक्षितकाम्यवेदनरूपं भवतीत्युच्यते । किञ्च शरीरात्मभावस्य सार्वदिकत्वेऽपि अहंब्रह्मास्मीत्युपासनं न युक्तम्, तस्य जीवेशभेदानभि-व्यञ्जकत्वात्; भ्रमापादकत्वात्; पृथगात्मानं प्रेरितारञ्च मत्वेति शास्त्रनिषिद्धत्वाच्चेति ।

अत्र सिद्धान्तः, "आत्मेति तूपगच्छन्ति ग्राहयन्ति चे " ति । 'त्वं वा अहमस्मि भगवो देवते, अहं वै त्वमसी ' ति मुक्त्यर्थोपासनश्रवणात् अहंब्रह्मास्मीत्यस्य न स्वात्ममात्रे ब्रह्मा-भेदविषयकत्वम् । देवाः ऋषयो मनुष्याश्चात्मत्वेनैवात्रोपगच्छन्ति ; न दृष्टितया । योयोदेवाना-मित्यादिवाक्यात् । यत्तु ब्रह्मकर्तृकतादृशानुसंधानवैरूप्यं स्यात् अहंपदस्यान्तर्यामिपरत्वे इति — तन्न — त्वन्मतेपि तद्गतमनुसंधानं पारमार्थिकम्, जीवगतं तु दृष्टिरूपमिति वैरूप्यसत्त्वात् । अतो **यद्ब्रह्मविद्यया सर्वं भविष्यन्त** इति मुक्त्यर्थोपासनोपक्रमविरुद्धं वैरूप्यं परित्यज्य विशिष्टपरत्वमेव ग्राह्यम् । यदपि शुद्धं प्रति अनात्मत्वादिदं न युक्तमिति, तदपि न । ग्राहयन्ति हि शास्त्राणि सर्वदैवात्मत्वम्, 'य आत्मनि तिष्ठन्' इत्यादीनि । एवञ्च **आत्मेत्येवोपासीते**-त्येतदपि आत्मत्वरूपप्रकारमुपास्यमितिकरणेन दर्शयति । अन्यथा कदाचिदात्मत्वात् आत्मत्वो-पलक्षितो यः, स स्वात्मनः पृथगुपास्य इति स्यात्, यदि आत्मानमुपासीतेति वाक्यं स्यात् । एतदनुगुणञ्च सर्वमिह श्रुत्यर्थवर्णनं प्रागुक्तं भाव्यमित्यलं विस्तरेण ।

**ब्रह्म वा इदमग्र आसीदेकमेव। तदेकँ सन्न व्यभवत्। तच्छ्रेयोरूपमत्यसृजत क्षत्त्रम्, यान्येतानि देवत्रा क्षत्त्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति।**

'स मुखाच्च योनेर्हस्ताभ्याञ्चाग्निमसृजते' ति, 'तस्य श्रान्तस्य तप्तस्य तेजोरसो निरवर्तताग्नि' रिति च ब्राह्मणवर्णाग्निसृष्टिः प्रागुक्ता। इदानीमिन्द्रादिरूपक्षत्रादिसृष्टिं वक्तुम्, 'आत्मैवेदमग्र आसीदि'त्यादिनोक्तमेव प्रपञ्चस्य ब्रह्मोपादानकत्वम्, 'बहुकृत्वोऽपि [1]पथ्यं वदितव्य' मिति नीतिमनुसृत्य शिष्यावधानाय पुनरपि स्मारयति— **ब्रह्म वा इदमग्र आसीदेकमेव**। स्पष्टोऽर्थः। **तदेकं सन्न व्यभवत्**। **न व्यभवत्** वैभवं न प्राप्तमित्यर्थः। न चाग्निसृष्ट्यनन्तरं ब्रह्मणः कथमेकत्वोक्तिरिति वाच्यम्। तदविवक्षया एकत्वोक्त्युपपत्तेरिति द्रष्टव्यम्। **तच्छ्रेयोरूपमत्यसृजत क्षत्रम्**। क्षत्रं क्षत्रियाख्यं **श्रेयः** श्रेष्ठं **रूपं** शरीरभूतं **अत्यसृजत** अतिक्रान्ततया सर्वाधिकतया ससर्जेत्यर्थः। तदेव प्रपञ्चयति – **यान्येतानि — ईशान इति**। **देवत्रा** देवेषु। 'देवमनुष्ये' त्यादिना सप्तम्यर्थे त्राप्रत्ययः। देवेष्विन्द्रवरुणादीनि यान्येतानि क्षत्राणि, तानि ससर्जेत्यर्थः। 'ब्रह्म बृहस्पतिः, क्षत्रमिन्द्रः, मरुतो वै देवानां विशः' इति श्रुतेः इन्द्रादीनां क्षत्रियत्वम्। देवेष्वपि तपोविशेषेण वर्णविशेषसंभवादभिमानित्वाद्वा क्षत्रियत्वं द्रष्टव्यम्। उभय-

1. पाठ्यं पठितव्यम्. ग.

मनुष्याणामिव देवानामपि चातुर्वर्ण्यभाक्त्वात् धर्माधर्मविवेकपूर्वकवृत्तिशालित्वात् तदनिशयितपरमात्मोपासनादिधर्मबलेन तन्नियन्तृत्वस्यापि संभवात् न तेषां मनुष्योपजीव्यत्वम्। 'न हि भिक्षुको भिक्षुकान्तरं याचते' इति न्यायात् जीवस्य जीवान्तरं न गतिरिति परमात्मन एवोपास्यत्वमित्युच्यते **ब्रह्म वा** इत्यादिना। क्षत्रियादिसृष्टेरुपरिकथनात् क्षत्रियस्य ब्राह्मणयोनिकत्वस्य समनन्तरं वर्णनाच्चात्र ब्रह्मशब्दो ब्राह्मणवर्णपर इति न मन्तव्यम्— सर्वव्याख्यानाधिकरणटीकायां ब्रह्मशब्दस्यास्य परब्रह्मपरत्वप्रपञ्चनात्। न हि **इदमग्र आसी**दिति कारणवाक्यसारूप्यं ब्राह्मणपरत्वे घटते। ब्राह्मणे जगदभेदायोगात्। किञ्च **तदेतद् ब्रह्मक्षत्त्र**मिति वाक्ये क्षत्रत्वादिवत् ब्राह्मणत्वं विधेयम्। अतः **तदेत**दिति परब्रह्मग्राहकमिति ब्रह्मपदमादौ परब्रह्मपरमेवेति।

**तदविवक्षये**ति। वक्ष्यमाणनामरूपविभागविशेषराहित्यमात्रे एक मित्युक्तिसंभवादिति भावः। **तपोविशेषे**णेति। श्रीगुहवसनवनःश्रीनब्राह्मणस्येव ब्राह्मणमातापितृजन्यत्वं प्रयोजकम्। कुम्भजादिवत् स्थलान्तरे उत्पत्तौ मनुष्यत्वादाविव ब्रह्मणत्वादावपि प्राग्जन्मकृततपःप्रभृतिविशेषः प्रयोजक इतीन्द्रादौ तत्संभव इति भावः। **अभिमानित्वा**दिति। भौमतत्तद्वर्णाभिमानि-

तस्मात् क्षत्रात् परं नास्ति । तस्मात् ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये। क्षत्र एव तद् यशो दधाति।

सैषा क्षत्रस्य योनिर्यद् ब्रह्म। तस्माद् यद्यपि राजा परमतां गच्छति, ब्रह्मैवान्तत उपनिश्रयति स्वां योनिम्। य उ एनँ हिनस्ति, स्वाँ स

---

मपि व्यासार्यैर्वर्णितम्। **तस्मात् क्षत्रात् परं नास्ति** । यस्माद्धेतोरिन्द्रादयो देवश्रेष्ठा अपि क्षत्रियाः, तस्मात् क्षत्रियात् **परं** श्रेष्ठं नास्तीत्यर्थः । **तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये** । यस्मात् क्षत्रियः श्रेष्ठः, तस्मात् ब्राह्मणोऽपि राजसूययज्ञे **क्षत्रियमधस्तात्** क्षत्रियस्याधस्तात् – ‘ततोऽन्यत्रापि दृश्यते’ इति द्वितीया – **उपास्ते** उपविशतीत्यर्थः । **क्षत्र एव तद्यशो दधाति** । राजसूये राज्ञा ब्रह्मन्नित्यामन्त्रितः ऋत्विक् राजानमाह – ‘त्वं राजन् ब्रह्मासी’ नि [इति?] श्रवणात् **तद्यशः** ब्राह्मणत्वप्रयुक्तं यशो राजसूये **क्षत्रे** क्षत्रिये एव ब्राह्मणो यस्मात्कारणादादधाति, तस्माच्च हेतोः क्षत्रिय एव श्रेष्ठ इत्यर्थः ।

**सैषा क्षत्रस्य योनिर्यद्ब्रह्म** । एवंविधस्यापि क्षत्रस्य, ब्रह्म = ब्राह्मण इति यत्, सा योनिरित्यर्थः । राजसूये क्षत्रियगतातिशयस्यापि ब्राह्मणाधीनत्वात् यजनाध्ययनयोस्तदधीनत्वाच्च क्षत्रियस्य श्रैष्ठ्यं ब्राह्मणानुग्रहप्रयुक्तमिति भावः । योनिशब्दाभिप्रायेण **सैषेति** स्त्रीलिङ्गनिर्देशः । **तस्माद्यद्यपि — योनिम्** । तस्मादेव हेतोः यद्यपि राजसूयाभिषेकदशायां **परमतां** श्रेष्ठतां **राजा** क्षत्रियो गच्छति, कर्मावसाने तु **स्वां योनिं** स्वयोनिभूतं **ब्रह्म** ब्राह्मणमेव **उपनिश्रयति** याजनादिकार्याय ब्राह्मणसमीपमुपेत्य निहीनतया श्रयतीत्यर्थः । **य उ एनं हिनस्ति स्वां स योनिमृच्छति** । **य उ** = यस्तु क्षत्रियः **एनं** ब्राह्मणं **हिनस्ति**, सः

---

देवतात्वादित्यर्थः । भौमवर्णकार्यराज्यपालनादिव्यापारकरणनिबन्धनं अहं क्षत्रिय इत्येवमभिमानमात्रम्; तस्मादिति वा ।

**योनिरि**ति स्थितिस्थाने ब्राह्मणे उत्पत्तिस्थानवाचोयुक्तिः ।

**योनिमृच्छति। स पापीयान् भवति, यथा श्रेयाँसँ हिँसित्वा ॥ ११ ॥**

**स नैव व्यभवत्। स विशमसृजत, यान्येतानि देवजातनि गणश आख्यायन्ते — वसवो रुद्रा आदित्या विश्वे देवा मरुत इति ॥ १२ ॥**

**स नैव व्यभवत्। स शौद्रं वर्णमसृजत पूषणम्। इयं वै पूषा। इयँ हीदँ सर्वं पुष्यति, यदिदं किञ्च ॥ १३ ॥**

**स नैव व्यभवत्। स तच्छ्रेयोरूपमत्यसृजत धर्मम्।**

---

स्वां योनिं स्वोत्पत्तिस्थानमेव **ऋच्छति** हिनस्तीत्यर्थः। [1] मातृहा पितृहा भवतीति यावत्। तदेव विवृणोति **स पापीयान्— हिंसित्वा।** यथा **श्रेयांसं** पित्रादिकं हिंसित्वा पापीयान् भवति, एवं पापीयान् भवतीत्यर्थः ॥ ११ ॥

**स नैव व्यभवत्। स विशमसृजत।** सः परमात्मा [2] क्षत्रं सृष्ट्वापि **न व्यभवत्।** विभुत्वं नाप्तवान्। ततो **विशं** वैश्यमसृजतेत्यर्थः। तदेव दर्शयति **यान्येतानि देवजातानि — मरुत इति। देवजातानि** देवसमूहाः **गणशः** गणरूपेणाख्यायन्ते। वसुरुद्रादित्यविश्वदेवमरुतां गणदेवतात्वप्रसिद्धेः ॥ १२ ॥

**स नैव व्यभवत्। स शौद्रं वर्णमसृजत पूषणम्।** स्पष्टोऽर्थः। **इयं वै पूषा, इयं हीदं सर्वं पुष्यति यदिदं किञ्च।** इयं पृथिव्येव पूषेत्युच्यते। **हि**= यस्मात् **यदिदं किञ्च** दृश्यमानम्, इदं सर्वं पुष्यति। अतः पृथिव्या एव सर्वकार्यपोषकत्वात् पृथिव्येव पूषेत्यर्थः। यथा अग्नीन्द्रादीनां ब्राह्मणत्वक्षत्रियत्वाश्रयत्वम्, एवं पृथिव्या अपि शूद्रत्वाश्रयत्वं तदभिमानित्वं वा द्रष्टव्यम् ॥ १३ ॥

**स नैव व्यभवत्। तच्छ्रेयोरूपमत्यसृजत धर्मम्।** एवं चातुर्वर्ण्यसृष्ट्यनन्तरमपि **सः** आत्मा **नैव व्यभवत्** विभूतिं नाऽऽप्तवान्। अतो विभूतिवृद्ध्यर्थं **तच्छ्रेयोरूपं** तस्य श्रेयोरूपत्वेन प्राङ्निर्दिष्टस्य क्षत्रियस्यापि श्रेयोरूपं धर्मं सृष्टवानित्यर्थः ॥

1. मातृपितृहा. क. 2. क्षत्रसृष्ट्वाऽपि. ग.

**तदेतत् क्षत्रस्य क्षत्रम्, यद्धर्मः । तस्मात् धर्मात् परं नास्ति । अथो अबलीयान् बलीयाँसमाशँसते धर्मेण, यथा राज्ञैवम् । यो वै स धर्मः सत्यं वै तत् । तस्मात् सत्यं वदन्तमाहुः धर्मँ वदतीति, धर्मँ वा वदन्तँ सत्यं वदतीति । एतद्ध्येवैतदुभयं भवति ॥ १४ ॥**

---

**तदेतत् क्षत्रस्य क्षत्रं यद्धर्मः ।** **तदेतत्** धर्म इत्युक्रमेतद्वस्तु **क्षत्रस्य क्षत्रं** सर्वनियन्तृतया उग्रादपि क्षत्रान्नियन्तृतया उग्रमित्यर्थः । **तस्माद्धर्मात्परं नास्ति ।** तस्मात् धर्मात् **परं** अधिकं किमपि नास्तीत्यर्थः । **अथो अबलीयान् बलीयांसमाशंसते धर्मेण, यथा राज्ञा, एवम् । अथो**शब्दः अप्यर्थः । **अबलीयानथो**= अबलिष्ठोऽपि पुमान् बलीयांसं पुमांसं जेतुमाशंसते **धर्मेण** धर्मबलेन । **यथा राज्ञा, एवम् ।** यथा राजबलमवलम्ब्य दुर्बलो बलीयांसं जिगीषति तथेत्यर्थः । लोकेऽस्मिन् दुर्बलस्य दारादिकमपहरन् बलवानपि बाधितो दृष्टः । अतो बलवतस्तस्य धर्मविरोधिनस्तद् दण्डनं धर्मेणैव कृतमिति गम्यत इति भावः । **यो वै स धर्मः, सत्यं वै तत् ।** यः क्षत्रादपि श्रेयोभूतः **वै** प्रसिद्धो धर्मः, सः **सत्यं वै** सत्यवदनमेवेत्यर्थः । तत्र युक्तिमाह **तस्मात्सत्यं — सत्यं वदतीति** । स्पष्टोऽर्थः । **एतद्ध्येवैतदुभयं भवति । एतद्ध्येव** सत्यवदनमेव **एतदुभयं** [1]सत्यधर्मलक्षणोभयरूपं भवति । तस्मात् सत्यवदनं सर्वशेषिभूतमिति भावः ॥ १४ ॥

1. सत्यधर्मोभयरूपं ग.

---

एवं देवेषु क्षत्रादिविभाग उक्तः । अथ तेषां धर्मवश्यत्वमाह चतुर्दशकण्डिकया । **क्षत्रस्य क्षत्त्रम्** । क्षत्रियस्तावत् सर्वान् वर्णान् यथावद् वर्तयन् क्षतात् त्रायत इति क्षत्त्रम् । तस्य यथेच्छाचरणरूपात् क्षतात् त्राणं धर्मेण क्रियत इति धर्मः क्षत्त्रस्यापि क्षत्त्रम् । धर्मस्य सर्ववर्णोपयोगमाह **अथो अबलीयांस**मिति । धर्मो नाम धृतिहेतुः । धृतिः प्रीतिः । यस्य यः प्रीतिहेतुः, तस्य स धर्म इति न मन्तव्यम् । किन्तु यत् लोकवेदोभयाविरोधि, तदेवेत्येतदुपलक्षणार्थं सत्यवदनं धर्म इत्युक्तम् । ‘दत्तमिष्टं हुतञ्चैव तप्तानि च तपांसि च । वेदाः सत्यप्रतिष्ठानाः’ इति च जाबालिं प्रति श्रीरामभद्रः । अत्रेदं शाङ्करवाक्यमप्यनुसंधेयम् — ‘सत्यमिति यथाशास्त्रार्थता । स एव अनुष्ठीयमानो धर्मनामा भवति, शास्त्रार्थत्वेन ज्ञायमानस्तु सत्यं भवति’ इति ।

**तदेतद् ब्रह्म क्षत्रं विट्छूद्रः। तदग्निनैव देवेषु ब्रह्माभवत्; ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रः।**

उक्तां चातुर्वर्ण्यसृष्टिं निगमयति — **तदेतद्ब्रह्म क्षत्रं विट् छूद्रः।** **तत्** तस्मात् = उक्तरीत्या ब्राह्मणक्षत्रादिवर्णानां ब्रह्मणो जातत्वात् एतद्ब्रह्मैव ब्रह्मक्षत्रविट्छूद्रात्मकमिति भावः। ननु ब्रह्मणः कथं [1]चातुर्वर्ण्यस्वरूपत्वम्। क्षत्रादिवर्णत्रयसृष्टिर्ह्युक्ता; न ब्रह्मवर्णसृष्टिरित्यपेक्षायामाह — **तदग्निनैव देवेषु ब्रह्माभवत्।** **अग्निने**तीत्थंभावे तृतीया। 'स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजते' ति, 'तेजोरसो निरवर्तताग्नि' रिति च सृष्टत्वेन प्रागुक्तेनाग्निनैव विशिष्टं **सत्** **तत्** परं ब्रह्म देवेषु **ब्रह्माभवत्** ब्राह्मणोऽभवत्। अग्निरूपं ब्रह्म ब्राह्मणत्वजातिमत्। 'काठिन्यवान् यो बिभर्ति तस्मै भूम्यात्मने नमः' इतिवत्। अतः ब्रह्मणोऽग्निद्वारा ब्राह्मणत्वमित्यग्निरूपो ब्राह्मणोऽभवदिति पर्यवसितोऽर्थः। एवमेव इन्द्रादिरूपविशिष्टं ब्रह्म तद्द्वारा क्षत्रियत्वजातिमदभूत्; वसुरुद्रादिरूपविशिष्टं ब्रह्म तद्द्वारा वैश्यत्वजातिमदभूत्; पृथिवीरूपविशिष्टं ब्रह्म तद्द्वारा शूद्रत्वजातिमदभूदिति सिद्धम्। एवं परब्रह्मणो देवेषु ब्राह्मणत्वक्षत्रियत्वादिजातिमत्त्वमग्नीन्द्रादिद्वारकमित्युक्त्वा मनुष्येषु ब्राह्मणत्वादिजातिमत्त्वप्रकारं ब्रह्मणो दर्शयति — **ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रः।** **ब्राह्मणो मनुष्ये**ष्वित्यत्र ब्राह्मणेनेत्यध्याहर्तव्यम्, ब्राह्मणेन ब्राह्मण इति। क्षत्रियेण क्षत्रिय इत्युत्तरग्रन्थानुसारात्। ततश्च देवेष्वग्न्यादिद्वारेणेव मनुष्येष्वपि परं ब्रह्म ब्राह्मणद्वारा ब्राह्मणत्वजातिमदभवत्। क्षत्रियवैश्यादिद्वारा क्षत्रियत्वादिजातिमदभवदित्यर्थः।

1. चतुर्वर्ण. क.

---

ननु परमात्मनो देवेषु क्षत्रादिभावः प्रागुक्तो ज्ञातः, ब्राह्मणभावस्तु न ज्ञायते। तत्राह **तदग्निनैवे**ति। अग्नेर्मुखजन्यत्वस्योक्त्या ब्राह्मणत्वमुक्तप्रायमिति भावः। पूर्वोक्तत्वदर्शक **एव**कारः। अनुक्तोऽपि बृहस्पतिरस्ति ब्राह्मणः। अस्तु सः। उक्त एव कस्मिंश्चिदस्ति ब्राह्मणत्वमिति च **एव**कारभावः। **ब्राह्मणेनेत्यध्याहर्तव्य**मिति। टीकायां तु **ब्रह्माभव**दिति ब्रह्मपदस्याप्यत्र परमनुषङ्गं विधाय परं ब्रह्म **ब्राह्मणः** मनुष्येषु ब्राह्मणरूपभाक् सत् ब्रह्माभवत् = ब्राह्मणोऽभवदित्युक्तम्। अत्र तु ऐकरूप्याय, '**ब्रह्मणा मनुष्ये**' ष्विति स्यात् पूर्वब्रह्मपदानुषङ्गे इति तृतीयान्ताध्याहारः कृतः।

तस्मादग्नावेव देवेषु लोकमिच्छन्ते, ब्राह्मणे मनुष्येषु। एताभ्यां हि रूपाभ्यां ब्रह्माभवत्।

अथ यो ह वा अस्माल्लोकात् स्वं लोकमदृष्ट्वा प्रैति, स एनमविदितो न भुनक्ति, यथा वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतम्। यदि ह वा अप्य-

---

प्रसङ्गादग्निब्राह्मणौ प्रशंसति—तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येषु। तस्मात् बुद्धिस्थाद्वक्ष्यमाणाद्धेतोः, पूर्वोक्तहेतोर्वा — देवेष्विति निर्धारणसप्तमी — देवेषु देवानां मध्ये लोकमग्नावेव इच्छन्ते इच्छन्ति। लोकं फलम्। अग्नाविति निमित्तसप्तमी। अग्नेर्निमित्तादेवेच्छन्ति लोकम्। मनुष्येषु मनुष्याणां मध्ये ब्राह्मणादेव निमित्तात् लोकमिच्छन्तीत्यर्थः। यद्वा— देवानां मध्ये अग्नावेव हुत्वा, मनुष्याणां मध्ये ब्राह्मण एव दत्वा लोकमिच्छन्तीत्यर्थः। तस्मादिति पूर्वपरामृष्टं प्राशस्त्यहेतुमाह—एताभ्यां हि रूपाभ्यां ब्रह्माभवत्। प्रथमत इति शेषः। एताभ्यामग्निब्राह्मणरूपाभ्यां हि यस्मात् परं ब्रह्म प्रथमतो विशिष्टमभवदित्यर्थः। अतोऽग्नेर्देवेषु, ब्राह्मणस्य मनुष्येषु अग्रजत्वात् प्राशस्त्यमिति भावः। यद्भवत्, तस्माल्लोकमिच्छन्तीति पूर्वेणान्वयः।

एवं निखिलजगत्कारणत्वादिगुणकमात्मस्वरूपमुक्त्वा तद्वेदनस्यावश्यकर्तव्यत्वमाह अथ यो हवा अस्माल्लोकात् —कर्माकृतम्। अथशब्दो वाक्यान्तरोपक्रमे।

---

एवं देवानां मनुष्याविशेषादनुपास्यत्वमुक्तम्। अथ परमात्माऽपि नोपासितव्यः, तस्यात्मत्वात्; स्वामिनः स्वरक्षणस्य च स्वतः प्राप्तत्वादित्यत्र, 'संसारतन्त्रवाहित्वात् रक्षापेक्षां प्रतीक्षते' इति तन्नियमं दर्शयति अथेत्यादिना। 'यो विदित्वा प्रैति, तं विदितो भुनक्ति' इत्युक्तौ वेदनं विनाऽपि स्वातन्त्र्याद् रक्षणं व्यक्तिविशेषे कदाचित् शङ्क्येतापीति सर्वत्र वेदनावश्यकत्वदार्ढ्याय व्यतिरेकमुखेनोक्तिः। तच्च वेदनं विहितज्ञानविशेष इति उपासीतेत्यनेन दर्शितम्। अत्र अदृष्ट्वा, अविदितः, उपासीत इति पदानां प्रयोगेण दर्शनवदनोपासनानामैक्यं प्रख्याप्यते। अत एव श्रीभाष्ये वाक्यकारवचनात् वेदनस्योपासन इव उपासनस्यापि दर्शने पर्यवसानं कृतम्, 'दर्शनसमानाकारा प्रतिपादिता' इतीति सूक्ष्ममीक्ष्यम्। श्रुतिरियं तत्प्रतिपादिकेति।

यदि ह वा अपीति। ह वा अपीत्यस्य अतिप्रसिद्धोऽपीत्यर्थोऽभिमतः स्यात्। शाङ्करेपि, 'अद्भुतवत् कश्चिन्महात्माऽपी'त्युक्तम्। अत एव 'यत् इह' इति विभज्य इह संसारे इति न व्याख्यातम्।

**नेवंविन्महत् पुण्यं कर्म करोति, तद्धास्यान्ततः क्षीयत एव। आत्मानमेव लोकमुपासीत। स य आत्मानमेव लोकमुपास्ते,**

---

हवैशब्दः प्रसिद्धौ। लोक्यते दृश्यत इति **लोकः**। नित्यसूरिभिः सर्वदा [आ]लोक्यमानत्वात् परमात्मा **लोक** इत्युच्यते। एवंभूतं[1] **स्वं** स्वीयमन्तरात्मानम् **अदृष्ट्वा** दर्शनसमानाकारेण ज्ञानेनाविषयीकृत्य[2] यः पुमानस्माल्लोकात् **प्रैति** लोकान्तरं गच्छति, तमेनं **सः** परमात्मा स्वभूतोऽपि[3] **न भुनक्ति** न परिपालयति। कस्य हेतोरित्यत आह – **अविदितः**। अनुपासित इत्यर्थः। उपासनाभावे वस्तुगत्या शेषितया आत्मभूतोऽपि संसारं न निवर्तयतीत्यर्थः। यथाऽऽह [वेदान्तसारे[4]] योगी याज्ञवल्क्यः –

'गवां सर्पिः शरीरस्थं न करोत्यङ्गपोषणम्।
निस्सृतं कर्मचरितं पुनस्तस्यैव भेषजम्॥

एवं स हि शरीरस्थः सर्पिर्वत् परमेश्वरः।
विना चोपासनां देवो न करोति हितं नृणाम्॥' इति।

तत्र दृष्टान्तमाह – **यथा वेदो—अकृतम्**। वेदस्य सर्वोपकारार्थप्रवृत्ततया सर्वसाधारण्येऽपि [यथा सः?] अनधीतो न पालयति, यथा ज्योतिष्टोमादि वैदिकं कर्म अननुष्ठितं नोपकरोति, [5]तथेश्वरः स्वस्य शेषिभूतोऽपि अनुपासितः संसारं न निवर्तयतीत्यर्थः। **यदि ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति, तद्धास्यान्ततः क्षीयत एव**। हशब्दः प्रसिद्धौ। **अनेवंवित्** अब्रह्मवित् यदि वाऽपि (वै अपि?) महदश्वमेधादि पुण्यं कर्म **करोति** कुर्यात्, **तत्** अस्य अब्रह्मविदः कर्म **अन्ततः** सुदूरं गत्वाऽपि – बहुकालं स्थित्वापीति यावत् – **क्षीयते** नश्यत्येवेत्यर्थः। क्षीणफलं भवतीति यावत्। 'यो वा एतदक्षरं गार्ग्यविदित्वा अस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणि, अन्तवदेवास्य तद्भवती' ति श्रुतेरिति भावः। अतः किं कार्यमित्यत आह – **आत्मानमेव लोकमुपासीत**। इतरत् परित्यज्य

1. स्वात्मानं. ग. 2. अविषयीकृत्वा. ख. 3. स्वः आत्मभूतोपि. क. स्वात्मभूतोपि? 4. पदमिदं ख. कोशे। 5. 'तथेत्यर्थः' इत्येतावदेव. ग।

**न हास्य कर्म क्षीयते। अस्माद्ध्येवात्मनो यद्यत् कामयते, तत्तत् सृजते ॥ १५ ॥**

**अथो अयं वा आत्मा सर्वेषां भूतानां लोकः। स यज्जुहोति यद् यजते, तेन देवानां लोकः।**

---

आत्मानमेव लोकमुपासीतेत्यर्थः। लोक्यत इति **लोकः** फलम्। उपायभूतमात्मानमेवोपेयभूतं भजेतेत्यर्थः। एवंसति न पूर्वोक्तो दोष इत्याह स—**न हास्य कर्म क्षीयते**। उक्तरीत्या परमात्मोपासकस्य कर्म न क्षीयत इत्यर्थः। अत्र **कर्म**शब्द उपासनापरः; तदङ्गभूतकर्मपरो वा। आत्मोपासकस्येतरकर्माप्रसक्तेरिति द्रष्टव्यम्। कर्मणः क्षणिकस्य अत्र निषिध्यमानं क्षयित्वं नाम क्षयिफलकत्वरूपम्। कर्मणश्चाक्षयफलकत्वमुपासनाद्वारेति द्रष्टव्यम्। [1]**तस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत् सृजते**। तस्मादेव ब्रह्मवेदनाद्धेतोः—**हि**शब्दः श्रुत्यन्तरप्रसिद्धिं दर्शयति – अयमुपासकः, 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति', "सङ्कल्पादेव तच्छ्रुते" रिति श्रुतिसूत्रोक्तरीत्या **आत्मनः** स्वस्य **यद्यत् कामयते** यद्यदभिलषितम्, तत् सर्वं सङ्कल्पमात्रेण सृजतीत्यर्थः ॥ १५ ॥

ननु आत्मानमेव लोकमुपासीतेत्युक्तमयुक्तम्। लोको हि नाम प्राणिभोगस्थानविशेषः। तथात्वमात्मनः कथमित्याशङ्क्य कैमुतिकन्यायेन परब्रह्मणो लोकत्वं दर्शयितुं प्रत्यगात्मन एव सर्वोपकारकत्वेन सर्वभूतोपेयत्वात् सर्वभूतलोकत्वं प्रथममाह—**अथो अयं वा आत्मा सर्वेषां भूतानां लोकः**। **अथो**शब्दो वाक्यान्तरोपक्रमे। **वै**शब्दोऽवधारणे। **अयं** अहमिति प्रत्यक्षसिद्धः **आत्मा वै** जीवात्मैव सर्वेषां भूतानां लोक इत्यर्थः। तदेवोपपादयति—**स यज्जुहोति यद्यजते तेन देवानां लोकः**। **सः** प्रत्यागात्मा जुहोतीति यत्, यजत इति च यत्, आभ्यां

1. अस्मात्. क.

---

**इतरकर्माप्रसक्ते**रिति। 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति इतरकर्मक्षयस्य वक्तव्यतया **अस्य कर्मे**त्यस्य उपासकेन तदानुष्ठीयमानं कर्मेति ह्यर्थ इति भावः।

एतावत् प्रस्तुत आत्मा, **अथो** इत्यादिना प्रस्तूयमानश्चैक इति भ्रमव्युदासायावतारयति **नन्वि**ति। परमात्मनो लोकत्वं कथमित्यपेक्षायां जीवात्मनो लोकत्वमानुभाविकं प्रदर्श्य कैमुति-

**अथ यदनुब्रूते तेनर्षीणाम् । अथ यत् पितृभ्यो निपृणाति[1] यत् प्रजामिच्छते, तेन पितॄणाम् । अथ यन्मनुष्यान् वासयते, यदेभ्योऽशनं ददाति, तेन मनुष्याणाम् । अथ यत् पशुभ्यस्तृणोदकं विन्दति, तेन पशूनाम् । यदस्य गृहेषु श्वापदा वयाँस्यापिपीलिकाभ्य उपजीवन्ति, तेन तेषां लोकः ।**

1. निर्मृणाति, निर्मृणाति. पा.

---

यागहोमाभ्यां देवानामुपकारकत्वेन लोक इत्यर्थः । **अथ यदनुब्रूते तेनर्षीणाम् ।** अनुब्रूते स्वाध्यायमधीते इति यत्, तेन अध्ययनेन ऋषीणां लोक इत्यर्थः । **अथ यत् पितृभ्यः निपृणाति ।** पिण्डोदकादि प्रयच्छतीति यदित्यर्थः । **निर्मृणा-**तीति पाठे निर्मर्णनं[1] (?) और्ध्वदैहिकम् । मृण (?) हिंसायामिति हि धातुः । **यत् प्रजामिच्छते ।** प्रजामुत्पादयतीति यदिति यावत् । **तेन पितॄणाम् ।** लोक इति शेषः । **अथ यन्मनुष्यान् — मनुष्याणाम् ।** **अथ** अपिच । **वासयते** गृहे शयनासनावकाशप्रदानेन अतिथीन् वासयते इति यत्, **वसद्भ्यश्चान्नं** ददातीति च यत्, ततो मनुष्याणां लोक इत्यर्थः । **अथ यत्पशुभ्यः—पशूनाम् ।** तृणानि च उदकञ्च **तृणोदकं पशुभ्यो** गवादिभ्यो **विन्दति** लम्भयतीति यदि-त्यर्थः । **तेन पशूनाम् ।** लोक इति शेषः । **यदस्य गृहेषु — तेषां लोकः ।** **आपिपीलिकाभ्य** इत्यत्र आङ् अभिविधौ । **श्वापदाः** श्वादयः । **वयांसि** काकादीनि । [कण] बलिभाण्डप्रक्षाळनादि यदस्य गृहस्थस्य गृहे श्वपक्षिपिपीलि-कादय उपजीवन्ति, अतस्तेषां लोक इत्यर्थः ।

1. निमृणाति......निमृर्णन. ग

---

कन्यायेन तत्र तत् स्थापयितुमियं लोकमीमांसा । एवं द्वयोर्भेदः श्रुत्यभिमत इति अत्र **अयं वा आत्मेति** अयम्पदप्रयोगादेव ज्ञायत इति । **स्वाय लोकायेति** । आत्मात्मीयवाचिनः स्वशब्दस्य सर्वनामत्वात् **स्वायेति**रूपं छान्दसम् । यद्वा **स्वाय** धनाय । यथा लोके धनस्य भोगोपकरणस्याविनाशमिच्छति, एवमस्येत्यर्थ । एवं **स्वं लोक**मिति पूर्वत्रापि **स्वपदस्य** धनपरत्वं संभवति । परमात्मन एवानन्तधनत्वात् । 'अनन्तं बत मे वित्तम्,' 'धनमार्जय सुस्थिरम्,' 'अस्ति मे हस्तिशैलाग्रे वस्तु पैतामहं धनम्,' 'प्राप्तिर्दायधनक्रमात्,' 'अग्ने नय सुपथा राये' इत्यादिकमनुसंधेयम् ।

**यथा ह वै स्वाय लोकायारिष्ट(ष्टि)मिच्छेत् ।**
**एवँ हैवंविदे सर्वाणि भूतान्यरिष्टि (ष्टः) मिच्छन्ति ।**
**तद् वा एतद् विदितं मीमाँसितम् ॥ १६ ॥**
**आत्मैवेदमग्र आसीदेक एव ।**

---

एवं स्वात्मनः सर्वभूतलोकत्वपरिज्ञानस्य फलमाह — **यथा ह वै स्वाय लोकाय — इच्छन्ति ।** हवैशब्दः प्रसिद्धौ । यथा लोके जनः **स्वाय लोकाय** स्वभोगस्थानाय । **अरिष्टम् । रिष्टं** नाशः । [1]रिष हिंसायामिति हि धातुः । भावे क्तः । **अरिष्टं** = अनाशमिच्छति । एवमेवात्मनः सर्वभूतलोकत्वविदे । सर्वाणि देवपितृप्रभृति आपिपीलिकं भूतानि **अरिष्टं** क्षेमं वाञ्छन्तीत्यर्थः ।

एवं परमात्मनो लोकत्वोपपादनोपयुक्तं प्रत्यगात्मनः सर्वभूतलोकत्वमुपपाद्य, अथ तदुपजीवनेन परमप्रकृतं परमात्मनो लोकत्वमुपसंहरति — **तद्वा एतद्विदितं मीमांसितम् ॥ तद्वै** एवं प्रत्यगात्मनः सर्वभूतलोकत्वदर्शनादेव **एतत्** परमप्रकृतं परमात्मनो लोकत्वं[2] मीमांसितं कैमुतिकन्यायतर्कानुगृहीतं सत् विदितमित्यर्थः । उक्तरीत्या प्रत्यगात्मन एव सर्वभूतलोकत्वे प्रत्यक्षसिद्धे सर्वात्मनः परमात्मनः सर्वभूतलोकत्वं न संदेग्धव्यमिति यावत् ॥ १६ ॥

**आत्मैवेदमग्र आसीदेक एव । इदं** जायापुत्रादिविभागवज्जगत् **अग्रे** तत्सृष्टेः पूर्वकाले जायापुत्रादिविभागशून्यतया **एक** [3]**एव आत्मैवासीत्** । परं ब्रह्म

1 ऋष. क. 2. 'लोकत्वं विदितं **मीमांसितं** कैमुतिकन्यायतर्कानुगृहीतञ्चेत्यर्थः' इत्येतावदेव ग. कोशे । 3. एकः पुरुषरूप एव स्थित इत्यर्थः. ग.

---

**इच्छेदि**त्येकवचनं यथादर्शनं यस्यकस्यचिद् दृष्टान्ततया ग्रहणार्थम् । यदि तु प्रकृत-परमैकान्ती गृह्यते, **स्वाय लोकाये**ति च पूर्वं स्वं **लोक**मित्युक्तः परमात्मा, तदा यथा परमैकान्ती स्वस्य शाश्वतं धनं परमात्माख्यं लोकं प्रति अरिष्टिमिच्छेत्, तत्समृद्धिपरत्वात् तस्य, तथा सर्वाणि भूतानि एनं जीवमेव लोकं प्रति अरिष्टिमिच्छन्तीत्यर्थोऽपि स्यात् ।

एवं परमात्मानमावेद्य तस्योपासनप्रकारं लोकत्वञ्च मीमांसित्वा अथ पूर्वब्राह्मणप्रस्तुतानां प्राणादीनां तदुपासनपरिकरत्वं बोधयितुं भूमिकामारचयति **आत्मैवेद**मिति । अशुद्धावस्थायां शुद्धावस्थायाञ्च सर्वदा जीवस्य परमात्मरूपविशेष्यांशपूरणात् कृत्स्नता प्रागुक्ता । संसारिणः

**सोकामयत जाया मे स्यात्, अथ प्रजायेय, अथ वित्तं मे स्यात्, अथ कर्म कुर्वीयेति। एतावान् वै कामः। नेच्छँश्चनातो भूयो विन्देत्। तस्मादप्येतर्ह्येकाकी कामयते—जाया मे स्यादथ प्रजायेय, अथ वित्तं मे स्यादथ कर्म कुर्वीयेति। स यावदप्येतेषामेकैकं न प्राप्नोति, अकृत्स्न एव तावन्मन्यते।**

(परमात्मा ?) जायापुत्रादिसृष्टेः पूर्वं केवलपुरुषरूप एव स्थित इत्यर्थः। **सोऽकामयत — कुर्वीयेति**। **सः** पुरुषरूपः परमात्मा अकामयत। किमिति? **मे** मम जाया भूयात्, **अथ** तदनन्तरं पुत्रादिरूपेण प्रजायेय, अथ वित्तञ्च मे भवतु, तेन यज्ञादिकर्म **कुर्वीय** करवाणीत्यकामयतेत्यर्थः। परमात्मनः सर्वनामरूपाश्रयत्वात् कर्मानुगुणं प्रथमं पुरुषरूपेण सृष्टजीवद्वारा एतादृशकामनाश्रयत्वम्, 'काठिन्यवान् यो बिभर्ति तस्मै भूम्यात्मने' इतिवन्मुख्यमेव द्रष्टव्यम्। **एतावान् वै कामः**। जायापुत्रवित्तकर्मव्यतिरेकेण संसारिणां **कामः** कामनाविषयः कोपि नास्ति। किन्त्वेतावानेवेत्यर्थः। **नेच्छंश्चनातो भूयो विन्देत्**। **चन**-शब्दोऽप्यर्थः। **इच्छन्नपि** चिन्तयन्नपि[1] **अतो भूयः** एभ्यो जायापुत्रवित्तकर्मभ्योऽधिकं त्रैगुण्यनिष्ठो न लभत इत्यर्थः। **तस्मादप्येतर्हि—कुर्वीयेति**। तस्माद्धेतोः **एतर्ह्यपि** अद्यत्वेऽपि **एकाकी पुरुषः** जायापुत्रवित्तादिरहितः जायापुत्रवित्तकर्माण्येव कामयते इत्यर्थः। अत इदानीन्तनैकाकिपुरुषे दृश्यमाना एषा कामना, 'एवमेवाग्रेऽप्यभूत्' इत्यत्र ज्ञापिकेति भावः। **स यावदप्येतेषामेकैकं -- मन्यते**। **सः** एकाकी पुरुषः **यावत्** यावन्तं कालं **एतेषां** जायादीनां चतुर्णां मध्ये एकैकमपि न प्राप्नोति, तावत्कालं **अकृत्स्नः** एकांशहीन इत्येव स्वात्मानं मन्यते इत्यर्थः। अत इदानीन्तनदर्शनानुगुण्येनाग्रेऽप्येतेषां जायादीनां चतुर्णामपि कामनाविषयत्वमवधेयमिति भावः।

1. चिन्तयन्नपि इतोऽप्यन्यत् काम्यान्तरमस्तीति चिन्तयन्नपि. ग.

कृत्स्नता काचिदस्ति जायादिविशिष्टतारूपा। सा चतुर्मुखप्रभृति सर्वस्येत्युच्यते प्रथमम। **पुरुषरूपेण सृष्टजीवे**ति चतुर्मुखग्रहणम्। उक्तं हि प्राक्, 'स इममेवात्मानं द्वेधाऽपातयत्' इति। एवम्भूतेन एतदर्थमेव सृष्टत्वात् सर्वोऽपि जीव ईदृशकृत्स्नतापेक्षीति। एवं लोकस्थितिं प्रदर्श्य विरक्तस्यान्यादृशा जायापुत्रादितः कृत्स्नत्वमेवापेक्षितमिति प्रधानार्थमाह **तस्योकृत्स्नते**ति। शुद्धावस्थस्य वागादिरूपजायाद्यपेक्षाविरहात् उपासनसाधनमनोरूपोपाधिविशिष्टस्यैव तदपेक्षितत्वात्

**तस्यो कृत्स्नता—मन एवास्यात्मा। वाग् जाया। प्राणः प्रजा। चक्षुर्मानुषं वित्तम्; चक्षुषा हि तद् विन्दते; श्रोत्रं दैवँ श्रोत्रेण हि तच्छृणोति। आत्मैवास्य कर्म। आत्मना हि कर्म करोति। स एष पाङ्क्तो यज्ञः;**

---

यस्तु वैराग्येण वा अलाभेन वा जायापुत्रवित्तकर्मान्यतमहीनतया अकृत्स्नः, तस्य कृत्स्नतासंपत्तिप्रकारं दर्शयति—**तस्योकृत्स्नता**। उशब्दोऽवधारणे। **तस्य** तादृशस्य **कृत्स्नता** पूर्णता एवमेव भवतीत्यर्थः। **मन एवास्यात्मा। अस्य** अकृत्स्नत्वं मन्यमानस्य पुरुषस्य मन एव **आत्मा** त्रिवर्गप्रधानस्वस्वरूपतया कल्पनीयमित्यर्थः। मनसः प्रधानत्वादिति भावः। **वाग् जाया।** वाचो मनोधीनवृत्तिकत्वात् स्त्रीत्वसाम्याच्च वाचं जायां कल्पयेदिति भावः। प्राणः **प्रजा** पुत्र इत्यर्थः। वाङ्मनसाधीनत्वात् प्राणस्य, प्राणं पुत्रत्वेन कल्पयेदित्यर्थः। दैवमानुषभेदेन वित्तञ्च द्वेधा विभज्य दर्शयति—**चक्षुर्मानुषं —तच्छृणोति। तत्** हिरण्यपश्वादिकं मानुषवित्तं **हि** यस्मात् चक्षुषा विन्दते, अतः मानुषवित्तोपलम्भकत्वाच्चक्षुरेव मानुषं वित्तं कल्पनीयम्। **तत् दैव**शब्दितादृष्टं तत्प्रतिपादकश्रुतिस्मृतिद्वारा श्रोत्रेण **हि** यस्माच्छृणोति, तस्मात् तदुपलम्भकत्वात् श्रोत्रं दैवं वित्तं कल्पयेदित्यर्थः। **आत्मैवास्य कर्म आत्मना हि कर्म करोति।** अत्रात्मशब्दः शरीरपरः। ऐहिकामुष्मिककर्मकरणत्वाच्छरीरं कर्म कल्पयेदित्यर्थः। **स एष पाङ्क्तो यज्ञः।** आत्मजायापुत्रवित्तकर्मलक्षणपञ्चकनिर्वर्त्यः स एष समुदायः 'पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञ' इति निर्दिष्टपाङ्क्त-

---

मनोविशिष्टस्यात्मत्वमभिसंधाय **मन एवात्मेत्युक्तम्। आत्मैवास्य कर्मेति।** 'आत्मना हि कर्म करोति' इति कर्तारं प्रति साधनतया तृतीयया निर्देशात् आत्मशब्दः साधनपरः। 'शरीरमाद्यं खलु धर्मसाधनम्'। चेष्टाश्रयत्वञ्च शरीरलक्षणमिति शरीरं कर्मेति निर्दिश्यते। तैत्तिरीये च भृगुवल्ल्यां अन्नादिप्रस्तावपरायां शरीरमिदमन्नमयत्वात् **अन्नमित्युक्तम्**, 'अन्नं प्राणं चक्षुः श्रोत्रं मनो वाच' मिति सहैभिरुपकरणैः। एवं तावत् प्राणादीनां पूर्वप्रक्रान्तानामुपासितुरपेक्षितत्वमुपपादितम्। ऐतरेयोपनिषद्यपि (१-३-८.) ब्रह्मोपासनस्य देवरथस्य निष्कामसंबन्धिनः वाक्छोत्रचक्षुर्मनःप्राणाः ईषादण्डचक्रयुग्यसंग्रहीत्रधिष्ठातृरूपा इति वर्णितम्। प्राणस्य सर्वप्राधान्यमिहाप्यभिमतम्। वक्ष्यते च।

**पाङ्क्तो यज्ञः।** 'स एष यज्ञः पञ्चविधः अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः

**पाङ्क्तः पशुः; पाङ्क्तः पुरुषः; पाङ्क्तमिदँ सर्वं यदिदं किञ्च। तदिदँ सर्वमाप्नोति, य एवं वेद ॥ १७ ॥**

इति तृतीयाध्याये चतुर्थं ब्राह्मणम्।

---

**३—५.**

**यत् सप्तान्नानि मेधया तपसाऽजनयत् पिता।**
**एकमस्य साधारणं द्वे देवानभाजयत् ॥**
**त्रीण्यात्मनेऽकुरुत पशुभ्य एकं प्रायच्छत्।**
**तस्मिन् सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न ॥**

---

यज्ञात्मा, पञ्चत्वसंख्यासामान्यादित्यर्थः। तथा **पाङ्क्तः पशुः**। पशोरपि पाञ्चभौतिकत्वात् पाङ्क्तत्वम्। अतो मनआदिपूर्वोक्तसमुदायोऽपि पञ्चत्वसंख्याश्रयत्वात् पाङ्क्तः पशुरित्यर्थः। **पाङ्क्तः पुरुषः**। पुरुषस्यापि पाञ्चभौतिकत्वेन पाङ्क्तत्वम्। अतो मनआदिपञ्चकसमुदायोऽपि पञ्चत्वसंख्यासामान्यात् पाङ्क्तः पुरुष एवेति भावः। **पाङ्क्तमिदं सर्वं यदिदं किञ्च**। यदिदं किञ्चिद् दृश्यते लोके, तस्य सर्वस्यापि पाञ्चभौतिकत्वात् पाङ्क्तत्वमित्यर्थः। अतो मनोलक्षणात्मादि (मनआदि) समुदायस्यापि पञ्चत्वसंख्याश्रयत्वेन पाङ्क्तत्वात् पाङ्क्तयज्ञत्वपाङ्क्तपशुत्वपाङ्क्तपुरुषत्वपाङ्क्तसर्वत्वदृष्टिः तत्र कर्तव्येति भावः। एतद्दृष्ट्युपासनस्य फलमाह — **तदिदं सर्वमाप्नोति य एवं वेद**। मनोवाक्प्राणचक्षुश्श्रोत्रलक्षणसमुदायमात्मजायापुत्रवित्तकर्मरूपेण पूर्वोक्तक्रमेण पाङ्क्तयज्ञत्वपाङ्क्तपशुत्वपाङ्क्तपुरुषत्वपाङ्क्तसर्वत्वरूपेण य उपास्ते, स **तदिदं सर्वं** पाङ्क्तशब्दितं निखिलं प्राप्नोतीत्यर्थः ॥ ३—४. ॥

[यत् सप्तान्नानि मेधया तपसाऽजनयत्पितेत्यादिप्रथमखण्डश्लोकाः श्रुत्यैव

---

सोमः' (२-३-३.) इति ऐतरेयारण्यके। **पाङ्क्तः पशुः**। 'पशुषु पञ्चविधं सामोपासीते'ति छान्दोग्ये (२ ६.)। **पाङ्क्तः पुरुषः** ब्रह्मक्षत्रविट्छूद्रसंकरभेदाद्वा; देवब्रह्मक्षत्रविट्छूद्रभेदाद्वेतिरीत्या तत्तत्पाङ्क्तत्व चिन्तनसंभवेऽपि एवं कल्पनप्रयासं विना पाञ्चभौतिकत्वेनैव पाङ्क्तत्वं यथासंभवमुक्तम्।

मुख्यामुख्यसर्वप्राणानां मध्ये वागादयः पञ्च यथोपनिषदन्तरं प्राधान्येनैवं प्रशंसिताः। तत्रापि वाङ्मनःप्राणानां त्रयाणां प्राधान्यं वक्तुं सप्तान्नब्राह्मणमारभ्यते यत् सप्तेति।

(त) [1]कस्मात् तानि न क्षीयन्ते अद्यमानानि सर्वदा।
यो वै तामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन ॥
स देवानपिगच्छति स ऊर्जमुपजीवति। इति श्लोकाः।(१)

**यत् सप्तान्नानि मेधया तपसाऽजनयत् पितेति। मेधया हि तपसाऽजनयत् पिता।**

**एकमस्य साधारणमिति। इदमेवास्य तत् साधारणमन्नम्, यदिदमद्यते। स य एतदुपास्ते,**

1. यस्मात्. शां. मा.

---

व्याख्यास्यन्त इति नेह तन्यते ॥ १ ॥

प्रथमखण्डोदाहृतानेतान् श्लोकान्] श्रुतिः स्वयमेव व्याकरोति **यत् सप्त — पितेति**। अत्र **पितेतीति** इतिकरणपर्यन्तं व्याख्येयप्रतीकग्रहणम्। **मेधया हि तपसाऽजनयत्पितेत्यंशः** तस्य व्याख्यानम्। **पिता** सर्वजनकः परमात्मा **मेधया** ज्ञानरूपेण तपसा सप्तान्नानि अजनयदिति यत्, तदिदमन्नजनकत्वम्, 'तपसा चीयते ब्रह्म', 'यस्य ज्ञानमयं तपः। तस्मादेतत् ब्रह्म नामरूपमन्नञ्च जायते' इति ज्ञानमयेन तपसा नामरूपलक्षणान्नजनकस्य परमात्मनः **हि** प्रसिद्धं खलु। अतः किमत्र व्याख्यातव्यमस्तीति भावः।

**एकमस्य साधारणमितीति** प्रतीकधारणम्। तद्व्याचष्टे **इदमेव — यदिदमद्यते**। **यदिदं** व्रीहियवादिरूपमद्यते, तदिदमेव, **अस्य** भोक्तृवर्गस्य देवपित्रादेः [1]साधारणमन्नमित्यर्थः। साधारणत्वफलमाह **स य एतदुपास्ते —**

1. पित्रादिसाधारणम्। ग.

---

**मेधया ज्ञानरूपेणेति। मेधया तपसे**त्यत्र चकाराभावात्, 'यस्य ज्ञानमयं तप' इति प्रसिद्धया च सामानाधिकरण्यमादृतम्। 'स हीदमन्नं धियाधिया जनयते कर्मभिः' इति वक्ष्यमाणधीकर्मद्वयस्य पदद्वयार्थत्वेऽपि नानुपपत्तिः। प्रायः सप्तान्नब्राह्मणमिदं **ज्योतिरधिकरणटीकायां** यादवप्रकाशमतनिरासच्छलेन व्याख्यातमेव।

अन्नानि सप्त विभज्यन्ते **एकमित्यादिना यश्च** नेत्यन्तेन। अत्र तेष्वित्यध्याहार्यम्। सप्तस्वन्नेषु मध्य इति तदर्थः। **यदिदमद्यत** इत्यत्र आस्तिकनास्तिकसर्वकर्तृकादनस्य विवक्षि-

**न स पाप्मनो व्यावर्तते । मिश्रं ह्येतत् ।**

**द्वे देवानभाजयदिति हुतश्च प्रहुतश्च । तस्माद्देवेभ्यो जुह्वति[1] प्र च जुह्वति ।**

1. जुह्वति च. प्रजुह्वति. पा॰.

---

**व्यावर्तते** । **एतत्** ईदृशं साधारणमन्न देवपित्रादिभ्यः अदत्वा **स य उपास्ते**= यो भुंक्ते, सः पाप्मनो **न व्यावर्तते** = न विमुच्यत इत्यर्थः । तत्र हेतुमाह— **मिश्रं ह्येतत्** । **हि** यस्माद्धेतोः **एतत्** व्रीहियवादिरूपमन्नं **मिश्रं** मिश्रितम्, देवपित्राद्यन्यदीयद्रव्येण संकीर्णम् — साधारणमिति यावत् — अतो देवपित्रा-दिभ्योऽदत्वा भुञ्जानस्य पापमनिवार्यमिति भावः । गीतञ्च भगवता —

" तैर्दत्तानप्रदायैभ्यो यो भुंक्ते स्तेन एव सः ॥
यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
ते त्वघं भुञ्जते पापा ये पचन्त्यात्मकारणात् ॥ " इति ।

तथा च श्रुतिः—"केवलाघो भवति केवलादी" इति । केवलादी देवपित्रादि-भ्योऽदत्वा भुञ्जान इत्यर्थः । तस्माद्देवपित्रादिभ्यो निवेदितं मनुष्येण भोक्तव्य-मित्यर्थः । एवञ्च प्रसिद्धमन्नं मनुष्येषु विनियुज्यत इति फलितार्थः ।

**द्वे देवानभाजयदिति** व्याख्येयम् । तद्व्याचष्टे **हुतश्च प्रहुतश्च** । **तस्मा-द्देवेभ्यो जुह्वति प्र च जुह्वति** । **द्वे देवानभाजयदिति** मन्त्रखण्डेन, ' द्वे अन्ने सृष्ट्वा पिता सर्वस्रष्टा देवान् **असाधारण्येनाभाजयत्** अप्रीणयत्(?)(प्रापयत्?)' इत्यर्थ-

---

त्वात् तत्रास्तिकैरदनार्थं क्रियमाणस्यान्नस्य भगवन्निवेदनवैश्वदेवपञ्चमहायज्ञातिथिपरिजनप्रीणन-पूर्वमेवाद्यमानत्वात् तादृशमदनमुक्तं भवति । **उपास्त** इत्यस्य अन्नसमीप एवोपविष्टो भवतीत्यर्थे, अन्नमन्यस्मै न ददाति, स्वार्थमेव रक्षतीत्यर्थो लभ्यते । तदाह **अदत्वा यो भुङ्क्ते** इति । **स य एतदित्यादि मिश्रं ह्येतदि**त्यन्तं वाक्यं प्रथमान्नेनैव वैश्वदेवपञ्चमहायज्ञाद्युपयुक्तमपि क्रोडीकृतमिति ज्ञापनार्थं प्रवृत्तम् । अन्यथा तस्य प्रकृतानुपयोगात् । अतः वैश्वदेवादिहोमोपयुक्तं

**अथो आहुर्दर्शपूर्णमासाविति । तस्मान्नेष्टियाजुकः स्यात् ।**

---

केन ये अन्ने उक्ते, ते हुतञ्च प्रहुतञ्चेति व्याचक्षत इत्यर्थः । **हुतं** औपासनम्, **प्रहुतम्** अग्निहोत्रादि । यस्माद्धुतप्रहुते देवेभ्यः परमात्मना दत्ते । तस्माद्देवेभ्यः देवानुद्दिश्यैव जुह्वति प्रजुह्वति च । हुतप्रहुते वैदिकाः कुर्वन्तीत्यर्थः । एतस्यैव मन्त्रांशस्य व्याख्यान्तरमाह **अथो आहुर्दर्शपूर्णमासाविति । तस्मान्नेष्टियाजुकः स्यात् ।** **अथो** इति पक्षान्तरोपन्यासे । केचन दर्शपूर्णमासावेव, [1] हुतप्रहुताख्यतया पूर्वपक्षे व्याख्याते, देवान्ने इत्याहुः । यस्माद्दर्शपूर्णमासयोर्देवान्नत्वम्, तस्मात् इष्टयाजुकः[2] तदतिरिक्तकाम्येष्टियजनशीलो न स्यादित्यर्थः । यद्वा — **तस्मात्** दर्शपूर्णमासयोरेव हुतप्रहुततया (?) देवान्नत्वात् तत्र कियत्यप्यपचारे देवाः कुप्येयुरिति **नेष्टियाजुकः स्यात्** दर्शपूर्णमासयोरार्त्विज्यं न कुर्यादित्यर्थः ।

1. हुतप्रहुताख्ये देवान्ने इत्याहुः । ग. 2. याजकः ग.

---

हुतम्, होमव्यतिरिक्तबलिहरणाद्युपयुक्तं प्रहुतमिति नार्थ इति परिकल्प्य स्मार्तश्रौतहोमार्थमेव निष्पाद्यमानान्नपरतया हुतप्रहुतशब्दौ व्याख्याति **हुतमौपासनमि**त्यादिना । **अग्निहोत्रादी**त्यादिपदेन सर्वश्रौतकर्मग्रहणम् । तदर्थं हविरिति प्रकृते विवक्षितम्; अन्नविभजनात् । **दर्शपूर्णमासा**विति नित्यश्रौतमात्रग्रहणम् । पूर्णमासश्च दर्शश्च दर्शपूर्णमासौ । अल्पाच्तरत्वात् दर्शपदस्य पूर्वनिपातः । पूर्णमासः पूर्वमनुष्ठेयः । स आग्नेयोपांशुयाजाग्नीषोमीयत्रयम्; दर्शः आग्नेययाग—ऐन्द्रदधिपयोयागत्रयम् । यागानां षट्त्वेपि पौर्णमास्यमावास्याकालद्वयकर्तव्यसमुदायद्वयाभिप्रायेण द्वित्वेन निर्देशः । नन्वग्निहोत्रज्योतिष्टोमादेर्नित्यस्याग्रहणे न्यूनता; ग्रहणे च द्वित्वहानिरिति चेन्न — आधानाग्निहोत्रपूर्वमेव वैदिकाग्नौ दर्शपूर्णमासयोः कार्यतया ते उक्ते एव । ज्योतिष्टोमस्तु नित्योऽपि न सर्वनियतः; शक्तिविशेषशालिन एव तदावश्यकतायाः स्मरणादित्याशयात् । क्लिष्टगतिसहने चैवं वक्तुं शक्यम् — **दर्शपूर्णमासा**विति द्विविधनित्यान्नग्रहणपरम् । तत्र हि पुरोडाशः सान्नाय्यश्चेति द्रव्यद्वयम् । प्रथममौषधम्, द्वितीयं पशुप्रभवम् । 'सान्नाय्यं वा पशुप्रभवत्वा' दिति जैमिनिसूत्रोक्तरीत्या पशोरपि पशुप्रभवत्वात् पशुबन्धाद्युपयुक्तद्रव्यमपि गृह्यते । औषधमिति च नौषधिपक्वफलभूतद्रव्यमात्रविवक्षा; किंतु ओषधिसंबन्धित्वेन सोमरसस्यापि । तथाच औषधं पुरोडाशसोमरसादि, पशुप्रभवं दधिपयआज्याजादि इति द्वे नित्याङ्गभूते अन्ने देवान् अभाजयदिति । अत्र श्रुतौ द्वे अन्ने इत्यस्यैव दर्शपूर्णमासाविति व्याख्या; न तु हुतप्रहुतपदयोः । एवञ्च भाष्ये **दर्शपूर्णमासयोरेव हुतप्रहुततये**त्यादिनिर्देशः हुतप्रहुतरूपसामान्यशब्दयोर्विशेषेऽत्र पर्यवसानं द्वितीयव्याख्यया

**पशुभ्य एकं प्रायच्छदिति । तत् पयः । पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति । तस्मात् कुमारं जातं घृतं वैवाग्रे[1] प्रलिलेहयन्ति, स्तनं वा नु धापयन्ति । अथ वत्सं जातमाहुरतृणाद इति ।**

1. प्रतिलिलेह्यन्ति. क. प्रतिलेहयन्ति. ग.

---

क्रमप्राप्तं **त्रीण्यात्मनेऽकुरुतेति** मन्त्रं वक्तव्यबाहुल्यादन्ते व्याचिकीर्षुः तदतिक्रम्य तदुत्तरमन्त्रं व्याकर्तुं **पशुभ्य एकं प्रायच्छदिति** प्रतीकं धृत्वा तद्व्याचष्टे – **तत् पयः । पयो ह्येवाग्रे —– अतृणाद इति । तत् पयः । तत्** पशुभ्यो दत्ततया मन्त्रोक्तमन्नं पयो[1]रूपमित्यर्थः । अत एव हि मनुष्याः पशवश्च **अग्रे** प्रथमतः पय एवोपजीवन्तीत्यर्थः । अत्र मनुष्याश्चोपजीवन्तीत्युक्त्या 'पशुभ्य एकं प्रायच्छ' दित्यत्र **पशुशब्दो** द्विपाच्चतुष्पात्साधारणो द्रष्टव्यः **। तस्मात्** पयसो द्विपाच्चतुष्पादन्नत्वादेव जातं कुमारं जातकर्मसंस्कारे **घृतं वैव** पयोविकारं घृतमेव **अग्रे** प्रथमतः **प्रलिलेहयन्ति** आस्वादयन्तीत्यर्थः। लिहेर्धातोर्णिचि द्विर्वचनं छान्दसम् । **स्तनं वा नु धापयन्ति** । जातकर्माद्यकरणे स्तनं वा **धापयन्ति** पाययन्तीत्यर्थः । **नुशब्दः** खल्वर्थे । **अथ वत्सं जातमाहुरतृणाद इति ।**

1. यः क्षीररूपमित्यर्थः । क.

---

दर्श्यत इत्यपि निर्वाहसंभवं मनसिकृत्येति वक्तव्यमेवमेव पाठे । यद्वेति आर्त्विज्यनिषेधपरतया व्याख्यानं प्रथमपक्षेपि नित्यमात्रग्रहणे काम्येष्टिनिरासपरतया व्याख्यानमप्रसक्तमित्याशयेन । स्वरसव्याख्या तु प्रथमैव । **याजुक** इति ताच्छील्ये उकञ् । यजनशील इत्यर्थः । न तु याजक इति । इष्टिपदस्य काम्येष्टिपरत्वं शतपथीये प्रसिद्धमिति च शाङ्करे । अतः पूर्वोक्तरीतौ वा, **हुतं** होमोपयुक्तं **प्रहुतं** प्रसृतमित्यादिवत् प्रशब्दार्थविवक्षया होमानुपयुक्तमित्यर्थे वा नित्यमात्रमेव हुतप्रहुतपदग्राह्यमिति दर्शयितुमेव **तस्मान्नेष्टी**ति काम्यनिषेध इति। **तस्मात्** इत्यस्य नित्यनैमित्तिकयोर्वगमादित्यर्थः ।

**वक्तव्यबाहुल्यादिति**। तत्र परं वक्तव्यबाहुल्यकरणं तदंशस्य प्रकृते प्रधानत्वादिति ध्येयम् तदर्थमेव सप्तान्नब्राह्मणारम्भात् । **यदिदमद्यते** इति कठिनस्यान्नस्य प्रागुक्तत्वात् द्रवद्रव्यसामान्यविवक्षा **पय**श्शब्दे युक्ता । अत एव घृतस्य तोयस्य चोपरिवचनम् । **द्विपाच्चतुष्पादिति** दुग्धमात्राभिप्रायेण । वृक्षादेरपि पयःप्रतिष्ठितत्वस्योपरिकथनात् । **पयः** क्षीरमेव, **वृक्षादेरपि** तेन वर्धयितुमर्हत्वादिति माध्वाः ।

**तस्मिन्त्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेति। पयसि हीदं सर्वं प्रतिष्ठितम्, यच्च प्राणिति यच्च न। तद्यदिदमाहुः संवत्सरं पयसा जुह्वदप पुनर्मृत्युं जयतीति, न तथा विद्यात्। यदहरेव जुहोति, तदहः पुनर्मृत्युमपजयति।**

**एवं [1]विद्वान् सर्वं हि देवेभ्योऽन्नाद्यं प्रयच्छति।**

1. य एवं विद्वान् स सर्वं हि० पा.

---

अथशब्दो वाक्योपक्रमे। पयसः पश्वन्नत्वादेव जातमात्रं वत्सं अतृणाद इति पयोमात्राहार इत्याहुरित्यर्थः। तथा च यवव्रीहितृणाद्यदनायोग्यकालेऽपि पयस एव पशुभिराह्रियमाणत्वात् पयः पश्वन्नमिति युक्तमिति भावः।

**तस्मिन्त्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च ने**ति व्याख्येयग्रहणम्। तद् व्याचष्टे—**पयसि हीदं सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च ने**ति। यत् **प्राणिति** चेष्टते मनुष्यपश्वादिकम्, यच्च न चेष्टते वृक्षादिकम्, तदिदं सर्वं **पयसि प्रतिष्ठितं** पयोधीनजीवनं **हि** प्रसिद्धमित्यर्थः। स्थावरप्रतिष्ठाहेतुभूतजलस्यापि पयश्शब्देन ग्रहणात् स्थावराणामपि पयोन्नकत्वं संभवतीति भावः। **तद्यदिदमाहुः संवत्सरं — न तथा विद्यात्**। संवत्सरं कालं **पयसा जुह्वत्** पयोहोमं कुर्वन् अपमृत्युं जयतीति यदाहुः, तत्पुनस्तथा न विद्यात्। तर्हि कथं ज्ञातव्यमित्यत्राह — **यदहरेव जुहोति तदहः पुनर्मृत्युमपजयति**। [1] यस्मिन्नहनि पयसा जुहोति, तदहर्मात्रसाध्यपयआहुत्यैव तस्मिन्नेवाहनि अपमृत्युं जयतीत्यर्थः। [**अप मृत्यु**शब्दयोर्व्यवधानं छान्दसम्]। एतज्ज्ञानस्य फलमाह — **एवं विद्वान् सर्वं हि देवेभ्योऽन्नाद्यं प्रयच्छति**। **अन्नाद्य**मित्याद्यशब्देन पयआज्यादिकमुच्यते। **एवं विद्वान्** एकाहमात्रसाध्यपयोहोमस्यापमृत्युजयफलकत्वज्ञानवान् यद्यत् **अन्नाद्यं** स्वयमत्ति, तत् सर्वं देवेभ्य एव ददातीत्यर्थः। देवेभ्यस्तद्दानेन यत् फलं लभते, तल्लभत इति भावः।

1. एकाहमात्रसाध्यपयआहुत्यैवापमृत्युं जयतीत्यर्थः। ग.

---

**यदिदमाहु**रिति पक्षः शाङ्करे बहुविवृतोऽस्ति। **मृत्युमपजयती**त्यत्रापमृत्युजय इतिवत् मृत्योरपजय इत्यर्थविवक्षाऽपि प्रागदर्शि।

(त)[1] कस्मात् तानि न क्षीयन्ते अद्यमानानि सर्वदेति।
पुरुषो वा अक्षितिः। स हीदमन्नं पुनःपुनर्जनयते।

1. कस्मात् शां. मा.

---

तस्मात् तानि न क्षीयन्ते अद्यमानानि सर्वदेति व्याख्येयग्रहणम्। अत्र तस्मादितिशब्दार्थं व्याचष्टे — पुरुषो वा अक्षितिः स हीदमन्नं पुनः पुनर्जनयते। वैशब्दोऽवधारणे। अक्षितिः अक्षय[1] इत्यर्थः। यस्मादक्षयः[2] पुरुषः परमात्मा प्रत्यहमन्नानि पुनः पुनः प्राणिकर्मानुसारेण जनयति, तस्माद्धेतोरहरहरद्यमानान्यप्यन्नानि न क्षीयन्त इति मन्त्रार्थ इत्यर्थः।

1. अक्षतः. क. 2. यस्मात् अक्षतः (अक्षितिः?) अक्षयः. क.

---

कस्मात्तानि न क्षीयन्ते इति किंशब्द एव श्रुताविह, माध्यन्दिने च पठ्यते। कस्मादिति प्रश्न इति शाङ्करम्। कस्मात् सुखरूपादिति च माध्वम्। तत् कथं तस्मादिति भाष्यपाठ इति चेत्—अत्रेदं वक्तव्यम्। तस्मादिति श्रुतिपाठोऽस्ति चेत्—अन्वयः समञ्जसः। तथा हि—यत् सप्तान्नानीत्यारब्धं यत्पदं तावत् तत्पदसापेक्षमवतिष्ठते। एकमस्येत्यादिवाक्यानि सप्तान्नानीत्येतत्परिगणनाय प्रवृत्तानि प्रथमवाक्येऽनुप्रविष्टानि। एकं साधारणम्, द्वे देवेभ्यः, त्रीण्यात्मने, पशुभ्य एकमित्येवं सप्तान्नानि यस्मादजनयत् तस्मादिति वा, अजनयदिति यत् तस्मादिति वाऽर्थः। 'यत् पूर्वोऽस्मात् सर्वस्मात्, तस्मात् पुरुषः' इतिवत् यदित्यस्य तस्मादिति प्रतिसंबन्धि। एवञ्च तस्मादित्यस्य नित्यसर्वज्ञपितृजन्यमानत्वादित्यपेक्षितार्थसौलभ्यमपि। अन्यथा तु कस्मात्तानि न क्षीयन्ते इति प्रश्नपरत्वात् श्लोकस्य, श्लोके उपरि समाधानाभावादनौचित्यम्। यत्तु पुरुषो वा अक्षितिरिति ब्राह्मणं तत्समाधानरूपमिति—तन्न युक्तम्—ब्राह्मणनिरपेक्षमेव श्लोकत एव समाधानस्य प्रतिपत्तव्यत्वात्। अन्यथा ब्राह्मणस्य श्लोकव्याख्यानरूपतायाः पूर्वरीतिसिद्धायाः भङ्गप्रसङ्गात्। अतः कस्मादिति पाठेऽपि, कस्मात् तानि न क्षीयन्ते, सर्वपितुर्जनकत्वादेव। स हि पितैव, न तु पुत्रः। अतो न जन्यत इति न क्षीयते, तेन पित्रा जन्यमानत्वादितिरीत्या प्रश्नवाक्यं प्रश्नमुखेन समाधानमेव मनसिकृत्य प्रवृत्तमिति वक्तव्यम्। अन्ततः कस्मादित्यस्य तस्मादित्यत्रैव पर्यवसानमिति तथैव श्रुतिपाठो वाऽस्तु, अर्थो वा सोऽस्तु अन्यथापाठेऽपीति। यद्वा एकमस्येत्यारभ्य, 'कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदे'त्यन्तं प्रश्नवाक्यतया पूर्वमनुसंधाय, यत् सप्तान्नानि मेधया तपसाऽजनयत् पिता तदिति प्रथमवाक्यमुत्तरत्वेनानुसंधेयम्। अथवा यथावदेवानुसंधाय कस्मादित्यतः प्राक् इतोन्यस्मादिति पूरणीयम्। इतोऽन्यस्मात् कस्मात् न क्षीयन्ते, एतस्मादेव न क्षीयन्त इति। एवञ्च भाष्यमर्थसिद्धपठनरूपमिति।

पुरुषो वा अक्षितिरित्यत्र अक्षितिपदस्य बहुव्रीहिवृत्ततया पुंल्लिङ्गस्य परमात्मपर-

**यो वै तामक्षितिं वेदेति । पुरुषो वा अक्षितिः । स हीदमन्नं धिया धिया जनयते कर्मभिः । यद्धैतन्न कुर्यात्, क्षीयेत ह ।**

**सोऽन्नमत्ति प्रतीकेनेति । मुखं प्रतीकं मुखेनेत्येतत् ।**

---

**यो वै तामक्षितिं वेदेति** प्रतीकग्रहणम् । तद्व्याचष्टे — **पुरुषो वा — क्षीयेत ह** । [[1]अत्राक्षितिशब्दार्थः **पुरुषो वै** पुरुष एव । परमात्मैवेत्यर्थः । तस्यैव पुरुषशब्दमुख्यार्थत्वात् । ] **धिया** संकल्पेनेत्यर्थः । उत्पाद्यान्नव्यक्त्य-भिप्रायात्[2] धियाधियेति वीप्सा । स हि पुरुषशब्दितः परमात्मैवेदमन्नं **धिया धिया** = संकल्प्य संकल्प्य [3] **कर्मभिर्जनयते** = प्राणिनां कर्मभिस्सहित-स्सन् जनयते । प्राणिकर्मानुगुणं जनयतीत्यर्थः । अत्र कर्मभिरित्युक्तिरीश्व-रस्य वैषम्यनैर्घृण्यपरिहाराय । "वैषम्यनैर्घृण्ये न सापेक्षत्वा" दिति न्यायादिति भावः । **एतत् अन्नं यद्ध** = यदि हि स परः पितेत्युक्तः [पुनः पुनः] प्रत्यहं न कुर्यात्, अन्नं क्षीयेत ह । अतः प्रत्यहमन्नकरणान्न क्षीयत इति भावः । एतादृश[4]मक्षितिं परं ब्रह्म यो वेदेति मन्त्रार्थ इत्यर्थः ।

"**सोऽन्नमत्ति प्रतीकेने**त्यंशं व्याचष्टे — **मुखं प्रतीकं मुखेनेत्येतत्** । अत्र **मुख**मिति व्याख्यानम्, **प्रतीक**मिति व्याख्येयम् । **मुखेनेत्येतत्** । प्रती-केनेत्यनेन मन्त्रवचनेन मुखेनेत्युक्तं भवतीत्यर्थः । अनुभवमात्रेऽपि अत्तीति प्रयोग-संभवात् मुख्यभोजनप्रतीत्यर्थं मुखेनान्नमत्तीत्युक्तम् । ततश्चान्नादनस्य मुखमात्र-

1. नेदं ग. कोशे. 2. भिप्राया धियेतिवीप्सा. ग. 3. 'अत्र प्रत्यहं पुनः पुनः' इत्यधिकं क. कोशे । 4. एतादृशीमक्षितिं यो वेद. ग.

---

त्वेऽपि **तामक्षिति**मित्यत्र अक्षितिपदस्य स्त्रीलिङ्गतया अक्षितिपुरुषसृष्टिक्रियासमभिहारप्रयुक्ता-मन्नस्याक्षितिमित्यर्थः, स च **क्षीयेतह्रे**त्यापादनमुखेन श्रुत्या दर्शितः । तत्र हेतुभूतं पुरुषस्या-क्षितिकत्वञ्च **पिते**तिपदेन सावधारणेन गमितमित्युक्तमेव ।

**मुख्यभोजने**ति । प्रतीकशब्दस्य मुखरूपार्थे ब्राह्मणेनोक्ते सति मुखं नाम मुख्यता= प्राधान्यमिति परिकल्पनं, प्राधान्येन वेदेत्यन्वयकल्पनञ्च शाङ्करं न ग्राह्यम् - पुरुषवेदनफलत्वे-नान्नादने निर्दिष्टे संवर्गवैश्वानरविद्यादिष्विव परमपुरुषरूपान्नानुभवः फलत्वेन गृह्यते । तत्तु फलं तस्यान्नत्वनिर्देशपूर्वं वक्ष्यत एव, **स ऊर्जमुपजीवती**ति । तद्वदत्रानुभवरूपमदनमुपेक्ष्य साक्षान्मुखकरणकं भक्षणरूपमदनमेव प्रथमं ग्राह्यमिति ज्ञापनाय **प्रतीकेने**तिपदप्रयोगः

**स देवानपिगच्छति स ऊर्जमुपजीवतीति प्रशंसा ॥ २ ॥**

**त्रीण्यात्मनेऽकुरुतेति । मनो वाचं प्राणम् । तान्यात्मनेऽकुरुत ।**

---

साध्यत्वात् मुखेनेत्यस्य वैयर्थ्यं न चोदनीयम् । **स देवानपिगच्छति स ऊर्जमुपजीवतीति** प्रतीकधारणम् । तत् तात्पर्यकथनेन व्याचष्टे — **प्रशंसेति** । **ऊर्जम्** अन्नम् । निरतिशयभोग्यं परमात्मानमित्यर्थः । **प्रशंसा** । [प्रशंसारूप] फलश्रुतिरिति यावत् । अत्र **प्रशंसे**त्येतत् ब्राह्मणवाक्यं **सोऽन्नमत्ती**त्यादिमन्त्रखण्डत्रयस्यापि तात्पर्यकथनरूपम् । तत्र प्रतीकेनेति पदस्य व्याख्येयत्वात् **सोन्नमत्ती**ति खण्डः पृथग्गृहीतः । तत्र सप्तान्नस्रष्टृत्वादिपूर्वोक्तगुणविशिष्टब्रह्मोपासकस्य **सोन्नमत्ती**ति प्रथमखण्डेनैहिकान्नभोक्तृत्वम्, **स देवा**निति द्वितीयखण्डेन सर्वदेवतासायुज्यरूपमामुष्मिकं फलम्, **स ऊर्ज**मिति तृतीयखण्डेन, 'अहमन्नमन्नमदन्तमद्मि' इत्यादिषु परब्रह्मवाचकतया प्रतिपन्नस्यान्नशब्दस्य पर्यायभूत ऊर्ज (ऊर्जमिति?) शब्दः परब्रह्मवाचक इति तदुपजीवनरूपब्रह्मानुभवो मोक्षाख्यं फलमुच्यत इति विवेको द्रष्टव्यः ॥ २ ॥

**त्रीण्यात्मनेऽकुरुतेति** व्याख्येयग्रहणम् । तद्व्याचष्टे – **मनो वाचं प्राणं तान्यात्मनेऽकुरुत** । पूर्वोक्तः पिता सर्वेश्वरः मनोवाक्प्राणरूपाणि त्रीण्यन्नानि **आत्मने** सर्वस्मै जीववर्गाय **अकुरुत** कृतवानित्यर्थः । उक्तञ्च **व्यासार्यै** र्ज्योतिरधिकरणे सप्तान्नब्राह्मणव्याख्यानदशायाम् – "परमात्मनः संकल्पात् देहि(जीव)नामुपजीव्यत्वेनान्नशब्दवाच्यानां सप्तानामुत्पत्तिमुक्त्वा, तत्र प्रसिद्धान्नम्, दर्शपूर्णमासौ, पयश्चेत्यन्नचतुष्टयस्य मानुषदेवतिर्यक्षु विनियोगमुक्त्वा, **त्रीण्यात्मनेऽकुरुते**त्यवशिष्टान्नत्रयस्य सर्व-

---

अङ्गैकदेशमुखरूपार्थविवक्षयेति भावः । न मनसा अत्ति, किंतु केनचित् प्रतीकेनेत्याशयेन **प्रतीक**शब्दप्रयोगः । **प्रशंसे**त्यस्य अविवक्षितवाच्यार्थवाद इत्यर्थमतिव्युदासाय फलश्रुतिरिति व्याख्याय विवृणोति **अत्रे**त्यादिना ।

**आत्मने** इत्यस्य पिता स्वात्मने इत्यर्थशङ्का मा भूदिति **व्यासार्यान्** प्रमाणयति **उक्तञ्चेति** । **पितृ**शब्देन परमात्मग्रहणे मनोवाक्प्राणैः तस्य कार्याभावेन स्वात्मार्थमिति न संभवति । चतुर्मुखग्रहणे अन्नान्तराणि अन्येभ्यः प्रदाय स्वयमेतान्येवान्नानि जग्राहेति वक्तव्यम् । न च चतुर्मुखेन एतान्यद्यन्ते । एतददनं नाम एतेषामुपकरणीकरणमेवेति चेत् – तत् अन्यजीवेष्वप्यविशिष्टम् । दुर्ग्रहश्चात्र चतुर्मुखः, 'पुरुषो वा अक्षिति' रिति तस्य नित्यत्वश्रवणात्

**अन्यत्रमना अभूवम्, नादर्शम्; अन्यत्रमना अभूवम्, नाश्रौषमिति। मनसा ह्येव पश्यति, मनसा शृणोति।**

विधप्रवृत्तिहेतुत्वात् सामान्येन सर्वभोक्तृवर्ग¹शेषमकरोदित्युक्ते"²ति। उक्तं मनोवाक्प्राणानां सर्वजीवसाधारणोपकारकत्वं क्रमेणाह —

**अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति।** अत्र लोकः प्रत्येतीति शेषः। अन्यत्र मनो यस्य सोऽन्यत्रमनाः। मनसो व्यासङ्गदशायामिन्द्रियसंबन्धेऽप्यर्थे विषयानुभवाभावोऽनन्तरास्मरणलिङ्गेनानुभूयत इति भावः। ततः किमित्यत्राह **मनसा ह्येष पश्यति मनसा शृणोति।** मनसो यस्मात् व्यासङ्गदशायां दर्शनश्रवणाभावः, तस्मात् दर्शनश्रवणे मनःकरणके इति

1. विशेषं। क. 2. इत्युक्तमिति वाक्यं समाप्य मनोवाक्प्राणानामिति वाक्यारम्भेण मुद्रणमशुद्धम्। उक्तमित्यारम्भात्। अतः **उक्त्वेति** इति वाक्यसमाप्तिः। **उक्तं मनोवाक्प्राणाना**मिति च उपरितनवाक्यम्।

तस्माज्जीवानां भोग्यत्वेनोपयोगायान्नान्तराणि भोगोपकरणत्वेनोपयोगाय इमानि त्रीणि चाकुरुतेत्यर्थो युक्त इत्याशयः। वाङ्मनःप्राणानामन्नत्वं वाङ्मयध्यानमयजीवनमयामृतवहत्वादपि भवति। 'पानीयं प्राणिनां प्राणाः' इति च दर्शयिष्यते। छान्दोग्ये च, 'अन्नमशितं त्रेधा विधीयते' इत्युपक्रम्य, योऽणिष्ठः तन्मनः, सा वाक्, स प्राण इति पृथीव्यप्तेजोरूपाशितसारतमत्वं विधिष्यैषां त्रयाणामुक्तमिति तद्रीत्याऽप्येतानि अन्नानि।

**नापश्यं नाश्रौष**मिति चक्षुःश्रोत्रमात्रप्रस्तावः पूर्वं तयोरेवाभिः त्रिभिः सह प्रस्तुतत्वात्। तेन पञ्चानां मध्येऽपि द्वयोः कथं त्याग इति शङ्का शमिता भवति। चक्षुश्श्रोत्रयोरपि मनो विना कार्यकरणाक्षमत्वात् मनस्येवान्तर्भाव इति भावः। एवञ्चान्येषां बहिरिन्द्रियाणां तदन्तर्भावो दण्डापूपायितः।

**इन्द्रियसंबन्धेऽप्यर्थे** इति। संबद्धे इति पाठादर्शनात् **अर्थे** इति व्यधिकरणसप्तमी। अर्थानुयोगिकेन्द्रियप्रतियोगिकसंबन्धे सत्यपीत्यर्थः।

**अनन्तरास्मरणलिङ्गेनेति।** ननु विषयानुभवो न जात इति कथमित्याशङ्कायां तत्र प्रमाणोपन्यासोऽयम्। स यदि जातः स्यात्, अनुभूतो विषयोऽनन्तरं स्मर्येत। ज्ञानानां स्वयम्प्रकाशत्वात् विषयानुभवोऽपि प्राक् प्रकाशितः स्मर्येत। अतोऽस्मरणनियमादनुभवाभावोऽनुमीयत इति।

**कामस्संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव। तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति।**

**यः कश्च शब्दो वागेव सा।**

---

भावः। अत्यल्पमिदमुच्यते दर्शनश्रवणे मनःकरणके इति, कामादिकमपि मनःकरणकमित्याह **कामस्संकल्पो — सर्वं मन एव।** **कामः** विषयाभिलाषः, **संकल्पः** व्यवसायः, **विचिकित्सा** सन्देहः, **श्रद्धा** कर्मसु आस्तिक्यबुद्धिः। **अश्रद्धा** तद्विपरीतबुद्धिः, **धृतिः** प्रीतिः, **अधृतिः** अप्रीतिः, **ह्रीः** लज्जा, **धीः** प्रमाणजन्यज्ञानमात्रम्, **भीः** आगामिदुःखशङ्का, एतत् **सर्वं मनः** मनःकरणकमेवेति [1] फलितार्थः। कार्य (र्ये?) करणोपचारात् कामादीनां मन एव प्रधानं साधनमित्युक्तम्। मनसो ज्ञानकरणत्वे हेत्वन्तरमाह — **तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति।** **तस्मात्** मनसो ज्ञानकरणत्वेन सर्वजीवोपकरणत्वादेव **पृष्ठतः** रूपग्रहणयोग्यचक्षुरगोचरेऽपि प्रदेशे वृश्चिकादिनोपस्पृष्टो मनसा **विजानाति** वृश्चिकादीन् अनुमिनोति। अन्यथा तत्र वृश्चिकादिज्ञानं न स्यात्। तस्मादपि हेतोर्मन एव ज्ञानकरणमिति भावः।

एवं मनस आत्मभोगार्थत्वमुक्त्वा वाचस्तदाह — **यः कश्च शब्दो वागेव सा।** परेषां स्वाभिमतार्थज्ञापनाय प्रयुज्यमानो **यः कश्च** सर्वोऽपि शब्दो **वागेव** वागिन्द्रियाधीनोच्चारणकर्मेत्यर्थः। ततश्च शब्दाभिवदनमेव जीवानां वागिन्द्रियसाध्योपकार इति भावः। अत्र सेति स्त्रीलिङ्गनिर्देशो विधेयाभिधायिवाक्छब्दाभिप्रायेण। कार्यकरणोपचारनिर्देशश्च पूर्ववदेव द्रष्टव्यः। अत एव पूर्ववाक्ये कामादीनां मनःपरिणामरूपत्ववादश्च परास्तः। तथासति वैरूप्यप्रसङ्गादित्यलमनेन।

1. मनःकरणकमेवेत्यर्थः। ग.

---

**कामः सङ्कल्प** इत्यादिना बहिरिन्द्रियनिरपेक्षं मनसो बहुत्र करणत्वादपि तस्य प्राधान्यमित्युक्तं भवति। **धीः प्रमाणजन्यज्ञानमात्र**मिति। **टीकायां तु** धीः चिन्तेत्युक्तम्। तदा **तस्मादपि पृष्ठत** इति वाक्येन अनुमानोपन्यासात् प्रमाणजन्यं ज्ञानं तत्र विवक्षितं मन्तव्यम्।

**एषा ह्यन्तमायत्ता ; एषा हि न ।**

**प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत् सर्वं प्राण एव ।**

---

**एषा ह्यन्तमायत्ता ।** एषा वाक् सर्वस्यान्तं सर्वपदार्थानामियत्तामायत्ता प्राप्ता । सर्वेषामियत्तां प्रकाशयितुं शक्नोतीत्यर्थः । **एषा हि न ।** एषा हि वाक् स्वयं **नान्तमायत्ता** अन्यैरपरिच्छिन्नेत्यर्थः । वाक् स्वयमन्यापरिच्छेद्या सती इतरेषां तु परिच्छेदिकेत्यर्थः ।

क्रमप्राप्तं प्राणस्यात्मोपकारकत्वप्रकारमाह — **प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत् सर्वं प्राण एव ।** प्राण एव प्राणनापानन व्याननोदनन-समननाख्य व्यापारैः प्राणापानव्यानोदानसमाननामकस्सन् तद्वृत्तिद्वारा उपकारकः, **अन** इति सामान्यनामकश्चेति यावत् । सूत्रितञ्च — "पञ्चवृत्तिर्मनोवद्व्यपदिश्यते" इति ।

इत्थं हि तदधिकरणम्—मुख्यः प्राणः किं वायुमात्रम्, उत तदीयस्पन्द-नक्रिया, उत वायुरेव कश्चिदवस्थाविशेषमापन्न इति विशये, 'यः प्राणस्स वायुः' इति श्रुतेः वायुमात्रं प्राणः । अथवा उच्छ्वासनिश्वासात्मकवायुक्रियायां प्राण-शब्दप्रसिद्धेः क्रिया वा स्यादिति पूर्वपक्षे प्राप्ते—, "न वायुक्रिये पृथगुपदेशात्" । 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुर्ज्योतिराप' इति वाय्वपेक्षया

---

आयत्तत्वानायत्तत्वयोर्मिथो विरोधात् विषयभेदं दर्शयति **सर्वस्ये**त्यादिना । इन्द्रियरूपा वाक् नित्यानित्योभयरूपशब्दप्रवर्तिका ; अपभ्रंशानपभ्रंशोभयात्मकशब्दप्रवर्तिका; ब्रह्मातिरिक्तविषये अन्तमायत्ता, ब्रह्मविषये तु न पारं गच्छति; यावदर्थं वाचकशब्दाः सन्ति भगवत्कृता इति पदार्था-नामन्तमायत्ता, अथाप्यर्थानामसंख्यत्वात् प्रत्यर्थं वाचकशब्दानामनेकत्वात् प्रतिशब्दं शक्य-लक्ष्यार्थानन्त्याच्च नान्तमायत्तेत्येवमपि भाव्यम् । **अन**इत्यस्य उक्तप्राणादिवृत्तिव्यतिरिक्तनाग-कूर्मादिवृत्तिविशेषमात्रपरत्वे, 'पञ्चवृत्तिर्मनोवद् व्यपदिश्यते' इति सूत्रे पञ्चेत्युपलक्षणं वाच्यम् । तदपेक्षया **अन** इति सामान्यनिर्देश इति निर्वाहो युक्त इत्याशयेनाह **अन इती**ति । कामादीनां मनोधीनत्वात् सर्वं मन एवेति युक्तम्; अपानादीनां प्रथमप्राणरूपता तु कथमिति शङ्काशमनाय **अन** इति सामान्यनिर्देशः । अन एव हि विशेषणभेदविशेषितः प्राणापानादि-र्भवति । स एव मुखनासिकसञ्चार्यत्वरूपविशेषणे प्रशब्दविवक्षिते प्रथमः प्राणः ; नानाविशेषण-शालित्वरूपप्रकर्षे प्रशब्दगृहीते तु सर्वोऽप्यनः प्राणो भवतीति भावः ।

**एतन्मयो वा अयमात्मा ; वाङ्मयो मनोमयः प्राणमयः ॥ ३ ॥**

---

पृथगेव द्रव्योत्पत्तिप्रकरणे व्यपदेशात् न वायुमात्रं तत्क्रिया वा प्राणः । तर्हि किमग्निवद्भूतान्तरम्? नेत्याह — " चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः " । चक्षुरादिवदयं जीवोपकरणविशेषः, न तत्त्वान्तरम् । प्राणसंवादादिषु चक्षुरादिभिः सह प्राणस्य शासनं श्रूयमाणं हि तत्साम्यमवगमयति । तथा मुख्यः प्राण इत्यादिव्यपदेशोऽपि प्राणशब्दितचक्षुरादिसाजात्यमेवावगमयति इत्यर्थः । ननु प्राणस्यापि जीवोपकरणत्वे तद्वदुपकारकक्रिया वक्तव्या ; तदभावात् नोपकरणत्वमित्यत्राह — " अकरणत्वाच्च न दोषस्तथा हि दर्शयति " । **करणं** क्रिया । उपकारकक्रियाराहित्यात् यो दोषः, स न संभवति । शरीरधारणलक्षणोपकारकक्रियां हि श्रुतिरेव दर्शयति, 'अहमेवैतत् पञ्चधाऽऽत्मानं विभज्यैतद्बाणमवष्टभ्य विधारयामि ' इति, 'प्राणेन रक्षन्नपरं कुलाय ' मिति च । नन्वेवं नामभेदाच्च[1] कार्यभेदाच्च प्राणापानादयस्तत्त्वान्तरं स्युः । नेत्युच्यते, " पञ्चवृत्तिर्मनोवद्व्यपदिश्यते " । यथा ' कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धे ' त्यादिवचनात् मन एव कार्यभेदात् यथा (?) कामादिशब्दैर्व्यपदिश्यते, कामादयो न मनसस्तत्त्वान्तरम्— ' एवं प्राणोऽपानो व्यान उदानः समान इत्येतत्सर्वं प्राण एवे ' ति [ वचने प्राणस्यैकस्यैव कार्यभेदात् प्राणापानव्यानोदानादित्व ] वचनान्न तत्त्वान्तरं प्राणापानादयः [[2]इति सिद्धान्तितम् । अत्र ] न च धर्मभूतज्ञानावस्थाविशेषाः कामादयो मनसस्तत्त्वान्तरमेवेति कथं कामादीनां तत्त्वान्तरत्वनिषेध इति वाच्यम् — कामादिरूपज्ञानपरिणामहेतुत्वावस्थस्य मनस एव कामादिशब्दैरभिधानात् । " न तत्त्वान्तरं ' कामस्संकल्प ' इत्यादिवाक्ये कामादिशब्दित"मिति **व्यासार्यैरुक्तत्वात्** । प्रकृतमनुसरामः ।

**एतन्मयो वा अयमात्मा** । वैशब्दः प्रसिद्धौ । **अयमात्मा** = जीवः । **एतन्मय** इत्यस्यार्थमाह — **वाङ्मयो मनोमयः प्राणमयः** । प्राचुर्ये **मयट्** । मनोवाक्प्राणप्रचुर इति यावत् ॥ ३ ॥

1. चकारो नास्ति **शा. शा.** दीपिकायाम् । 2. अस्मिन् क पाठे **पूर्वपक्षे प्राप्ते** इत्यस्य **सिद्धान्तित** मित्यत्रान्वयः । स्वयं किञ्चिदधिकमाशङ्क्य परिहरन्ति **अत्रेत्यादिना** । **अत्र न च इत्यत्र अत्र च न** इति पाठः स्यात् ।

**त्रयो लोका एत एव । वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः ॥ ४ ॥**

**त्रयो वेदा एत एव । वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः ॥ ५ ॥**

**देवाः पितरो मनुष्या एत एव । वागेव देवा मनः पितरः प्राणो मनुष्याः ॥ ६ ॥**

**पिता माता प्रजैत एव । मन एव पिता वाङ् माता प्राणः प्रजा ॥ ७ ॥**

**विज्ञातं विजिज्ञास्यमविज्ञातमेत एव । यत्किञ्च विज्ञातं वाचस्तद्रूपम् । वाग्घि विज्ञाता । वागेवैनं तद्भूत्वाऽवति (८)।**

---

वाङ्मनःप्राणान् सर्वात्मकत्वेन स्तौति — **त्रयो लोका एत एवे**त्यादिना । **त्रयो लोका** इत्यस्य, एतच्छब्दस्य चार्थं स्वयमेव विभज्याह— **वागेवायं** — **असौ लोकः** । **अयं लोकः** पृथिवीलोक इत्यर्थः । **अन्तरिक्षलोकः** भुवर्लोक इत्यर्थः । **असौ लोकः** [1] तदूर्ध्वलोक इत्यर्थः ॥ ४ ॥

**त्रयो वेदा एत एव—वेदः । – मनुष्याः ।** स्पष्टार्थम् ॥ ५-६ ॥

**पिता माता प्रजैत एव — प्रजा । प्रजा** पुत्र इत्यर्थः ॥ ७ ॥

'विज्ञातं विजिज्ञास्यमविज्ञातमेत एवे' ति प्रतिज्ञातं वाङ्मनःप्राणानां विज्ञातादिरूपत्वं क्रमेणोपपादयति खण्डत्रयेण । तत्र प्रथमं वाचो विज्ञातरूपत्वमुपपादयति—**यत्किञ्च विज्ञातं वाचस्तद्रूपम्** । यत् वाग्व्यवहाराद्विज्ञातं भवति, तत् सर्वं वाचो रूपमित्यर्थः । तदेव प्रसिद्धं [ द्वया ] दर्शयति—**वाग्घि विज्ञाता**[2] वाचा विज्ञायमानाः सर्वेपि वागेव हि । तदधीनप्रकाशत्वात् सैवेत्यर्थः । ततश्च किमित्यत्राह— **वागेवैनं तद्भूत्वाऽवति । तत्** वाचा विज्ञायमानं पदार्थजातं **एनं** विज्ञातारं यत् **अवति** रक्षति—उपकरोतीति [3] यावत्—तत् विज्ञायमानं वागेव भूत्वा अवति । वाचा विज्ञायमानेन पदार्थेन य उपकारो भवति, स सर्वोपि वागधीन एव । तस्माद्वाच आत्मोपकारकत्वं सिद्धमिति भावः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ ८ ॥

1. द्युलोक. ग. 2. विज्ञाताः. क. 3. उपकरोति यदिति यावत् । क.

---

**विज्ञातेति** । अयेगतं विज्ञातत्वादिकं करणेष्वारोपितम् । अतः श्रीलिङ्गता । ततः सिद्धमर्थमाह **वाचेति** ।

**यत्किञ्च विजिज्ञास्यम्, मनसस्तद्रूपम् । मनो हि विजिज्ञास्यम् । मन एनं तद् भूत्वाऽवति (९)। यत्किञ्चाविज्ञातं प्राणस्य तद्रूपम् । प्राणो ह्यविज्ञातः । प्राण एनं तद् भूत्वाऽवति ॥ १० ॥**

**तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निः ।**
**तद् यावत्येव वाक्, तावती पृथिवी, तावानयमग्निः ॥ ११ ॥**

---

**यत्किञ्च विजिज्ञास्यं** — अवति । विजिज्ञास्यं विचिन्तनीयमित्यर्थः । यत् चिन्तितं देवादिकमुपकरोति, तद्भूत्वा मन एवोपकरोति । चिन्तितैर्देवादिभिरात्मने क्रियमाण उपकारः तच्चिन्तनकरणभूतमनःप्रयुक्त एवेति भावः ॥ ९ ॥

**यत्किञ्चाविज्ञातं — प्राणो ह्यविज्ञातः** । हि=यस्मात् प्राण इन्द्रियागोचरः, तस्मात् सोऽविज्ञातः । अतः प्राणस्याविज्ञातत्वादविज्ञातमात्मोपकारकं सर्वं वस्तु प्राण एवेति भावः । **प्राण एनं तद्भूत्वाऽवति** । पूर्वसुकृतवशादचिन्तितं यदुपकरोति, तद्भूत्वा प्राण एवोपकरोतीत्यर्थः । प्राणवति **हि** जीवे अदृष्टादिवशादचिन्तितं वस्तूपकरोति, अतस्तदुपकारः प्राणप्रयुक्त इति भावः ॥ १० ॥

एवं प्रशस्य त्रयाणामाधारान् अधिष्ठातॄंश्च दर्शयति — **तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निः । तस्यै** तस्याः । विभक्तिव्यत्ययः छान्दसः । तस्य वागिन्द्रियस्य **पृथिवी शरीरं** आयतनम् । [1]कण्ठादिस्थानाष्टक [रूपजिह्वा?] गोळस्थं पार्थिवांशमाश्रित्य वागिन्द्रियं तिष्ठतीत्यर्थः । **ज्योतीरूपं** ज्योतिर्मयमधिष्ठातृदेवतास्वरूपम् अयमग्निरित्यर्थः । **तद्यावत्येव वाक् तावती पृथिवी तावानयमग्निः** । **तत्** एवं पृथिव्यग्न्योर्वागिन्द्रियं प्रति आधारत्वादधिष्ठातृत्वाच्च **यावती वाक्** यत्र यत्र वागिन्द्रियं वर्तते, **तावती पृथिवी** तत्र तत्र तदधिष्ठानतया पृथिव्यप्यस्ति; **तावानयमग्निः** तदधिष्ठातृतयाऽग्निरप्यस्तीर्थः ॥ ११ ॥

1. जिह्वागोलस्थम्' इत्येतावदेव. ग.

---

**प्राण इन्द्रियागोचर** इति । इन्द्रियागोचरत्वरूपमविज्ञातत्वं वाङ्मनसयोरप्यविशिष्टम् । अतः, 'वाग्घि विज्ञाता' 'मनो हि विजिज्ञास्यम्' इति पूर्वोक्तैकरूप्याय च इन्द्रियागोचरवस्तूपकारप्रयोजकत्वमेवाविज्ञातपदाभिसंहितमिति ध्येयम् ।

**अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसावादित्यः। तद् यावदेव मनस्तावती द्यौस्तावानसावादित्यः । तौ मिथुनँ समैताम्। ततः प्राणोऽजायत। स इन्द्रः। स एषोऽसपत्नः। द्वितीयो वै सपत्नः। नास्य सपत्नो भवति, य एवं वेद ॥ १२ ॥**

**अथैतस्य प्राणस्यापः शरीरं ज्योतीरूपमसौ चन्द्रः। तद् यावानेव प्राणस्तावत्य आपः तावानसौ चन्द्रः।**

---

**अथैतस्य मनसो द्यौः शरीरम्** । इह द्युशब्द आकाशपरः, न तु लोकविशेषपरः ; अनुपपत्तेः। न हि स्वर्गलोक एव मनसोऽधिष्ठानम् ; अन्येषाममनस्कत्वप्रसङ्गात्। द्युशब्दो हि लोकविशेष इव नभोमात्रे च वर्तते ; 'सुरलोको द्योदिवौ द्वे स्त्रिया' मितिवत्, 'द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बर' मिति च त्रिकाण्डोक्तेः। तत्रापि सामर्थ्यात् हृदयाकाशे पर्यवस्यति । हृदयच्छिद्ररूप आकाश आयतनमित्यर्थः । **ज्योतीरूपमसावादित्यः। तद्यावदेव मनस्तावती द्यौस्तावानसावादित्य** इत्यस्य पूर्ववदर्थः। अत्र मनस आदित्याधिष्ठानकत्वमपि श्रुतिप्रामाण्यादभ्युपगन्तव्यमिति द्रष्टव्यम्। **तौ मिथुनं समैताम्। तौ** अग्न्यादित्यौ **मिथुनं समैतां** मिथुनीभावमगच्छताम्। **ततः प्राणोऽजायत।** अस्यायमभिप्रायः—आदित्याधिष्ठेयमनःपूर्विका अग्न्यधिष्ठेयवाक्प्रवृत्तिः। तदुभयपूर्विका पञ्चवृत्तिप्राणाधीना शरीरप्रवृत्तिरिति। **स इन्द्रः। सः** प्राणः **इन्द्रः** परमैश्वर्यशालीत्यर्थः । इन्द्रियान्तरापेक्षया प्राणस्यैश्वरत्वादिति भावः । **स एषोऽसपत्नः।** प्राणः असपत्न इत्यर्थः। प्राणस्यासपत्नत्वं चक्षुरादिषु स्वसदृश [स्व] प्रतिस्पर्धिरहितत्वम्। सपत्नशब्दार्थकथनेन श्रुतिस्तदेव विवृणोति—**द्वितीयो वै सपत्नः**। एवं मनोवाक्प्रवृत्तिपूर्वकशरीरप्रवृत्तिहेतोः प्राणस्येन्द्रत्वासपत्नत्वगुणवेदिनः फलमाह — **नहास्य सपत्नो भवति य एवं वेद**। स्पष्टोऽर्थः ॥ १२ ॥

**अथैतस्य प्राणस्यापः — चन्द्रः**। 'प्राणा वा आपः' इति हि श्रुतिः। 'पानीयं प्राणिनां प्राणा विश्वमेव च तन्मय' मित्यायुर्वेदविदः। अतः प्राणस्य आप एव **आयतनं** आधार इत्यर्थः। चन्द्रो ज्योतीरूपमधिष्ठाता प्राणस्य। अतो यत्र प्राणः, तत्र तदधिष्ठानमापः; अधिष्ठाता चन्द्रश्चास्तीत्यर्थः।

**त एते सर्व एव समाः सर्वेऽनन्ताः । स यो हैतान् अन्तवत उपास्ते, अन्तवन्तँ स लोकं जयति । अथ यो हैतान् अनन्तानुपास्ते, अनन्तँ स लोकं जयति ॥ १३ ॥**

---

**त एते सर्व एव समाः** । **त एते** वाङ्मनःप्राणाः सर्वे **एव समाः** हस्तिमशकादीनां सर्वेषां शरीरेषु समानाः । यथा दीपप्रभा [1] घटगृहप्रासादादिविषमपरिमाणाधारैः असमपरिमाणाऽपि तत्तदाधारवशेन संकोचविकासौ याति, तथा प्राणा अपि मशकमातङ्गादिदेहवशेन तत्तद्देहपरिमाणानुगुणसंकोचविकासौ यान्तीत्यतः प्राणाः सर्वशरीरेषु तत्तच्छरीरपरिमाणत्वेन समा इत्यर्थः । **सर्वेऽनन्ताः** । आनन्त्यञ्च वाङ्मनःप्राणानां आकल्पस्थायित्वात् मनःप्राणवाग्व्यष्टिभेदाच्चेति द्रष्टव्यम् । तस्मात् फलार्थिना आनन्त्येनैवेते मनोवाक्प्राणा उपासनीयाः । अन्तवत्त्वेनोपासने तु न तत्फलप्राप्तिरित्याह **स यो हैतान् अन्तवत उपास्ते—जयति** । **लोकं** फलम् । **अन्तवन्तं लोकं जयति** । उद्दिष्टफलपूर्तिर्न स्यादित्यर्थः । अनन्तं लोकं जयति= उद्दिष्टं फलं पूर्णं प्राप्नोतीत्यर्थः । अत्रानन्तशब्दः चिरकालस्थायित्वाभिप्रायः ।

प्राणपादे हि ' सर्व एव समाः सर्वेऽनन्ताः ' इत्यानन्त्यश्रवणात् प्राणशब्दितानामिन्द्रियाणां विभुत्वमिति पूर्वपक्षे प्राप्ते, " अणवश्च " ति सूत्रेण सिद्धान्तितम् । तत्र, ' तमुत्क्रामन्तं प्राणोऽनूत्क्रामती ' त्यादिषूत्क्रान्त्यादिश्रवणात् [2]परिच्छिन्नत्वे सिद्धे उत्क्रान्त्यादौ पार्श्वस्थैरनुपलभ्यमानत्वादणवश्च प्राणा भवन्ति । ' अनन्तानुपास्ते ' इत्यानन्त्यश्रुतिस्तु दर्शनश्रवणाद्यनन्तकार्यविशिष्टतया तदुपासनविधिपरेति स्थितम् । प्रकृतमनुसरामः ॥ १३ ॥

1. घट गृह प्रासादाधारासमपरिमाणापि. ग.　2. परिमितत्वे. ग.

---

(९६-पु.) **आदित्याधिष्ठानकत्वमपीति** । उक्तं हि **व्यासार्यैः**, " मनःप्राणयोरग्निमादिदेवतान्तरश्रवणेऽपि श्रुतित्वाविशेषादेवमपि संभवतीत्यभ्युपगन्तव्यम् " इति ।

**त एत** इति । उपरि चन्द्रमात्रोक्त्या ततः प्रागत्र अग्न्यादित्यचन्द्राणां ग्रहणमिति न—तेष्वपि अनन्तत्वस्य स्वरूपतोऽभावेन तदधिष्ठेयवाङ्मनःप्राणकार्यानन्त्यमादायैव तस्योपपाद्यतया प्रधानप्रकृतवाङ्मनःप्राणग्रहणस्यैव युक्तत्वादित्याशयेन **वाङ्मनःप्राणा** इति व्याख्यातम् । नन्वत्र त्रयाणामेवानन्त्ये कीर्त्यमाने सर्वेषामिन्द्रियाणामानन्त्यमत्रोक्तमिति प्राणपादे कथमुक्तमिति चेत्—मुख्यप्राणस्येव वाङ्मनसयोरपि आनन्त्यमिष्यते चेत्, अविशेषा-

**स एष संवत्सरः प्रजापतिः षोडशकलः । तस्य रात्रय एव पञ्चदश कलाः; ध्रुवैवास्य षोडशी कला । स रात्रिभिरेव आ च पूर्यतेऽप च क्षीयते । सोऽमावास्याँ रात्रिमेतया षोडश्या कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते । तस्मादेताँ रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्यैतस्या एव देवताया अपचित्यै ॥ १४ ॥**

---

**स एष संवत्सरः — क्षीयते ।** अत्र स एष इति 'सौम्यो वै देवतया पुरुषः' इति श्रवणात् प्राणाधिदेवताभूतः पूर्वोक्तश्चन्द्रः परामृश्यते । अत एव च **स प्रजापतिरि**त्युच्यते । 'चन्द्रमाष्षड्ढोता स ऋतून् कल्पयाती' ति प्रकारेण सर्वर्तुप्रवर्तकतया स एव च **संवत्सर**संज्ञः । स तु **षोडशकलः** । तस्य चन्द्रस्य तत्र **पञ्चदश कलाः, रात्रय एव** रात्रिशब्दितास्तिथय एव । कथं पुनः कलानां तिथित्वमित्यत्राह — **स रात्रिभिरेवा च पूर्यतेऽप च क्षीयत** इति । रात्र्यधीनोपचयापचयवत्त्वात् कलानाम्, कला रात्रय एवेत्युक्तिरौपचारिकी संगच्छत इत्यर्थः । षोडशकलत्वेनोक्तस्य चन्द्रस्य पञ्चदशकलासु रात्र्यधीनोपचयापचयासु कथितासु, षोडशी कला किंरूपेत्यत्राह **ध्रुवैवास्य षोडशी कले**ति । षोडश्याः कलाया नाशाभावाद्ध्रुवत्वमिति द्रष्टव्यम् । **सोमावास्यां—जायते** । **सः** चन्द्रमाः **अमावास्यां रात्रिं** अमावास्यायां रात्रौ **एतया** ध्रुवत्वेन पूर्वोक्तया षोडश्या कलया **सर्वमिदं प्राणभृत्** प्राणिजातमनुप्रविश्य, **ततः** अपरेद्युः प्रातर्जायते इत्यर्थः । **तस्मादेतां रात्रिं प्राणभृतः—अपचित्यै** । तस्मादेतां **रात्रिम्** अमावास्यायां रात्रौ कृकलासस्यापि प्राणिनः प्राणं **न विच्छिन्द्यात्** न हिंस्यात् । यस्य प्राणिनो हिंसा न निषिद्धा स्वल्पदोषा, तादृशस्य प्राणिनोऽपि कृकलासस्य प्राणं न हिंस्यात् । कस्य हेतोः? **एतस्या एव** चन्द्ररूपाया देवतायाः सर्वप्राणिजातप्रविष्टायाः **अपचित्यै** पूजायै । पूजासिद्ध्यर्थमित्यर्थः । इतरथा तदपचारः स्यादिति भावः ॥ १४ ॥

---

दन्येषामपि तद् भवेत् । वक्ष्यते च अश्वलं प्रति याज्ञवल्क्येन, 'अनन्तं वै मनः; अनन्ता विश्वे देवाः' इति सर्वेन्द्रियानन्त्यम् । एतत्सूचनायैव सर्वे इति श्रूयत इत्याशय इति ।

वाङ्मनःप्राणप्रस्तावे प्राणगतेन्द्रत्वासपत्नत्ववेदनफलं प्रागुक्तम् । तथा तद्देवतावेदनविशेषफलं वक्तुमाह **स एष संवत्सर** इति । फलं पुरुषस्य कलाक्षयेऽपि पुनः पूर्तिरिति वक्ष्यते ।

**यो वै स संवत्सरः प्रजापतिः षोडशकलोऽयमेव स योऽयमेवंवित् पुरुषः। तस्य वित्तमेव पञ्चदश कलाः, आत्मैवास्य षोडशी कला। स वित्तेनैव आ च पूर्यतेऽप च क्षीयते। तदेतन्नभ्यं यदयमात्मा, प्रधिर्वित्तम्। तस्माद्यद्यपि सर्वज्यानिं जीयते**

---

षोडशकलचन्द्रविद्याफलमाह **यो वै स संवत्सरः प्रजापतिः—पुरुषः।** [1] अत्रापि **संवत्सर–प्रजापति**शब्दौ पूर्ववच्चन्द्रपरौ। **योऽयमेवंवित् पुरुषः** पूर्वोक्तसंवत्सरत्वप्रजापतित्वादिगुणविशिष्टचन्द्रवेत्ता (वेदिता?), सः **अयमेव** चन्द्र एव भवतीत्यर्थः। कथं चन्द्रो भवतीत्यत्राह — **षोडशकल** इति। यथा चन्द्रः षोडशकलः, एवं तद्वेत्ता (दिता?) पुरुषोऽपि षोडशकलो भवतीत्यर्थः। पुरुषस्य षोडशकलत्वमेवोपपादयति **तस्य वित्तमेव — क्षीयते।** उपचयापचयशालि गवादिवित्तं पञ्चदशकलास्थानीयम्, उपचयापचयशालित्वादेव। **आत्मा** शरीरं तु ध्रुवकलास्थानीयम्; वित्तवदुपचयापचययोः पदेपदे अभावात्। अतः षोडशकलत्वं पुरुषस्य संभवतीत्यर्थः। 'आ च पूर्यते, अप च क्षीयत' इत्यत्र व्यवधानं छान्दसम्। आत्मशब्दितस्य शरीरस्योक्तं ध्रुवकलात्वमेवोपपादयति—**तदेतन्नभ्यं यदयमात्मा प्रधिर्वित्तम्** आत्मा शरीरं **नभ्यम्**। नाभिमर्हतीति नभ्यम्। नाभेः, 'नाभि नभ चे'ति नभादेशः। षोडशकलाविशिष्टचन्द्रवत् वित्तविशिष्टः पुरुषश्चक्रतुल्यः। तत्र शरीरं नाभिस्थानीयमिति यावत्। वित्तं तु प्रधिः परिवारभूतमरनेमिस्थानीयमिति द्रष्टव्यमित्यर्थः। तदेवोपपादयति **तस्माद्यद्यपि सर्वज्यानिं जीयते, आत्मना चेज्जीवति, प्रधिनागादित्येवाहुः। सर्वज्यानिम्** [2]। ज्या वयोहानौ। ज्यानिः नाशः। सर्वस्वनाशो यथा भवति, तथेति यावत्। **जीयते** [3] श्यनि 'ग्रहिज्ये–'ति संप्रसारणम्। नश्यतीत्यर्थः। यस्मात् शरीरवित्ते

1, अत्रापीत्यादि सर्वस्थाने, 'यथा चन्द्रः षोडशकलः, एवं तद्वेत्ता पुरुषोऽपि षोडशकलो भवतीत्यर्थः'। ग. 2. प्रतीति शेषः. क. 3. जीयतेः. क.

---

**ज्यानिं जीयत** इति क्रियाविशेषणत्वात् कर्मता। क्रियाविशेषणानां नपुंसकत्वमिति तार्किकोक्तिः प्रामादिकी; अनियतलिङ्गस्थले सामान्ये नपुंसकं प्रवर्तत इत्याशया ■। कर्मत्वं 'ततोऽन्यत्रापि दृश्यत' इति वचनात्। सर्वज्यान्यभिन्नज्यानिमान् यदि भवेदित्यर्थः।

**आत्मना चेज्जीवति, प्रधिनाऽगादित्येवाऽऽहुः ॥ १५ ॥**

**अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति। सोयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा। कर्मणा पितृलोको**

---

नाभिप्रधिस्थानीये, तस्मादेव हेतोः पुरुषो यद्यपि सर्वज्यानिं जीयते = पुरुषस्य सर्वस्वनाशो यद्यपि भवति—तथापि **आत्मना** शरीरेण **चेज्जीवति**, तदा **प्रधिना** प्रधिस्थानीयेन परिवारभूतेन वित्तेन **अगात्** [1]गतवान्, विनष्ट **इत्येवाहुः** शास्त्रज्ञाः। न तु शरीरेण नष्ट इत्याहुः। अतः शरीरस्य ध्रुवकलात्वमित्यर्थः। अयमभिप्रायः — कान्तारे सर्वस्वापहरणेऽपि शरीरमात्रं जीवति चेत्, सर्वं वित्तमाप्यते[2]। वित्तस्य चन्द्रकलावत् अपक्षयविनाशस्वभावत्वात् विद्यामहिम्ना स्वयमेव पूर्णं भविष्यतीति विद्वांस आहुरिति। अत एव **व्यासार्यैः** तदर्थकथनदशायाम्, "तद्वेदनफलञ्चोक्त" मित्युक्तम्। अतोऽयं सन्दर्भः पूर्वोक्तषोडशकलचन्द्रविद्याफलप्रतिपादनपरो द्रष्टव्यः ॥ १५ ॥

मनोवाक्प्राणानां प्रकारान्तरेणात्मोपकारकत्वं दर्शयितुं पीठिकामारचयति — **अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति।** अथेत्युपकारप्रकारान्तरोपन्यासे। वावशब्दोऽवधारणे। स्पष्टोऽर्थः। **सोऽयं मनुष्यलोकः — कर्मणा।** उक्तेषु त्रिषु लोकेषु अयं मनुष्यलोकः पुत्रेणैव जय्यः प्राप्यः, न कर्मादिनेत्यर्थः। **नाऽन्येन कर्मणेत्यत्र अन्येनेत्यस्य** कर्मणेति विवरणम्। **कर्मणेति** विद्याया अप्युपलक्षणं द्रष्टव्यम्। **कर्मणा पितृलोको**

1. 'अगात् संगतवान् इत्येवाहुः। कान्तारे सर्वहरणेपि —' ग. 2. आप्स्यते षोडशकलपुरुषवेदी. क.

---

प्रधिनेति। चक्रपरिवृत्तौ अरनेमिभागः अंशतोऽपयन्नपि अंशत आयन् ह्यस्ति। न सर्वथा क्षीयते। प्रधिशब्देन प्रपूर्वकधाधातुनिष्पन्नेन पुनः पोषणार्हेण अगादित्यर्थगमनात् वित्ते नष्टेऽपि पुनर्वित्तं भवतीति सिद्ध्यति।

पुत्रेणैवेति। कर्मविद्यासंभरणस्थानभूते मनुष्यलोके चिरजीविनाऽपि स्वायुष्कालात् पश्चात् तत्संभरणं पुत्रेणैव कार्यं भवति। संभृतकर्मविद्याफलं तु स्वयमेव पितृदेवलोकयोर्भोज्यम्। ननु पुत्रनिरपेक्षं स्वयमेव पितृदेवलोकानुभाव्यसर्वफलार्थसंभरणौपयिकं कर्म किञ्चित् कृत्वा भुवि स्थित्वा सर्वं संभरेत् इत्यत्र तादृशं कर्म नास्तीति श्रुतिरेवाह नान्येनेति।

**विद्यया देवलोकः । देवलोको वै लोकानाँ श्रेष्ठः । तस्माद्विद्यां प्रशँसन्ति ॥ १६ ॥**

**अथातस्संप्रत्तिः — यदा प्रैष्यन् मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति । स पुत्रः प्रत्याह — अहं ब्रह्माहं यज्ञोऽहं लोक इति । यद्वै किञ्चानूक्तं तस्य सर्वस्य ब्रह्मेत्येकता ।**

---

**विद्यया देवलोकः** इति । केवलकर्मणा अन्तरिक्षलोकः प्राप्यो भवति । काम्यविद्याविशेषेण देवलोकप्राप्तिर्भवतीत्यर्थः । **देवलोको वै लोकानां श्रेष्ठः । तस्माद्विद्यां प्रशंसन्ति** । अत्र देवलोकशब्दस्य भगवल्लोकपरत्वं [1]विद्याशब्दस्य ब्रह्मविद्यापरत्वमपि स्वारसिकं द्रष्टव्यम् । यतो विद्याया एव [2]श्रेष्ठभूतदेवलोकसाधनत्वम्, अतो विद्यां विद्वांसः **प्रशंसन्ति** स्तुवन्तीत्यर्थः ॥ १६ ॥

मनुष्यलोकस्य पुत्रेण जय्यत्वप्रकारमाह — **अथातस्संप्रत्तिः । संप्रत्तिः** संप्रदानम् । **संप्रत्ति**रिति वक्ष्यमाणस्य कर्मणो नामधेयम् । पुत्रे हि स्वात्मव्यापारसंप्रदानं करोत्यनेन प्रकारेण पिता । तेन संप्रत्तिसंज्ञमिदं कर्म । तत् कस्मिन् काले कर्तव्यमित्यत्राह — **स यदा प्रैष्यन् मन्यते अथ पुत्रमाह** । स पिता **यदा** यस्मिन् काले **प्रैष्यन्मन्यते** अरिष्टदर्शनेन मरिष्यामीति मन्यते, **अथ** तदा **पुत्रमाह**=पुत्रमाहूयाहेत्यर्थः । किमिति? **त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति । स पुत्रः प्रत्याह** = पितुः उक्तामुक्तिं प्रत्युत्तरयति । किमिति? **अहं ब्रह्माऽहं यज्ञोऽहं लोक इति** । अस्यार्थं श्रुतिरेव व्याचष्टे । तत्र **त्वंब्रह्मे**ति पितुः प्रथमवाक्यस्यार्थमाह — **यद्वै किञ्चानूक्तं तस्य सर्वस्य ब्रह्मेत्येकता** । यत्किञ्च **अनूक्तं** अधीतमनधीतञ्च, **तस्य सर्वस्यै**व **ब्रह्मे**त्येतस्मिन् पदे **एकता** एकत्वमित्यर्थः । योऽध्ययनव्यापारो मे कर्तव्य आसीदेतावन्तं कालं वेदविषयः, सः

1. परत्वमपि स्वरसमिति द्रष्टव्यम् ख. ग. 2. श्रेष्ठलोकसाधनत्वम् ख. ग.

---

**अनूक्त**मित्यस्य पित्रधीतमिति नार्थः । अपितु पूर्वपुरुषैरधीतमिति । यद्वा भूतकालो न विवक्षित इति अध्ययनकर्मत्वार्हं सर्वमुच्यते इत्यभिप्रेत्याह **अधीतमनधीतञ्चे**ति । अनुनक्त इत्यत्र अनुनक्तदिति [illegible] ।

**ये वै के च यज्ञास्तेषाँ सर्वेषां यज्ञ इत्येकता। ये वै के च लोकास्तेषाँ सर्वेषाँ लोक इत्येकता। एतावद्वा इदँ सर्वम्। एतन्मा सर्वँ सन्नय-मितोऽभुनजदिति। तस्मात् पुत्रमनुशिष्टं लोक्यमाहुः तस्मादेनमनुशासति।**

---

ब्रह्मशब्दार्थभूतः, इत ऊर्ध्वं त्वं त्वमेव = त्वत्कर्तृकोऽस्त्वित्यर्थः। अथ द्वितीयं **त्वं यज्ञ** इति पितुर्वाक्यं व्याचष्टे – **ये वै के च यज्ञास्तेषां सर्वेषां यज्ञ इत्येकता**। ये यज्ञाः मयाऽनुष्ठिता अननुष्ठिताश्च, ते सर्वे **त्वं यज्ञ** इत्यत्र यज्ञ-शब्दस्यार्थः। ततश्च यो यज्ञादिव्यापारो मया अननुष्ठित एतावन्तं कालम्, मे कर्तव्यः, स यज्ञशब्दार्थस्सर्वोऽपि त्वमेव = त्वदधीनोऽस्त्विति यावत्। अथ **त्वं लोक** इति तृतीयपितृवाक्यस्यार्थमाह – **ये वै के च लोकास्तेषां सर्वेषां लोक इत्येकतेति**। ये के च लोका जिता अजिताश्च, ते सर्वे **लोक**शब्दार्थः। ततश्च ये लोका मया एतावन्तं कालमजिताः जेतव्याश्च, लोकशब्दार्थभूताः ते सर्वे त्वमेव = त्वया साध्या इति **त्वं लोक** इत्यस्यार्थ इति भावः। अतः अहं ब्रह्मे-त्यादिपुत्रवाक्यानामप्येवमेव पित्रुक्तवाक्यत्रयार्थाभ्युपगमोऽर्थ इति च भावः। अथैवं पुत्रं प्रति वक्तुः पितुः तात्पर्यमाह श्रुतिः – **एतावद्वा इदं सर्वमेतन्मा सर्वं सन्नयमितोऽभुनजदिति**। लोके गृहिणां कर्तव्यं सर्वमिदं वेदयज्ञलोकात्मकम् **एतावद्वै** एतावदेव। एतत् सर्वं वेदयज्ञलोकात्मकम् अयं पुत्रः स्वयमेव भूत्वा – स्वासंपादितवेदयज्ञलोकच्छिद्रपूरको भूत्वेति यावत् – इमं भारं स्वात्मनि निधाय, **इतः** अस्माल्लोकात् **मा** मां [1]**अभुनजत्** पालयिष्यति इत्यभिप्रायवान् पिता पुत्राय अन्तकाले एवं ब्रवीतीति शेषः। लङर्थे लङ्। **इतिः** मन्त्रव्याख्या-समाप्तौ। **तस्मात्पुत्रमनुशिष्टं लोक्यमाहुः**। **तस्मात्** = एवं 'त्वं ब्रह्मे' त्यादि-मन्त्रेणोक्तत्वात् एवं पित्राऽनुशिष्टं पुत्रं **लोक्यं** लोकसाधनमाहुः। **तस्मात्** = तथा- तस्य पुत्रस्य लोक्यत्वसिद्धिहेतोः। लोक्यत्वसिद्ध्यर्थमिति यावत्। **एनं** पुत्रमनुशासति। पितर इति शेषः।

1. अभुनक् ग.

**स यदैवंविदस्माल्लोकात् प्रैति, अथैभिरेव प्राणैः सह पुत्रमाविशति। स यद्यनेन किञ्चिदक्ष्णया कृतं भवति, तस्मादेनं सर्वस्मात् पुत्रो मुञ्चति। तस्मात् पुत्रो नाम। स पुत्रेणैवास्मिन् लोके प्रतितिष्ठति।**

---

एवमनुशासनस्य फलमाह — **स यदैवंविदस्माल्लोकात्** — **प्रैति आविशति।** **एवंवित्** एवं पुत्रानुशासनं कृतवान् **सः** पिता यदा असाल्लोकात् **प्रैति** परलोकं गच्छति, **अथ** तदा **एभिरेव** स्वीयैः **प्राणैः** वाङ्मनःप्रभृतिभिः **पुत्रमाविशति** पुत्रो भूत्वा यज्ञादिकमयमेव करोति। एवमनुशिष्टेन पुत्रेण कृतं सर्वं पुण्यं कर्म परलोकगतस्य पितुः स्वानुष्ठितसुकृतवत् उपकारकं भवतीत्यर्थः। किञ्च, **स यद्यनेन—मुञ्चति। तस्मात् पुत्रो नाम। सः** एवमनुशिष्टः पुत्रः—, यदि कदाचित् अनेन पित्रा किञ्चित्कर्तव्यम**क्ष्णया** कोणच्छिद्रतः अन्तरा **अकृतं** न **कृतं** **भवति, तस्मात्** कर्तव्यरूपात् पित्रा अकृताल्लोकप्राप्तिप्रतिबन्ध[1]रूपात् सर्वस्मात् पुत्रो **मुञ्चति** मोचयति। पिता यद्यत् न कृतम्, तत् सर्वं स्वयमनुतिष्ठन् पितुर्न्यूनतां पूरयित्वा तेन पूरणेन त्रायत इति [[2]भावः। **तस्मात् पुत्रो नामेति।** एवमनुशिष्टः पुत्रोऽपि पूर्वोक्तरीत्या पूरणेन पितुस्त्राणात्] पुत्रो नाम भवतीत्यर्थः। ततश्चैवमनुशासनग्रहणं तथाऽनुष्ठानञ्च पुत्रस्य, न केवलं पितुरेवोपकारकम्, किन्तु पुत्रस्यापि, अन्यथा हि तस्य पुत्रत्वसिद्धिरेव न स्यादिति भावः। उपपादितं पुत्रेण मनुष्यलोकजयप्रकारं निगमयति — **स पुत्रेणैवास्मिन् लोके प्रतितिष्ठति। सः** पिता एवंविधेन पुत्रेण, मृतोऽपि सन्, अमृतोऽस्मिन्नेत्र लोके प्रतितिष्ठति। एवमसौ पिता पुत्रेण मनुष्यलोकं जयतीति भावः।

एवं पूर्वप्रतिज्ञातार्थेषु पुत्रेण पितुर्मनुष्यलोकजयप्रकारमुक्त्वा अवशिष्टम्, ‘कर्मणा पितृलोको विद्यया देवलोक’ इत्युक्तमर्थमुपपादयितुं प्रस्तौति—

1. प्रतिबन्धक. ग. 2. नेदं ख. ग. कोशयोः

---

**पुत्रमाविशती**ति न वास्तवावेशविवक्षा। अनुशिष्टपुत्रकृतं स्वकृततुल्यमिति ज्ञापनाय तथोक्तिरिति दर्शयति **एवमनुशिष्टेने**ति। **सर्वस्मात् पुत्र** इति। मुञ्चतेः पुत्रकर्तृकत्वात् मोचयतीत्यर्थ इति ज्ञापनार्थं पुनः पुत्रपदप्रयोगः।

**अथैनमेते देवाः प्राणा अमृता आविशन्ति (१७)। पृथिव्यै चैनमग्नेश्च दैवी वागाविशति। सा वै दैवी वाक्, यया यद्यदेव वदति तत्तद्भवति (१८)। दिवश्चैनमादित्याच्च दैवं मन आविशति। तद्वै दैवं मनो येनानन्द्येव भवत्यथो न शोचति (१९)। अद्भ्यश्चैनं चन्द्रमसश्च दैवं**

---

**अथैनमेते देवाः प्राणा अमृता आविशन्ति।** अथ **एनं** एवं पुत्रे निक्षिप्तभारं परलोकगतं पुण्यविद्याकर्माणं पुरुषम**मृताः** अमोघाः, तत्र हेतुः **देवाः** मानुषेन्द्रियविलक्षणाः प्राणशब्दवाच्या मनआदयः आविशन्तीत्यर्थः ॥ १७ ॥

तदेव प्रपञ्चयति—**पृथिव्यै चैनमग्नेश्च दैवी वागाविशति। पृथिव्यै** चेति चतुर्थी पञ्चम्यर्था। अग्नेरित्यनन्तरदर्शनात्। पृथिव्याश्चाग्नेश्च दैवी वाक् **एनं** परलोकगतं पुरुषमाविशतीत्यर्थः। 'एतस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निः' इति प्रागुक्तेः वाचः पृथिव्यायतनकत्वात् अग्न्यधिष्ठितत्वाच्च ताभ्यां हेतुभ्यां दैवी वागाविशतीति भावः। दैव्या वाचो लक्षणमाह **सा वै दैवी वाक् यया यद्यदेव वदति तत्तद्भवति।** यया वाचा यद्यत् वदति अनुकूलं प्रतिकूलं वा, तत्तद् भवत्येव चेन्नियमेन, सा दैवी वाक्। शापानुग्रहादिसमर्था वाक् दैवीत्यर्थः ॥ १८ ॥

**दिवश्चैनमादित्याच्च दैवं मन आविशति।** 'अथैतस्य मनसो द्यौश्शरीरं ज्योतीरूपमसावादित्यः' इति पूर्वमुक्तत्वात् मनसोऽधिष्ठानभूतायाः **दिवः** आकाशात् अधिष्ठातुरादित्याच्च हेतोरेनं परलोकिनं पुण्यकर्माणं दैवं मन आविशतीत्यर्थः। दैवमनसो लक्षणमाह— **तद्वै दैवं मनो येनाऽऽनन्द्येव भवत्यथो न शोचति।** येन मनसा पुरुषः सदा सुखी भवति, न च शोकं प्राप्नोति, तत् दैवं मनः। अमोघसंकल्पमानन्दैककारणं मनो दैवं मन इत्यर्थः ॥ १९ ॥

**अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति।** 'अथैतस्य प्राणस्यापश्शरीरं ज्योतीरूपमसौ चन्द्रः' इति पूर्वमुक्तत्वात्, अधिष्ठानभूताभ्योऽद्भ्यः,

---

अग्नेरितीति। दिवश्च, अद्भ्यश्चेति अनन्तरदर्शनादित्यपि भाव्यम्।

**प्राण आविशति । स वै दैवः प्राणो यस्सञ्चरँश्चासञ्चरँश्च न व्यथतेऽथो न रिष्यति ।**

**स एवंवित् सर्वेषां भूतानामात्मा भवति यथैषा देवतैवँ स यथैतां देवतां सर्वाणि भूतान्यवन्त्येवँ हैवंविदँ सर्वाणि भूतान्यवन्ति ।**

---

अधिष्ठातुश्चन्द्राच्च हेतोरेनं परलोकिनं दैवः प्राण आविशतीत्यर्थः । तस्य लक्षणमाह **सञ्चरंश्चासंचरंश्च न व्यथते, अथो न रिष्यति ।** अत्र **असञ्चरन्निति** दृष्टान्तार्थम् । यथा असञ्चरन् **न व्यथते** न श्रान्तो भवति, तथा संचरन्नपि यो न व्यथते, **अथो** अपि च न रिष्यति — रिङ् क्षये । न नश्यति, **स वै** स एव **दैवः** प्राण इत्यर्थः । अप्रतिहतगमनादिव्यापारहेतुः हिंसानर्हः प्राणो दैवः प्राण इति भावः । पृथिव्यग्निद्युादित्याप्चन्द्ररूपदेवताप्रसादादेवास्य मनोवाक्प्राणा एवंविधा भवन्तीत्यर्थः ।

एवं जीवोपकरणानां तेषां मनोवाक्प्राणानां परलोके आत्मोपकारकत्वशक्त्यतिशयमुक्त्वा एवंविदः फलमाह **स एवंवित्सर्वेषां भूतानामात्मा भवति, यथैषा देवतैवम् ।** यथा एषा पूर्वोक्ता वागिन्द्रियादिदेवता सर्वेषां भूतानामात्मा भवति, — अत्र वाङ्मनःप्राणदेवतानां सर्वभूतात्मत्वं नाम सर्वभूतान्तर्वर्तिज्ञानतत्प्रेरणसामर्थ्यम् —, एवं **सः** अयमपि भवति, य एवंवित् । प्राणादीनां परलोके आत्मोपकारकत्वशक्त्यतिशयं जानन् सर्वभूतात्मा भवतीत्यर्थः । अत्रैषा **देवते**ति जातावेकवचनम् , पृथिव्यग्न्यादित्यादीनां बहुत्वादिति द्रष्टव्यम् । **स यथैतां देवतां — भूतान्यवन्ति ।** **स यथा** स दृष्टान्तो यथा, एवमेवेदमित्यर्थः । तदेव विवृणोति — **एनामित्यादिना** । एतां वागादिदेवतां यथा सर्वेऽपि जन्तवः अवन्ति,— अव रक्षणगतिकान्त्यादिषु । पूजयन्तीत्यर्थः—, एवंविदं पूर्वोक्तवागाद्युपकारविशेषविदमप्येवमेव सर्वाणि भूतानि पूज-

---

**स यथे**त्यस्य यथाशाङ्करमर्थमाह **स दृष्टान्त** इति । एवमेव प्रायः श्रुतिशैली । अत्र **आत्मा भवती**त्यन्तमेकं वाक्यम् ; **यथैषा देवता, एवं स** इति द्वितीयम् ; **यथैता**मित्यादि तृतीयमित्यपि सुवचम् । **यदु किञ्चे**ति वाक्ये, प्रजानामेतच्छोचनार्थे प्रवृत्तावपि तत् फलमस्य न भवति ; सुखमात्रभागित्वादस्येत्यर्थविवक्षायां पुण्यपापशब्दयोः

**यदु किञ्चेमाः प्रजाः शोचन्त्यमैवासां तद्भवति । पुण्यमेवामुं गच्छति । न ह वै देवान् पापं गच्छति ॥ २० ॥**

**अथातो व्रतमीमाँसा—**

---

यन्तीत्यर्थः । नन्वेवंविदः सर्वभूतप्रेरकत्वे तानि तानि भूतानि तत्तत्पापकर्मसु प्रेरयतस्तस्य तत्पापं प्रसज्येतेत्याशङ्क्याह **यदु किञ्चेमाः प्रजाः शोचन्त्यमैवासां तद्भवति** । [1]**यदु** यस्माद्वागादिदेवतोपासकप्रेरणप्रयुक्तादेव पापाद्धेतोरिमाः **प्रजाः किञ्च** किञ्चन **शोचन्ति, तत्** प्रजाशोकनिमित्तं पापं **आसां** प्रजानामेव **भवति** । **अमा** सह; सद्य इत्यर्थः । 'अमा सह समीपे चे' ति नैघण्टुकाः । न त्वेवंविदः प्रेरयितुरपि तत् पापं भवतीत्यर्थः । तत्र हेतुमाह — **पुण्यमेवामुं गच्छति** । यस्मादमुम् उपासकं पूर्वोक्तगुणविशिष्टवागाद्युपासनप्रयुक्तं पुण्यमेव **गच्छति** प्राप्तम्, तेन च पुण्येनायं पूर्वोक्तवागादिदेवतासायुज्यं प्राप्तः, अतस्तद्देवतावदेव अस्यापि न पापसंबन्धगन्ध इत्यर्थः । दार्ष्टान्तिके उक्तार्थसिद्ध्यर्थं दृष्टान्तं शिक्षयति **न ह वै देवान् पापं गच्छति** । तत्तत्पापकर्मसु प्रवर्तकानामपि इन्द्रियाधिष्ठातृदेवा[2]नां यथा तत् पापं न प्राप्नोति,— तादृशो महिमा हि तेषाम् । अतः — तद्वदेव तद्विदोऽपि तत्सायुज्यं प्राप्तस्य न सर्वभूतप्रेरणकृतपापप्रसक्तिरिति भावः ॥ २० ॥

एवमत्र वाङ्मनःप्राणानां साधारण्येनोपास्यत्वमुक्तम् । तत्र प्राणस्य श्रैष्ठ्य-निर्धारणायाऽऽरभते **अथातो व्रतमीमांसा** । **अथ** अनन्तरम् , **अतः** एतावत्पर्यन्तं सामान्येन वाङ्मनःप्राणानां त्रयाणामप्युपासनस्योक्तत्वात् **व्रतस्य** उपासनात्मकव्रतस्य **मीमांसा** विचारः । प्रवर्तत इति शेषः । एतेषां त्रयाणां मध्ये

1. शोचन्तीत्यस्य शोचयन्तीति विवरणमात्रं ग. कोशे । नान्यत् । 2. देवतानां क.

---

सुखदुःखरूपफलपरत्वं कल्प्यम् । अतो यथाश्रुतार्थरक्षणाय यथावदवतारयति **नन्वेवंविद** इति ।

प्राणादिषु पञ्च प्रथमं प्रस्तुताः । तेषां श्रवणमननध्यानदर्शनोपयुक्तत्वात् । वागिन्द्रियं प्रवचनविधया मननहेतुः । अत एव मननस्थाने, 'नायमात्मा प्रवचनेने' ति प्रवचनोक्तिः । तत्र त्रयो वाङ्मनःप्राणाः विशिष्य गृहीताः अन्नाप्तेजोझितसारत्वादेर्हेतोः । अधीतविद्यः पश्चादन्धो बधिरश्च भवन्नपि वाङ्मनःप्राणान् आन्तमपेक्षते मोक्षोपायानुष्ठानायेति । तद्वेदनफलञ्च देवताविशेषसायुज्यं कीर्तितम् । अथोक्तानुक्तसर्वेन्द्रियापेक्षया मुख्यप्राणस्य श्रैष्ठ्यविषयमुपासन-मुपदेष्टुं तन्निर्धारणायारम्भः **अथात** इति । अश्रान्तव्यापृतत्वात् इन्द्रियव्यापारहेतुत्वाच्च श्रैष्ठ्यमस्य । यद्यपि **व्रतमीमांसे**त्यस्य तत्तत्कृतसंकल्परूपव्रतस्य सत्यत्वासत्यत्वविचार इत्यर्थः

**प्रजापतिर्ह कर्माणि ससृजे। तानि सृष्टान्यन्योन्येनास्पर्धन्त। वदिष्याम्येवाहमिति वाग् दध्रे। द्रक्ष्याम्यहमिति चक्षुः। श्रोष्याम्यहमिति श्रोत्रम्। एवमन्यानि कर्माणि यथाकर्म। तानि मृत्युश्श्रमो भूत्वोपयेमे।**

---

किंविषयकमुपासनं मुख्यतया कर्तव्यमिति विचार्यत इति यावत्। **प्रजापति र्ह कर्माणि ससृजे**। हः प्रसिद्धौ। **प्रजापतिः**श्चतुर्मुखः, प्रजापतिशब्दमुख्यार्थः सर्वेश्वरो वा चतुर्मुखद्वारा, **कर्माणि** कर्मज्ञानेन्द्रियाणि व्यष्टिरूपाणि **ससृजे** सृष्टवानित्यर्थः। **तानि सृष्टान्यन्योन्येनास्पर्धन्त**। एवं सृष्टानि तानि इन्द्रियाणि परस्परं स्वस्वव्यापाराधिक्याभिमानेन स्पर्धां कृतवन्तीत्यर्थः। कथं? **वदिष्याम्येवाहमिति वाग् दध्रे**। [1] धृङ् अवस्थान इति हि धातुः। अहमेव वदिष्यामि, नान्यः कश्चिन्मत्तो वक्तुं समर्थ इति वाक् **दध्रे** अभिमन्यमाना स्थितवतीत्यर्थः। **द्रक्ष्याम्यहमिति — श्रोत्रम्**। स्पष्टोऽर्थः। **एवमन्यानि कर्माणि यथाकर्म**। एवं अहमेव स्प्रक्ष्यामि, अहमेव गृह्णामीत्यादिप्रकारेण अन्यान्यपि **कर्माणि** इन्द्रियाणि **यथाकर्म** यथास्वविषयमभिमन्यमानानि अवस्थितवन्तीत्यर्थः। **तानि मृत्युश्श्रमो भूत्वोपयेमे**। **तानि** एवं दुरभिमानेन अविरतं स्वस्वव्यापारेषु वर्तमानानि वाक्चक्षुरादीनि **मृत्युः** व्यापारनिरोधको देवताविशेषः **श्रमो भूत्वा**

1. धृञ् धारण इति धातुः। नान्यः कश्चित् मत्तो वक्तुं समर्थ इत्यभिमानं दध्रे धृतवती वा एतदनुगुणमुपर्यप्यन्यथा।

---

स्यात्। **वदिष्याम्येवाह**मिति क्रियापदोपर्येवकारश्रवणात्, 'अहं वदिष्याम्येव, न तु कदाचिदुपरंस्ये इति वाक् व्रतं = संकल्पं चकार। श्रमेणावरुद्धत्वाद् भग्नव्रता साऽऽसीत्। एवमन्यान्यपि। सर्वत्रैवकारानुषङ्गात्। प्राणस्तु उच्छ्वासनिश्वासौ निद्राकालेऽपि वर्तयन् सत्यव्रत आसीदिति प्रकरणार्थः। एतदुपासनं **य एवं वेदे**त्युच्यते। एवं ज्वलिष्याम्येवेत्यादावपि यथास्थानमेव एवकारं रक्षित्वा व्रतमेवं मन्तव्यम्। न तु अहमेव ज्वलिष्यामीति — अथापि **तस्मादेकमेव व्रतं चरेत्** इत्यत्र **व्रत**मुपासनमिति वक्ष्यमाणतया तथैवेहाप्युक्तम्। एवकारपरिवर्तनञ्च प्राणाधीने वदनादिव्यापारे स्वमात्राधीनत्वभ्रम एषामासीत्, 'अस्यैव सर्वे रूपमसामे' ति विवेकात् प्रागिति ज्ञापयितुमिति निर्वाह्यम्।

तान्याप्नोत्। तान्याप्त्वा मृत्युरवारुन्धत्। तस्माच्छ्राम्यत्येव वाक्, श्राम्यति चक्षुः, श्राम्यति श्रोत्रम्।

अथेममेव नाप्नोत्, योऽयं मध्यमः प्राणः।

तानि ज्ञातुं दध्रिरे—अयं वै नः श्रेष्ठो यः सञ्चरँश्चासञ्चरँश्च

---

श्रमरूपस्सन्नुपयेमे समीपं प्राप्त इत्यर्थः। तान्याप्नोत्। श्रमरूपो मृत्युः तानि इन्द्रियाणि आप्नोत् प्राप्तवान्। तान्याप्त्वा मृत्युरवारुन्धत्। तानि इन्द्रियाणि आप्त्वा प्राप्य अवारुन्धत् अवरोधं कृतवान्। कार्यासमर्थान्यकरोदित्यर्थः। अत्र उपयेमे आप्नोत् अवारुन्धदिति क्रमोक्तिः, श्रमस्य क्रमाभिवृद्ध्या कार्यासामर्थ्यप्रयोजकताभिप्रायेणेति द्रष्टव्यम्। अत्र प्रत्यक्षं प्रमाणयति—तस्मात् श्राम्यत्येव श्रोत्रम्। श्राम्यति श्रमं प्राप्नोतीत्यर्थः। निरन्तरव्यापारे वागादीनां श्रमप्राप्तिरद्यापि दृश्यमाना पूर्वमप्येवमेव समभवदित्यर्थे ज्ञापिकेत्यर्थः। वागाद्युक्तिः सर्वेन्द्रियोपलक्षणार्था।

अथ विवक्षितं मुख्यप्राणस्य श्रैष्ठ्यं वक्तुं तस्येन्द्रियेभ्यो वैलक्षण्यमाह—अथेममेव नाप्नोद्योऽयं मध्यमः प्राणः। योऽयं प्रसिद्धः मध्यमः देहमध्ये वर्तमानः प्राणः, तमेव, निरन्तरमुच्छ्वासादिव्यापारे वर्तमानमपि वागादीनिव श्रमो नाप्नोदित्यर्थः। अद्यापि हि प्राणस्योच्छ्वासादौ श्रमाभावो दृश्यतेऽत एवेति भावः।

तानि ज्ञातुं दध्रिरे। तानि श्रान्तानि वागादीनीन्द्रियाणि, 'अस्माकं निरन्तरं व्यापारं कुर्वतां मध्ये यं श्रमरूपो मृत्युर्न प्राप्तः, स श्रेष्ठो भविष्यति। अतोऽस्मासु श्रमरहितः कः श्रेष्ठः' इति ज्ञातुं दध्रिरे निश्चयेन प्रवृत्तानीत्यर्थः। 'धृङ् अवस्थाने' इति हि धातुः। अयं वै नः श्रेष्ठो यः—अभवन्। एवं ज्ञातुं प्रवृत्तानीन्द्रियाणि निरन्तरव्यापारेऽप्यश्रमं मुख्यप्राण दृष्ट्वा इति निश्चितवन्तः (न्ति?)। किमिति? अयं वै अयमेव मुख्यप्राणः नः अस्माकं प्राणानां मध्ये श्रेष्ठः।

**न व्यथते, अथो न रिष्यति । हन्तास्यैव सर्वे रूपमसामेति । त एतस्यैव सर्वे रूपमभवन् ।**

यतोऽयं सञ्चरन्नप्यसञ्चरन्निव **न व्यथते** न श्रमं प्राप्नोति । अत्र असञ्चरन्निति दृष्टान्तार्थम् । **अथो**शब्दः अप्यर्थः । **न रिष्यति** न हिंस्यतेऽपि । 'रुष रिष हिंसाया' मिति हि धातुः । **हन्ते**त्यनुरूपप्रधानलाभजे हर्षे । तस्मादयमेवास्माकं श्रेष्ठ इति हेतोरस्यैव मुख्यप्राणस्य सर्वे वयं वागादयो **रूपमसाम** तदधीनप्रवृत्तयो भवेम **इति** इत्येवं निश्चित्य **ते सर्वे** वागादयः **एतस्यैव** मुख्यप्राणस्य **रूपमभवन्** तदधीनवृत्तयोऽभवन्नित्यर्थः ।

अत एव "त इन्द्रियाणी" त्यधिकरणे सर्वेन्द्रियाणां मुख्यप्राणाधीनवृत्तित्वेन वृत्तिवैलक्षण्यान्न मुख्यप्राणस्येन्द्रियान्तर्भाव इत्युक्तम् । तथा हि तत्र किं सर्वे प्राणशब्दनिर्दिष्टा इन्द्रियाणि उत मुख्यप्राणव्यतिरिक्ता एवेति विशये जीवोपकरणत्वाविशेषात् , प्राणशब्दवाच्यत्वाविशेषाच्च मुख्यप्राणाश्चे (मुख्यप्राणोऽन्ये प्राणाश्चे?) न्द्रियाणीति पूर्वपक्षे प्राप्ते — "त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्", "भेदश्रुतेर्वैलक्षण्याच्च" इति सूत्रद्वयेन सिद्धान्तितम् । अयमर्थः — त एव वागादय इन्द्रियाणि; न तु श्रेष्ठप्राणः । ततः (?) श्रेष्ठप्राणादन्यत्रैव = इतरेष्वेव, 'इन्द्रियाणि दशैकञ्चे' तीन्द्रियत्वव्यपदेशात् । किञ्च भेदश्रुतेः = 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इति प्राणापेक्षया इन्द्रियाणां भेदव्यपदेशात् न श्रेष्ठः प्राण इन्द्रियम् । न च तत्रैव 'मनस्सर्वेन्द्रियाणि चे' ति मनसोऽपि भेदव्यपदेशादिन्द्रियत्वाभावः शक्यशङ्कः । 'मनष्षष्ठानीन्द्रियाणि', 'इन्द्रियाणि दशैकञ्च' त्यादीनां मनस इन्द्रियान्तर्भावग्राहकप्रमाणानां परोक्तरीत्या, 'गामग्निं ब्राह्मणञ्चैव त्रीणि तेजांसि न स्पृशे' दित्यत्र अतेजोभ्यां गोब्राह्मणाभ्यां तेजस्संख्यापूरणवत्, 'वेदानध्यापयामास महाभारतपञ्चमा' नित्यादाववेदेन भारतेन वेदसंख्यापूरणवच्च अनिन्द्रियेण मनसेन्द्रियसंख्यापूरकतयाऽन्यथासिद्धत्वेऽपि, 'इन्द्रियाणां मनश्चास्मि' इत्यनन्यथासिद्धप्रमाणसद्भावेन मनस इन्द्रियत्वध्रौव्यात् ; मुख्यप्राणे इन्द्रियत्वग्राहकप्रमाणाभावाच्च । अतः,

---

**रिष हिंसाया**मिति । फलव्यापारयोर्धात्वर्थयोः फलमत्र गृह्यते, हिंसा नाम हिंस्यमानतेति ।

**तस्मादेत एतेनाऽऽख्यायन्ते प्राणा इति ।**

**तेन ह वाव तत्कुलमाचक्षते यस्मिन् कुले भवति, य एवं वेद; य उ हैवंविदा स्पर्धते, अनुशुष्य हैवान्ततो म्रियत इत्यध्यात्मम् ॥ २१ ॥**

**अथाधिदैवतम्—ज्वलिष्याम्येवाहमित्यग्निर्दध्रे, तप्स्याम्यहमित्या-**

---

'प्राणो मनस्सर्वेन्द्रियाणि' इति श्रुतौ प्राणे न गोबलीवर्दन्यायावतारः, मनसि तु तदवतारोऽस्त्येवेति द्रष्टव्यम् । वैलक्षण्याच्च । 'एतस्यैव सर्वे रूपमभवन्' इति चक्षुरादीनां तदधीनप्रवृत्तित्वलक्षणकार्यवैलक्षण्यदर्शनाच्च इन्द्रियेभ्यो भिन्न एव प्राण इति । प्रकृतमनुसरामः ।

· **तस्मादेत एतेनाख्यायन्ते प्राणा इति** । यस्मात् कारणात् वागाद्याः प्राणस्यैव रूपमभवन्, तस्मादेते वागादयः **एतेन** प्राणनाम्नैव प्राणा इत्येवोच्यन्ते । अतो मनोवागाद्यपेक्षया प्राणस्यैव श्रैष्ठ्यमिति स एव मुख्यतयोपास्य इति भावः ।

एवमध्यात्मोपास्यविषयमीमांसां परिसमाप्योपासकस्य फलमाह — **तेन ह वाव तत्कुलमाचक्षते यस्मिन् कुले भवति य एवं वेद** । यः **एवं** पूर्वोक्ताकारेण मुख्यप्राणं वेद, सः यस्मिन् कुले **भवति** [ जायते ] तत् कुलं **तेन वाव** तन्नाम्नैव **ह** प्रसिद्धमाचक्षते; यथा रघुकुलं यदुकुलमिति । कुलश्रेष्ठो भवतीति यावत् । **य उ हैवंविदा स्पर्धते, अनुशुष्य हैवान्ततो म्रियते** । उशब्दोऽवधारणे । हशब्दः प्रसिद्धौ । यः पुमानेवंविदा उक्तगुणविशिष्टप्राणविदा साकं **स्पर्धते**, सः **अनुशुष्यैव** शुष्को भूत्वाऽन्ततः बहुकालेन म्रियते । चिरकालं रोगादिशुष्कशरीरो म्रियते; न सहसेत्यर्थः । ह प्रसिद्धं प्राणोपासनमाहात्म्यमित्यर्थः । **इत्यध्यात्मम्** । प्राणोपासनप्रकार उक्त इति शेषः ॥ २१ ॥

**अथाधिदैवतम्** । उपासनाप्रकार उच्यत इति शेषः । **ज्वलिष्याम्येवाहमित्यग्निर्दध्रे** । अहमेव ज्वलिष्यामि; मत्समः कोपि ज्वलनव्यापारे नास्तीति अग्निर्दध्रे धृतवान्; निश्चित्य निरन्तरज्वलनपरो बभूवेत्यर्थः । **तप्स्याम्यहमित्या-**

---

भवतीति । जातो वर्तत इत्यर्थः । जनिष्यत इति वा

**दित्यो भास्याम्यहमिति चन्द्रमाः । एवमन्या देवता यथादैवतम् । स यथैषां प्राणानां मध्यमः प्राणः, एवमेतासां देवतानां वायुः । म्लोचन्ति ह्यन्या देवताः, न वायुः । सैषाऽनस्तमिता देवता यद्वायुः (२२) । अथैष श्लोको भवति—**

**यतश्चोदेति सूर्योऽस्तं यत्र च गच्छतीति । प्राणाद्वा एष उदेति प्राणेऽस्तमेति ।**

---

**दित्यो भास्याम्यहमिति चन्द्रमाः** । स्पष्टोऽर्थः । **एवमन्या देवता यथादैवतम्** । एवमेवान्याः श्रोत्राद्यभिमानिन्यो दिगादिदेवताः **यथादैवतं** तत्तद्देवतावृत्तिमनतिक्रम्याभिमेनिरे ; तथा निरन्तरं स्वस्वव्यापारपराश्चाभूवन्नित्यर्थः । **स यथैषां — वायुः** । यथा अध्यात्ममितरेषां वागादिप्राणानां मध्ये हृदयमध्यवर्ती **सः** पूर्वोक्तो मुख्यप्राणः श्रेष्ठः, एवमधिदैवतं इतरासामग्निसूर्यादिदेवतानां मध्ये वायुः श्रेष्ठ इत्यर्थः । तत्र हेतुमाह **म्लोचन्ति ह्यन्या देवताः, न वायुः** । इतराः अग्निसूर्याद्याः देवताः **म्लोचन्ति** अस्तं गच्छन्ति; न वायुः; तस्याहोरात्रमेकरूपत्वादिति भावः । **सैषाऽनस्तमिता देवता यद्वायुः** । **यदिति** लिङ्गव्यत्ययश्छान्दसः । यो वायुरित्युच्यते, सैषाऽनस्तमिता देवता । तस्मादधिदैवतं वायुरेव श्रेष्ठत्वेन निर्धारितः पूर्ववदग्निसूर्यादिभिर्दैवतैः । अतः प्राधान्येन स एवोपास्य इति भावः ॥ २२ ॥

उक्तार्थे साक्षितया मन्त्रं पठितुमाह **अथैष श्लोको भवति** । प्रकृतविषयेऽयं श्लोकः संवादको भवतीत्यर्थः । 'यतश्चोदेति सूर्योऽस्तं यत्र च गच्छती' त्यमुं पठितं श्लोकार्धं स्वयमेव व्याचष्टे श्रुतिः **प्राणाद्वा एष उदेति प्राणेऽस्तमेति** । अत्र **प्राण**शब्दार्थो वायुः । वायुप्रेरणाधीनत्वादादित्यादिगतेः अग्न्यादित्यादेरुदयास्तमयौ वाय्वधीनावित्यतो वायोरेव भवन्तीति भावः । श्लोकस्योत्तरार्धमाह —

---

**यथादैवतमिति** । देवताया इदं **दैवतम्** । तत्तद्देवताकार्यम् । तदाह **तत्तद्देवतावृत्तिमिति** ।

वायोर्वा एष उदेति, वायावस्तमेति इति वक्तव्ये, **प्राणाद्वा** इत्याद्युक्तिः प्राणनापानन-रूपस्य विधास्यमानस्यानुगुण्याय । प्राणाभिन्नत्वाद् वायोः प्राणे कथिते वायुरेव कथितो भवतीति ।

तं देवाश्चक्रिरे धर्मं स एवाद्य स उ श्व इति ।

यद्वा एतेऽमुर्ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति । तस्मादेकमेव व्रतं चरेत्—प्राण्याच्चैवापान्याच्च, नेन्मा पाप्मा मृत्युराप्नुवदिति । यद्यु चरेत् समापिपयिषेत् ।

---

**तं देवाश्चक्रिरे धर्मं स एवाद्य स उ श्व इति** । तं प्राणमेव **देवाः** अध्यात्मं वागादयः, अधिदैवतमग्न्यादित्यादयश्च **धर्मं चक्रिरे** । प्राणोपासनमेव श्रेयस्साधनमिति निश्चितवन्तः । अतः स एव धर्मोऽद्याप्यनुष्ठेयः ; श्वोऽप्यनुष्ठेयः इति । अमुमेव मन्त्रोत्तरार्धस्यार्थं स्वयं संक्षिप्याह श्रुतिः **यद्वा एतेऽमुर्ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति** । वैशब्दोऽवधारणे । यत् यस्मात् कारणादेते वागाद्या देवाः **अमुर्हि** अमुष्मिन् काले मुख्यप्राण**मध्रियन्त** उपास्यत्वेनावधृतवन्तः, तस्मादद्यापि **तदेव कुर्वन्ति** मुख्यप्राणोपासनमेवानुतिष्ठन्तीत्यर्थः ।

एवं श्रुतिः मीमांसां परिसमाप्य तत्र निश्चितमर्थमाह **तस्मादेकमेव व्रतं चरेत्** । तस्मात् उक्तहेतुभिः **एकं व्रतं** मुख्यप्राणोपासनमेव **चरेत्** आचरेत् अनुतिष्ठेदित्यर्थः । एवं मुख्यप्राणोपासनप्रकारं विधाय अथ तत्प्रकारमाह **प्राण्याच्च — नेन्मा पाप्मा मृत्युराप्नुवदिति** । उक्तप्राणोपासनारम्भसमये **प्राण्यादपान्याच्चैव** । प्राणनापानने = रेचकपूरके उपासनाङ्गतया कुर्यात् । किमर्थम्? **मां** माम् — इच्छब्दोऽवधारणे — **पाप्मा** पापरूपः श्रमरूपो **मृत्युर्नाप्नुवत्** । शत्रन्तोऽयं शब्दः । मां नावाप्नुयादिति बुद्ध्या इत्यर्थः । अन्यथा प्राणनापाननाकरणे श्रमेण व्यापारोपरोधः स्यादिति भावः । किञ्च, **यद्यु चरेत् समापिपयिषेत्** । यदीदं प्रथममुपक्रमेत, तर्हि **समापिपयिषेत्**

---

**तं देवा** इत्यादेरिहोक्तार्थो विमृश्यः । प्राणापानव्यापारात्मकरेचकपूरकरूपं धर्ममेव सर्वे देवाश्चक्रिरे । स एव सर्वदा धर्मः । अतो वदनादीन्द्रियव्यापारं परित्यज्य प्राणवृत्तिं परं चरेत् । तदुच्यते एकमेव व्रतं चरेत् प्राण्याच्चैवापान्याच्चेति । यत्तु प्राणोपासनं काम्यम्, तत् प्रागेवोक्तम् । इह तु परविद्यानिष्ठस्याप्यपेक्षितं प्राणायामरूपमङ्गमुच्यते इति एवमर्थसंभवेऽपि, 'एतस्यै देवतायै सायुज्यं सलोकतां जयती' ति फलं श्रूयमाणमुपासनजन्यतया स्वीकर्तुमुचितमिति उपासनपरतया व्याख्यातमिति । नेदित्यव्ययं परिभये । मृत्युराप्नुयादिति भिया प्राण्यादिति शाङ्करम् ।

**तेनो एतस्यै देवतायै सायुज्यँ सलोकतां जयति ॥ २३ ॥**

इति तृतीयाध्याये पञ्चमं ब्राह्मणम् ।

**३—६.**

**त्रयं वा इदं नाम रूपं कर्म ।**

**तेषां नाम्नाम् — वागित्येतदेषामुक्थम् । अतो हि सर्वाणि नामान्युत्तिष्ठन्ति । एतदेषाँ साम ; एतद्धि सर्वैर्नामभिस्समम् ।**

---

समापनं कर्तुमिच्छेत् । समापनं कुर्यादेव । मध्ये विच्छेदं न कुर्यादित्यर्थः । एवं साङ्गमुपासनमुक्त्वाऽथ तत्फलमाह – **तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति** । उशब्दोऽवधारणे । **एतस्यै देवतायै** इति विभक्तिव्यत्ययः छान्दसः । एतस्या देवताया इत्यर्थः । **तेन** अनुष्ठितेन प्राणोपासनेन **एतस्याः** प्राणदेवताया एव सायुज्यं समानगुणयोगं सालोक्यञ्च प्राप्नोतीत्यर्थः ॥ २३ ॥ ३-५.

**त्रयं वा इदं नाम रूपं कर्म** । चेतनाचेतनात्मके जगति **इदं** परिदृश्यमानमचेतनात्मकं जगत् त्रयमेव । किं तत्? नाम रूपं कर्मेति—अत्र **कर्म** जीवीयपुण्यपापात्मकमचेतनस्य नामरूपात्मकपरिणामे कारणम् । तत्कार्यं देवमनुष्यादिनामरूपात्मकं जगत्—एतत्त्रितयरूपमेवेत्यर्थः । **तेषां नाम्नां वागित्येतदेषामुक्थम्** । **तेषां** नामरूपकर्मणां मध्ये **एषां नाम्नां** देवो मनुष्यो घटः पट इत्यादीनां **वागिति**-शब्दनिर्दिष्टमेतत् वागिन्द्रियात्मकं वस्तु **उक्थम्** उत्पादनमित्यर्थः । तदेव प्रदर्शयति **अतो हि सर्वाणि नामान्युत्तिष्ठन्ति** । वागिन्द्रियाधीनत्वात् सर्वेषां नाम्नामभिलापस्य **अतः** वागिन्द्रियादेव सर्वाणि **नामान्युत्तिष्ठन्ति** जायन्त इति **हि** प्रसिद्धमित्यर्थः । कथमेकेन वागिन्द्रियेणानन्तनामाभिलाप इत्यत्राह **एतदेषां साम** । वागित्येतदेषां सर्वेषां नाम्नां सामेत्यर्थः। तत्र **साम**पदार्थं विवृण्वन्नेतदुपपादयति **एतद्धि सर्वैर्नामभिः समम्** । कार्यानुरूपत्वात् कारणस्य **सर्वैर्नामभिस्समं** सर्वनामानुरूपमेव वागिन्द्रिय-

---

एवमुपकरणवशीकरणोपदेशः कर्माधीननामरूपभाजः उक्तमुख्यप्राणसंसृष्टतया प्राणशब्दव्यपदेश्यस्य जीवस्य नामरूपादिच्छन्नत्वविमुक्त्यर्थं इति ज्ञापयितुमनन्तरब्राह्मणम् । अत्र **प्राण**-**शब्दो** जीवपरः, यथा चतुर्थद्वितीयब्राह्मणे । **अयं प्राणश्छन्नः** इत्यत्र **अयमिति** पदमपि **अयमात्मे**त्यत्रेव जीवात्मपरतां ज्ञापयतीति न परमात्मपरः ।

**एतदेषां ब्रह्म ; एतद्धि सर्वाणि नामानि बिभर्ति ॥ १ ॥**

**अथ रूपाणाम् — चक्षुरित्येतदेषामुक्थम् ; अतो हि सर्वाणि रूपाण्युत्तिष्ठन्ति । एतदेषाँ साम ; एतद्धि सर्वैरूपैः समम् । एतदेषां ब्रह्म ; एतद्धि सर्वाणि रूपाणि बिभर्ति ॥ २ ॥**

**अथ कर्मणाम्—आत्मेत्येतदेषामुक्थम् ; अतो हि सर्वाणि कर्माण्युत्तिष्ठन्ति । एतदेषाँ साम ; एतद्धि सर्वैः कर्मभिस्समम् । एतदेषां ब्रह्म ; एतद्धि सर्वाणि कर्माणि बिभर्ति ।**

---

मित्यर्थः । समत्वमेव सामत्वमिति भावः । **एतदेषां ब्रह्म** । वागित्येतदेषां नाम्नां ब्रह्मेत्यर्थः । ब्रह्मशब्दार्थविवरणेनैतदुपपादयति **एतद्धि सर्वाणि नामानि बिभर्ति ।** भर्तृत्वमेव बृहत्त्वरूपं ब्रह्मत्वम् । अतः एतद्वागिन्द्रियं सर्वाणि नामानि बिभर्तीति भर्तृत्वाद्वागिन्द्रियस्य नामानि प्रति ब्रह्मत्वमिति भावः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ १ ॥

**अथ रूपाणां चक्षुरित्येतदेषामुक्थम्** । पूर्ववदर्थः । **अतो हि सर्वाणि रूपाण्युत्तिष्ठन्ति** । रूपज्ञानस्य चक्षुरुत्थितत्वात् रूपस्य चक्षुरुत्थितत्वव्यवहार औपचारिकः । **एतदेषां सामैतद्धि सर्वैरूपैस्समम्** । सर्वरूपज्ञानजनकत्वाच्चक्षुषः कारणस्य कार्यसमत्वोक्तिः । **एतदेषां ब्रह्मैतद्धि सर्वाणि रूपाणि बिभर्ति ।** चक्षुषो रूपज्ञानभर्तृत्वाद्रूपभरणं तज्ज्ञानद्वारा द्रष्टव्यम् ॥ २ ॥

**अथ कर्मणाम् — बिभर्ति** । अत्र **कर्म**शब्दः पुण्यपापात्मककर्मपर इति पूर्वमुक्तम् । **आत्म**शब्दो जीवपरः । आत्मन एव पुण्यपापानि जायन्ते । स च सर्वपुण्यपापकर्तृत्वानुरूपः, सर्वपुण्यपापानां भर्ता चेत्यर्थः । पदानामर्थः स्पष्टः ।

---

**बिभर्ती**त्यस्य पोषयतीत्यर्थे बृंहणत्वरूपं ब्रह्मत्वमुक्तं भवेत् ।

**रूपाणां चक्षु**रिति । ननु नामरूपान्तर्गतं रूपं हि द्रव्यगतावस्थाविशेषः ; न तु नीलादिवर्णः । तत् कथं तत्र चक्षुष एव कारणत्वोक्तिः । उच्यते । भूम्ना चक्षुर्ग्राह्यत्वादर्थानां चक्षुषो विशिष्योक्तिः । सर्वेन्द्रियोपलक्षणमेवेदमिति । **जीवपर** इति । देहप्राणसंघातापन्नात्मपर इत्यर्थ. । अत्र कण्डिकात्रयेऽपि **नाम्नां रूपाणां कर्मणा**मित्येतदनन्तरम् , निरूपणं क्रियत इति शेषपरणं युक्तमिव । **एषा**मिति पदस्य पश्चात् पठनात् ।

तदेवम् आत्मनोऽमृतत्वात् तत्सिद्धये नामरूपविपरीतकर्मभ्यः सर्वमुपसंहृत्य प्राणनापानन-व्यापृतप्राणसहायः प्रयतेतेत्युक्तं भवति।

**तदेतत्त्रयँ सदेकमयमात्मा। आत्मो एकस्सन्नेतत्त्रयम्। तदेतदमृतँ सत्येन च्छन्नम्। प्राणो वा अमृतम्, नामरूपे सत्यम्। ताभ्यामयं प्राणश्छन्नः॥ ३॥**

इति तृतीयाध्याये षष्ठं ब्राह्मणम्। इति बृहदारण्यके तृतीयोऽध्यायः॥

---

**तदेतत्त्रयं सदेकमयमात्मा।** एवं नामरूपकर्मात्मकस्याचेतनस्य चेतनभूतात् प्रत्यगात्मनो जीवादत्यन्तवैलक्षण्येऽपि नामरूपकर्मलक्षणं तदेतत्त्रितयम् **एकं सदय-मात्मा।** नामरूपकर्माण्यात्मना अगृहीतविवेकानि पामराणामेकमिव भवन्तीत्यर्थः। तदेतत् द्रढयति **आत्मो एकस्सन्नेतत्त्रयम्।** विवेकिनां त्रयमेतत् अविवेकिनामेक आत्मैवेत्यर्थः। उशब्दोऽवधारणे। अविवेकिभिरात्मा पृथक् कुतो न ज्ञायत इत्यत्राह **तदेतदमृतं सत्येनच्छन्नम्।** तदेतद्वाक्यम् अमृतसत्यशब्द विवरणपूर्वकं श्रुतिः स्वयमेव व्याचष्टे **प्राणो वा अमृतम् नामरूपे सत्यम् ताभ्यामयं प्राणश्छन्नः।** अत्र प्राणशब्दो बद्धजीवपरः। 'प्राणो वा आशाया भूयान्' इत्यादौ प्राणशब्दस्य बद्धजीवे प्रयोगात्। **सत्यं** पुण्यपापकर्मफलमित्यर्थः। 'ऋतं पिबन्तौ' वित्यादौ सत्यापरपर्यायस्य ऋतशब्दस्य कर्मफले प्रयोगदर्शनात्। कर्मफलं ह्यवश्यम्भावितया सत्यं भवितुमर्हति। तथा च पूर्ववाक्ये **अमृत**मित्युक्तः **प्राणः** जीवात्मा। **सत्य-**शब्दोक्ते च नामरूपे। **ताभ्यां** नामरूपाभ्यामयं प्राणशब्दितः प्रत्यगात्मा छन्नः। अतः पामरैर्न ज्ञायते विविच्येति पूर्ववाक्यार्थः; ततश्च कर्मफलभूताभ्यां नामरूपाभ्यां संपिण्डितोऽयं **स्वयममृतः** अपहतपाप्मत्वादिमानेवात्मा व्याधकुलसंवर्धितराजकुमारवत् ताभ्यां प्रच्छन्नो भवति, नामरूपाभ्यामगृहीतविवेको भवतीति पूर्ववाक्यफलितार्थ इत्यर्थः।

केचित्तु—प्राणशब्दविवृतोऽयममृतशब्दः निरुपाधिकामृतप्राणशब्दवाच्य-परमात्मपरः। तथा च स एव नामरूपात्मकजगतोऽन्तर्यामी सन् जीवकर्मफलतया स्वसृष्टाभ्यां ताभ्यां स्वयमेव विशिष्टो भवतीति वाक्यार्थः। ततश्च 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत' इति आदौ प्रपञ्चितस्य परमात्मन एव सर्वनामरूपभाक्त्वमित्यस्यार्थस्य निगमनपरोऽयं **ताभ्यामयं प्राणश्छन्न** इत्यन्तसन्दर्भ इत्यपि वदन्ति॥ ३॥ ३-६.

इति बृहदारण्यकप्रकाशिकायां तृतीयोऽध्यायः।

## अथ चतुर्थोऽध्यायः ।

### ४—१.

**दृप्तबालाकिर्हानूचानो गार्ग्य आस । स होवाचाजातशत्रुं काश्यम्, ब्रह्म ते ब्रवाणीति । स होवाचाजातशत्रुः, सहस्रमेतस्यां वाचि दद्मो**

---

तृतीयाध्याये, 'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्युपक्षिप्तस्य ब्रह्मणो जगत्कारणत्वस्य प्रपञ्चनाय अयमध्याय आरभ्यते — **दृप्तबालाकिर्हानूचानो गार्ग्य आस** । **दृप्तः** गर्विष्ठः बलाकस्यापत्यं बालाकिः । दृप्तश्चासौ बालाकिश्चेति स तथोक्तः । हशब्दो वृत्तार्थस्मरणे । **अनूचानः** अङ्गाध्यायी । 'एकां शाखामधीत्य श्रोत्रियोऽङ्गाध्याय्यनूचानः' इति स्मृतेः । अतश्च अमीमांसितवेदार्थ इत्युक्तं भवति । **गार्ग्यः** गोत्रतो गार्ग्यः । **आस** बभूव । **स होवाचाजातशत्रुं काश्यं ब्रह्म ते ब्रवाणीति** । **सः** बालाकिः **काश्यं** काशीराजमजातशत्रुनामानं प्राप्य, ब्रह्म ते ब्रवाणीत्युक्तवानित्यर्थः । महाब्रह्मवित्समीपे अयं बालः कथं वक्तुमुत्सहत इत्याश्चर्यार्थो हशब्दः । **स होवाचाजातशत्रुः** । अत्र हशब्देन तस्य राज्ञो ब्रह्मवित्सु वात्सल्यातिशयं दर्शयति श्रुतिः । तामेवाजातशत्रोरुक्तिं दर्शयन्ती तयैव

---

श्रीः । अथ विद्याविशेषः प्रस्तूयते । अयं बालाक्यजातशत्रुसंवादः **कौषीतक्युपनिषद्यपि** श्रूयते । तत्रत्यं प्रकरणमेव जगद्वाचित्वाधिकरणविषयः । 'यस्यवैतत् कर्म', 'अथास्मिन् प्राण एवैकधा भवती' त्यादिवाक्यानां तत्रैव सत्त्वात् । परं जीवातिरिक्तपरमात्मप्रतिबोधनार्थं प्रकरणमित्युपपादनाय अत्रत्यं वाक्यमपि गृहीतं सूत्रे, "अपिचैवमेके" इति । एतद्विद्याफलञ्च स्वाराज्यमिति तत्रैवोक्तम् । एतद्विद्योपास्यस्य, **सत्यस्य सत्यमिति** रहस्यनाम अत्रैवोक्तम्; न तत्र । अत्र आदित्यादिपर्याया द्वादशैव; तत्र षोडश, स्तनयित्नुपुरुष—प्राज्ञ—दक्षिणाक्षिपुरुष — सव्याक्षिपुरुषपर्यायाश्चत्वारोऽधिका इति । तत्र आदित्यपर्याये स्थितं **बृहन् पाण्डरवासाः** इति अत्र चन्द्रपर्याय एव श्रूयते । एवमन्यान्योऽपीषद् भेदो भाव्यः ।

**दृप्तबालाकिर्हेति** । समासकरणात् तथैव तस्य प्रसिद्धिरपीति सूच्यत इव ।

**जनको जनक इति वै जना धावन्तीति ॥ १ ॥**

**स होवाच गार्ग्यो य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठाः, अतिष्ठास्सर्वेषां भूतानां मूर्धा राजेति वा अहमेतमुपास इति ।**

---

तेषु तद्वात्सल्यं सहेतुकं विशदयति **सहस्रमेतस्यां वाचि दद्मो जनको जनक इति वै जना धावन्ति** । ब्रह्म ते ब्रवाणीत्येतस्यामेव वाचि निमित्ते गवां सहस्रं प्रयच्छामः । मत्समीपमागत्य, ब्रह्म ते उपदिशामीति शब्दप्रयोक्ता कोऽप्येतावन्तं कालं न दृष्टः । सर्वेऽपि हि ब्रह्मविदः, जनक एव ब्रह्म शुश्रूषुः जनक एव दाता चेति जनकस्य समीपमेव धावन्ति । भवांस्तु मत्समीपमागत्य ब्रह्म ते ब्रवाणीत्युक्तवान् । अतोऽनेनैव वाक्येन तोषितोऽहं गवां सहस्रम्, ब्रवाणीति वाङ्मात्रेणैव प्रयच्छामीति भावः ॥ १ ॥

**स होवाच गार्ग्यो य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपासे इति** । **आदित्ये** आदित्यमण्डले योऽयं पुरुषोऽभिमानितया वर्तते, **एतमेव** आदित्यपुरुषमहमुपासे । तदेव ब्रह्म । अतः त्वमपि तद्ब्रह्मोपास्स्वेति भावः । **स होवाचाजातशत्रुर्मामैतस्मिन् संवदिष्ठाः** । स चाजातशत्रुरेतच्छ्रुत्वोवाच । किमिति ? **मा** मां प्रति **एतस्मिन्** आदित्यपुरुषविषये **मा संवदिष्ठाः** संवादं मा कार्षीः । अज्ञाते हि विषये संवादः कर्तव्यः, अयं तु ज्ञात एवेति भावः । कथमित्यत्राह **अतिष्ठाः सर्वेषां भूतानां मूर्धा राजेति वा अहमेतमुपास** इति । वैशब्दोऽवधारणे ; प्रसिद्धौ वा । अतीत्य=सर्वानतीत्य तिष्ठतीत्यतिष्ठाः—'आतो

---

**जनकोजनक** इतीदमपि अजातशत्रुवाक्यमेव ; न श्रुतिवाक्यम् । अन्त एव **इति**-शब्दात् । द्विरुक्तिः, जनक एव श्रोता, जनक एव दाता, जनक एव शुश्रूषुः, जनक एव दित्सुरेति बुद्ध्येत्यर्थविवक्षयेति शाङ्करम् । तदेवेह प्रकारान्तरेणोक्तम् **जनक एव ब्रह्मशुश्रूषुः, जनक एव दाता** चेति ।

**अज्ञाते हि विषये** इति । नन्वज्ञाते विषये विवादो वादश्च भवतः । संवादस्तु ज्ञाते एव । समित्येकीभावे । स्वकीयवादेनैकीभूतो वादः संवादः । यत्रैकोक्तं शृण्वन् परः तथैवेत्यङ्गीकृत्य वदति, तत्र संवादः । 'मा मैतस्मिन् संवादयिष्ठाः' इति णिजन्तं कौषीतकिवाक्ये । मामेतद्विषये त्वद्वाक्यैकीभूतवादवन्तं त्वं न कृतवान् । त्वदुक्तं मया न संमन्यत इति तदर्थः । अत्रापि स एवाऽऽशयः । मां प्रति त्वं संवादवान् नाभूः । मदभिमतवाक्यसमानार्थकवाक्यवान् नाभूरिति वाच्यार्थात् । **सर्वथा मा** इति निषेधः, न विषयस्य ज्ञातत्वात् । **किंतु विपरीतत्वादिति चेत्**—

**स य एतमेवमुपास्तेऽतिष्ठास्सर्वेषां भूतानां मूर्धा राजा भवति ॥ २ ॥**

मनिन्' इत्यादिना विच्प्रत्ययः—, सर्वेषां भूतानाञ्च मूर्द्धेव **मूर्धा** श्रेष्ठः, दीप्तिगुणोपेतत्वाद्**राजा इति** एतैरतिष्ठात्वसर्वभूतमूर्धत्वराजत्वै[1]र्विशिष्टमेतम् आदित्यपुरुषमहमुपासे। अतोऽस्य ज्ञातत्वादस्मिन् विषये संवादो न कर्तव्य इत्यर्थः। स्वोक्तस्य फलं दर्शयति **स य एतमेवमुपास्ते अतिष्ठाः सर्वेषां भूतानां मूर्धा राजा भवति**। **य एत**मादित्य**मेव**मुक्तगुणविशिष्टमुपास्ते, सोऽयमतिष्ठात्वादिगुणविशिष्टादित्योपासनवशात् स्वयमपि तत्क्रतुन्यायात् तद्गुणयुक्तो भवतीति भावः। अत्र 'य एषोऽन्तरादित्ये' इत्याद्युक्तः परमात्मोच्यत इति न भ्रमितव्यम्; उत्तरखण्डेषु वक्ष्यमाणाब्रह्मभूतचन्द्रादिपुरुषसहपाठात्, अस्य परब्रह्मत्वनिषेधाच्चेति द्रष्टव्यम् ॥ २ ॥

1. अयं ख. पाठ.। अन्यत्र 'राजत्वविशिष्ट' इति।

सत्यम्। अत्रायमाशयः—दृप्तत्वाद् बालाकिः, 'राजाऽस्माभिः प्रतिबोधनीयः' इति मत्वा समेयाय। प्रबुद्धो राजा न तेनोपदेष्टव्यो बभूव। अथापि, 'अस्यार्थेषु एवं वा तथा वेति संदेहः स्यात्; असत्संवादेन स व्यपैतु' इति स्वयं मन्वानो बालाकिः, ब्रह्म ते ब्रवाणीति बभाण। अथ तं प्रति राजोक्तिः **सहस्रमित्यादिः**। तत्र द्वेधा आशयः सुवचः—एतस्यां वाचि सहस्रं दद्मः। न तु उपरि ब्रह्मवादार्थे किञ्चिद् देयं भविष्यति। वक्ष्यमाणस्य अब्रह्मवादत्वात्। अथापि ब्रह्मैवास्मभ्यं वक्तव्यमिति विवेकस्ते जात इति संतुष्यामः। जनकतुल्यप्रभावाश्च वयं, त्वद्वादो न ब्रह्मवाद इति जानीमः। इत्येका अर्थव्यञ्जना। इमां व्यञ्जनां विज्ञाय किञ्चित्संकुचितप्रवृत्तिर्बालाकिः, '**एतमेवाहं ब्रह्मोपासे**। भवत एतस्मिन् संमतिरस्ति न वेति न जाने' इति हीनस्वर एवक्कारं प्रयुज्य दर्शयामास। नाहं संमन्ये इत्येव चोपरि नृप आहेति। इत्थमेका रीतिः। अन्या तु अभिज्ञोऽप्यज्ञवत्तत्त्वज्ञः अदृप्तः अभिज्ञमुदारञ्च जनकं प्रशंसन्, 'अतादृशस्य मे सविधमेत्य ब्रह्म विवक्षवे भवते एतद्वागर्थमपि सहस्रं गवां ददामि; यथावद् वचनानन्तरमधिकमपि' इति विनीत एव वत्सलः प्रत्युवाच। दृप्तस्तु बालाकिः, 'यद्यत् अस्माभिर्वक्ष्यते, तत् सर्वमयमविशदमेवैतावत् ज्ञातवान् स्यात्। तस्मादसत्संवादेन एतद्गृहीतांशप्रामाण्याऽऽधायकेन अयं तृप्तो भवतु' इति अहङ्कृत्योवाच, **एतमेवाहं ब्रह्मोपासे** इति। निरूपकोऽहं यस्मादेतमेव ब्रह्मत्वेनोपासे, तस्मात् ते अयं ब्रह्म न वेति संदेहलेशोऽपि मा भूत् इत्याशयः, तत्र राजा प्रत्युवाच, यदि विषय ईषद्वा अज्ञातः संदिग्धः स्यात्, तर्हि भवता संवादः कर्तव्यो भवेत्। मया त्वेतदुपासनमपि सुज्ञातम्; एतत्फलादिकमपि। भवतैवायमज्ञात इति भवत्संवाद इह न भवतीति। इयमेव द्वितीया रीतिः द्वयोर्वास्तवचित्तवृत्तिप्रदर्शिका भाष्ये आद्रियते। तथा च राज्ञः स्वानवगतत्वाभिमानं बालाकिगतमपनेतुं यद् वक्तव्यम्, तद् दर्शितम् **अज्ञात** इत्यादिनेति।

**स होवाच गार्ग्यो य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा बृहन् पाण्डरवासास्सोमो राजेति वा अहमेतमुपास इति, स य एतमेवमुपास्ते अहरहर्ह सुतः प्रसुतो भवति ; नास्यान्नं क्षीयते ॥ ३ ॥**

---

**स होवाच गार्ग्यो य एवासौ चन्द्रे**—। **चन्द्रे** चन्द्रमण्डले तदभिमानितया वर्तते यश्चन्द्रपुरुषः, तमहमुपास इति गार्ग्य आहेत्यर्थः। **स होवाचाजातशत्रुः**। पूर्ववत्। **बृहन् पाण्डरवासास्सोमो राजेति वा अहमेतमुपास इति**। **बृहन्** महान्, **पाण्डरं** शुक्लं किरणरूपं **वासः** वस्त्रं जगदाच्छादकं यस्य स पाण्डरवासाः,—उक्तञ्च व्यासार्यैः, "पाण्डरैरंशुभिर्जगदाच्छादकत्वात् पाण्डरवासस्त्व" मिति—, **सोमो राजा** यज्ञसाधनभूतसोमराजशब्दितलताविशेषेणैकशब्दाभिलापप्रयुक्ततदभेदेन वा, चन्द्रस्यौषधीशतया सोमराजशब्दवाच्यलताविशेषलक्षणौषधीनामीशतया ईशेशितव्यसंबन्धकृताभेदेन वा सोमो राजेति चैतैर्गुणैः **एतं** चन्द्रपुरुषं अहमुपास इत्यर्थः। सोमलताऽभिन्नत्वेनोपासनफलमाह **स य एतमेवमुपास्ते अहरहर्ह सुतः प्रसुतो भवति ; नास्यान्नं क्षीयते**। **सुत** इति **प्रसुत** इति च कर्तरि क्तः। उक्तगुणविशिष्टचन्द्रोपासकः अहरहः सोमं सुतवानित्यर्थः। प्रकृतिविकृतिभेदविवक्षया सुतः प्रसुत इत्युक्तिः। चन्द्रस्यान्नभूतसोमशब्दवाच्यलतात्मकत्वेनोपास्यत्वादन्नाक्षयत्वफलकथनमपि तत्क्रतुन्यायात् युज्यत इति द्रष्टव्यम्।

केचित्तु—चन्द्रस्य स्वत एव देवान्नभूतसोमत्वात् तत्त्वेनोपासनस्यैवान्नक्षयाभावः फलम्। तस्यैव सोमराजशब्दमुख्यार्थत्वेनोपासनस्य यथार्थ्यसंभवे सोमराजशब्दवाच्यलताऽभेदोपासनाभ्युपगमस्य व्यर्थत्वात्। न चैवं **सुतः प्रसुत** इति

---

**गार्ग्य आहे**त्यर्थ इति। अत्र सर्वत्र **आहे**ति पदं तिङन्तप्रतिरूपकमव्ययम् उवाचेत्येतदर्थपरं ग्राह्यम्।

**सुतः प्रसुतः** इति सोमलताभिषवरूपफलानुरोधेन उपासनेपि सोमलताविषयत्वं संपादयन् अर्थमाह **यज्ञे**ति। लताविशेषेणैकेति। लताविशेषवाचकशब्दरूपशब्देत्यर्थः। **कर्तरि क्त** इति। शाङ्करे तु सोम इति पदमध्याहृत्य अस्य सोमः अहरहरभिषुतो भवतीत्युक्तम्। **प्रकृती**ति। प्रकृतियाग विकृतियागरूपभिन्नभिन्नसोमयागाभिप्रायेणेत्यर्थः।

स होवाच गार्ग्यो य एवासौ विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठाः, तेजस्वीति वा अहमेतमुपास इति, स य एतमेवमुपास्ते तेजस्वी ह भवति, तेजस्विनी हास्य प्रजा भवति ॥ ४ ॥

स होवाच गार्ग्यो य एवायमाकाशे पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठाः, पूर्णमप्रवर्तीति वा अहमेतमुपास इति, स य एतमेवमुपास्ते पूर्यते ह प्रजया पशुभिर्नास्यास्माल्लोकात् प्रजोद्वर्तते ॥ ५ ॥

स होवाच गार्ग्यो य एवायं वायौ पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठाः, इन्द्रो वैकुण्ठो-

---

सोमसुत्त्वरूपफलकीर्तनमयुक्तमिति वाच्यम्; चन्द्रस्य सोमराजत्वेनोपासने सोमराजशब्दवाच्यलताविशेषस्वरूपफलकीर्तने विरोधाभावात्; एकशब्दरूषितत्वरूपप्रत्यासत्तिसत्त्वादिति वदन्ति ॥ ३ ॥

**स होवाच गार्ग्यो य एवासौ विद्युति —**। विद्युति विद्यमानस्य विद्युदभिमानिनः पुरुषस्य तेजस्वित्वेन गुणेनोपासने स्वयमपि तेजस्वी भवति तदुपासकः; तत्पुत्रश्च तेजस्वी भवतीत्यर्थः। प्रजा पुत्र इत्यर्थः। शिष्टं स्पष्टम् ॥ ४ ॥

**स होवाच गार्ग्यो य एवायमाकाशे—**। आकाशे विद्यमानस्य तदभिमानिनः पुरुषस्य पूर्णत्वविशिष्टोपासनायाः फलं प्रजया पशुभिश्च परिपूर्णत्वम्; पूर्णत्वप्रयुक्त निर्व्यापारत्वलक्षणाप्रवर्तित्वविशेषणविशिष्टोपासनायाः फलं प्रजासन्तानाविच्छित्तिरिति विभागो द्रष्टव्यः। **उद्वर्तते**। उद्वर्तनम् = लोकान्तरगमनम्। अस्योपासकस्य प्रजा अस्माल्लोकाल्लोकान्तरं न गच्छतीत्यर्थः। शिष्टं स्पष्टम् ॥ ५ ॥

**स होवाच गार्ग्यो य एवायं वायौ —**। **इन्द्रः** परमैश्वर्यशाली। 'योऽयं पवते एष देवानां गृहाः' इति वायोर्देवलोकत्वप्रसिद्धेः देवलोकत्वसामा-

---

लोकान्तरं न गच्छतीति। पुराकालादिति कौषीतक्युक्तमिह घटनीयम्। संतानाविच्छित्तिरिति पूर्वं वर्णनात्, 'संतानमनुत्पाद्य' इत्यपि पुराकालादित्यत्राभिमतम्। छान्दोग्ये (३-१२-९.) पूर्णत्वाप्रवर्तित्वोपासनाफलं मोक्ष इत्युक्तम्।

ऽपराजिता सेनेति वा अहमेतमुपास इति, स य एतमेवमुपास्ते जिष्णु-र्हापराजिष्णुर्भवत्यन्यतस्त्यजायी ॥ ६ ॥

स होवाच गार्ग्यो य एवायमग्नौ पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा विषासहिरिति वा अहमेतमुपास इति, स य एतमेवमुपास्ते विषासहिर्ह भवति विषासहिर्हास्य प्रजा भवति ॥ ७ ॥

स होवाच गार्ग्यो य एवायमप्सु पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति, स य एतमेवमुपास्ते प्रतिरूपँ हैवैनमुपगच्छति नाप्रतिरूपमथो प्रतिरूपोऽस्माज्जायते ॥ ८ ॥

---

न्याद्वैकुण्ठत्वम्। मरुतां गणत्वप्रसिद्धेरपराजिता सेनेत्युक्तिः। **जिष्णुः** जयशीलः। **अपराजिष्णुः** अपराजितः। **अन्यतस्त्यजायी** = अन्यतो भवाः अन्यतस्त्याः। शत्रव इति यावत्। तान् जेतुं शीलमस्येत्यन्यतस्त्यजायी। 'सुप्यजाता' विति णिनिः। शिष्टं स्पष्टम् ॥ ६ ॥

**स होवाच गार्ग्यो य एवायमग्नौ** —। **विषासहिः** सोढुमशक्यः शत्रुभिरित्यर्थः। मर्षणशील इति वाऽर्थः। विषासहित्वगुणविशिष्टाग्निपुरुषोपासनेन स उपासकः, तत्पुत्रश्च विषासहिर्भवतीत्यर्थः। शिष्टं स्पष्टम् ॥ ७ ॥

**स होवाच गार्ग्यो य एवायमप्सु** —। **प्रतिरूपः** प्रतिबिम्बः। सदृशप्रतिबिम्बोपेतत्वादपाम् अप्पुरुषस्य प्रतिरूपत्वविशिष्टोपासनोपपत्तिः। यथाक्रतुन्यायादेव तदुपासकस्येदं फलम्। **प्रतिरूपं** सदृशमेव कलत्रादिकम् **एनम्** उपासक**मुपगच्छति** प्राप्नोति। नाप्रतिरूपं प्राप्नोति। **प्रतिरूपः** सदृश एव पुत्रोऽस्माज्जायत इत्यर्थः। शिष्टं स्पष्टम् ॥ ८ ॥

स होवाच गार्ग्यो य एवायमादर्शे पुरुष एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा रोचिष्णुरिति वा अहमेतमुपास इति, स य एतमेवमुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्रजा भवत्यथो यैः संनिगच्छति सर्वांस्तानतिरोचते ॥ ९ ॥

स होवाच गार्ग्यो य एवायं यन्तं पश्चाच्छब्दोऽनूदेत्येतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा असुरिति वा अहमेतमुपास इति, स य एतमेवमुपास्ते सर्वं हैवास्मिन् लोक आयुरेति नैनं पुरा कालात् प्राणो जहाति ॥ १० ॥

स होवाच गार्ग्यो य एवायं दिक्षु पुरुष एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठाः द्वितीयोऽनपग इति वा अहमेत-

---

स होवाच गार्ग्यो य एवायमादर्शे—। आदर्शे विद्यमानस्य प्रतिबिम्ब-पुरुषस्य **रोचिष्णुत्वं** भ्राजमानत्वम् — स्वच्छत्वमिति यावत् । तदुपासकः, तत्पुत्रश्च रोचिष्णुरेव भवति । **अथो** अपि च **यैः संनिगच्छति** यैः संगतो भवति, सर्वांस्तान् **अतिरोचते** अतिक्रम्य प्रकाशते । समानानामुत्तमश्लोको भव-तीत्यर्थः । शिष्टं स्पष्टम् ॥ ९ ॥

**स होवाच गार्ग्यो य एवायं यन्तं पश्चाच्छब्दोऽनूदेति—। यन्तं** गच्छन्तम् । शब्दमिति अस्य विशेष्यं ग्राह्यम्; उत्तरत्र शब्द इति श्रवणात् । तथाच अग्रे गच्छन्तं शब्दं **अनु** अनुसृत्य यः **पश्चाच्छब्दः** प्रतिध्वनि**रुदेति** मूलशब्दानन्तरमुदेति, तस्य प्रतिशब्दस्य प्राणकार्यत्वात् असुरित्यहमुपास इत्यर्थः । **असुः** प्राणः । प्राणजन्य इति यावत् । तदुपासनस्य फलम्, अस्मिन् लोके उपासकशरीरे यावदायुः प्राप्तम्, तत् सर्वमेति । **नैनं पुरा कालात् प्राणो जहाति** । आयुरन्तकालात् पुरा एनमुपासकमपमृत्युर्न प्राप्नोतीत्यर्थः । शिष्टं स्पष्टम् ॥ १० ॥

**स होवाच गार्ग्यो य एवायं दिक्षु** — । दिशां युग्मभूताश्विदेवत्य-त्वात् द्वितीयत्वेनोपासनोपपत्तिः । **द्वितीयत्वं** द्वितीयवत्त्वम् । **अनपगत्वम्** अवि-

मुपास इति, स य एतमेवमुपास्ते द्वितीयवान् ह भवति नास्माद्गण-
श्छिद्यते ॥ ११ ॥

स होवाच गार्ग्यो य एवायं छायामयः पुरुष एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा मृत्युरिति वा अहमेत-मुपास इति, स य एतमेवमुपास्ते सर्वं हैवास्मिन् लोक आयुरेति नैनं पुरा कालान्मृत्युरागच्छति ॥ १२ ॥

स होवाच गार्ग्यो य एवायमात्मनि पुरुष एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा आत्मन्वीति वा अहमेत-मुपास इति, स य एतमेवमुपास्ते आत्मन्वी ह भवत्यात्मन्विनी हास्य प्रजा भवति ।

---

च्छिन्नत्वम् । दिशां परस्परविच्छेदाभावादनपगत्वोपपत्तिः । तत्र द्वितीयत्वेनोपासना-फलं द्वितीयवानिति । सहायवानित्यर्थः । अविच्छिन्नत्वलक्षणानपगत्वोपासनाफलं **नास्माद्गणश्छिद्यत** इति । गणः बन्धुवर्गः अस्मात् उपासकान्न च्छिद्यते नान्तरितो भवति । उपासकस्य बन्धुविश्लेषो न भवतीत्यर्थः । शिष्टं स्पष्टम् ॥ ११ ॥

**स होवाच गार्ग्यो य एवायं छायामयः** — । **छायामयः पुरुषः** पुरुषच्छाया । तस्याः मृत्युवन्नीलत्वाद्भयङ्करत्वाच्च मृत्युत्वेनोपासनोपपत्तिः । शिष्टं पूर्ववत् स्पष्टम् ॥ १२ ॥

**स होवाच गार्ग्यो य एवायमात्मनि** — । **आत्मनि** शरीरादौ अह-मित्यभिमन्यमानो यः पुरुषः, तं स्वात्मानं वै एव ब्रह्मोपास इत्यर्थः । अथवा प्रत्यगात्मसामान्यं ब्रह्मोपास इत्यर्थः । **आत्मन्वी** आत्मन्शब्दात् प्रशंसायां छान्दसो विनिप्रत्ययः । प्रशस्तशरीरेन्द्रियादिमत्त्वाज्जीवस्यात्मन्वित्वोपपत्तिः । एवं तदुपासकः, तत्पुत्रश्च आत्मन्वी भवतीत्यर्थः । शिष्टं स्पष्टम् ।

---

**आत्मनि पुरुष** इति । शारीरः पुरुष इति कौषीतकिश्रुतेः आत्मपदं शरीरपरमिति स्पष्टम् ।

**स ह तूष्णीमास गार्ग्यः ॥ १३ ॥ स होवाचाजातशत्रुरेतावन्नू ३ इति । एतावद्धीति । नैतावता विदितं भवतीति । स होवाच गार्ग्य उप त्वा यानीति ॥ १४ ॥ स होवाचाजातशत्रुः प्रतिलोमं वै[1] तद्यद्ब्राह्मणः**

1. चैतत्. शां.

---

**स ह तूष्णीमास गार्ग्यः** । ततः परमुत्तरापरिस्फूर्तेः गार्ग्यः तूष्णीं बभूवेत्यर्थः ॥ १३ ॥ **स होवाचाजातशत्रुरेतावन्नू इति** । नू इति प्रश्ने प्लुतः । एतावदेव किं त्वया ज्ञातमिति सोजातशत्रू राजा **उवाच** पप्रच्छेत्यर्थः । गार्ग्य आह **एतावद्धीति** । एतावदेव मया ज्ञातम् ; नेतोऽधिकमित्यर्थः । पुनरजातशत्रुराह **नैतावता विदितं भवतीति** । ब्रह्मस्वरूपमिति शेषः । एतावता ज्ञातेन ब्रह्मस्वरूपं न विदितं भवतीत्यर्थः । त्वज्ज्ञातेभ्योऽन्यदेव ब्रह्मस्वरूपमिति भावः ।

**स होवाच गार्ग्यः** । एवमजातशत्रुणोक्तो बालाकिर्गताभिमानः 'नीचादप्युत्तमां विद्याम्', 'आपत्कल्पो ब्राह्मणस्याब्राह्मणाद्विद्योपयोगः' इति शास्त्रमनुसृत्य क्षत्रियादप्यजातशत्रो र्ब्रह्मविद्यामुपादित्सुः[1], 'नानुपसन्नाय ब्रह्मोपदेष्टव्य' मिति शास्त्रार्थं जानन् गार्ग्यः स्वयमेवाहेत्यर्थः । हशब्दो ब्रह्मविद्याप्राप्तौ गार्ग्यस्य तादात्विकमभिनिवेशं सूचयति । किमितीत्यत आह **उप त्वा यानीति** । **त्वा** त्वाम् **उपयानि** शिष्यस्सन्नुपगच्छामि । मह्यं ब्रह्मविद्यां देहीत्यर्थः ॥ १४ ॥

**स होवाचाजातशत्रुः** एवमुपसन्नं बालाकिमजातशत्रुरुवाचेत्यर्थः । हेति राज्ञस्तस्य निरभिमानत्वप्रशंसार्थम् । किमित्युवाच? **प्रतिलोमं वैतत्**—

1. उपादित्सन्, क.

---

**नैतावता विदितं भवतीति** । एतदुपरि, 'यो वै बालाके एतेषां पुरुषाणां कर्ता यस्य वैतत् कर्म स वै वेदितव्य' इति अधिकं कौषीतक्युक्तम् ।

ननु बालाकिना प्रथममादित्यपुरुषः, 'एतमेवाहं ब्रह्मोपासे' इत्युक्तः । तदब्रह्मत्वे राजोक्ते चन्द्रपुरुषस्तथोक्तः । एवमुपर्युपरि । इत्थं बहूपासको बालाकिः कति ब्रह्माणि मन्यते । कथं न विचारयति कथमिदं सर्वं ब्रह्म? एकं हि लोके ब्रह्म । नूनमेषु अतो ब्रह्मत्वारोपमात्रमिति । उच्यते-एकमेव ब्रह्म आदित्यपुरुषाद्यनेकरूपेण साक्षाद् विभक्तमस्तीति शङ्कर–भास्कर–यादवप्रकाशमतेष्वेकतममनुरुध्य गृहीतं बालाकिना । अजातशत्रुणा तेषां पुरुषाणां ब्रह्मणश्च मिथो भेदोऽस्ति । अधिकं हि तदिति प्रदर्श्यते सर्वकर्तृत्ववचनेन, सुषुप्तपुरुषमुपगम्य तज्जीवातिरिक्तत्वप्रतिबोधनेन च । तथा च 'आत्मैवेदमग्र आसीत्', 'तद्धेदं तर्ह्यव्याकृतमासीत्', 'स एष इह प्रविष्टः' इति पूर्वत्राभिहितस्यातिरिक्तत्वमत्रैवमुपपादितं भवतीति ध्येयम् ।

क्षत्रियमुपेयात् ब्रह्म मे वक्ष्यतीति, व्येव त्वा ज्ञापयिष्यामीति।

तं पाणावादायोत्तस्थौ। तौ ह पुरुषँ सुप्तमाजग्मतुः। तमेतैर्नामभिरामन्त्रयाञ्चक्रे, बृहन् पाण्डरवासः सोम राजन्निति। स नोत्तस्थौ। तं

---

व्येव त्वा ज्ञापयिष्यामीति। प्रतिलोमं विपरीतं वै तत्। किं तत्? यत् ब्राह्मणः उत्तमवर्ण आचार्यत्वेऽधिकृतः क्षत्रियम् अनाचार्यस्वभावम्, 'ब्रह्म मे वक्ष्यती'ति शिष्यवृत्त्या उपेयात् उपगच्छतीति। एतत् आचारविधायकशास्त्रविरुद्धमिति भावः। कथं तर्हि विद्याप्राप्तिरिति न वाच्यम्; आचार्यकमस्वीकृत्य मैत्र्यैव केवलं विज्ञापयिष्यामीत्याह व्येव त्वा ज्ञापयिष्यामीति। त्वा त्वाम्। केवलमेव विज्ञापयिष्यामि बोधयिष्यामि। ब्रह्मेति शेषः। वे व्यवधानं छान्दसम्।

तं पाणावादायोत्तस्थौ। एवमुक्त्वा तं पाणावादाय हस्ते गृहीत्वा, गार्ग्योपदिष्टजीवातिरिक्तब्रह्मज्ञापनायाऽऽसनादुदतिष्ठत्। तौ ह पुरुषं सुप्तमाजग्मतुः। तौ गार्ग्याजातशत्रू तस्मिन् राजभवने सुप्तं कञ्चित् पुरुषं प्राप्तवन्तौ। तमेतैर्नामभिरामन्त्रयाञ्चक्रे। एवं सुप्तपुरुषसमीपं गार्ग्यं नीत्वाऽजातशत्रुः तं सुप्तं पुरुषमेतैः वक्ष्यमाणै र्नामभिरामन्त्रयाञ्चकार। तानि नामान्याह बृहन् पाण्डरवासः सोम राजन्निति। अत्र, "प्राणो वाव ज्येष्ठश्च श्रेष्ठश्चेति ज्यैष्ठ्यश्रैष्ठ्यगुणेन प्राणस्य बृहत्त्वात् बृहन्नित्यामन्त्रणम्। अब्वासस्त्वञ्च प्राणधर्मः; 'किं मे वासः' इति प्राणेन पृष्टे, 'आपो वासः' इति अपां प्राणवासस्त्वोक्तेः। तासाञ्चापाम्, 'यच्छुक्लं तदपा'मिति शुक्लवर्णाश्रयत्वात् पाण्डरत्वं युक्तम्। सप्तान्नब्राह्मणे, 'अथैतस्य प्राणस्यापश्शरीरं ज्योतीरूपमसौ चन्द्रः' इति प्राणस्य चन्द्रसंबन्धप्रतीतेर्लक्षणया सोमेति प्राणस्य संबोधनम्। प्राणो वै सम्राट्' इति श्रवणात् राजन्नित्यामन्त्र्यते" इति व्यासार्यैरुक्तम्।

---

पाणावादायोत्तस्थाविलनेन लज्जां शिष्यभावञ्चापनीय बालाकिमुत्साहयामासेति ध्वनितम्। बृहन्नित्यादेर्मुख्यप्राणविषयतया योजनं व्यासार्यकृतमर्थतोऽनुवदति अत्रेत्यादिना। सोमेति प्राणस्येति। सोमपदवत् सर्वाण्यमीमानि नामानि चन्द्रपुरुषे बालाकिनेह प्रयुक्तानि च। प्राणो वै सम्राडिति। 'प्राणो वै सम्राट् परं ब्रह्म' (बृ. ६-१-३) इति वाक्ये सम्राट्पदस्य जनकसंबुद्धिरूपत्वात् प्राणस्य राजत्वं ततो न सिद्ध्येत्। अथवा वाक्यमिदं श्रुत्यन्तरे क्वापि स्यादिति विमृश्यमिति, व्यासार्यैरुक्तमित्यनेन सूच्यते।

**पाणिना पेषं[1] बोधयाञ्चकार । स होत्तस्थौ ॥ १५ ॥**

1. पाणिनाऽऽपेषं. शां. 'पेषं कृत्वा' इति माध्वविवरणम् ।

---

**स नोत्तस्थौ । तं पाणिना पेषं बोधयाञ्चकार ।** एवमामन्त्रितोऽपि सः सुप्तो नोदतिष्ठत् । ततोऽजातशत्रुस्तं सुप्तं **पाणिना पेषम्** — 'हिंसार्थानाञ्च समानकर्मकाणा' मिति पिषेः तृतीयायामुपपदे णमुल् । 'तृतीयाप्रभृतीन्यन्यतरस्या' मिति विकल्पात् समासाभावः — पाणिना पिष्ट्वा **बोधयाञ्चकार** प्राबोधयत् । **स होत्तस्थौ ।** सः एवं पाणिना पिष्टः सुप्तपुरुषः, पेषणात्पश्चादुदतिष्ठत् ।

एवं प्राणनामभिरामन्त्रणेऽपि अनुत्थानप्रदर्शनं जीवात्मनः प्राणान्यत्वज्ञापनार्थम् । सुषुप्तिदशायामुपरतव्यापारेभ्यः शरीरेन्द्रियेभ्योऽन्यत्वस्य जीवे सुज्ञानत्वात् तस्यामपि दशायामनुपरतव्यापारात् प्राणादन्यत्वमेव ज्ञापनीयमिति, प्राणनामभिरामन्त्रणेऽप्यनुत्थानेन, पाणिपेषणेनोत्थानप्रदर्शनेन च जीवस्य प्राणव्यतिरेकः प्रदर्शितो भवति ।

तथाहि—सुप्तस्य प्रबोधानन्तरम्, 'सुखमहमस्वाप्स'मिति सौषुप्तिकानन्दप्रतिसन्धानेन सुषुप्तिकाले जीवशब्दितस्य सिद्ध्यन्ती आनन्दस्फूर्तिः तस्मिन्नुपरतव्यापारे न संभवतीति तस्योपरतव्यापारेभ्यः शरीरेन्द्रियेभ्यो वैलक्षण्यं सिद्धमेव । तदानीमप्यनुपरतोच्छ्वासादिव्यापारः प्राण एव यदि जीवशब्दवाच्यः स्यात्, तर्हि तन्नामभिरामन्त्रणे तदुत्थानमावश्यकम् । लोके स्वनाम्ना आमन्त्रितस्योत्थानदर्शनात् । अतः प्राणनामभिरामन्त्रणेऽप्यनुत्थानात् प्राणस्य न जीवशब्दार्थत्वमिति तदतिरिक्तजीवसिद्धिरिति ।

न च, 'प्रत्यगात्मन्, विज्ञानमये' त्यादिजीवनामभिरामन्त्रणेऽप्यनुत्थानदर्शनात् त्वदभिमतस्य शरीरेन्द्रियप्राणातिरिक्तस्यापि जीवशब्दत्वं (शब्दार्थत्वं ?) न स्यादिति वाच्यम् — देहाद्यतिरिक्ते स्वस्मिन् आत्माभिमानशून्यस्य संसारिणः शुद्धजीववाचिशब्दैरामन्त्रणेऽप्यनुत्थानस्यादोषत्वात् । यत्र पुनर्देवदत्तादिनामसङ्के-

---

पाणिना पेषमिति । यष्ट्या चिक्षेपेति श्रुत्यन्तरम् ।

इन्द्रियातिरिक्तत्वप्रतिबोधनार्थं मनस आमन्त्रणमिति पक्षान्तरस्य टीकोक्तत्वेऽपि न तत्र तदादर इत्याशयेन मुख्यप्राणविषयतयैव व्याख्यायोपपादयति सुषुप्तिदशायामित्यादिना ।

तितशरीरादिसंघाते स्वात्मत्वमभिमनुते, तन्नाम्ना आमन्त्रणे उत्थानदर्शनाच्च। न चायं समाधिः प्राणस्यैव जीवशब्दार्थत्वेऽपि संभवतीति वाच्यम् — प्राणस्यैव संघाताभिमानित्वे अनुपरतव्यापारस्यैव तस्य पाणिपेषणानन्तरं पूर्वमसतः प्रबोधस्य प्राप्त्या उत्थानासंभवात्। न च जीवस्याप्यनुपरतव्यापारस्य तदसंभवः शङ्क्यः, तस्य स्फुरणात्मकव्यापारसत्त्वेऽपि तदानीमप्रबोधत्वात्। प्राणस्य तु तदानीमपि शरीरे सञ्चरतः स्वनामभिरामन्त्रणाश्रवणमचेतनत्वमापादयत्येवेति चेतनस्य तद्वैलक्षण्यं सिद्ध्यत्येवेति द्रष्टव्यम् ॥ १५ ॥

---

**आमन्त्रणाश्रवणमचेतनत्वमापादयत्येवेति**। पाणिपेषण इवाऽऽमन्त्रणेऽपि प्राणेन प्रबुद्धेन भाव्यम्। अप्रसिद्धेन अगृहीतसंकेतेन नाम्ना आमन्त्रणे अप्रबोधो न दोषायेति चेत्—न। 'मुख्यप्राणस्येदमिदं नामे' ति प्रतिबोधित एव यदा सुप्तः, तदाऽप्येवमामन्त्रणे अप्रबोधात्। 'मुख्यप्राण एवाहमिति विवेकोऽप्यपेक्षितः। स तु देहादौ आत्मभ्रमवशान्नास्तीति नोत्तिष्ठतो'ति चेत्—अस्तु। अथापि प्राणस्यानुपरतव्यापारत्वात् सदैव प्रतिबुद्धतेति कथमामन्त्रणाश्रवणम्? तथा च अहमाहूत इति ज्ञानाभावादनुत्थानेऽपि, अश्रवणं कथम्। अतोऽचेतन एव प्राण इति भावः।

नन्वश्रवणं मनसः पुरीतति प्रवेशात् इन्द्रियाणामुपरतत्वादुपपद्यते। अत आमन्त्रणानुत्थानं पाणिपेषप्रतिबोधनञ्च न प्राणव्यतिरेकमिन्द्रियव्यतिरेकं वा साधयेदिति, श्रुत्यर्थो यथाश्रुत एव कश्चिदस्तु। तथा हि—अजातशत्रुणा प्रतिबुबोधयिषितस्य तत्र सुषुप्तस्य जीवस्य सोम इति संज्ञेति स आमन्त्र्यते, हे बृहन् पाण्डरवासः सोम राजन्निति तद्विषयैः अनेकैर्नामभिः। तदाऽनुत्थानेन तस्य तदीयोपकरणवर्गस्य च स्वस्वस्थानेषु स्थितभाव आविष्क्रियते। अथ पाणिपेषणेन नाडीनामन्तश्चालनात् यथास्थानमागतिश्च ज्ञाप्यते। एतदाशयाविष्कारार्थमेव चोपरि, 'क्वैष तदाभूत्, कुत एतदागात्' इति प्रश्नः; उपन्यासश्चेति। उच्यते। देहेन्द्रियाणामुपरततया जीवस्तद्व्यतिरिक्त इति सिद्धम्। उपलभ्यस्योच्छ्वासनिःश्वासरूपव्यापारस्य प्राणसंबन्धितया प्राण एव जीव इति शङ्क्यते। तत्र प्राणो देवताधिष्ठित इतीष्यते, उतानधिष्ठित इति। आद्ये सप्तान्नब्राह्मणे प्राणाधिष्ठातृदेवता चन्द्र इत्युक्तमिति, स च बृहन् पाण्डरवासाः सोमो राजेति विदितमिति च प्राणदेवतातिरिक्तो जीव इह देहे मा भूदिति शङ्का स्यात्। सा व्युदस्यते एवमामन्त्रणेन। देवताया अप्रबुद्धत्वाभावेन तन्नाम्ना आमन्त्रणे जीवभूतायास्तस्या उत्थानं ह्यावश्यकमिति। ज्ञात्वैवानुत्थाने च पाणिपेषणानन्तरमप्युत्थानं न स्यात्। देवतानधिष्ठितः प्राण इत्युक्तौ च तस्य स्वयं व्यापृतस्य प्रबुद्धत्वमेष्टव्यम्। तथा बहिरेव मनोवस्थानमपि। तथा तद्देवतावाचित्वेनाभिमतानां पदानामपि तदर्थकत्वमेवैषितव्यम्। अत आमन्त्रणाश्रवणं पश्चात् प्रबोधश्च न स्याताम्। वदति हि यानि नामानि कानिचन मम वाऽन्यस्य वा, तान्यहं नाश्रौषमिति। प्राणदेवतोभयव्यतिरिक्तत्वे च जीवस्य, देवताकृतं प्राणस्य सव्यापारत्वम्,

**स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूत्, य एष विज्ञानमयः पुरुषः, क्वैष तदाऽभूत् कुत एतदागादिति, तदु ह न मेने गार्ग्यः ॥ १६ ॥**

---

एवं देहेन्द्रियमनःप्राणव्यतिरिक्तं जीवं प्रदर्श्य ततोऽप्यन्यं परमात्मानं प्रदर्शयितुमारभते **स होवाचाऽजातशत्रुः** । एवं जीवं प्रदर्श्याजातशत्रुः गार्ग्यमाहेत्यर्थः । किमिति ? **यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः—क्वैष तदाभूत् कुत एतदागादिति** । यत्र यदा एषः **एतत्सुप्तोऽभूत्** [1] **एतत्** स्वापं सुप्तोऽभूत् । स्वापं प्राप्तोऽभूत् । **एत**दित्यनेनैव स्वपिधात्वर्थस्य सिद्धत्वात् **सुप्त** इत्येतत् प्रत्ययार्थमात्रपरम् । पाकं पचतीतिवत् । यद्वा **एतत्** ईदृशं **सुप्तं** यस्य सः **एतत्सुप्तः** । क एष इति निर्दिष्ट इत्यत्राह **य एष विज्ञानमयः पुरुषः** । [2]यः संप्रबुध्यमान एव सर्वेन्द्रियार्थविज्ञानमयतयोत्तिष्ठति, स एष पुरुषः । **क्वैष तदा भूत्** । अयं **तदा** पाणिपेषणोत्थापनात् प्राक् स्वापदशायां क्व स्थितः । **एतत्** एतस्मिन् काले **कुत आगात्** कुत उद्गत इतीत्यर्थः । **इति आह** पप्रच्छेति पूर्वेण संबन्धः । एवं जीवसुषुप्तेः स्थानतया प्रबोधापादानतया च जीवात् परमीश्वरं दर्शयितुमेवमजातशत्रुणा पृष्टोऽपि गार्ग्यः, **तदु ह न मेने** तत्प्रश्नार्थं न ज्ञातवान् । उशब्दोऽवधारणे । हशब्दो वृत्तार्थस्मरणे ॥ १६ ॥

1. एतत् स्वप्नं सुप्तो भूत् स्वप्नं प्राप्तो भूत् । ग. 2. यस्तु प्रबुद्ध्यमान. ग.

---

जीवस्य निर्व्यापारस्याप्रबोधत्वं च युज्यते । एवं प्राणतद्देवतोभयव्यतिरिक्ततया जीवसाधनार्थमेव सुषुप्तसंबन्धितया संभावितानि अन्यानि नामान्युपेक्ष्य ईदृशसविशेषणदेवतानामनिर्देश इति युक्तमिति । **श्रीभाष्ये, प्राणनामभिरिति, प्राणादिव्यतिरिक्तमिति** च पदयोः प्राणदेवताप्यभिसंहितेति ध्येयम् । अत्र आमन्त्रणाश्रवणनिरूपणेन नायं स्वप्नदृक्, किंतु सुषुप्त इति ज्ञाप्यते । प्राणनामभिरामन्त्रणात् प्राणातिरेकबोधनमिति च भाव्यम् ।

ननु कुत एतदागादिति प्रश्नो व्यर्थः, यत्र अगात्, तत आगमनस्य लोकसंप्रतिपन्नत्वात् । नैवम् । उद्गमनापादानस्योपादानत्वं चिदचिद्विशिष्टवेषेण । तस्यैव लयस्थानस्य सुषुप्त्याधारत्वमन्तर्यामिविग्रहविशिष्टतयाऽपीति व्युत्पादनाय प्रश्नद्वयमिति । श्रुतौ अन्तर्हृदय आकाश इत्यत्र आकाशपदं ज्योतिःपदवत् भास्वरविग्रहविशिष्टपरमिति ।

**स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूत्, य एष विज्ञानमयः पुरुषः, तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोन्तर्हृदय आकाशः तस्मिञ्छेते।**

**तानि यदा गृह्णात्यथ हैतत्पुरुषः स्वपिति नाम। तद् गृहीत एव**

---

**स होवाचाजातशत्रुः।** एवं स्वपृष्टेऽर्थे विमूढं गार्ग्यं तदर्थं स्वयमेव ज्ञापयन् अजातशत्रुराह। किमिति? **यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते। यत्र** यदा, य एष विज्ञानमयः पुरुषः, एषः एतत्सुप्तोऽभूत्, तदा तस्मिन् शेते इति संबन्धः। अत्र, "**प्राणानां विज्ञानेन विज्ञानमादाय** प्राणशब्दवाच्येन्द्रियजन्यं ज्ञानं मनसा सहादायेत्यर्थः। उपरतव्यापारं मनः कृत्वेत्यर्थः। अनेनेन्द्रियाणामपि[1] व्यापारोपरतिः फलिता। तेषां मनस्सापेक्षत्वात्" इति **व्यासार्यै**र्विवृतम्। 'य एषोऽन्तर्हृदय आकाशः' इति जीवस्वापस्थानपरतया निर्दिष्ट आकाशशब्दः परमात्मपरः। 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते', 'आकाशो ह वै नामरूपयोर्निर्वहिता' इत्यत्राकाशशब्दस्य परमात्मनि प्रसिद्धेः, कौषीतकिनामुपनिषदि समानप्रकरणे, 'अथास्मिन् प्राण एवैकधा भवती' ति प्राणशब्दितस्य सुषुप्त्याधारत्वश्रवणात्, "अत एव प्राणः", "प्राणस्तथाऽनुगमा" दित्यादौ प्राणशब्दस्य परमात्मपरत्वस्य साधितत्वात्, आकाशप्राणशब्दयोः श्रौतनिरूढ्यनुसारेण परमात्मपरत्वेनाविरोधसंभवे तत्परित्यागस्य अनुचितत्वात्, 'सता सोम्य तदा संपन्नो भवती' ति सुषुप्तौ ब्रह्मसंपत्तेः श्रुत्यन्तर-सिद्धत्वाच्चाकाशशब्दस्य ब्रह्मैवार्थः। तत्र च शयनं नाम तदेकतापत्तिः। एकत्वञ्च देवत्वमनुष्यत्वादिलक्षणभेदकाकारास्फुरणम्। ततश्च सुषुप्तौ जीवो देवत्वाद्यहमभि-मानानुगुणज्ञानप्रसररूपकार्यावस्थाप्रहाणेन स्वद्वारा तद्राहित्यरूपकारणावस्थावति स्वश-रीरिणि ब्रह्मण्यवतिष्ठत इति वाक्यार्थः।

एवं सुप्तः परमात्मन्यवतिष्ठत इत्यत्र स्वपितीति व्यवहारं प्रमाणमाह — **तानि — स्वपिति नाम। तानि** इन्द्रियाणि **यदा गृह्णाति** स्वस्थानेभ्यो

1. अयं टीकास्थितः पाठः। अत्र तु इन्द्रियव्यापारेति।

---

**स्वपिती**त्यस्य उपसंहृतेन्द्रियो भवतीत्यर्थो न मूलाभिप्रेतः। किंतु इन्द्रियोपसंहारा-नन्तरं 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते' इत्येवमभिहितेऽर्थे स्वपितीति नाम प्रयुज्यत

**प्राणो भवति, गृहीता वाग् गृहीतं चक्षु र्गृहीतं श्रोत्रं गृहीतं मनः ॥ १७ ॥**

**स यत्रैतत्स्वप्न्यया[1]चरति, ते हास्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्राह्मण उतेवोच्चावचं निगच्छति ।**

1. स्वप्नया मा. स्वप्नया नाड्येति तदर्थ उक्तः ।

---

यदोपसंहरति—इन्द्रियजन्यज्ञानानुकूलयत्नवान् यदा न भवतीति यावत्—, **अथ** अनन्तरमेव '**पुरुषः स्वपिती**'त्येतन्नाम[1] भवति । पुरुषः स्वपितीति शब्दः प्रयुज्यत इति भावः । अत्र, 'स्वमपीतो भवति, तस्मादेनं स्वपितीत्याचक्षते' इति छान्दोग्यश्रुत्यनुसारेण स्वस्मिन्=कारणावस्थस्वशरीरकपरमात्मनि अपीत इति स्वपितिशब्दार्थोऽभिप्रेतः । तदानीमिन्द्रियोपसंहारमेवोपपादयति **तद्गृहीत एव प्राणो—मनः** । **तत्** तदेत्यर्थः । अत्र **प्राण**शब्द इन्द्रियप्रकरणत्वात् घ्राणेन्द्रियपरः; न तु मुख्यप्राणपरः । मुख्यप्राणस्य तदानीं सञ्चारदर्शनात् । स्वस्वस्थानेभ्यो घ्राणवाक्चक्षुश्श्रोत्रमनःप्रभृतीनीन्द्रियाण्युपसंहृतानि भवन्तीत्यर्थः । गन्धादिविषयग्रहणवदनादिव्यापारयोरदर्शनादिति भावः ॥ १७ ॥

सुप्तेः स्वप्नवैलक्षण्यं वक्तुं स्वप्नमुपक्षिपति — **स यत्रैतत् स्वप्न्यया चरति । एतत्** एष इत्यर्थः । लिङ्गव्यत्ययश्छान्दसः । स एषः=शरीरेन्द्रियप्राणविलक्षणतया प्रदर्शितो जीवः **यत्र** यदा **स्वप्न्यया** स्वप्नावस्थया स्वप्नावस्थमनसा युक्तस्सन् स्वप्नस्थाने संचरतीत्यर्थः । **ते हास्य लोकाः** । तदेति शेषः । ते ह प्रसिद्धाः स्वर्गादिलोका अस्य स्वाप्निकजीवस्य भवन्ति ।

**तदुतेव — महाब्राह्मणः** । तत् तदा – उतशब्दोऽप्यर्थः — महाराज इव साम्राज्यादिगुणविशिष्टो भवत्यपि । महाब्राह्मण इव श्रोत्रियत्वादिगुणयुक्तोऽपि भवतीत्यर्थः । **उतेवोच्चावचं निगच्छति । उच्चावचमिव देवत्व-**

1. पुरुषः स्वपितीति नाम भवति. ग.

---

इति इति दर्शयितुं छान्दोग्यमादत्त अत्र स्वमपीत इत्यादिना ।

कौषीतकिश्रुतौ स्वप्नस्थानसुषुप्तिस्थानयोः पृथक् पृथक् कीर्तनवत् इह कीर्तनविरहात् पूर्वं पश्चाच्च सुषुप्तेरेवोक्तेः मध्ये स्वप्ननिरूपणं सुषुप्तौ स्वप्नवैलक्षण्यप्रदर्शनार्थमित्यवतारयति सुप्तेरिति । कौषीतकिश्रुतौ स्वप्नस्थाननिरूपणं किमर्थमिति चेत्—तत्र प्राज्ञपर्याये स्वप्नावस्थस्य ब्रह्मत्वं बालकिमतमिति तन्निराकरणाय जीवस्यैव स्वप्नावस्थेति व्युत्पादनायेति सुवचम् ।

स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तते[3], एवमेवैष एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते ॥ १८ ॥

3. परिवर्तेत. शां.

---

तिर्यक्त्वाद्युत्कृष्टापकृष्टगुणविशिष्टशरीरमप्यचिन्तितं प्राप्नोतीत्यर्थः । स्वप्नपदार्थानां तत्तत्काले तत्तत्सूक्ष्मपुण्यपापानुगुण्येन परमात्मसृष्टतया यथार्थत्वस्य, 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः । तदेव शुक्रममृतम्', 'अथ रथान् रथयोगान् पथस्सृजते....स हि कर्ता' त्यादिभिः प्रामाणिकत्वात् । अत्र इवशब्दो न स्वाप्निकवस्तुमिथ्यात्वपरः, अपि तु जाग्रद्वस्तुसादृश्यपर एवेति द्रष्टव्यम् । अत एव हि सूत्रकृता "वैधर्म्याच्च न स्वप्नादिवत्" इति सूत्रितम् ।

**स यथा महाराजो जानपदान्—परिवर्तते** । सः जागरप्रसिद्धो यथा महाराजो **जानपदान्** जनपदप्रभवान् भोग्यपदार्थान् **गृहीत्वा** उपादाय उपसंहृत्य **स्वे जनपदे** स्वीयमूलराजधान्यां यथेष्टं **परिवर्तते** सञ्चरति, **एवमेवैषः** स्वप्नदृक् पुरुषः **एतत्** एतस्मिन् काले **प्राणान् गृहीत्वा** स्वस्थानेभ्य इन्द्रियाण्युपसंहृत्य **स्वे शरीरे** यथेष्टं **परिवर्तते** सञ्चरति=विहरतीत्यर्थः । न च 'प्राणेन रक्षन्नपरं कुलायं बहिष्कुलायादमृतश्चरित्वे' ति बहिष्कुलायसञ्चरणस्य श्रुतत्वात्, स्वप्ने शरीरादिसृष्टेश्च प्रमाणप्रतिपन्नत्वात् 'स्वे शरीरे यथाकाम' मिति अनुपपन्नमिति वाच्यम्—स्वप्नदृष्टव्याघ्रमनुष्यादिदेहान्तरस्यापि जाग्रच्छरीरवत् स्वकर्मानुगुणमीश्वरसृष्टतया स्वीयत्वेन स्वे शरीर इत्यस्याविरोधात् ।

नन्वेवं स्वे शरीर इति व्यर्थम्, अव्यावर्तकत्वात् । स्वप्ने व्याघ्रमनुष्यादिशरीरेण हिमवदादिदेशगमनस्यानुभूयमानतया पूर्वशरीराद्बहिर्गमने प्राप्ते तद्व्यावर्तकतया हि, 'स्वे शरीरे यथाकामं परिवर्तत' इति वाक्यं सफलं स्यादिति चेन्न — स्वे शरीरे इत्यस्य स्वप्नदृक् स्वप्ने स्वीये शरीरे यत्र क्वापि परिवर्तते,

---

स्वप्न्ययेति । स्वप्नयेति माध्वपाठः । स्वप्नयेति पदे, 'आङ्याजयारामुपसंख्यानम्' इति सूत्रव्याख्याने स्वप्नेनेत्यर्थे अयाच् दर्शितः । तेहेति जागरातिप्रसिद्धानुभव उक्तः । उदुतेवेत्यादिना अचिन्तितविचित्रानुभव उच्यते । बहिष्कुलायसञ्चरणस्येति । कुलायाद्

न तु, जाग्रच्छरीर एवेति जाग्रद्दशायामिव नियमोऽस्तीत्येतदर्थपरत्वाद् वाक्यस्य। इतरथा बहिष्कुलायश्रुतिविरोधात्।

न च बहिष्कुलायश्रुतिः कुलायाद्बहिरिव चरित्वेति भाक्ततया व्याख्येयेति वाच्यम् — तथात्वे जीवस्य स्वशरीर एव स्थिततया जाग्रद्दशायामिव [1]स्वातन्त्र्येण शरीररक्षणस्य सिद्धतया, 'प्राणेन रक्षन्नपरं कुलाय' मिति प्राणद्वारा रक्षकत्वोक्तिः, अत एवामृतत्वोक्तिश्चानुपपन्ना स्यात्। अतो बहिष्कुलायश्रुतिः उपपत्तिरूपतात्पर्य-लिङ्गानुगृहीततया प्रबलत्वान्न भाक्ततया व्याख्येयेति 'स्वे शरीर' इति श्रुतिस्त-दनुरोधेन पूर्वोक्तार्थपरत्येव युक्तमिति द्रष्टव्यम्।

इदञ्च वाक्यं वियत्पादे, "उपादानाद्विहारोपदेशाच्चे" ति सूत्रे चिन्ति-तम्। तत्र हि —

जीवो न कर्ता, तस्यानाधेयातिशयत्वेन आत्मनि कृतेरसंभवात्, 'असङ्गो-ह्ययं पुरुष' इति श्रुत्या असङ्गत्वावगमेन कृतिनिमित्त[2] संयोगाद्यभावाच्च।

'हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते॥'

इति आत्मनः कर्तृत्वस्य प्रतिषिद्धत्वात्,

'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते॥'
'नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति।'

1. तद्रक्षणस्य. ग. 2. निमित्तं. क.

---

बहिः बहिष्कुलायम्। तत्र सञ्चरणस्येत्यर्थः। एतदर्थपरत्वादिति। स्वप्ने व्याघ्रमनुष्यादि-यद्यदभिमानशाली भवति, तत्तत् न प्रतीतिमात्रम्। किंतु स्वकर्मार्जितं वास्तवं शरीरमेवेति दर्शयितुमेतदुक्तिरिति भावः। न च स्वप्नावस्थानुभूतदेशान्तरलोकान्तरादीनामपि स्वाप्नशरीरवत् तदातनसृष्टित्वात् जागरस्वप्नपदार्थयोः प्रतिघातादिसर्वविधविरोधाभावस्वीकारेण तस्य सर्वस्य स्वशरीरस्थान एवोत्पत्तिः सुवचेति सूचनार्थमेव स्वे शरीरे इत्युक्तम्। तथा च स्वे शरीरे हृदयाकाशे शयान एव तत्रैवाविरोधेन सर्वं सृष्टमनुप्रविश्य विहरतीत्यर्थ इति वाच्यम्—अल्प-शरीरान्तः अतिमहतां देशान्तरादीनामवस्थितिकथनस्य क्लिष्टत्वात्। बहिष्कुलायश्रुतिबलादेव सृष्टितयाऽस्यमङ्गीकार्यविषयमात्रे स्वाप्नसृष्टेरङ्गीकाराच्च।

इत्यादिस्मरणाच्चान्तःकरणरूपेण परिणता त्रिगुणात्मिका प्रकृतिरेव कर्त्री, न जीव इति पूर्वपक्षे प्राप्ते—

"कर्ता शास्त्रार्थवत्त्वात्" । आत्मैव कर्ता, न प्रकृतिः; 'ज्योतिष्टोमेन यजेत' इत्यादिशास्त्राणामर्थवत्त्वावश्यम्भावात् । शास्त्रं हि प्रवर्त्यस्य[1] प्रवर्तकज्ञानोत्पादनद्वारा प्रवृत्तिमुत्पाद्य साफल्यं गच्छेत्[2] । अन्तःकरणादेरचेतनस्य प्रवर्त्यत्वे तस्याचेतनत्वेन प्रवर्तकज्ञानोत्पादनासंभवात् शास्त्रं विफलमेव स्यात् । न चात्मनोऽनाधेयातिशयत्वात् कृत्यभावः शङ्क्यः । सुखदुःखाद्यतिशयस्य प्रत्यक्षसिद्धत्वेनानाधेयातिशयत्वासिद्धेः । न च कृतिनिमित्तसंयोगाभावः । 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इति निमित्तसंयोगस्य श्रुत्या प्रतिपादनात् । असंगत्वश्रुतेस्तु जाग्रद्दशायां स्वप्नदृष्टेन जीवस्य संबन्धाभावमात्रपरत्वात् । 'हन्ता चेन्मन्यते हन्तु' मिति श्रुतेः हननक्रियायां नित्यस्यात्मनः कर्तृकर्मभावनिषेधपरत्वेन कर्तृत्वसामान्यप्रतिक्षेपकत्वाभावात् । यच्च, 'प्रकृतेः क्रियमाणानी' त्यादिना गुणानामेव कर्तृत्वं स्मर्यत इति — तत् सांसारिकप्रवृत्तिष्वात्मनः कर्तृता सत्त्वरजस्तमोगुणसंसर्गकृता, न स्वरूपप्रयुक्तेति प्राप्ताप्राप्तविवेकेन गुणानामेव कर्तृत्वमित्युच्यते । तथाच तत्रैवोच्यते, 'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इति । अत एव —

'अधिष्ठानं तथा कर्ता करणञ्च पृथग्विधम् ।
विविधा च पृथक्चेष्टा दैवञ्चैवात्र पञ्चमम् ॥
तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥'

इति, अधिष्ठानादिसापेक्षे सति आत्मनः कर्तृत्वे, यः केवलमात्मानं कर्तारं पश्यति, स न पश्यतीति केवलस्यैवात्मनः कर्तृत्वं निषिध्यते ।

1. हि अप्रवृत्तस्य. क. 2. भजेत. ग.

---

तदिति । यत् स्मर्यत इति, तत् उच्यत इत्येतदेवेत्यन्वयार्थः । तच्छब्दार्थस्य अभेदेन उच्यत इत्यत्र धात्वर्थेऽन्वयः ।

" उपादानाद्विहारोपदेशाच्च " । 'स यथा महाराज ' इति प्रकृत्य, 'एवमेवैष एतत् प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते ' [1] इत्युपादानविहारयोः कर्तृत्वोपदेशात् ।

" व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः " । ' विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि चे ' ति वैदिकलौकिकक्रियासु कर्तृत्वव्यपदेशाच्चात्मा कर्ता । ननु न विज्ञानशब्देनात्मनो व्यपदेशः, किन्तु बुद्धेरिति चेत् — तथासति बुद्धेः करणत्वात् ' विज्ञानेन यज्ञं तनुत ' इति निर्देशः स्यात् ।

" उपलब्धिवदनियमः " । यथा त्वात्मनो विभुत्वे सार्वत्रिकोपलब्धिः स्यादित्युपलब्ध्यनियमः प्रसज्यते, एवमात्मनोऽकर्तृत्वे प्रकृतेश्च कर्तृत्वे तस्याः सर्वपुरुषसाधारणत्वात् सर्वाणि कर्माणि सर्वेषां भोगाय स्युः । अन्तःकरणादयोऽपि नियामकाभावादनियताः स्युः ।

" शक्तिविपर्ययात् " । बुद्धेः कर्तृत्वे भोक्तृत्वस्य कर्तृत्वसामानाधिकरण्याद्भोक्तृत्वमपि बुद्धेरेव स्यात् । ततश्च ' पुरुषोऽस्ति भोक्तृभावा ' दिति सांख्यदर्शनमसंगतमेव स्यात् ।

" समाध्यभावाच्च " । प्रकृतेः कर्तृत्वे आत्मनश्चाकर्तृत्वे प्रकृतिविविक्तात्मज्ञानलक्षणसमाधिश्च लुप्येत; प्रकृतेस्तादृशज्ञानासंभवात्, आत्मनो निष्क्रियस्य कर्तृत्वानङ्गीकाराच्च ।

ननु आत्मनः कर्तृत्वे स्वाभाविके सति सर्वदा कर्तृत्वं स्यात्, तत्राह — " यथा च तक्षोभयथा " । यथा तक्षा सत्यामिच्छायां वास्यादिसहकारिसंपत्तौ करोति, नान्यदा—तथा आत्मापि इच्छादिसंपत्तौ करोति, इतरथा न करोति इत्युपपद्यते । न च कर्तृत्वस्यानौपाधिकत्वे यावद्द्रव्यभावित्वमिति नियमः । बदरफले श्यामरक्तरूपयोरनौपाधिकयोरपि यावद्द्रव्यभावित्वादर्शनादिति सिद्धान्तितम् ।

अनेनैवात्मनः कर्तृत्वसमर्थनेन बुद्धिगतं कर्तृत्वमात्मनि अध्यस्यत इति वदन्तो मृषावादिनोऽपि पराकृताः । अन्तःकरणमिति लोकवेदयोः करणत्वेन प्रसिद्धाया बुद्धेः कर्तृत्वासंभवात् । " शक्तिविपर्यया "दिति सूत्रे, " बुद्धेः करणशक्तिर्हीयेत । कर्तृशक्तिश्चापद्येत । सत्यां च कर्तृशक्तौ कर्तृशक्तियुक्तायाः तस्याः करणमन्यत् कल्प-

1. इत्याद्युपादान. ख.

**अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद, हिता नाम नाड्यो द्वासप्तति[1] सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते ।**

1. द्वा सप्ततिः. शां.

---

नीयं स्यात् । शक्तोऽपि हि कर्ता लोके करणमुपादाय प्रवर्तत इति। ततश्च नाममात्रे विवादः स्यात; नार्थभेदः कश्चित् । करणव्यतिरिक्तस्य कर्तृत्वाभ्युपगमात्" इति परैरुक्तत्वात्, "गुहां प्रविष्टा" विति सूत्रे च, "वस्तुतो नैकस्यापि कर्तृत्वम्; बुद्धेरचेतनत्वादात्मनो निर्विकारत्वा" दिति परैरेवोक्तत्वाच्चान्तःकरणगतं कर्तृत्वमात्मन्यध्यस्यत इत्युक्तिः पूर्वापरविरुद्धैवेत्यास्तां तावत् । प्रकृतमनुसरामः ॥ १८ ॥

एवं स्वप्नं निरूप्य तद्विलक्षणां सुषुप्तिमाह **अथ यदा सुषुप्तो भवति** । **अथ** स्वप्नानन्तरं **यदा** यस्मिन् काले सुषुप्तो भवति। **यदा न कस्यचन वेद** = यदा च न किञ्चिदपि जानातीत्यर्थः । अत्र, 'यदा न कस्यचन वेदे' त्यनेन सुषुप्तो भवतीत्युक्तसुषुप्तिस्वरूपमत्यन्तज्ञानसंकोच इत्युक्तं भवति । **हिता नाम नाड्यः —** ··· **शेते** । तदेति शेषः । **हिता नाम** आत्मनो हितावहत्वात् हिता इति प्रसिद्धाः, **द्वासप्ततिसहस्राणि** द्विसहस्राधिकसप्ततिसहस्राणि, **नाड्यः** सिराः **हृदयात्** हृदयं प्रविश्य **पुरीततमभि** पुरीतच्छन्दितहृदयान्तर्वर्तिमांसपिण्डमभिमुखीकृत्य **प्रतिष्ठन्ते** प्रस्थिता भवन्ति । **ताभिः** नाडीभिः **प्रत्यवसृप्य** करणगणोपसंहारपूर्वकं ताभिः द्वारभूताभिः नाडीभिः प्रत्यागत्य पुरीतति स्थाने शेते । अत्र पुरीतति वर्तमाने ब्रह्मणि शेत इत्यर्थः । 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' इति परमात्मनः सुषुप्त्याधारत्वप्रतिपादकपूर्ववाक्यानुसारात्, पर्यङ्कास्तरणयोः शयानपुरुषाधारत्ववत् पुरीतद्ब्रह्मणोरपि समुच्चित्य सुप्तपुरुषाधारत्वस्योभयलिङ्गपादे, "तदभावो नाडीषु —" इत्यत्र समर्थितत्वात् ।

तथाहि—'तद्यत्रैतत्सुप्तस्समस्तस्संप्रसन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सृप्तो भवति', 'ताभिः प्रत्यवसृप्य पुरीतति शेते', 'य एषोऽन्तर्हृदय

---

**तदेति शेष** इति । तदेत्यस्य प्रत्यवसृप्य शेते इत्यत्रान्वयः । **नाड्यो द्वासप्ततिसहस्राणी**ति प्रयोगात् सहस्रादिपदं बहुवचनाद्यन्तमपि संख्येयसमानाधिकरणं प्रयोगार्हमिति ज्ञायते ।

**स यथा कुमारो वा महाराजो वा महाब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीत, एवमेवैष एतच्छेते ॥ १९ ॥**

आकाशस्तस्मिञ्छेते' इति नाडीपुरीतद्ब्रह्मणां सुषुप्तिस्थानत्वश्रवणात्, समुच्चये सप्तम्यवगतनिरपेक्षाधारत्वप्रतीतिभङ्गप्रसङ्गात, युगपदनेकस्थानवृत्त्यसंभवाच्च विकल्प इति पूर्वपक्षे, "तदभावो नाडीषु तच्छ्रुतेरात्मनि च"। तदभावः = पूर्वनिर्दिष्टस्वप्नाभावः — सुषुप्तिरिति यावत् — नाडीषु, आत्मनि = परमात्मनि, चकारात् पुरीतति चेत्यर्थः। तच्छ्रुतेः = पूर्वोदाहृतवाक्येषु नाडीपुरीतद्ब्रह्मणां त्रयाणामपि सुषुप्तजीवाधारत्वश्रुतेरित्यर्थः। नाडीमार्गेणैव गत्वा पुरीतदाख्यं [1]हृदयवेष्टनमांसपिण्डम्, तत्र हृदयान्तर्वर्तिनि ब्रह्मणि शयाने जीवे, 'प्रासादे शेते, खट्वायां शेते, पर्यङ्के शेते' इतिवत्, नाडीषु शेते, पुरीतति शेते, ब्रह्मणि शेत इति निर्देश[2]त्रयस्याप्युपपत्तेः समुच्चये संभवति पाक्षिकबाधगर्भो विकल्पो नाङ्गीकार्यः। साक्षात्स्थानं तु ब्रह्मैवेति सूत्रार्थः।

"अतः प्रबोधोऽस्मात्"। यतः ब्रह्मैव सुषुप्तिस्थानम्, अत एव सुप्तस्य, 'सत आगम्य न विदु'रिति ब्रह्मण एव नित्यवत् प्रबोधः श्रूयमाण उपपद्यत इति [सिद्धान्तितम्]। प्रकृतमनुसरामः।

**स यथा**—स यथा=स दृष्टान्तो वक्ष्यमाणो यथेत्यर्थः। **कुमारः** राजतनयः, **महाराजः** सप्तद्वीपपतिः, **महाब्राह्मणः** अनवरतब्रह्मानन्दपरो ब्रह्मवित्, एतदन्यतमो यथा आनन्दस्य **अतिघ्नीं** अतिशयं गतां मात्रां गत्वा **शयीत** तिष्ठेत्, **एवमेवैषः** सुप्तो जीवः **एतत्** एतस्मिन् काले स्वापदशायामतिशयितामानन्दस्य दशां प्राप्य पुरीतति **शेते** अवतिष्ठत इत्यर्थः। **एत**च्छब्दः पुरीतत्परो वा द्रष्टव्यः। एतत् = एतस्यां पुरीततीत्यर्थः। एवं स्वप्नसुषुप्त्योर्वैलक्षण्यं निरूपितम्। तथा जागरस्य त्वा (ता?)भ्यां वैलक्षण्यस्य पाणिपेषोत्थानादिभिः स्फुटतया प्रसङ्गादित्थमवस्थात्रयं वैराग्यायोपपादितं भवति ॥ १९ ॥

1. गत्वा पुरीतदाख्यहृदयवेष्टनमांसपरिवृत हृदयान्तर्वर्तिनि. ग. 2. निर्देशात्. क.

**स यथा कुमार** इत्यादिना स्वरूपानन्दस्फूर्तिस्तदातनी दर्शिता। कुटुम्बव्यापारं विनैव सुख्यन्तीत्यस्य सर्वकुमारेषु सुवचत्वेऽपि तत्राप्यानन्दातिशयसंपत्तये राजतनय इत्युक्तम्।

**स यथोर्णनाभिस्तन्तुनोच्चरेत्, यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति–एवमेवास्मादात्मनस्सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति ।**

---

एवं पूर्वोक्तप्रश्नयोः 'क्वैष तदाऽभू' दित्यस्योत्तरमुक्तम् । अथ 'कुत एतदागा' दित्यस्योत्तरमाह **स यथोर्णनाभिस्तन्तुनोच्चरेत्** । **सः** प्रसिद्धः **ऊर्णनाभिः** लूताख्यः कीटविशेषः तन्तुजालमध्यस्थितः आहारग्रहणाय यथा **तन्तुना** तन्तुद्वारा बहिः [1]उद्गच्छेदित्यर्थः । दृष्टान्तान्तरमाह **यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति** । अत्रोद्गमनापादानस्य ब्रह्मणः उद्गच्छत्सर्वभूतापेक्षया, 'अत्यतिष्ठ-द्दशाङ्गुल' मित्युक्तवैपुल्यम्, 'ब्रह्मण एकस्य कथं सर्वभूतलयाधारत्व' मित्येतच्छङ्का-वारणायोक्तं प्रथमदृष्टान्तेन । द्वितीयेन त्वेकदैव सर्वभूतोद्गमनं निदर्शितम् । अथवा यथा ऊर्णनाभिरेक एव सन् नानाविधतन्तुरूपेण विजिहीर्षुरुच्चरति, एवमेव ब्रह्म नानाभूतरूपेणेति प्रथमदृष्टान्तार्थः । तदानीं **तन्तुना** नानातन्तुरूपेणेत्यर्थो द्रष्टव्यः । **व्युच्चरन्ति** [2]उद्गच्छन्तीत्यर्थः । शिष्टं स्पष्टम् । **एवमेवास्मादात्मनः—व्युच्च-रन्ति** । **एवमेव** उक्तदृष्टान्तद्वयवदेव । **अस्मात्** सुषुप्त्याधारात् परमात्मनः । **सर्वे प्राणाः** । प्राणशब्दो जीवपरः । सर्वे जीवा इत्यर्थः । **सर्वे लोकाः** । **लोक**शब्दो ज्ञानपरः । लोकनं लोक इति व्युत्पत्तेः । सर्वाणि ज्ञानानीत्यर्थः । **सर्वे देवाः** सर्वाणीन्द्रियाणीत्यर्थः । **देव**शब्द इन्द्रियपरः । **सर्वाणि भूतानि** देवमनुष्यादि-

1,2. निर्ग. ग.

---

**वैपुल्य**मिति । अस्य उक्तमित्यनेनान्वयः । **प्रथमदृष्टान्तेन** प्रथमदृष्टान्तवाक्येन । यथोर्णनाभिः विपुलतन्तुमध्यस्थित एव सन् आहारग्रहणाय आत्मानं बहिः प्रसारयति, तथा प्राणलोकदेवभूतानि परमात्मास्थितान्येव कार्यकरणाय व्युच्चरन्तीत्युक्तौ ब्रह्मणो वैपुल्यमुक्तं भवतीति भावः । तावता तन्तोरूर्णनाभिजन्यत्ववत् परमात्मनः प्राणादिजन्यत्वं न शङ्क्यम्—सर्वांशे एतद्दृष्टान्तीकरणाभावात् । दृष्टान्तनिर्देशस्य सर्वत्र किञ्चिदंशविषयकत्वात् । **अथवे**ति योजनायां केवलोर्णनाभेः तन्तुविशिष्टोर्णनाभिवत् परमात्मनः प्राणादिशरीरकब्रह्मरूपकार्यनिर्गमोऽभिमतः ।

रूपा जीवाः सर्वे च । सर्वे द्रष्टारः सर्वाणि दर्शनानि सर्वाणि तत्करणानि च सुषुप्त्याधारभूतादेकस्माद् ब्रह्मण एव युगपदेव व्युच्चरन्तीत्यर्थः ।

नन्वत्र सुप्त[1]तज्जीवमात्रोद्गमनापादानप्रश्ने, 'क्वैष तदाऽभूत् कुत एतदागा' दिति कृते [2]सर्वभूतोद्गमनापादानत्वकीर्तनस्य किं फलमिति चेत् — न; सर्वभूतोद्गमनापादानस्य परमात्मनः सुप्तैतज्जीवोद्गमनापादानत्वे को भार इत्येतदर्थपरत्वात् तस्य ।

न च समानप्रकरणे कौषीतकिनामुपनिषदि, 'एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते; प्राणेभ्यो देवाः; देवेभ्यो लोकाः' इति क्रमान्तरं वर्णितमिति विरोधः शङ्कनीयः । [यतः ?] यथा 'आत्मन आकाशस्संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी' इति श्रुतेः, 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति श्रुतेश्च, "विपर्ययेण तु क्रमोऽत उपपद्यते च—" इति न्यायेनाविरोधसमर्थने, 'एतस्माज्जायत' इत्यादियौगपद्यरूपक्रमश्रुतेः 'आत्मन आकाश' इत्यादिपरम्परारूपक्रमोपस्थापकश्रुत्यनुसारेणार्थो वर्णितः — एवमिहापि 'एतस्मादात्मनः प्राणाः' इति कौषीतकिश्रुत्यनुरोधेनैतच्छ्रुत्यर्थस्य वर्णनीयतया परमात्मनो जीवाः, तेभ्यः प्राणिभ्य इन्द्रियाणि, तेभ्यो ज्ञानानि व्युच्चरन्तीत्यर्थादविरुद्धत्वं द्रष्टव्यम् ।

अत्र जगद्वाचित्वाधिकरणे प्राणनामामन्त्रणाश्रवणपाणिपेषोत्थानादिभिः प्राणाद्यतिरिक्तजीवप्रदर्शनं तदतिरिक्तपरमात्मप्रतिपत्त्यर्थमिति, "अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्याम् —" इति सूत्रेण स्थापितम् । इदमधिकरणञ्च कौषीतकिप्रकाशिकायामुपन्यस्तं तत्रैव द्रष्टव्यम् ॥

इत्थं शरीरेन्द्रियप्राणविलक्षणतया प्रदर्शिताज्जीवात् तत्सुषुप्त्याधारत्व—तत्प्रबोधापादानत्वाभ्यां विलक्षणतया प्रतिपादितस्य परब्रह्मणः सुषुप्तिदशायामानन्दप्रापकत्वकथनेन मोक्षरूपाया ब्रह्मप्राप्तेः परमानन्दरूपत्वं कैमुत्यन्यायेन सूचयन् अजातशत्रुः

1. सुप्तजीवमात्र. ग. 2. सर्वोद्गमन. ग.

---

युगपदेवेति । ब्रह्मानन्तर्यरूपक्रमेणेत्यर्थः ।

कौषीतकिप्रकाशिकायामिति । जगद्वाचित्वाधिकरणनिष्कर्षोऽपि तत्परिष्कार एव दर्शयितव्यः ।

**तस्योपनिषत् सत्यस्य सत्यमिति। प्राणा वै सत्यम्; तेषामेष सत्यम् ॥ २० ॥**

इति चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥

---

प्रासङ्गिकजागराद्यवस्थानिरूपणनिर्विण्णाय मुमुक्षवे गार्ग्याय ब्रह्मप्राप्तिसाधनभूतोपासनाप्रकारमुपदिशति **तस्योपनिषत् सत्यस्य सत्यमिति** । **तस्य** परमात्मनः सत्यस्य सत्यमिति **उपनिषत्** रहस्यनामेत्यर्थः । एतन्नामार्थं स्वयमेव विवृणोति **प्राणा वै सत्यम्; तेषामेष** सत्यम् । **प्राणाः** [1] जीवात्मान इत्यर्थः । तेषामचेतनवत् स्वरूपान्यथाभावरूपविकाराभावात् सत्यता = निर्विकारतास्तीति ते सत्यमित्युच्यन्ते । **वैशब्दः** प्रसिद्धौ । एवं जीवानां स्वरूपविकाराभावेऽपि स्वभावभूतधर्मभूतज्ञानेन विकारितया न निरवधिकं सत्यत्वम् । परमात्मनस्तु जीवानामिव पुण्यपापप्रयुक्तस्य धर्मभूतज्ञानसंकोचविकासलक्षणस्वभावस्यान्यथाभाव (लक्षणस्य स्वभावान्यथाभाव ) स्याऽप्यभावात् तदपेक्षयाप्यधिकसत्यतेति सत्यस्य सत्यतेत्यर्थः । [ [2] अत्र सत्यस्येत्येकवचनं जात्यभिप्रायम्; **प्राणा वै** इति विवरणात् । तेनैकजीववादव्युदासः । **सत्यस्ये**ति षष्ठी च निर्धारणार्था । **तेषामेष सत्य**मिति विवरणस्वारस्यात् । तेन जीवब्रह्मैक्यवादव्युदासः । ततश्चोक्तगुणविशिष्टस्योक्तनामोपासनं मोक्षसाधनम्, अतस्त्वमप्येवमुपास्वेत्यजातशत्रुराहेत्यर्थः ] ॥ २० ॥ ४–१.

1. आत्मानः . ग. 2. कुण्डलितं न खादि कोशे ।

---

**एवं** सुषुप्तशरीरे जीवातिरिक्तं परमात्मानं प्रतिबोध्य, तेन, 'जीवेश्वरयोर्भेदे जीवो देहादिरेव; देहादितो भेदे च ईश्वराभिन्न एव जीवः; न तु आत्मद्वयम्' इति मतिं व्युदस्य एतन्न्यायेन प्रागुक्तानुक्तादित्यपुरुषादिसर्वजीवातिरिक्तत्वं मन्तव्यमिति प्रतिबोधयितुं तदुचितं रहस्यनामोपदिशति **तस्योपनिष**दिति । एतद्विवरणरूपमुपरितन ब्राह्मणद्वयमिति शाङ्करेऽप्युक्तम् ।

**अत्र सत्यस्ये**त्यादिरधिकपाठः । स च षष्ठी च **निर्धारणार्थे**त्यस्मिन्नंशे चिन्त्यः । **सत्यपदस्य** जीवात्मार्थकत्वस्य प्रागुक्त्या निर्धारणषष्ठ्युक्तौ व्याघातात् । प्रकृतैतावत्त्वसूत्र**श्रीभाष्ये,** "प्राणशब्देन प्राणसाहचर्यात् जीवाः परामृश्यन्ते । ते तावत् सत्यम्—तेभ्योऽप्येष परमपुरुषः सत्यम्" इति व्याख्याततया तद्विरोधाच्च । तृतीयब्राह्मणभाष्यरूपस्वोक्तिविरोधाच्च ।

## ४—२.

**यो ह वै शिशुँ साधानँ सप्रत्याधानँ सस्थूणँ सदामं वेद, सप्त ह द्विषतो भ्रातृव्यानवरुणद्धि ।**

---

अथ **प्राणा वै सत्यमि**त्यत्र जीवानां प्राणशब्दवाच्यत्वं प्राणाविनाभावसंबन्धेन भवतीत्युपपादयितुमिदं ब्राह्मणमारभ्यते **यो ह वै — अवरुणद्धि ।** आधानप्रत्याधानस्थूणादामविशिष्टं शिंशुं यो वेद, तस्येदं फलं ह प्रसिद्धम् । किं तत् ? **सप्त ह द्विषतो भ्रातृव्यान् अवरुणद्धि** । सप्त पुरुषपर्याप्तान्[1] द्वेषयुक्तान् शत्रून्

1. पुरुषपर्यन्तान्. क.

---

**सत्यस्य सत्य**मित्येतद्विषयकमेकमुपासनमुक्तम् । पुनरप्येतद्विषयकमुपासनान्तरं वक्ष्यते **द्वे वाव ब्रह्मण** इति । मध्ये प्रथमसत्यशब्दार्थभूतानां प्राणानां जीवानां प्राणत्वं मुख्यप्राणविशिष्टत्वादिति जीवमुख्यप्राणसंबन्धप्रकारं प्रदर्श्य तत्रावान्तरोपासनाभेदः फलभेदश्च वर्ण्यते **योहवैशिशु**मिति । प्रथमखण्डेन आधानप्रत्याधानस्थूणादामविशिष्टशिशुरूपमुख्यप्राणवेदनफलं द्विषद्भ्रातृव्यसप्तकावरोध इत्युक्तम् । द्वितीये अक्ष्यंशसप्तकद्वारागतदेवतासप्तकोपस्थेयस्य अक्षिगतप्राणस्य विज्ञानफलमन्नाक्षय इति । अथैतद्विवरणभूतः अर्वाग्बिलश्लोकः । प्राणस्येन्द्रियवत् भोगौपयिकदर्शनादिक्रियाकर्तृत्वस्य साक्षादभावात् तदक्षमवत्सतुल्यतया शिशुत्वम् । शिशुप्रस्तावे **आधानपदं** गर्भरूपाधानं वक्तुमर्हतीति औचित्यादाधानं तत्प्रथमनिक्षेपस्थानम्, हृदयम् । प्रत्याधानं ततो बहिराविर्भाव इति प्रसरस्थानं शरीरं **प्रत्याधानम्** । **स्थूणा** जीवः । **दाम** चान्नमिति । द्विषन्तो भ्रातृव्याः सप्त के इत्यत्र शाङ्करे, 'भ्रातृव्या हि द्विधा भवन्ति द्विषन्तः अद्विषन्तश्च । तत्र द्विषन्तो ये भ्रातृव्याः तान् अवरुणद्धि । सप्त ये शीर्षण्याः प्राणाः, विषयोपलब्धिद्वारा हि तत्प्रभवा विषयरागाः सहजत्वात् भ्रातृव्याः' इत्युक्तम् । पदान्तराणामर्थविषये शाङ्करोपेक्षायामप्ययमर्थोऽत्र गृहीतः स्यात् । उपरि 'तस्यासत ऋषयः सप्त तीरे' इति सप्तशीर्षण्येन्द्रियप्रस्तावात् तन्मूलविरोधिसप्तकस्य ग्रहणं हि नानुपस्थितम् । अतः **पुरुषपर्याप्तान्** इति प्रतिपुरुषं प्रसिद्धं स्थितान् इत्यर्थकं हशब्दविवरणम् ।

अस्य च शिशुब्राह्मणस्यान्यः कश्चिदाशयोपि सुवचः, यो **वेदान्तपुष्पाञ्जलाव**स्माभिर्दर्शितः । तत्संग्रह एवम् — मुख्यप्राणः शिशुः आधानशब्दवाच्यस्थितिस्थानरूपमुखाद्यवयवात्मकशरीरविशिष्टः, प्रत्याधानशब्दवाच्यगतिस्थानभूतशीर्षण्यसप्तकादीन्द्रियविशिष्टः, स्थूणाशब्दवाच्यो यः प्राणो जीवान्तर्यामी तत्र बद्धेन = तस्मै निवेदनीयेन अत एव परमपावनेन अन्नेन दाम्ना बद्धः = तादृशान्नसेवनात् भगवत्प्रीणनकर्मस्थानमात्रसञ्चारी इन्द्रियलौल्यरूपरागद्वेषादीन् शत्रून् अवरुणद्धीति । तथाच आहारशुद्धौ सत्त्वशुद्धिरित्ययमंश इहोपनिबध्यते, एतद्वेदनफलञ्च कीर्त्यत इति । परन्तु सर्वेषां जीवानां प्राणशब्दवाच्यत्वमुपपादयितुं प्रवृत्तत्वादस्य संदर्भस्य भगवन्निवेदितान्नसेवनरूपार्थमात्रे पर्यवसानं न युक्तमिति भाष्योक्तयोजनैव मुख्यार्थः ।

**अयं वाव शिशुर्योऽयं मध्यमः प्राणः। तस्येदमेवाऽऽधानमिदं प्रत्याधानं प्राणस्स्थूणाऽन्नं दाम ॥ १ ॥**

**तमेतास्सप्ताक्षितय उपतिष्ठन्ते। तद्या इमा अक्षन् लोहिन्यो राजय-**

---

स्ववशीकरोतीत्यर्थः। मन्त्रस्यार्थमाह श्रुतिः स्वयमेव **अयं वाव शिशुर्योऽयं मध्यमः प्राणः—अन्नं दाम**। **मध्यमः** शरीरमध्यवर्ती **अयं** पञ्चवृत्तिर्यःप्राणः, सोऽयमेव **शिशुः** इतरकरणवत् क्रियाकर्तृत्वादिशून्यत्वात् शिशुरिव शिशुरित्यर्थः। **वाव**शब्द एवार्थः। **तस्य** शिशोः वत्सस्थानीयस्य मुख्यप्राणस्य **इदमेव आधानम्**। आधीयतेऽस्मिन्नित्याधानं गर्भगोळकम्। **इदं** 'मध्यमः प्राणः' इत्यत्र मध्यशब्दोपस्थापितं शरीरमध्यदेशरूपं हृदयमेव **आधानं** गर्भगोळमित्यर्थः। **इदं प्रत्याधानम्**। इदमिति प्रत्यक्षोपस्थापितं शरीरमेव प्रत्याधानम्। आहितस्याधानं प्रत्याधानम्। गर्भे आहितो हि वत्सः पश्चाद्भूमावाधीयत इति **प्रत्याधानं** प्रसूतिभूमिः; एवं हृदये लब्धात्मको हि प्राणः पश्चात् सर्वशरीरव्यापी अभिव्यज्यत इति शरीरं प्राणस्य **प्रत्याधानं** प्रसूतिभूमिस्थानीयम्। **प्राणः स्थूणा**। स्थूणायां हि बद्धो वत्सो भवति; एवं प्राणशब्दिते जीवे हि मुख्यप्राणो बद्धो भवति। जीवे शरीरे स्थित एव प्राणस्यावस्थितेः। अतो जीवः प्राणस्य स्थूणास्थानीयः। **अन्नं दाम**। **दाम** पाश इत्यर्थः। यथा वत्सः पाशेन बद्धोऽवतिष्ठते, एवमन्नेन पाशेन बद्धो हि प्राणोऽवतिष्ठते। 'अन्नं प्राणस्य षड्विंशः' इति श्रुतेः। षड्विंशो हि पाशविशेषः। तथाच हृदयदेशे लब्धसत्ताकः शरीरेऽभिव्यक्तः पञ्चवृत्तिः प्राणोऽन्नेन जीवे निबद्धो वर्तत इति प्राणे वत्ससादृश्यं विभावयतः पूर्वोक्तं फलं भवतीति मन्त्रार्थ इत्यर्थः ॥ १ ॥

**तमेतास्सप्ताक्षितय उपतिष्ठन्ते**। **तमेतं** चक्षुष्यारूढं प्राणम् **एताः** वक्ष्यमाणाः सप्त अक्षितयः **उपतिष्ठन्ते** उपस्थिता भवन्ति। न विद्यते क्षितिः क्षयो येषां ते तथोक्ताः। अक्षितित्वञ्च तेषां वक्ष्यमाणानामापेक्षिकं द्रष्टव्यम्। ता एव सप्ताक्षितीराह **तद् या इमा अक्षन् — द्यौरुत्तरया**। **तत्** तत्र **अक्षन्** चक्षुषि — अक्षन्निति छान्दसं रूपम् — या इमाः **लोहिन्यः** लोहिताः **राजयः**

---

**एताः सप्ताक्षितय** इत्यत्र अक्षितिशब्दस्य स्त्रीलिङ्गत्वेपि **येषां ते** इत्येवं बहुव्रीहि विग्रहः वक्ष्यमाणानां रुद्रादीनां पुंस्त्वात् संभवमात्रेण। अतश्च **तेतथोक्ताः** इत्यस्य रुद्रादय

**स्ताभिरेनँ रुद्रोऽन्वायत्तोऽथ या अक्षन्नापस्ताभिः पर्जन्यो या कनीनिका तयाऽऽदित्यो यत्कृष्णं तेनाग्निर्यच्छुक्लं तेनेन्द्रोऽधरयैनं वर्तन्या पृथिव्यन्वायत्ता द्यौरुत्तरया। नास्यान्नं क्षीयते य एवं वेद ॥ २ ॥**

**तदेष श्लोको भवति—**

**अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम्।**

**तस्यासत ऋषयस्सप्त तीरे वागष्टमी ब्रह्मणा संविदाना ॥ इति।**

**अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इति। इदं तच्छिरः। एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः।**

---

रेखाः सन्ति, ताभिर्द्वारभूताभिः **एनं** प्राणं रुद्रः **अन्वायत्तः** उपस्थितो भवतीत्यर्थः। **अथे**ति वाक्यान्तरोपक्रमे। याः **अक्षन्** अक्षिणि शुण्ठ्यादिकटुद्रव्यसंयोगेनाभिव्यज्यमाना आपः, **ताभिः** द्वारभूताभिः **पर्जन्यो** देवतात्मा उपतिष्ठते; **या कनीनिका** अक्षिण या **कनीनिका** तारका — तेजोमयी दृक्छक्तिरिति यावत्—, **तया** तद्द्वारा आदित्य उपतिष्ठते; अक्षिण यत् कृष्णं रूपम्, तेनाग्निरुपतिष्ठते; यदक्षिण शुक्लं रूपं दृश्यते, तेनेन्द्रः उपस्थितो भवतीत्यर्थः। **अधरयैनं वर्तन्या पृथिव्यन्वायत्ता।** **अधरया वर्तन्या** अधरेण पक्ष्मणा **एनं** प्राणं पृथिवी **अन्वायत्ता** उपस्थितेत्यर्थः। **द्यौरुत्तरया**। वर्तन्येति वर्तते। **उत्तरया वर्तन्या** उत्तरेण पक्ष्मणा द्यौर्देवतात्मोपस्थितेत्यर्थः। सप्ताक्षित्युपस्थेयचक्षुर्निष्ठप्राणज्ञानस्य फलमाह। **नास्यान्नं क्षीयते, य एवं वेद।** स्पष्टोऽर्थः ॥ २ ॥

**तदेष श्लोको भवति। तत्** तस्मिन् मुख्यप्राणविषये = तत्प्रतिपादकः **एषः** वक्ष्यमाणः श्लोको भवतीत्यर्थः। 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' इत्यादिनोपात्तममुं मन्त्रं श्रुतिरेव व्याचष्टे। तत्र, 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' इति मन्त्रखण्डमुपादाय तेनोच्यमानमर्थमाह। **इतीदं तत् शिर** इति। **इति** मन्त्रखण्डेनोक्तं तत् इदं प्रसिद्धमेव शिरः; कण्ठादुपरिभाग इति यावत्। कथं तदर्थस्तदित्याशङ्क्याह। **एषह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः।** चम्यते अनेनेति **चमसः**

---

एव स्त्रीलिङ्गाक्षितिपदार्थतयोक्ता इत्यर्थः। उपरि **तावते**ति स्वयमेवोक्तेः। **आपेक्षिकम्।** न तु 'पुरुषो वा अक्षितिः' इति परमात्मन इव निरुपाधिकम्।

**तस्मिन् यशो निहितं विश्वरूपमिति । प्राणा वै यशो निहितं विश्वरूपम् । प्राणानेतदाह । तस्यासत ऋषयस्सप्त तीरे इति । प्राणा वा ऋषयः । प्राणानेतदाह । वागष्टमी ब्रह्मणा संविदानेति । वाग्घ्यष्टमी ब्रह्मणा संवित्ता**[1] ॥ ३ ॥

1. संवित्ते. **शां.** संवित्ता. **मां.**

---

भक्षणसाधनमित्यर्थः । **एषः** उक्तो मुखरूपश्चमसः **अर्वाग्बिलः** । अधोविद्यमानस्याऽऽस्यस्य बिलरूपत्वादर्वाग्बिलत्वम् । **ऊर्ध्वबुध्नः** । शिरस ऊर्ध्वस्थूलमूलभागरूपबुध्नाकारत्वादूर्ध्वबुध्नत्वम् । लोके हि प्रसिद्धश्चमस ऊर्ध्वबिलः तिर्यग्बुध्नः । अयं तु कण्ठोर्ध्वभाग उक्तगुणो विलक्षणश्चमस इति भावः । **तस्मिन् यशो निहितं विश्वरूपमिती**त्युपात्तं मन्त्रखण्डं विवृणोति **प्राणा वै यशो निहितं विश्वरूपं प्राणानेतदाह** । **इति** एतत् 'तस्मिन् यश' इत्यादिवाक्यं प्राणानाहेति प्रतिज्ञा । तत्र हेतुमाह **प्राणा वै यशो निहितं विश्वरूपम्** । प्राणस्य प्राणापानादिबहुरूपतया विश्वरूपत्वम् । यशोवत् प्रसृमरत्वात् यशस्त्वेन रूपणम् । वृत्तिभेदात् प्राणा इति बहुवचनम् । एतादृशो मुख्यप्राणः तस्मिन् मुखरूपे चमसे निहित इति मन्त्रखण्डार्थ इत्यर्थः । **तस्यासत ऋषयस्सप्ततीर इती**त्युपात्तमन्त्रखण्डस्यार्थमाह **प्राणा वा ऋषयः प्राणानेतदाह** । * नासाक्षिश्रोत्रास्योपाधिसंबन्धिनः सप्त शीर्षण्याः प्राणाः ऋषय इति मन्त्रोक्ताः । अतः **तस्यासत ऋषय इत्येतत्** अयं मन्त्रखण्डः प्राणानाहेति । तथा च सप्त शीर्षण्याः प्राणाः **तस्य** मुखचमसस्य **तीरे** समीपे वर्तन्त इत्यर्थ इत्यर्थः । **वागष्टमी ब्रह्मणा संविदानेती**त्युपात्तं मन्त्रभागं व्याचष्टे **वाग्घ्यष्टमी ब्रह्मणा संवित्ता** । वागेवाष्टमी । ननु सप्तमीत्वेनोक्ताया वाचः कथमष्टमीत्वमित्यत्राह **ब्रह्मणा संविदाना** । **ब्रह्मणा** वेदेन [1]चतुर्मुखेन वा **संविदाना** संवादं कुर्वती वागष्टमीत्यर्थः । तथा च वाचो वक्ष्यमाणप्रकारेणात्तृत्वेन रूपेण सप्तमत्वेऽपि वेदवक्तृत्वेन रूपान्तरेणाष्टमत्वमुपपद्यत इति मन्त्रार्थ इत्याह **ब्रह्मणा संवित्ता** । समित्येकीकारे । **वित्त**शब्दो [2]ज्ञानपरः । ब्रह्मणा एकप्रत्यया एकबुद्धिः **ब्रह्मणा** वेदेन[3] एककण्ठा । वेदवादिनीति यावत् ॥ ३ ॥

1. चतुर्मुखेन वेति **क.** कोशे । 2. ज्ञापनपरः. **ग.** 3. वेदेनेति क. कोशे न.

* **ग.** कोश इव **ख.** कोशेपि बहुभाष्यवाक्यत्यागेन मुख्यांशमात्र संग्रहवत् अत्र स्थले साक्षिश्रोत्र नासिकास्येति अशुद्धेरपि तथैव सत्वात् **ग.** कोशस्य **ख.** कोशोऽपि नूनं मूलम् ।

**इमावेव गौतमभरद्वाजौ अयमेव गौतमोऽयं भरद्वाजः; इमावेव विश्वामित्रजमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निः; इमावेव वसिष्ठ-कश्यपौ अयमेव वसिष्ठोऽयं कश्यपः ।**

**वागेवात्रिर्वाचा ह्यन्नमद्यतेऽत्रिर्ह वै नामैतद्यदत्तिरिति । सर्वस्यात्ता भवति, सर्वमस्यान्नं भवति, य एवं वेद ।। ४ ।।**

इति चतुर्थाध्याये द्वितीयं ब्राह्मणम् ।।

---

1. अत्तिर्ह वै नामैतत् यदत्रिरिति. शां.

---

सप्त ऋषयः के इत्यत्र श्रोत्राक्षिनासास्योपाधिसंबन्धिनः सप्त प्राणान् सप्तर्षित्वेन रूपयन्ती श्रुतिः प्रथमं कर्णौ प्रदर्शयन्त्युवाच **इमावेव गौतम-भरद्वाजौ** । **इमौ** दृश्यमानौ कर्णावेव गौतमभरद्वाजौ सप्तर्षीणामन्यतमा-वित्यर्थः । तत्र पुनर्विभज्य दर्शयति **अयमेव गौतमोऽयं भरद्वाजः** । दर्शितयोः कर्णयोर्मध्ये एको गौतमः एको भरद्वाज इत्यर्थः । एवमुत्तरत्रापि । चक्षुषी उपदिशन्त्युवाच—**इमावेव—जमदग्निः** । चक्षुषी एव विश्वामित्रजमदग्नी । तत्रापि चक्षुषोर्मध्ये एकं विश्वामित्रः, अपरं जमदग्निरित्यर्थः । नासिके उपदि-शन्त्युवाच **इमावेव—कश्यपः** । पूर्ववदेव नासिकयोर्मध्ये एका वसिष्ठः अपरा कश्यप इत्यर्थः । **वागेवात्रिर्वाचा ह्यन्नमद्यते** । वागिन्द्रियाधिष्ठानभूतेन आस्ये-नान्नमद्यत इति तदुपाधिद्वारकात्तृत्ववत्त्वात् वागिन्द्रियमेवात्रिरित्यर्थः । **अत्रिर्हवै नामैतद्यदत्तिरिति** । **यदत्तिरितिनामैतत्=एतत्** वागिन्द्रियं **यत्** यस्मादत्तृत्वा-दत्तिरित्येवं नामवत् , तस्मादत्रिर्हवै अत्रिरिति प्रसिद्धं परोक्षेणोच्यते इत्यर्थः । वागत्रित्वज्ञानस्य फलमाह **सर्वस्य—वेद** । य एवं वागत्रित्वं वेद, स **सर्वस्यात्ता भवति** सर्वस्य भोक्ता भवति । अत्र 'सर्वस्यात्ता भवती'त्यनेनैव 'सर्वमस्यान्नं भवती' त्यस्यार्थस्य सिद्धत्वात् सिद्धस्य कीर्तनमनुकूलभोग्यत्वकीर्तनमिति द्रष्टव्यम् ।। ४ ।। (४-२.)

## ४—३.

**द्वे वाव ब्रह्मणो रूपे मूर्तञ्चैवामूर्तञ्च, मर्त्यञ्चामृतञ्च, स्थितञ्च यच्च, सच्च त्यच्च ॥ १ ॥**

**तदेतन्मूर्तं यदन्यद् वायोश्चान्तरिक्षाच्च; एतन्मर्त्यमेतत्स्थितमेतत्सत् ।**

---

**द्वे वाव ब्रह्मणो रूपे** । ब्रह्मणो द्वे रूपे शरीरे । वावशब्दः प्रसिद्धौ । के ते द्वे रूपे इत्यत्राह **मूर्तञ्चामूर्तञ्च — सच्च त्यच्च** । **मूर्तं** कठिनम्, **अमूर्तम्** अकठिनम् । **मर्त्यं** मरणधर्मात्मकम् । विनश्वरमित्यर्थः । **अमृतं** तदितरत् । **स्थितम्** अव्यापकम् । **यत्** व्यापकम् । एति गच्छति सर्वानिति यत् — व्यापकमिति यावत् । **सत्** चाक्षुषप्रत्यक्षोपलभ्यम् । स्वतो रूपवदिति यावत् । **त्यत्** तदितरदित्यर्थः ॥ १ ॥

एवं ब्रह्मरूपत्वेन प्रतिज्ञाते मूर्तामूर्ते दर्शयन्ती श्रुतिस्तत्र प्रथमं मूर्तमर्त्यस्थितसदात्मकं रूपं दर्शयति **तदेतन्मूर्तं — सत्** । **यदन्यद्वायोश्चान्तरिक्षाच्च** = वाय्वन्तरिक्षव्यतिरिक्तं पृथिव्यप्तेजोलक्षणं यदस्ति, तदेतत् कठिनत्वेन मूर्तम् । **एतन्मर्त्यमेतत् स्थितमेतत् सत्** । तथा मूर्तत्वेनोक्तमेतदेव रूपं

---

(पु.१४४.) **अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इतीदं तच्छिरः** इति वाक्यार्थः, "चमसवदविशेषात्" इति सूत्रे दृष्टान्ततयोपन्यस्तः । **संविते** इति क्रियापदम्; न तु **वित्त**पदं परेषां श्रुतिपाठे ।

**यच्चेति** । **यत्** गच्छत् इत्यर्थः । तत्तात्पर्यार्थं उच्यते **व्यापक**मिति । बाह्यपृथिव्यप्तेजस्सार आदित्यमण्डलम्; तत्रत्यः पुरुषाकारः बाह्यवाय्वाकाशरूपामूर्तसारः । शारीरपृथिव्यप्तेजस्सारः चक्षुः; शारीरवाय्वाकाशसारः तत्रत्यपुरुषाकारः । तत्पुरुषद्वयस्य च रूपं माहारजनवस्त्रादितुल्यम् । नैवं मूर्तामूर्तद्वयविशिष्टमेव ब्रह्म; इतोप्यतिशयसद्भावात् । प्राणानां सत्यमित्यपि तत् सत्त्यस्य **सत्यमित्युच्यते** इति अनेन ब्राह्मणेन वर्ण्यते । अत्र किञ्चिद् वेदान्तपुष्पाञ्जलावभ्यधाम— पृथिव्यादित्रिकं सत्; वाय्वादिद्विकं त्यत् । सतो रसः आदित्यमण्डलमक्षि च; त्यस्य रसः उभयत्र पुरुष इति अत्र श्रुतत्वात् **सत्यस्य सत्यमित्यस्य** नाम्न एका व्याख्या एवं कृता भवति । सत्त्यस्य = सत् त्यत् इत्युक्तस्य त्रिकस्य द्विकस्य च सारभूतं सत्यम् = सदित्युच्यमानसूर्यमण्डलदक्षिणाक्षिस्थं त्यदित्युक्तपुरुषरूपम्, सद्विशिष्टत्यस्य सारभूतं सद्विशिष्टं त्यदिति । एवं व्याख्यायोच्यते — 'एतावदेव न । प्राणाः सत्यम् । तेषामेष सत्यमित्यपि सत्यस्य सत्यमित्युच्यत' इति । **सत्यशब्दे** सत्–ति–यम् इति विभज्य चिदचिन्नियन्तृत्वरूपार्थस्य स्थलान्तरे कथनवत् अयमपि कश्चिदत्रोपासनार्थमभिहितो निर्वाहप्रकार इति ।

**तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति। सतो ह्येष रसः ॥ २ ॥**

**अथामूर्तं वायुश्चान्तरिक्षश्च; एतदमृतमेतद्यदेतत्त्यत् । तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन् मण्डले पुरुषः । त्यस्य ह्येष रस इत्यधिदैवतम् ॥ ३ ॥**

**अथाध्यात्ममिदमेव मूर्तं यदन्यत् प्राणाच्च यश्चायमन्तरात्मन्नाकाशः; एतन्मर्त्यमेतत्स्थितमेतत्सत् ।**

---

विनश्वरत्वाव्यापकत्वचाक्षुषप्रत्यक्षोपलभ्यत्वरूपधर्मयुक्ततया **मर्त्यास्थितसच्छब्दवाच्यमित्यर्थः** । अत्र काठिन्यमतेजसोः करकासुवर्णादौ द्रष्टव्यम् । **तस्यैतस्य मूर्तस्य — रसः** । य एष तपति लोकं तेजोमण्डलरूपेण, **एषः** तदेतदादित्यमण्डलं **हि** यस्मात् सच्छब्दितस्य तेजोबन्नस्य रसः —, तेजोबन्नवत् मण्डलस्य प्रत्यक्षोपलभ्यमानत्वादिति भावः — तस्माद्धेतोरादित्यमण्डले मूर्तत्वमर्त्यत्वस्थितत्वसत्त्वरूपधर्मचतुष्टययुक्ततेजोबन्नरसत्वबुद्धिः कर्तव्येत्यर्थः ॥ २ ॥

**अथामूर्तम्** । रूपमुच्यत इति शेषः । तदेवाह **वायुश्चान्तरिक्षश्च — त्यत्** । अत्र वाय्वाकाशयोरमृतत्वयत्त्वरूपाविनश्वरत्वव्यापकत्वे आपेक्षिके मन्तव्ये, त्यत्त्वञ्च स्वतो रूपवत्त्वाभावपर्यवसन्नं ग्राह्यम् । अतस्तयोर्विनाशित्वकार्यत्वप्रत्यक्षत्वादेरविरोधः । **तस्यैतस्यामूर्तस्य--रसः** । **हि** यस्मादादित्यमण्डलस्थपुरुषोऽसदादिप्रत्यक्षगोचरत्वात् त्यस्य रसः, तस्मादमूर्तत्वामृतत्वयत्त्वत्यत्वलक्षणधर्मचतुष्टयाश्रयवाय्वन्तरिक्षरसत्वबुद्धिरादित्यमण्डलस्थपुरुषे परमात्मनि कर्तव्येत्यर्थः । **इत्यधिदैवतम्** । इति उक्तरीत्या अधिदैवतमुपासनकर्तव्यताप्रकार उक्त इत्यर्थः ॥ ३ ॥

**अथाध्यात्मम्** । इतःपरमध्यात्मं मूर्तामूर्तरसोपासनचिन्ताप्रकारो वर्ण्यते इत्यर्थः । **अध्यात्मम्** आत्मनि । देह इत्यर्थः । **इदमेव मूर्तं — सत्** । यत् मुख्यप्राणादन्यत्, यश्चान्तरात्मन् शरीरान्तः आकाशः तस्माच्चान्यत्, सर्वमिदं मूर्तमित्यर्थः । **आकाश** इत्यत्र तस्माच्चेति शेषः । एतन्मर्त्यम्, एतदेव स्थितम्,

**तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो यच्चक्षुः। सतो ह्येष रसः ॥ ४ ॥**

**अथामूर्तं प्राणश्च यश्चायमन्तरात्मन्नाकाशः; एतदमृतमेतद्यदेतत्त्यत्। तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो योऽयं दक्षिणेऽक्षन् पुरुषः। त्यस्य ह्येष रसः ॥ ५ ॥**

---

एतदेव सच्चेत्यर्थः। **तस्यैतस्य मूर्तस्य — रसः।** चक्षुर्गोळस्य प्रत्यक्षोपलभ्यत्वेन सद्रसत्वसंभवाच्चक्षुर्गोळे मूर्तत्वमर्त्यत्वस्थितत्वसत्त्वरूपधर्मचतुष्टयविशिष्टप्राणशरीरान्तराकाशोभयान्यशरीरवर्तिवस्तुरसत्वबुद्धिः कर्तव्येत्यर्थः। पदार्थाः पूर्ववत् ॥ ४ ॥

**अथामूर्तम्।** रूपमुच्यत इति शेषः। **प्राणश्च — त्यम्।** प्राणहार्दाकाशयोरमूर्तत्वामृतत्वयत्त्वत्यत्त्वाख्यधर्मचतुष्टयवत्त्वस्य पूर्वोक्तरीत्या संभवादमूर्तत्वादिधर्मचतुष्टयाश्रयप्राणहार्दाकाशयोः दक्षिणाक्षिस्थः पुरुषः परमात्मा रसः, तस्यासदादिप्रत्यक्षानुपलभ्यत्वेन त्यस्य रसत्वात्। ततश्च दक्षिणाक्षिस्थे परमात्मन्यमूर्तत्वादिचतुष्टयविशिष्टप्राणहार्दाकाशरसत्वबुद्धिः कर्तव्येत्यर्थः।

नन्वहिकुण्डलाधिकरणभाष्ये — "मूर्तामूर्तस्याचित्प्रपञ्चस्य ब्रह्मणो रूपत्वम्, 'द्वे वाव ब्रह्मणो रूपे' इत्यादिनोपदिश्यत" इत्युक्तम्। तत् व्याचक्षाणैर्व्यासार्यैः, "चिदचिदात्मकप्रपञ्चकथनेन अचित्प्रपञ्चोऽपि कथितस्स्यादित्यर्थः। न त्वन्ययोगव्यवच्छेदः। सङ्गत्युपयोगित्वेनाचित्प्रपञ्चोपादानं कृतमिति भाष्यस्थमचित्प्रपञ्चपदं चित्प्रपञ्चस्याप्युपलक्षकमिति व्याख्यातम्। न चास्मिन् श्रुतिसन्दर्भे चित्प्रपञ्चसमर्पकं किमपि पदं दृश्यत इति चेत् — न। वाय्वन्तरिक्षादिशब्दानां चित्संसृष्टाचित्परत्वोपपत्त्या चित्प्रपञ्चस्याप्युपादानसंभवेन चेत-

---

**वाय्वन्तरिक्षादीति।** अत्रेदं बोध्यम्—अहिकुण्डलाधिकरणभाष्ये प्रथमतः चिदचित्प्रपञ्चस्य सर्वस्य परमात्मानं प्रति रूपत्वं नित्यो नित्यानामित्यादि नानाप्रमाणसिद्धं प्रदर्श्य तत्राचिद्रूतरूपत्वशोधनमधिकरणार्थतयोच्यते। अतः 'द्वे वाव ब्रह्मणो रूपे इत्यादिनोपदिश्यत' इति भाष्ये आदिपदेन सत्यस्यसत्यमित्यस्यापि माह्यत्वात् अचित्प्रपञ्चपदं चिदचित्प्रपञ्चपरम्। चितां रूपत्वस्य रूपशब्दनिर्देशपूर्वं श्रुतावकथनेऽपि संदर्भबलेन रूपत्वोक्तिः सिद्धवत्येव टीकाशयः। न तु अमूर्तादिपदस्य चित्परत्वं टीकयामारोप्यमिति यद्यपि सुवचम्—अथापि, यस्याक्षरं शरीरमित्यादौ अक्षरपदेन चितोऽपि ग्रहणात् सर्वत्रानुप्रविष्टचित्सहिताचिद्ग्रहणं युक्तमित्याशयेन एवमेव निर्वाहः कृत इति।

**तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाऽग्न्यर्चिर्यथा पुण्डरीकं यथा सकृद्विद्युत्तम् ।**

**सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति य एवं वेद ।**

---

नाचेतनप्रपञ्चस्य 'द्वे वाव ब्रह्मणो रूपे' इत्यादिना ब्रह्मशरीरत्वप्रतिपादनादिति ध्येयम् ॥ ५ ॥

अथ न केवलं ब्रह्मणो मूर्तामूर्ताख्यचेतनाचेतनशरीरकत्वम्, किन्तु दिव्यतेजोविराजमानदिव्यविग्रहोऽप्यस्तीत्याह **तस्य हैतस्य पुरुषस्य रूपं — सकृद्विद्युत्तम्** । **यथा माहारजनं वासः** (कौसुम्भवस्त्रमिव) [1] महारजनं = हरिद्रा [2] । तद्रञ्जितं वासः, **यथा पाण्ड्वाविकं** पाण्डरवर्णः कम्बळ इव, **यथेन्द्रगोपः** शक्रगोपक्रिमिरिव, **यथाऽग्न्यर्चिः** अग्नेर्ज्वालेव, **यथा पुण्डरीकम्** अम्भोजमिवेत्यर्थः । **यथा सकृद्विद्युत्तम्** । **विद्युत्तमिति** द्युतेर्निष्ठा । विद्योतनमिति यावत् । **सकृत्** युगपत् प्रवृत्ता विद्युदिवेत्यर्थः । एवंरूपं रूपं तस्यैतस्य मूर्तामूर्तचिदचिच्छरीरस्य तद्रसत्वेनोपास्यस्य ब्रह्मणः ह 'आदित्यवर्णं तमसः परस्तात्', विद्युतः पुरुषात्', 'हिरण्मयः पुरुषः' इत्यादिश्रुत्यन्तरप्रसिद्धं भवतीति पूर्वेणान्वयः ।

**सकृद्विद्युत्तेव—वेद** । **सकृद्विद्युत्तेव** युगपत्प्रवृत्तविद्युदिवास्य **श्रीः** प्रकाशमाना (प्रकाशमानता ?) भवति । **यः एवं** पूर्वोक्तरीत्या **वेद** उपास्त इत्यर्थः ।

1. अयं ग. पाठः । 2. हारिद्रं तद्रञ्जितं वासः. ख. कुण्डलितं तु क. पाठः ।

---

अनेन ब्राह्मणेन पञ्चभूतात्मकप्रपञ्चभगवद्दिव्यमङ्गलविग्रहसकलचेतनविशिष्टं ब्रह्म क्रमेण वर्णयता सर्वेषां विग्रहतुल्यं ब्रह्मशरीरत्वं (उपासात्रेविध्यञ्च) दर्शितमिति ध्येयम् । नन्वत्र ब्राह्मणे दर्शितस्योपासनस्य किं फलम्? यत्तु, 'सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति, य एवं वेदे' ति, तत् अवान्तरांशवेदनफलतया मध्ये उक्तमिति न पूर्णोपासनफलमिति । उच्यते । उपासनस्याकथनात् तत्त्वस्थितिरियमित्यस्तु । यद्वा, 'सत्यस्य सत्य' मित्यजातशत्रुनिर्दिष्टनामार्थनिरूपणरूपत्वादस्य तदुपासनान्तर्भाव इति तर्हि सर्वमिदमजातशत्रुवाक्यं स्यादिति चेत्—अस्तु कामम्; तत्र ब्राह्मणे अन्ते इतिशब्दाभावात् वाक्यसमाप्तेस्तत्रानवगमात् । इहापि नेति चेत् । अध्याहार्य इह इतिशब्दः । यद्वा तत्र ब्राह्मणे, 'तस्योपनिषत् सत्यस्य सत्यमि-' इति इतिरेव तद्वाक्यसमाप्तिद्योतकः । श्रुतिस्तु स्वयं तदुपरि, 'प्राणा वै सत्यम्; तेषामेष सत्यम्' इति तद्व्याख्यां विधाय तद्विस्तरमेतावताऽकार्षीदिति । एवञ्च सर्वमिदं तदुपासनान्तर्गतमेवेति । शक्यते च सकृद्विद्युत्तेवेत्यादिना सार्वज्ञ्यादि मुक्तिफलमेवोक्तमुपासनाफलमिति वक्तुम् ।

**अथात आदेशो नेति नेति। न ह्येतस्मादिति नेत्यन्यत् परमस्ति। अथ नामधेयँ सत्यस्य सत्यमिति। प्राणा वै सत्यम्; तेषामेष सत्यम्॥ ६॥**

इति चतुर्थाध्याये तृतीयं ब्राह्मणम्।

---

'द्वे वाव ब्रह्मणो रूपे' इति मूर्तामूर्तात्मकरूपवत्त्वे ब्रह्मणः कथिते तत्प्रयुक्तेयत्तालक्षणपरिच्छेदरूपप्रकारवत्त्वं प्राप्तं प्रतिषेद्धुमुपक्रमते **अथात आदेशो नेति नेति**। **आदेशः** उपदेश इत्यर्थः। क्रियत इति शेषः। [1]अथशब्दो वाक्यान्तरोपन्यासार्थः। **अतः** पूर्वं ब्रह्मणो मूर्तामूर्तशरीरत्वेनोक्तत्वात् तत्प्रयुक्तेयत्तानिवारणायायमुपदेशः क्रियत इत्यर्थः। **इति**शब्द इयत्तालक्षणप्रकारवचनः। **नेति नेति** = नैनं नैवमित्यर्थः। मूर्तामूर्तात्मकरूपद्वयवत्त्वप्रयुक्तेयत्तालक्षणप्रकारयुक्तो (क्तं?) नेत्यर्थः। इयत्तायाः **नेति नेतीति** वीप्सा आत्यन्तिकाभावद्योतनार्था। नेति नेतीतीयत्तानिषेध एव; न पूर्वोक्तप्रकारनिषेध इत्यभिप्रायेणाह— **न ह्येतस्मादिति नेत्यन्यत्परमस्ति। इति नेति** इयत्तारहितं यद्ब्रह्म प्रतिपादितम्, तस्मादेतस्मादन्यद् वस्तु परं न ह्यस्ति। ब्रह्मणोऽन्यत् स्वरूपतो गुणतश्च **परम्** उत्कृष्टं नास्तीत्यर्थः। न त्वन्यमात्रस्यात्र निषेधः, तथा हि सति अन्यत् परमिति पदद्वयान्यतरवैयर्थ्यापत्तेरिति द्रष्टव्यम्। तदुपपादयति **अथ नामधेयं सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यम्**। प्रकृतिवत् स्वरूपविकाररहिततया सत्यशब्दवाच्येभ्यः प्राणशब्दनिर्दिष्टेभ्यश्चेतनेभ्योऽपि कदाचिदपि ज्ञानादिसंकोचाभावात् परमात्मा **सत्यं** निर्विकारमित्यतः तस्य **सत्यस्य सत्यमिति** नामधेयं भवति। अतः चेतनाचेतनाभ्यां परः स एवेति न ततोऽप्यन्यः पर इत्यर्थः।

ननु 'द्वे वाव ब्रह्मणो रूपे' इति पूर्वमुपदिष्टस्य मूर्तामूर्तात्मकरूपस्य, 'तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वासः' इति सन्दर्भेणोपदिष्टस्य वा रूपस्य, 'अथात आदेशो नेति नेती'त्यनेन निषेधः किं न स्यादिति चेन्न— तथासति रूपिणोऽपि ब्रह्मणः प्रतिषेधः प्राप्नोति। ननु तथासति मानान्तराप्राप्तब्रह्मस्वरूपप्रतिपादकशास्त्राप्रामाण्यप्रसङ्गात् तन्निषेधो नोपपद्यत इति चेन्न — 'द्वे

1. अथातश्शब्दौ वाक्यान्तरोपन्यासार्थौ।

वाव ब्रह्मणो रूपे' इति ब्रह्मणो मानान्तराप्राप्तमूर्तामूर्तात्मकरूपद्वयवत्त्वप्रतिपादकशास्त्रस्याप्यप्रामाण्यप्रसङ्गसाम्यात् । न चोपासनार्थं तदुपदेशसाफल्यमिति वाच्यम्—ब्रह्मस्वरूपेऽपि तथात्वप्रसङ्गात् । अतः 'नेतिनेती' त्यनेन इयत्तैव निषिध्यते ।

(१) इदं वाक्यमुभयलिङ्गपादे, "प्रकृतैतावत्त्व" मिति सूत्रे चिन्तितम् । तत्र हि — संसारिजीवस्येव ब्रह्मणोपि मनुष्यादिदेहान्तरवस्थित्या तत्प्रयुक्तसुखदुःखभोक्तृत्वमपि प्रसजेत् ।

यद्यपि परमात्मनो देहान्तरवस्थितिप्रयुक्तभोक्तृत्वमाशङ्क्य परितो दह्यमानगृहान्तर्वर्तित्वे देवदत्तयज्ञदत्तयोरविशिष्टेऽपि तत्स्वामिनस्तदभिमानिनो देवदत्तस्येव यज्ञदत्तस्य तत्कृतदुःखादर्शनवत्, देहान्तर्वर्तित्वे जीवपरयोरविशिष्टेऽपि, 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीती' ति श्रुत्यनुसारेण, देहाभिमानि जीववत् न परस्य भोक्तृत्वमिति, "संभोगप्राप्तिरिति चेन्न वैशेष्या" दिति सूत्रे स्थितम् । तथा स्मृतिपादेऽपि—सर्वस्यापि परमात्मशरीरतया शरीरं प्रति स्वामित्वमपि परमात्मनोऽस्तीति मनुष्यादिशरीरस्वामिनः तदन्तर्वर्तिनः परमात्मनो भोक्तृत्वमवर्जनीयमिति जीवेश्वरस्वभावाविभाग इति पूर्वपक्षं प्राप्य — शरीरस्वामित्वेऽपि तदन्तर्वर्तित्वेऽपि नित्याविर्भूतापहतपाप्मत्वादिगुणकस्य परमात्मनो न भोक्तृत्वप्रसङ्गः । यथा लोके राजशासनानुवर्तिनां तदतिवर्तिनाञ्च राजानुग्रहनिग्रहकृतसुखदुःखयोगेऽपि न राज्ञि तत्प्रसक्तिः, एवं न परमात्मनि शासके[1] भोक्तृत्वप्रसक्तिरिति, "भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्" इत्यधिकरणे स्थितम् —

तथाऽपि शासकस्यापि राज्ञः स्वेच्छयाऽपि पूयशोणितादिकर्दमिते कारागृहे वसतो दुःखसंबन्धापरिहारवत् परमात्मनोऽपि स्वेच्छया हेयेषु मनुष्यादिशरीरेषु वसतो दुःखसंबन्धोऽपरिहार्यः । ब्राह्मणादिशरीरस्वामित्वाच्च ब्राह्मणादिशब्दवाच्यत्वावश्यम्भावेन, 'ब्राह्मणो यजेते' त्यादिविधिकिङ्करत्वावश्यम्भावेन कर्मवश्यत्वादेरप्यवश्यम्भावादिति पूर्वपक्षे प्राप्ते —

"न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि" । मनुष्यादिदेहस्थानप्रयुक्तं भोक्तृत्वं परस्य न संभवति । 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सोऽपि-

1. शास्तरि न. क.

पाप्मः सत्यकामः सत्यसंकल्प ' इति श्रुत्या सर्वत्र हि विद्यमानं परं ब्रह्म हेयप्रत्यनीकत्वकल्याणैकतानत्वरूपोभयलिङ्गयुक्तमेव भवति । अतो न भोक्तृत्वप्रसङ्गः । " भेदादिति चेन्न प्रत्येकमतद्वचनात् "। यथा जीवस्यापहतपाप्मत्वादिगुणाष्टकयुक्तस्यापि मनुष्यादि देहयोगरूपावस्थाभेदाद्भोक्तृत्वम्, एवं परमात्मनोऽपि [1] किं न स्यादिति चेन्न — अन्तर्यामिब्राह्मणे, ' स त आत्माऽन्तर्याम्यमृतः ' इति [2] प्रतिपर्यायमतद्वचनात् = अन्तर्यामिणो निर्दोषत्ववचनात् । जीवस्य तु पराभिध्यानात् स्वरूपं तिरोहितमिति भावः । अन्तर्यामिणः परस्य ब्रह्मणो नित्याविर्भूतगुणाष्टकत्वलक्षणं पृथक्त्वं [3] श्रूयते । अतो न जीवसाम्यम् । " अपि चैवमेके "। अपि च एके शाखिनः, ' तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीती ' ति जीवपरयोर्भोक्तृत्वाभोक्तृत्वलक्षणं वैषम्यमधीयते । " अरूपवदेव हि तत्प्रधानत्वात् "। सर्वशरीर्यपि ब्रह्म अरूपवदेव = अशरीरितुल्यमेव । ' आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरे ' ति नामरूपकार्यास्पृष्टत्वे सति नामरूपनिर्वोढृत्वस्य प्रतिपादनेन मनुष्यादिनामरूपसंबन्धकृतकार्यस्य तत्राप्रसक्तेः । अतः सर्वत्र विद्यमानमपि ब्रह्म उभयलिङ्गमेव ।

ननु ब्रह्मणः कल्याणगुणा न सन्ति । ' अथात आदेशो नेति नेती ' ति प्रतिषेधादिति चेत् — तत्राह " प्रकाशवच्चावैयर्थ्यात् "। यथा, ' सत्यं ज्ञानमनन्तं ब्रह्मे ' ति श्रुत्यवैयर्थ्याय ज्ञानादिरूपत्वमभ्युपगम्यते, एवम् ' सत्यकामस्सत्यसंकल्प ' इत्यादिश्रुत्यवैयर्थ्याय कल्याणगुणगणोऽप्यभ्युपगन्तव्यः । ननु ' सत्यं ज्ञान ' मिति ज्ञानस्वरूपत्वप्रतिपादनादेव ज्ञानस्य गुणाश्रयत्वासंभवादर्थाद्गुणा निषिद्धा इति चेत — तत्राह " आह च तन्मात्रम् " । ' सत्यं ज्ञान ' मिति श्रुतिः ब्रह्मणो ज्ञानरूपतामात्रं प्रतिपादयति । न सर्वज्ञत्वादिगुणाश्रयतां प्रतिषेधति। तेजोरूपस्य सूर्यस्य प्रभारूपतेजोन्तराश्रयत्ववत् ज्ञानरूपस्यापि ब्रह्मणः सार्वज्ञ्याद्याश्रयत्वमुपपद्यते । " दर्शयति चाथो अपि स्मर्यते "। दर्शयति च वेदान्तगणः,

1. ' यस्य पृथिवी शरीरमित्यादि शरीरसंबन्धित्वावस्थाभेदात् ' इत्यधिकं क. कोशे । 2. प्रतिपर्यायमित्यारभ्य भाव इत्यन्तं ख. कोशोचीतं चेन्नेत्यत्र हेतुसमर्पकत्वाद् गृहीतम् । अन्यत्र नायं पाठः । 3. अयं. ख. ग. पाठः । अमृतत्वमिति क. कोशे ।

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्, 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे' ति ब्रह्मण उभयलिङ्गत्वम् । स्मर्यते च, 'यो मामजमनादिञ्च वेत्ति लोकमहेश्वर' मित्यादिभिः ।

"अत एव चोपमा सूर्यकादिवत्"। यत एवं तत्तत्स्थानस्थितस्यापि तद्दोषास्पृष्टत्वम्, अत एव,

"आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।
तथात्मैकोऽप्यनेकस्थो जलाधारेष्विवांशुमान् ॥
एक एव हि भूतात्मा भूतेभूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥"

इति जलगतसूर्यप्रतिबिम्बादिवदिति दृष्टान्तो युज्यते । "अम्बुवदग्रहणात्तु न तथात्वम्"। तुशब्दश्चोद्यं द्योतयति। अम्बुवदिति सप्तम्यन्ताद्वतिः। परमात्मनो न तथात्वम्=सूर्यप्रतिबिम्बादिसाम्यं न संभवतीत्यर्थः । कुतः? अम्बुवदग्रहणात् । अम्बुनि यथा प्रतिबिम्बो गृह्यते, न तथा हि परमात्मा गृह्यते । तत्र हि अजलस्थमेव प्रतिबिम्बं जलस्थमिव गृह्यते। अतः तत्र तद्गतदोषासंस्पर्शो युज्यते । प्रकृते च विकारान्तर्वर्तिनि ब्रह्मणि तद्गतदोषासंस्पर्शो न युज्यते वक्तुम् । "वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च"। विकारान्तर्भावप्रयुक्तविकारगतवृद्धिह्रासादिभाक्त्वलक्षणो यो दोषः, स नापतति। तद्गततया प्रतीयमानस्यापि तद्गतदोषास्पृष्टत्वांशे आकाशसूर्यरूपदृष्टान्तद्वयसामञ्जस्यसंभवात् । सिंह इव माणवक इत्यादौ विवक्षितकार्यांश एव दृष्टान्तत्वदर्शनाच्च न सर्वथा साम्यं दृष्टान्तदार्ष्टान्तिकयोरपेक्षितमिति भावः ।

ननु, 'द्वे वाव ब्रह्मणो रूपे' इति प्रकृतस्य मूर्तामूर्तात्मकप्रपञ्चस्य, 'यथा माहारजनं वासः' इत्यादिनोपक्षिप्तस्याऽऽकारविशेषस्य च, 'अथात आदेशो नेति नेती' ति प्रतिषेधात् निर्विशेषमेव ब्रह्म। अतो नोभयलिङ्गत्वमिति। तत्राह "प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः"। प्रकृतैः 'द्वे वाव ब्रह्मणो रूपे' इत्यादिना प्रतिपादितैः रूपैर्ब्रह्मणो यदेतावत्त्वम्=परिच्छिन्नत्वलक्षणो यः प्रकारः, तम् इतिशब्देन परामृश्य 'नेति नेती' ति निषेधति, न तु स्वरूपेण ब्रह्मसंबन्धि

रूपं निषेधति। न हि श्रुतिः स्वयमेव मानान्तराप्राप्तं मूर्तामूर्तात्मकप्रपञ्चरूपत्वं ब्रह्मणः प्रतिपाद्य स्वयमेव निषेधतीति युज्यते वक्तुम्। 'प्रक्षाळनाद्धि पङ्कस्य दूरादस्पर्शनं वर' मिति न्यायात्। अत एव निषेधानन्तरमपि ब्रह्मणो भूयो गुणजातं ब्रवीति श्रुतिः। 'न ह्येतस्मादिति नेत्यन्यत्परमस्ती' ति स्वरूपतो गुणतश्च सर्वोत्कृष्टत्वं प्रतिपाद्यते। 'अथ नामधेयं सत्यस्य सत्य' मिति नामधेयरूपगुणवत्ता च प्रतिपाद्यते। अतः 'नेति नेती' ति प्रकृतैतावत्त्वमात्रस्य निषेधः।

"तदव्यक्तमाह हि"। तत् = ब्रह्म अव्यक्तम् = मानान्तरागम्यमिति श्रुतिराह। 'न चक्षुषा गृह्यते नापि वाचे' ति। ततश्च मानान्तरागम्यस्य श्रुत्येकसमधिगम्यस्य ब्रह्मस्वरूपस्य वा, मूर्तामूर्तात्मकप्रपञ्चशरीरकत्वस्य वा न निषेधो युक्तः।

"अपि संराधने प्रत्यक्षानुमानाभ्याम्"। संराधनं = सम्यक्प्रीणनम्। भक्तिरूपापन्ननिदिध्यासनम्। तस्मिन् सत्येव साक्षात्कारः; नान्यथेति,

'ततस्तु तं पश्यते निष्कळं ध्यायमानः।'

'नाहं वेदैर्न तपसा न दानेन न चेज्यया।',

'भक्त्या त्वनन्यया शक्य अहमेवंविधोर्जुन॥'

इति श्रुतिस्मृतिभ्यामवगम्यते। "प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्"। निदिध्यासनजन्यसाक्षात्कारदशायाञ्च ब्रह्मस्वरूपभूतानन्दज्ञानादितुल्यतया, 'अहं मनुरभवं सूर्यश्चे' ति ब्रह्मशरीरभूतमनुसूर्यादिप्रपञ्चस्यापि तत्त्वविद्भिर्वामदेवादिभिः साक्षात्क्रियमाणत्वात् ब्रह्मस्वरूपवत् तच्छरीरभूतमूर्तामूर्तात्मकप्रपञ्चस्यापि अबाधितत्वं सिद्धम्। ब्रह्मस्वरूपप्रकाशश्च कथं[1] भवतीत्याकांक्षायामाह — प्रकाशश्च कर्मण्यभ्यासादिति। संराधनात्मके ध्यानरूपे कर्मण्यभ्यासात् प्रकाशो भवति। 'ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढव' दिति श्रुत्युक्तेरिति भावः।

1. कदा. ख. ग.

---

निगूढवत् = अरणिनिगूढमग्निमिव।

"अतोऽनन्तेन तथा हि लिङ्गम्"। अतः=उक्तैर्हेतुभिः अनन्तेन कल्याणगुणगणेन विशिष्टं ब्रह्म। तथा हि सत्येव उभयलिङ्गं ब्रह्म उपपन्नं भवतीत्यर्थः। इति तत्र (?) स्थितम्।

(२) **न ह्येतस्मादिति नेत्यन्यत्परमस्तीति** वाक्यं तत्रैव पादे, 'तथान्यप्रतिषेधा" दिति सूत्रे चिन्तितम्। तत्र हि उक्तात् परब्रह्मणोपि परं किञ्चिदस्ति, 'य आत्मा स सेतुर्विधृति' रिति सेतुत्वश्रवणात्। सेतुर्हि कूलान्तरप्रापकः। एवमस्यापि परस्य ब्रह्मणः प्राप्यान्तरप्रापकत्वमभ्युपगन्तव्यम्। किञ्च, 'चतुष्पाद्ब्रह्म षोडशकल' मिति एतस्य ब्रह्मणः परिच्छिन्नत्वावगमात् अपरिच्छिन्नं मुख्यं ब्रह्मेतो [2]जगत्कारणादन्यदिति निश्चीयते। तथा, 'अमृतस्यैष सेतु' रिति प्राप्येणामृतेन संबन्धो व्यपदिश्यते। तथा, 'परात्परं पुरुषमुपैति दिव्य'मिति परस्माद्ब्रह्मणः प्राप्यस्य भेदो व्यपदिश्यते। अतः परब्रह्मणोऽप्यन्यत् प्राप्यान्तरमस्तीति, "परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः" इति सूत्रेण पूर्वपक्षं प्रापय्य[1]—

उत्तरं पठति "सामान्यात्तु"। तुशब्दः पक्षं व्यावर्तयति। असंकरकारित्वलक्षणसेतुसामान्यात् सेतुरिति ब्रह्मोच्यते। 'एष सेतुर्विधरण एषां लोकानामसंभेदाये' ति श्रुतेः। प्रसिद्धो हि सेतुः पार्श्वद्वयवर्तिजलासङ्करकारीति भावः। "बुद्ध्यर्थः पादवत्"। 'चतुष्पाद्ब्रह्म' त्युन्मानव्यपदेशः बुद्ध्यर्थः = उपासनार्थः। यथा ब्रह्मप्रतीकभूते मनसि 'वाक् पादः प्राणः पादः' इति व्यपदेशः उपासनार्थः, तद्वत्। न हि मनसो वागादिपादवत्त्वं वास्तवं संभवति। "स्थानविशेषात् प्रकाशादिवत्"। यथा आलोकाकाशादे र्वातायनघटादिस्थानभेदात् परिच्छिन्नतयाऽनुसन्धानम्, एवमनुन्मितस्यापि ब्रह्मण उन्मितत्वमुपपद्यत इति भावः। "उपपत्तेश्च"। 'यमेवैष वृणुते तेन लभ्यः' इति स्वप्राप्तेः स्वयमेव साधनतया जोघुष्यमाणे ब्रह्मणि, 'अमृतस्यैष सेतु' रिति श्रुतस्य प्राप्यप्रापकभावसंबन्धस्योपपत्तेरित्यर्थः। "तथाऽन्यप्रतिषेधात्"। यदुक्तम्, 'परात्पर' मिति परभेदो

1. पूर्वपक्षे प्राप्ते ग. 2. जगत्कारणं क.

४—४.

**मैत्रेयीति होवाच याज्ञवल्क्यः, 'उद्यास्यन् वा अरेऽहमस्मात् स्थानादस्मि ; हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥ १ ॥**

**सा होवाच मैत्रेयी, 'यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा**

---

व्यपदिश्यत ' इति — तन्न । ' न ह्येतस्मादिति नेत्यन्यत्परमस्ती ' ति नेतिशब्द-निर्दिष्टात् एतस्माद्ब्रह्मणोऽन्यत् परं नास्ति इति अन्यस्य परस्य प्रतिषेधात् । ' परात्परं पुरुष ' मिति श्रुतिस्तु, ' अक्षरात्परतः परः ' इति अक्षरापेक्षया परस्मात् समष्टिजीवात् परम् अदृश्यत्वादिगुणकं प्रकृतं भूतयोन्यक्षरपुरुषमेव प्रतिपादयतीत्यर्थः । " अनेन सर्वगतत्वमायामशब्दादिभ्यः " । अनेन ब्रह्मणा सर्वस्य जगतो गतत्वं = व्याप्तत्वम्, ' तेनेदं पूर्णं पुरुषेण सर्वम् ', ' अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः ', ' नित्यं विभुं सर्वगतं सुसूक्ष्म ' मित्यादिभिरायामवाचिशब्दादियुक्तैः प्रमाणैरवगम्यते । अत इदमेव परं ब्रह्म सर्वस्मात् परमिति स्थितम् ॥ प्रकृतमनुसरामः ॥ ६ ॥ ४—३.

अमृतत्वप्राप्त्युपायत्व—सर्वजगत्कारणत्व—सर्वात्मत्वादिकल्याणगुणप्रतिपिपादयिषया चतुर्थं ब्राह्मणमिदमारभ्यते **मैत्रेयीति होवाच याज्ञवल्क्यः** । याज्ञवल्क्यस्य मुने द्वे भार्ये [ स्म ? ] स्तः, मैत्रेयी कात्यायनी चेति । मित्राया अपत्यं **मैत्रेयी** । तां **मैत्रेयी**त्यामन्त्र्याऽऽह याज्ञवल्क्य इत्यर्थः । किमितीत्यत्राह — **उद्यास्यन् वा अरे — अन्तं करवाणीति** । अरे मैत्रेयि ! **अहमस्मात् स्थानात्** गार्हस्थ्यलक्षणादाश्रमात् **उद्यास्यन्नस्मि** ऊर्ध्वं गन्तुमिच्छन्नस्मि । हन्तेत्यनुकम्पायाम् । **ते** = तव अनया कात्यायन्या सह **अन्तं** निश्चयं = युवयोः कलहशान्तये द्रव्यविभागनिर्णयं करवाणीत्युवाचेत्यन्वयः ॥ १ ॥

**सा होवाच मैत्रेयी** । सा मैत्रेयी तं मुनिं प्रत्याहेत्यर्थः । किमिति ? **यन्नु म इयं**

---

अथ मैत्रेयीविद्या प्रस्तूयते । विरज्य संन्यस्यतोऽप्याश्रितरक्षणसविधानं पूर्वमनुपेक्ष्य कार्यमिति गम्यते हन्तेत्यादिना ।

**स्यात्, कथं तेनामृता स्यामिति। नेति होवाच याज्ञवल्क्यः; यथैवोपकरणवतां जीवितम्, तथैव ते जीवितँ स्यात्; अमृतत्वस्य तु नाशाऽस्ति वित्तेनेति ॥२॥**

**सा होवाच मैत्रेयी, येनाहं नामृता स्याम्, किमहं तेन कुर्याम्। यदेव भगवान् वेद, तदेव मे ब्रूहीति ॥ ३ ॥**

---

—**कथं तेनामृता स्यामिति।** हे **भगोः**—'संबुद्धौ विभाषा भवद्भगवदघवतामोच्चावस्य' इति ओत्वम्, रुत्वम्, विसर्गश्च—हे भगवन्! सर्वाऽपीयं पृथिवी वित्तेन पूर्णा **यत्** यदि **मे** मम **स्यात्** वशंवदा स्यादित्यर्थः। तदा तेन वित्तेन **कथं** कथञ्चिदपि **अमृता स्यां नु**? संसारान्मुक्ता स्यां किमित्यर्थः। **नु** इति प्रश्ने। **नेति होवाच याज्ञवल्क्यः**। सः याज्ञवल्क्यः **नेत्युवाच ह**। 'वित्तेन त्वं संसारान्मुक्ता न स्याः' इति ह निश्चितमाहेत्यर्थः। तर्हि वित्तेन किं स्यादित्यत्राह **यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यात्। उपकरणवतां** भोगसाधनवतां **जीवितं** सुखजीवनं यथा सिद्ध्यति, तथैव ते भोगोपकरणवित्तवत्याः **जीवितं** सुखेन जीवनं परं लभ्यते इत्यर्थः। यथा वित्तेन ऐहिकसुखम्, तथा मोक्षसुखमपि किं न लप्स्यत इति पृच्छन्तीं पुनः प्रत्याह **अमृतत्वस्य तु नाशास्ति वित्तेन। तुशब्दो** मोक्षस्य, 'नान्यः पन्थाः' इत्यादिश्रुतिसिद्धं ज्ञानैकसाध्यत्वमाह। **अमृतत्वस्य** मोक्षस्य वित्तेन साधनेन प्राप्यत्वाशाऽपि नास्तीत्यर्थः। मोक्षस्य वित्तप्राप्यत्वसंभावनाऽपि नास्तीति यावत् ॥ २ ॥

**सा होवाच — ब्रूहीति।** सा मैत्रेयी प्रत्युवाच। **ह** = अहो स्त्रियाः वित्तत्यागेन मोक्षसाधनापेक्षेति भावः। किमिति। ममामृतत्वप्राप्त्यनुपायभूतेन वित्तेनाहं किं करिष्यामीति। तर्हि किं तवापेक्षितम्? तत्राह **यदेव — ब्रूहीति।** भगवान् **यत्** अमृतत्वप्राप्त्युपायं वेद, तदेव मे ब्रूहीत्यर्थः ॥ ३ ॥

---

**कथं तेनामृता** स्यामित्यत्र कथमित्यस्य कथमपीत्यर्थस्य स्वीकृतत्वात् तत्स्थाने **नु** इति प्रश्नपरं योजितम्। **यदि** स्यादित्यनेनैव वितर्कस्य ज्ञातत्वात् **नु** इतीदं तत्रानपेक्षितमिति 'अमृता स्यां'मित्यत्रान्वितं कृतम्। ज्ञातस्यैव वितर्कस्य स्पष्टप्रतीतये नुरित्युक्तौ तु कथमित्यस्य प्रश्नपरत्वं ग्राह्यम्। यदि वित्तेनामृतं भवेत्, तर्हि स भवनप्रकारो जिज्ञास्यतेऽनुष्ठानार्थम्। तदा च सर्वपृथिवीसंपत्त्यर्थमपि यत्नः कर्तव्य इति। एवं प्रश्नपरेव सती वित्तवैयर्थ्यमेवोद्घाटयामासेति ध्येयम्।

भगवान् ब्रवीतु' इति प्रयोगे, पतिः स्वप्रार्थनां जातु न मन्येतेति **ब्रूही**ति अत्र परं मध्यमपुरुषस्यैवादरः।

**स होवाच याज्ञवल्क्य', प्रिया बतारे नः सती प्रियं भाषसे। एह्यास्व। व्याख्यास्यामि ते; व्याचक्षाणस्य तु मे निदिध्यासस्वेति। ब्रवीतु मे भगवानिति ॥ ४ ॥**

**स होवाच–न वा अरे पत्युः कामाय पतिः प्रियो भवति। आत्मनस्तु**

---

**स होवाच याज्ञवल्क्यः**। एवमुक्तो याज्ञवल्क्यः तां प्रत्युवाच। किमितीत्यत्राह **प्रिया — निदिध्यासस्वेति**। **बते**त्यनुकंपायाम्। अरे मैत्रेयि! त्वं **सती** साध्वी च सती, **नः** अस्माकं **प्रिया** अनुकूला च सती **प्रियं** मनोनुकूलं वाक्यं भाषसे इति तां प्रशस्यात्यादरेणाह **एहि**–इह आगच्छ–**आस्स्व**–मत्समीपे उपविश इति। सभक्तिसाध्वसां तां समीपोपवेशने अनुज्ञाय आह **व्याख्यास्यामि ते**। अमृतत्वोपायं तवापेक्षितं **व्याख्यास्यामि** वक्ष्यामि। किन्तु **व्याचक्षाणस्य** व्याख्यानं कुर्वतः **मे** मम वाक्यानि **निदिध्यासस्व** अर्थतो निश्चयेन ध्यातुमिच्छ। यद्वा–, व्याचक्षाणस्य तु मे मुखं **निदिध्यासस्व** – निध्यानमवलोकनम् — अवलोकितुमिच्छ। अवलोकयेति यावत्। इतिशब्दो वाक्यावसाने। एवमुक्ता मैत्रेयी सावधाना सती स्वस्य श्रवणावधानं ज्ञापयितुमाह **ब्रवीतु मे भागवनिति**। स्पष्टोऽर्थः ॥ ४ ॥

एवमुपसन्नायै मैत्रेय्यै मोक्षोपायं ब्रह्मोपासनमुपदेष्टुमारेभे इत्याह **स होवाच**। किमिति? **न वा अरे** —। अत्रामृतत्वार्थिन्यै मैत्रेय्यै अमृतत्वसाधनदर्शनविषयतया, आत्मैव द्रष्टव्य इत्युपदिश्यमान आत्मा परमात्मेत्यवश्यमभ्युपेयः; 'तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते' इति तस्यैव परमात्मदर्शनस्य मोक्षसाधनत्वावगमात्। 'ब्रह्म तं परादा' दित्यादिना तस्यात्मनः सर्वात्मत्वकथनात्, 'आत्मनो वा अरे दर्शनेने' त्यादिना तज्ज्ञानेन सार्वज्ञ्यावेदनेन सर्वोपादानत्वप्रतिपादनाच्च अस्मिन् प्रकरणे द्रष्टव्यतया उपदिश्यमान आत्मा परमात्मेति सिद्धम्। अतः तदुपपादकस्यास्य संदर्भस्य यथा परमात्मपरत्वं स्यात्, तथाऽर्थो वर्णनीय इति च सिद्धम्।

**कामाय पतिः प्रियो भवति। न वा अरे जायायै कामाय जाया प्रिया भवति।**

---

अतोऽस्य वाक्यस्यायमर्थः—**न वा** इत्यत्र **वै**शब्दोऽवधारणे। नैवेत्यर्थः। **पत्युः कामाय। कामः** सङ्कल्पः। **कामाय** सङ्कल्पाय। संकल्पं सफलीकर्तुमित्यर्थः। 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी। तथा च **अरे**! हे मैत्रेयि! पत्युः प्रियत्वम्, 'अहमस्याः प्रियस्स्या' मिति पतिसंकल्पसाफल्याय नैव भवतीति **न वा अरे पत्युः कामाय पतिः प्रियो भवती**त्यस्यार्थः। जायां प्रति पत्युः प्रियत्वं पतिसंकल्पायत्तं न भवतीति यावत्। 'वेदाध्ययनं सफलीकर्तुं यज्ञः' इत्युक्ते वेदाध्ययनस्य यज्ञः फलमिति हि सिद्ध्यति। एवं संकल्पसाफल्याय प्रियत्वमित्युक्ते संकल्पायत्तं प्रियत्वमिति हि सिद्ध्यति। ततश्च, 'अहमस्या जायायाः प्रियस्स्या' मिति पतिः सङ्कल्पयन्नपि न स तस्याः प्रियो भवति, किन्त्वात्**मनः कामाय पतिः** पत्न्याः **प्रियो भवति**। पत्युः प्रियत्व**मात्मनः कामाय**। परमात्मनः संकल्पात् पतिः पत्न्याः प्रियो भवतीत्यर्थः। **आत्म**शब्दस्य परमात्मनि मुख्यवृत्तत्वादत्राप्यात्मेति परमात्मैवोच्यते। प्रकरणावैरू-

---

**न वा अरे** इति। यद्यपि वेदं पृष्टवत्यै तदेवोपदेष्टव्यम्—अथापि वैराग्यस्य पूर्वमपेक्षितत्वात्, यदिद वित्ते ते वैराग्यम्, तादृशं वैराग्यं पत्यौ मयि मम त्वयीव, तथा पुत्रादिष्वपि आवश्यकमितीदं भङ्गया सूचयितुमिदं वाक्यजातम्। **वैशब्दस्य** प्रसिद्धयर्थकत्वं न घटते; पत्यादेः प्रियभावः परमात्मसंकल्पाधीन इत्यस्य लोकप्रसिद्धत्वाभावादित्यत्राह **वैशब्दोऽवधारण** इति। अत्र पतिसंकल्पाधीनं न भवति पत्युः प्रियत्वमित्ययमंशो यद्यपि लोकप्रसिद्धः—अथापि आंशिकतयैव तस्योपपाद्यतया **वै**शब्दस्य प्रसिद्धिरूपार्थोपेक्षा। **सफलीकर्तु**मिति दृष्टान्ते प्रयुज्य, दार्ष्टान्तिके **साफल्याये**ति प्रयोक्तुरयमाशय —क्रियार्थोपपद सूत्रात् चतुर्थीसमर्थने, 'परमात्मसंकल्पं सफलीकर्तुं प्रियं भवति' इति वक्तव्यम्। तुमुनोऽर्थः इच्छाधीनेच्छाविषयत्वम्। न च परमात्मसंकल्पसफलीकरणेच्छाधीना काचित् प्रियभवनेच्छा-लोकेऽस्तीति तु शङ्का न कार्या। तुमुनेव प्रयोक्तव्य इति निर्बन्धाभावात्। क्रियासाधकक्रियावाचकपदसमभिव्याहृतात् अप्रयुक्तक्रियाकर्मवाचकात् चतुर्थीत्येव सूत्रार्थात्। **आत्मनः कामाय प्रियो भवती**त्यस्य परमात्मसंकल्पसफलीकरणहेतुप्रियभवनाश्रय इत्यर्थात्, तत्र सफलीकरण-

प्याच्च । ततश्च परमात्मा — यो यस्य प्रियः — भवत्विति तत्तत्कर्मानुगुणं संकल्पयति । स तस्य प्रियो भवतीति वाक्यार्थः । अत्रापि कामायेत्यत्रापि (?) पूर्ववच्चतुर्थी ।

---

क्रियाकर्मतया कामशब्दाच्चतुर्थीति । **यो यस्येति** । अत्र यः इति यच्छब्दस्य न **भवत्वि**त्यत्रान्वयः । अयं प्रियो भवत्विति हि संकल्पाकारः, न तु, यः प्रियो भवत्विति । अत एवं योजना— अद्य लोके यो यस्य प्रियो दृष्टः, तत्तत्कर्मानुगुणं परमात्मा, **भवत्विति** = अयमस्य प्रियो भवत्विति संकल्पयति । ततश्च स तस्य प्रियो भवतीति । अथवा **यो यस्ये**त्यस्य **स तस्ये**त्येव प्रतिसंबन्धि । देशभाषायामिवात्रापि एवं प्रयोगः साधुरिति भाव्यम् ।

एवञ्च वस्तुप्रियत्वप्रयोजकसंकल्पाश्रयस्य परमात्मन उपासने स प्रसन्नः उपासितुर्योग्यतानुरोधेन वस्तुनि प्रियत्वमापादयेत् । इतरवैराग्यपूर्वकं तदुपासने तु सविभूतिके स्वस्मिन्नेव निरतिशयप्रियत्वमापादयेदिति स आत्मा द्रष्टव्यः । किञ्च पत्यादौ प्रियत्वं स्वसंकल्पात् कल्पयन् परमात्मा न हि स्वं प्रियं न कल्पयेत् । प्रत्युत स्वयं निरतिशयप्रियत्वं स्वस्मिन् संकल्प्य अन्येष्वपि लेशतः तत् आदध्यात् । अतो न केवलं पत्यादिमात्रे, किंतु सर्वत्र प्रपञ्चे तदीये, तस्मिन् परमात्मनि च प्रियत्वाविर्भावोपयोगितत्संकल्पसंपादनाय स द्रष्टव्यः । अपि च आत्मशब्दार्थः शेषी । शेषलक्षणशोधने च शेषी प्रियतम इति सिद्ध्येत् । तथा च प्रियतमसंकल्पाधीनं खल्वेषां प्रियत्वम्, न तूदासीनयत्किञ्चिदधीनमिति स प्रियतम एव द्रष्टव्यः । एवम् **आत्मा वा अरे द्रष्टव्य** इत्यस्य पूर्ववाक्यैः समन्वय इति ।

**आत्मनस्तु कामाये**त्यत्र आत्मशब्दस्य जीवपरतया योजनायां तु न परमात्मप्रकरणघटनेति तदुपेक्षा । तदा तु **काम**शब्दो न संकल्पपरः । किंतु इष्टफलपरः । लोके पतिः प्रियो भवतीति यत्, तत् न पतीष्टफलसंपत्तये, किंतु स्वेष्टपूर्तये । पत्यादेः प्रियत्वमिच्छाविषयत्वं हि तस्य स्वतः फलत्वाभावात् फलोपायतया वाच्यम् । तथाच स्वस्य फलेच्छायां सत्यां तत्फलसिद्धये पत्यादिरिष्यते । यस्मात् पत्यादिः स्वेष्टसिद्धये इष्यते, तस्मात् पत्यादिकं परित्यज्य स्वात्मा द्रष्टव्य इत्यर्थवर्णने पृष्ठताडनाद्दन्तभङ्ग इत्युक्तं स्यात् । एवमर्थवर्णने हि स्वात्मन इष्टत्वात् स्वात्मगतप्रयोजनस्येष्टत्वम् । तस्येष्टत्वात् तत्साधनस्य पत्यादेरिष्टत्वम् । पत्यादेरिष्टत्वात् पत्यादिगतफलादेरपीष्टत्वम् । [ न तु पत्यादिगतफलेच्छाप्रयुक्तं पत्यादेरिष्टत्वम्; वैपरीत्यात् ] इति विवेकमात्रं भवेत् । न तु पत्यादि उपेक्ष्य आत्ममात्रस्यादरणीयत्वं सिद्ध्येत् । नन्वात्मनः प्रियत्वमनौपाधिकम्; अन्यगतं प्रियत्वं तु आत्मगतप्रियताप्रयुक्तत्वात् औपाधिकमिति सिद्ध्यतीति चेत्—किं तेन? न हि फलापेक्षया फलसाधने प्रियत्वमौपाधिकमित्येतावता फलकामी साधनमुपेक्षेत ।

इत एवं वक्तव्यम्—स्वाभीष्टसाधकत्वेनैव पत्यादेः प्रियत्वात्, यत्र स्वाभीष्टसाधकत्वं पुष्कलम्, तत्रैव प्रीतिर्युक्तेति आत्मदर्शनमेव कार्यमिति । एवञ्च सति आत्मदर्शनपदेन परमात्मदर्शनं सम्यक् ग्रहीतुं शक्यते । परन्तु आत्मशब्दयोः पूर्वोत्तरयोर्विभिन्नार्थस्वीकारात् वैरूप्यम् ।

आत्मनस्तु कामाय जाया प्रिया भवति । न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्ति । आत्मनस्तु कामाय पुत्राः प्रिया भवन्ति । न वा अरे वित्तस्य कामाय वित्तं प्रियं भवति । आत्मनस्तु कामाय वित्तं प्रियं भवति । न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवति । आत्मनस्तु कामाय ब्रह्म प्रियं भवति । न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवति । आत्मनस्तु कामाय क्षत्रं प्रियं भवति । न वा अरे लोकानां कामाय लोकाः प्रिया भवन्ति । आत्मनस्तु कामाय लोकाः प्रिया भवन्ति । न वा अरे देवानां कामाय देवाः प्रिया भवन्ति । आत्मनस्तु कामाय देवाः प्रिया भवन्ति । न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्ति । आत्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति । आत्मनस्तु कामाय सर्वं प्रियं भवति ।

---

एवमुत्तरत्रापि वाक्यानामर्थो द्रष्टव्यः । **ब्रह्म** ब्राह्मण इत्यर्थः । **क्षत्रं** क्षत्रिय इत्यर्थः । **लोकाः** स्वर्गाद्या इत्यर्थः **देवाः** उपास्या देवता इत्यर्थः ।

---

ननु कामशब्दस्य संकल्पार्थकत्वे परमात्मसंकल्पादेव पत्यादेः प्रियत्वमिति, 'न वा अरे पत्युः कामाय पतिः प्रियो भवति, आत्मनस्तु कामाये'तिवत्, 'न वा अरे जायायाः कामाय पतिः प्रियो भवति, आत्मनस्तु कामाये' इत्यपि वक्तव्यं भवेत् । जायागतायां पतिविषयकप्रीतौ जायासंकल्पाधीनत्वस्याप्यभावात् । अतः आत्मशब्दः स्वात्मपर एवेति चेन्न—**पत्युः कामाये**त्यत्र **पति**शब्दः परमात्मव्यतिरिक्तसर्वोपलक्षक इति **आत्मनस्तु** इति तुशब्देन ज्ञापिततयेष्टसिद्धेः ।

ननु आत्मशब्देन स्वात्मविशिष्टपरमात्मा गृह्यताम् । कामश्चेच्छा । स्वात्मविशिष्टपरमात्मेच्छापूर्तये पत्यादेः प्रियत्वात् स्वात्मविशिष्टपरमात्मा द्रष्टव्य इत्यर्थः । तत्र स्वगतेच्छा फलेच्छारूपा; परमात्मगतेच्छा च संकल्परूपा । इच्छात्वेन रूपेणोभयोरनुगमेन ग्रहणमित्यस्त्विति चेत्—अस्तु कामम् । सर्वथा परमात्मा प्रकरणार्थः ; अन्यथा अमृतत्वोपायतया द्रष्टव्यत्वादेरनन्वयादिति । **अधिकरणसारावलिः श्रीभाष्यञ्च** सावधानमिह सेव्ये । **आत्मशब्दस्य** केवलपरमात्मपरत्व — विशिष्टपरमात्मपरत्वरूपपक्षद्वयलाभात् इत्यलमत्र । द्वितीयमैत्रेयीब्राह्मणे, 'एवं वा अरे अयमात्मे'ति आत्मशब्दोऽपि द्रष्टव्यः ।

**आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः।**

ततः किमित्यत्राह **आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः**। तस्मात् पतिजायादीनां प्रियत्वं यत्संकल्पायत्तम्, तस्य परमात्मनः प्रसादाय परमात्मा द्रष्टव्यः। स हि परमात्मा दर्शनेन प्रसन्नस्सन् तद्दर्शनरूपब्रह्मविद्ययैव पतिजायादिषु तत्तत्प्रतिनियतप्रियत्वापादकपुण्यापुण्यात्मकभगवत्सङ्कल्पोपरमे कर्मप्रतिबन्धनिवृत्तेः स्वोपासकाय निरङ्कुशस्वातन्त्र्येण सर्वेषामपि वस्तूनाम्, पतिजायादिवत्, ततोऽधिकं वा प्रियत्वमापादयितुं शक्नोति। मोक्षदशायामानुकूल्यप्रातिकूल्यविभागविरहितं सर्वशरीरकं सविभूतिकं ब्रह्म आनन्दरूपं तत्प्रसादादेव तदुपासकोऽनुभवतीति तत्प्रसादसिद्ध्यर्थं स एव परमात्मोपास्य इति फलितार्थः। 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्। सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' इति श्रवणादिति भावः।

अत्र स्वाध्यायस्यार्थपरत्वेन अधीतवेदः पुरुषः प्रयोजनवदर्थदर्शनात् तन्निर्णयाय स्वयमेव गुरुमुखात् न्याययुक्तार्थग्रहणलक्षणश्रवणे प्रवर्तत इति श्रवणस्य प्राप्तत्वात् **श्रोतव्य** इत्यनुवादः। स्वात्मनि, एवमेवेति युक्तिभिः श्रु (ज्ञा) तार्थप्रतिष्ठापनलक्षणमननस्य श्रवणप्रतिष्ठार्थतया प्राप्तत्वात् **मन्तव्य** इति चानुवादः। अतोऽनवरतभावनारूपं ध्यानमेव **निदिध्यासितव्य** इति विधीयते। उपायदशाप्रभृति भगवद्ध्यानस्यानुकूलत्वसूचनाय निदिध्यासितव्य इति सन्नन्तपदेन निर्देशः।

अत्र 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' इति ध्यानस्यैव मोक्षं प्रत्यव्यवहितहेतुत्वश्रवणात्, 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति दर्शनस्यापि मोक्षाव्यवहितकारणत्वश्रवणात्, उभयोरेकार्थत्वस्य वक्तव्यत्वात्, चाक्षुषज्ञानवाचितया दृशिधातोः, चाक्षुषज्ञानस्य च, 'न चक्षुषा गृह्यते' इत्यचाक्षुषतया प्रतिपन्ने[1] ब्रह्मणि [2]विधातुमसंभवात्, द्रष्टव्य इति दर्शनशब्देन उपचारात् दर्शनसमानाकारमतिविशदं[3] ज्ञानमभिधीयते। ततश्च **द्रष्टव्यो निदिध्यासितव्य**

1. अचाक्षुषज्ञानवेद्ये. क. 2. विधातुमिति न ख. कोशादौ. 3. दर्शनसमानाकारमिति विशदयज्ञानं. क.

**मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदँ सर्वँ विदितं [1] भवति ।**

1. भवतीति न. शां. मा.

---

इत्याभ्यां दर्शनसमानाकारत्वविशिष्टं ध्यानं विधीयते । 'आर्षेयं वृणीते द्वौ वृणीते त्रीन् वृणीते न चतुरो वृणीते न पञ्चातिवृणीते' इत्यत्र 'आर्षेयं वृणीते', 'त्रीन् वृणीते' इत्याभ्यां त्रित्वविशिष्टार्षेयवरणविधानवदिति द्रष्टव्यम् ।

एवं विहितस्य दर्शनसमानाकारत्वविशिष्टविशदतमनिध्यानस्य किं फलमित्यत्राह **मैत्रेय्यात्मनो—सर्वँ विदितं भवति** । अत्र वाक्ये **विज्ञानशब्दो** निदिध्यासनपरः ; 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः मन्तव्यः निदिध्यासितव्यः' इति स्थानप्रमाणात् । **वै**शब्दोऽवधारणे । तथा च तस्मिन् परमात्मनि श्रवणमननाभ्यां दर्शनसमानाकारध्यानविषयीकृते सत्येव तत्प्रसादादिदं सर्वं विदितं भवति, अनुकूलत्वेन विदितं भवति । सर्वं प्रियं भवतीति यावत् । आत्मनो दर्शनात्मकविज्ञानेनैव सविभूतिकनिरतिशयप्रियब्रह्मप्राप्तिर्भवति, नान्येन वित्तादिनेति

---

**आर्षेयमिति । द्रष्टव्यः श्रोतव्य** इत्यत्र दर्शनानन्तरं श्रवणमित्यस्यासंभवात् **द्रष्टव्य** इतीदं **निदिध्यासितव्य** इत्येतदनन्तरं निवेश्यम् । ध्यानानन्तरं दर्शनमित्यपि यद्यपि न वक्तुं शक्यते, परमात्मनोऽतीन्द्रियत्वात्—अथापि ध्यानस्यैवात्यतिशयाद्दर्शनसमानाकारता संप्रतिपन्नेति तत्र दर्शनवाचोयुक्तिः । एवञ्च ध्यानदर्शनयोरभेदे ध्यानस्य दर्शनस्य च मोक्षसाधनत्वपरं द्विविधं वचनमपि समञ्जसं भवति । ततश्च वस्त्वभेदे विधिद्वयश्रवणेऽपि एकविधिपर्यवसानमेव । अत्र आर्षेयवाक्यं दृष्टान्तः । 'त्रीन् वृणीते' इति वाक्यमेव विधायकम् । [त्रित्वविशिष्टवरणे विहिते एकस्य द्वयोश्च तत्रान्तर्भावात्] तत्पूर्वश्रुतम्, 'एकं वृणीते, द्वौ वृणीते' इति वाक्यद्वयमनुवादरूपम् । ततोऽपि पूर्वश्रुतम् 'आर्षेयं वृणीत' इत्येतत् अन्तिमविधिना 'त्रीन् वृणीते' इत्यनेन संगतम् । अन्यथा त्रयस्ते आर्षेयरूपा इत्यलाभात् । त्रयाणामार्षेयाणाञ्चाभिन्नत्वात् विहितविधानायोगात्, प्राप्तार्षेयोद्देशेन अप्राप्तत्रित्वविधिवर्णनानुकूलोद्देश्यविधेयवाचकपदद्वयाभावाच्चैकवाक्यतया त्रित्वविशिष्टार्षेयविधिरेव । आर्षेयः गोत्रप्रवर्तकर्षिः । सर्वमिदम्, 'अत्र्यार्षेयस्य हानं स्यात्' इति पूर्वमीमांसासूत्रेऽभिप्रेतं मन्तव्यम् । तद्वदिह **निदिध्यासितव्य** इत्येतत्पूर्वश्रुतं **श्रोतव्यो मन्तव्य** इति द्वयमनुवादरूपम् । ततोऽपि पूर्वश्रुतं **द्रष्टव्य**-इतीदमन्तिमविधिना संगतम् । पूर्ववदेकवाक्यताभावात् पृथग्विधेयवस्तुद्वयाभावादिति भावः ।

ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद। क्षत्रं तं परादाद्योऽन्यत्रा-

---

वाक्यार्थः। यद्वा निदिध्यासितव्यतया निर्दिष्टस्य परमात्मनः जगत्कारणत्वे सत्येव ध्येयत्वसिद्धिः स्यात्; 'कारणं तु ध्येय' इत्यवधारणात्। अतः तस्य जगत्कारणत्वं लक्षणमाह **आत्मनो वा** इत्यादिना। उपादानोपादेययोरभेदात् तस्मिन्नात्मनि ज्ञाते सर्वं विदितं भवतीत्यर्थः। श्रवणमतिविज्ञानदर्शनानि ज्ञानावस्थाविशेषाः। अत्र **सर्वमिद**मिति शब्दौ स्थूलावस्थचिदचिद्विशिष्टब्रह्मपरौ। सर्वशरीरकस्य ब्रह्मण एव चराचरव्यपाश्रयसकलशब्दवाच्यत्वस्य, "चराचरव्यपाश्रयस्तु स्या" दित्यत्र समर्थितत्वात्। आत्मशब्दोऽपि सूक्ष्मचिदचिद्विशिष्टब्रह्मपरः; तस्य शरीरप्रतिसंबन्धिनि रूढत्वात्, सामर्थ्यात् सूक्ष्मचिदचितोः शरीरत्वेन प्रवेशात्। अतः तयोरात्मसर्वपदार्थयोरभेदात् आत्मविज्ञानेन सर्वं विज्ञातमित्युपपद्यते। अनेन जगदुपादानत्वमुक्तं भवति।

अत्र निदिध्यासितव्य इत्युक्त्वा सर्वोपादानत्वकथनात् जगत्कारणत्वं सकलपरविद्यानुयायीत्युक्तं भवतीति वदन्ति॥ ५॥

ननु कथमात्मनि विज्ञाते सर्वमिदं विज्ञातं स्यात्, जगतः तद्भिन्नत्वादित्याशङ्क्य सर्वात्मत्वमेवाह **ब्रह्म तं परदाद्योऽन्यत्रात्मनो ब्रह्म वेद—वेद।**

---

"**आत्मनि खल्वरे दृष्टे** इत्यादिना उपास्यलक्षणम्" इति श्रीभाष्यमनुरुध्य पक्षान्तरमाह **यद्वेति**। सद्विद्यायां मृद्दृष्टान्तादिबलेन 'येनाश्रुतं श्रुतम्' इत्यादिवाक्ये उपादानोपादेयभावनिबन्धनाभेदप्रयुक्त-एकविज्ञानरूपसर्वविज्ञानावगमात् तत्तुल्ये प्रकृतवाक्येऽपि तथेति भावः। एवमुपास्यस्यात्मनो जगत्कारणत्ववर्णनेन, 'अमृतत्वप्राप्तौ स्वात्मावलोकनस्यापि परम्परयोपयोगात् तदुपदेश एव कृतोऽस्तु' इति शङ्का शमिता भवति।

**वदन्तीत्य**स्वरसः। प्रकृतविद्यायां प्रकरणवशात् तत्सिद्धावपि सर्वत्र तत्सिद्धौ मानाभावात्। 'मोक्षार्थोपास्यभेदे ह्युभयमपि समन्वेति विद्याविकल्पा' दिति **चाधिकरणसारावलिः** कारणत्वं कतिपयोपासनविश्रान्तं दर्शयति।

ईदृक्षात्मानभिज्ञानादिदानीं स्थितं तत्तद्वस्तुज्ञानं यादृशम्, तादृशं संसारवर्धकमित्याह **ब्रह्म तमि**त्यादिना।

**त्मनः क्षत्रं वेद । लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान् वेद । देवास्तं परादुर्योऽन्यत्रात्मनो देवान् वेद । भूतानि तं परादुर्योन्यत्रात्मनो भूतानि वेद । सर्वं तं परादाद्योऽन्यत्रात्मनस्सर्वं वेद —**

---

ब्रह्म ब्राह्मणवर्गः । क्षत्रादिसहपाठात् । यस्त्वधिकारी ब्राह्मणवर्णम् **आत्मनोऽन्यत्र** परमात्मनोऽन्यत्र स्थितम्, न तु परमात्मनि स्थितम्, अपरब्रह्मात्मकं स्वनिष्ठं **वेद** जानीयात्, तं ब्रह्म स ब्राह्मणवर्ण एव **परादात्** पराकुर्यात् = अभिभवेत् । आत्मनोऽन्यत्वेन = अब्रह्मात्मकत्वेनावगतो ब्राह्मणवर्ण एव तं तथावगन्तारं संसारयतीत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । अतः सर्वस्य ब्रह्मात्मकत्वमेव स्वरूपमित्युक्तं भवति । अब्रह्मात्मकत्वप्रतिपत्तेः संसारहेतुत्वोक्त्या मिथ्याज्ञानत्वसिद्धेरिति द्रष्टव्यम् । **क्षत्रं** क्षत्रियवर्णः । **लोकाः** भूस्वर्गादिलोकाः । **देवाः** आराध्याः तत्तल्लोकप्रापिकाः देवताः । **भूतानि** अचित्संसृष्टचेतनवर्गः । इतरः स्पष्टार्थः ( स्पष्टोऽर्थः ) ।

ननूक्तरीत्या सर्वस्य ब्रह्माधारकतया ब्रह्मात्मकत्वेऽपि ब्रह्मात्मकस्य शरीरभूतस्य जगतः शरीरिभूतब्रह्मापेक्षया भिन्नत्वेन तथाविधब्रह्मज्ञानेन सर्वज्ञानासंभवात्, तस्मिन् विज्ञाते इदं सर्वं विदितमिति निर्देशो नोपपद्यत इत्याशङ्क्य, सर्वस्यापि तच्छरीरत्वेन, शरीरवाचिनाञ्च शब्दानां शरीरिपर्यन्तत्वात् **इदं सर्व**मिति शब्दाभ्याम्, अन्यैरपि शब्दैस्तत्तच्छरीरकं ब्रह्मैवाभिधीयत इति सर्वशरीरिणि ब्रह्मणि

---

**अन्यत्र स्थित**मिति । ननु 'इदं सर्वं यदयमात्मे' ति अभेदस्योपदेक्ष्यमाणत्वात् इह भेदप्रतीतिनिषेध एव कर्तव्यः । अतः **अन्यत्रे**त्यस्य व्यतिरेकेणेत्यर्थः । ब्राह्मणवर्णादिकमात्मनोऽन्यत् यो वेदेत्यर्थः । किञ्च अन्यत्र स्थितमित्युक्तौ, यो ब्रह्मक्षत्रादिकं परमात्मभिन्नवृत्तित्वेन वेदेत्यर्थः सिद्ध्यति । न चैवं लोकानुभवः । अतो निषेधाप्रसक्तिरित्यत्राह **स्वनिष्ठ**मिति । ब्रह्मक्षत्रादिपदानां प्रकारमात्रपरत्वात तत्र प्रकार्यपेक्षया भेदस्य वस्तुतो वर्तमानत्वेन भेदप्रतीतिनिषेधायोगात्, सप्तम्याः त्रलो बलेन आधाररूपार्थस्य प्रतीतस्याबाधेन च एवमर्थवर्णनम् । तात्पर्यं तु, स्वतन्त्रं वेद परमात्मतन्त्रत्वेन न वेदेत्येव । अन्यपदस्य यत्र हि द्वैतमित्यादाविव विभक्तमित्यर्थोऽपि भवितुमर्हति । एवम् **अन्यत्रे**त्यस्य विनेत्यर्थस्वीकारे, ब्रह्म क्षत्रादि यः परमात्मपृथग्भूतं वेदेति ऋजुरेवो वाक्यार्थः । अयमपि वाक्याधिकरणटीकोक्त पक्षः

**इदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानि इदँ सर्वं यदयमात्मा ॥ ६ ॥**

**स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय; दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥ ७ ॥**

---

ज्ञाते तच्छरीरभूततया तदन्तर्गतञ्च सर्वमिदं ज्ञातं भवत्येवेत्यभिप्रेत्याह **इदं ब्रह्मेदं क्षत्रं — अयमात्मा** । **अयमात्मे**ति यदुक्तं ब्रह्म, तदेव ब्रह्मक्षत्रलोकदेवादिसर्वरूपम्; सर्वशब्दवाच्यमित्यर्थः । ततश्चात्मनि विज्ञाते इदं सर्वं विदितं भवति = एतत्सर्वशरीरकं ब्रह्म विदितं भवतीत्यर्थ उपपद्यत इति भावः ॥ ६ ॥

एवं जगत्कारणत्वविशिष्टपरमात्मोपासनां विधाय उपासनोपकरणभूतमनःप्रभृतिकरणनियमनमाह **स यथा दुन्दुभेर्हन्यमानस्य — शब्दो गृहीतः** । **दुन्दुभे**रित्यनादरे षष्ठी । **ग्रहण**शब्द इह निरोधपरः । उपादाननिरोधयोर्द्वयोरपि ग्रहणशब्दवाच्यत्वात् । यथा गृहीतानि पुष्पाणि, गृहीतश्चोर इति । **स यथा** = स दृष्टान्तो यथेत्यर्थः । **दुन्दुभेर्हन्यमानस्य** = दुन्दुभौ हन्यमाने **बाह्यान्** ततो बहिर्निस्सरतः शब्दान् **ग्रहणाय न शक्नुयात्** = न निरोद्धुं शक्नुयादित्यर्थः । कथं तर्हि निरुणद्धीत्यत्राह **दुन्दुभेस्तु — गृहीतः** । किन्तु आहन्यमानं दुन्दुभिमनुपेक्ष्य **दुन्दुभेर्ग्रहणेन** शब्दनिःसरणाधारभूतदुन्दुभिनिरोधेन, **दुन्दुभ्याघातस्य वा** तदाहन्तृपुरुषस्य निरोधेन वा शब्दो **गृहीतः** भेर्याः निःसरन्तः शब्दा निरुद्ध्यन्त इत्यर्थः । [1] भेरीदण्डयोरन्यतरनिरोधेन तत्संयोगनिरोधद्वारा भेरीशब्दा यथा निरुद्ध्यन्ते, एवम्—इन्द्रियेषु विषयगणे व्याप्रियमाणेषु बाह्यार्थानुभवो दुर्निरोधः । तस्मात्—विषयापसरणेन वा इन्द्रियनिरोधेन वा विषयेन्द्रियसंयोगनिरोधद्वारा परमात्मसाक्षात्कारविरोधिबाह्यार्थज्ञानं निरुध्यत इत्यर्थः । एवं निरुध्य, 'निदिध्यासितव्यो द्रष्टव्यः' इत्युक्तं दर्शनसमानाकाराविच्छिन्नपरमात्मस्मृतिसन्तानं साधयेदिति भावः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ ७ ॥

1. 'दुन्दुभ्याघातस्येति कर्तरि क्त' इत्याधिकपाठः क. कोशे ।

---

"अयमत्रवाक्यार्थः" इति भाष्यघट्टे । यदयमात्मेति । इदं ब्रह्मेत्यारभ्य सर्वमित्यन्तेनोक्तब्रह्मक्षत्राद्यभेदविधिः आत्मानमुद्दिश्य । तथा च ब्रह्मादिपदं तत्तच्छरीरकपरमिह । अत्र यदित्यस्य यस्मादित्यर्थं स्वीकृत्य, यस्मादयमात्मा ब्रह्मादिसर्वान्ताभिन्नः, तस्माद् ब्रह्मादि परादात्, यद्यन्यत्रात्मनो वेदेत्येकवाक्यताऽपि सुवचा ।

स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय; शङ्खस्य तु ग्रहणेन शङ्खध्मान[1]स्य वा शब्दो गृहीतः ॥ ८ ॥

स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय; वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ ९ ॥

स यथाऽऽर्द्रैधाग्नेरभ्याहितात् पृथग् धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्श्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्या-

1. शङ्खध्मस्य. शां. मा.

---

स यथा शङ्ख — गृहीतः । शङ्खध्मानस्येति नन्द्यादित्वात् कर्तरि ल्युः । शङ्खध्मातुरित्यर्थः । शिष्टं स्पष्टम् ॥ ८ ॥

स यथा वीणायै वाद्यमानायै — गृहीतः । अत्र वीणायै इति चतुर्थी षष्ठ्यर्थे । छान्दसो विभक्तिव्यत्ययः । सर्वं पूर्ववत् ॥ ९ ॥

पूर्वं परमात्मनः सामान्येनोक्तं सर्वकारणत्वं प्रपञ्चयति स यथार्द्रैधाग्नेः अभ्याहितात् पृथग् धूमा विनिश्चरन्ति एवं—निःश्वसितानि । एधशब्दः अकारान्तः इन्धनवाची । [1]आर्द्रैधविशिष्टाग्निग्रहणं ब्रह्मण एव चिदचिद्विशिष्टस्य सङ्कल्पविशिष्टस्य चोपादानत्वनिमित्तत्वयोर्ज्ञापनार्थम् । [2]अग्निर्हि धूमोत्पत्तावौष्ण्येन निमित्तम्; इन्धनविशिष्टत्वेन तूपादानं भवतीति द्रष्टव्यम् । अभ्याहितात् आध्मानवीजनादिना प्रवर्तितादित्यर्थः । पृथग्विधा धूमा विनिश्चरन्ति निर्गच्छन्तीत्यर्थः । स यथा स दृष्टान्तो यथा, एवं वै एवमेव अरे मैत्रेयि! अस्य पूर्वोक्तस्य जगदभिन्ननिमित्तोपादानभूतस्य महतो भूतस्य परमात्मनः निश्वसितं निश्वासवदनायासेनैव तस्मादुद्गतम् । किं तत्? एतत् । वक्ष्यमाणमित्यर्थः । तदेवाह यदृग्वेदो यजुर्वेदः —। इतिहासः रामायणादिः, पुराणं विष्णुपुराणादि, विद्याः चतुष्षष्टिविद्याः, उपनिषदः प्रसिद्धाः, श्लोकाः स्मृतिरूपाः, सूत्राणि ब्रह्मसूत्रा-

1. आर्द्रैधाग्निग्रहणं ख. ग. 2. अग्निर्हि धूमोत्पत्तौ निमित्तम् । इन्धनं तूपादानं. ख. ग.

---

रामायणादिरिति । रामायणस्य वाङ्मयस्य वा कस्यचिदितिहासस्य तदातदा सत्त्वात् इतिहासत्वेन श्रुतौ निर्देशः [illegible] । [illegible] । शांकरे तु इतिहासादि-

ख्यानानि व्याख्यानान्यस्यैवैतानि [1] सर्वाणि निश्श्वसितानि ॥ १० ॥

स यथा सर्वासामपाँ समुद्र एकायनम्—एवँ सर्वेषाँ स्पर्शानां त्वगेकायनमेवँ सर्वेषाँ रसानां जिह्वैकायनमेवँ सर्वेषाँ गन्धानां नासिकैकायनमेवँ सर्वेषाँ रूपाणां चक्षुरेकायनमेवँ सर्वेषाँ शब्दानाँ श्रोत्रमेकायनमेवँ सर्वेषाँ सङ्कल्पानां मन एकायनमेवँ सर्वासां विद्यानाँ हृदयमेकायनमेवँ सर्वेषां कर्मणाँ हस्तावेकायनमेवँ सर्वेषामानन्दानामुपस्थ एकायनमेवँ सर्वेषां विस-

1. सर्वाणि इति न.शां. मा.

---

दीनि, **अनुव्याख्यानानि** भाष्यव्याख्यानानि, **व्याख्यानानि** भाष्यरूपाणि। ऋग्वेद इत्यादि यद्यदस्ति, एतानि सर्वाणि भगवतोऽस्यैव निःश्वसितानि। अयत्नेन तदुद्गतानीत्यर्थः। यद्यपि सूत्रस्मृतिपुराणादयो व्यासाद्युद्गता इति पुराणेषु प्रसिद्धिः — तथापि तेषां भगवदंशत्वात् भगवन्निश्श्वसितत्वोक्तिरुपपद्यत इति द्रष्टव्यम्। अत्र यद्यपि वाचकशब्दसृष्टिमात्रमुक्तम्—तथापि षष्ठे मैत्रेयीब्राह्मणे [तु] 'इष्टं हुतमाशितं पायित' मित्यादिना भोग्यभोगस्थानभोक्तृवर्गरूपवाच्यसृष्टेरुक्तत्वात्, अनुक्तस्यान्यतो ग्राह्यत्वात् अत्रापि वाच्यस्य सृष्टिरुक्तेति द्रष्टव्यम्। अनेन पूर्वं सामान्यतो निर्दिष्टं जगत्कारणत्वं विवृतं भवति ॥ १० ॥

एवं प्रथमोक्तं जगत्कारणत्वं विशदयित्वा तदनन्तरं सामान्येन, 'स यथा दुन्दुभेर्हन्यमानस्ये' त्यादिनोक्तं परोपासनोपकरणभूतकरणग्रामनियमनं विशदयति **स यथा सर्वासामपां समुद्रः — वागेकायनम्**। समुद्रस्य सर्वासामपामेकायनत्वं नाम तदुपादातृत्वम् [1]; एवं त्वचः सर्वस्पर्शानामेकायनत्वं नाम तदुपादातृत्वम्। ततश्चायमर्थः —: यथा समुद्रो भूयसीरपो बहुधा विशतीर्गृह्णाति, ताभिः कदाचिदपि न पूर्यते च — एवं त्वगिन्द्रियमसंख्याकान् बहुधा प्राप्नुवतः स्पर्शविशेषान् गृह्णाति, तैः कदाचिदपि न तृप्यति च। ततश्च त्वगिन्द्रियस्य स्पर्शविषयकव्यापारा अनन्ता इत्यर्थः। एवमुत्तरत्रापि द्रष्टव्यम्। **हृदयम्** अवस्था-

1. उपादातृत्वमेव. क.

---

पदैरपि वेदान्तर्गत चरितादिप्रतिपादकभागानामेव ग्रहणं कृतम्। **भगवदंशत्वादिति**। अनंशत्वेऽपि सर्वस्यापि ब्रह्मोपादाननिमित्तकत्वमस्त्येवेत्यपि ध्येयम्।

**गाणां पायुरेकायनमेवँ सर्वेषामध्वनां पादावेकायनमेवँ सर्वेषां वेदानां वागेकायनम् ॥ ११ ॥**

**स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत; न हास्योद्ग्रहणायेव स्यात्; यतो यतस्त्वाददीत लवणमेव—एवं वा इदं महद्भूत-**

---

विशेषविशिष्टं मन एव हृदयमित्युच्यते । **अध्वनाम्** अध्वगमनानामित्यर्थः । शिष्टस्य स्पष्टोऽर्थः । ततश्चैकैकेन्द्रियवृत्तिविशेषा अनन्ताः । ततश्चात्मसाक्षात्कारार्थिना एते वृत्तिविशेषा निरोद्धव्या इत्यभिप्रायः । ततश्च, 'स यथा दुन्दुभेर्हन्यमानस्ये' त्यनेनोक्तं ब्रह्मोपासनोपयोगिकरणग्रामनियमनं विवृतं भवति ॥ ११ ॥

अथ सर्वावस्थास्वपि जीवस्वरूपस्य परमात्मनिष्ठतया स्वातन्त्र्याभावज्ञापनाय जीववाचिशब्देन परमात्मानं निर्दिशन् अमृतत्वोपायप्रवृत्तिप्रोत्साहनाय भूतसंघात्मकशरीरजन्म[1]मरणानुविधायिनः संसरतो जीवस्यापरिच्छिन्नज्ञानैकाकारतामुपपादयति । एवमुपपादिते हि, 'स्वयमपरिच्छिन्नज्ञानानन्दाकार एव सन् अयं जीवः पञ्चभूतमयशरीरानुविधानेन जन्ममरणादिचक्रे स्वकर्मतिरोहितस्वरूपः परिभ्रमति । तच्च कर्म ईश्वरसंकल्परूपं सर्वथेश्वरपरतन्त्रेण स्वेन स्वातन्त्र्येण निर्मोचयितुमशक्यम् । अतः तादृशकर्मबन्धविमोचनपूर्वकस्वस्वभावाविर्भावरूपमोक्षप्राप्तये परमात्मोपासनमेव कर्तव्य' मिति प्रतीयेतेति । **स यथा सैन्धवखिल्यः — विनश्यति** । **सः** लवणरसघनतया प्रसिद्धः **सैन्धवखिल्यः** लवणखण्डः । खिल एव खिल्यः । स्वार्थे यत् । यथा सैन्धवशकलः उदके **प्रास्तः** प्रक्षिप्तः उदकम् **अनु** अनुसृत्य प्रविश्य विलीयत एव । **अस्य** विलीनस्य लवणस्य **उद्ग्रहणाय** उदकात् पृथक्कृत्य ग्रहीतुं यथा **नैव स्यात्** कोपि न शक्तस्स्यात् । तच्चोदकं यथा — **यतोयतः** यस्मात् यस्मात् प्रदेशात् मध्यतः पार्श्वतो वा **आददीत** गृह्णीयात् , ततस्ततः तच्चोयं **लवणमेव** लवणरसमयमेव भवति — **एवं वै** एवमेव = उक्तलवणखिल्यदृष्टान्तवदेव **महत् भूतं** सर्वचेतनाचेतनेभ्यः उत्कृष्टम् , — तदेवोपपादयति ।

1. जन्मेति न क. कोशे ।

---

संभवत्येकवाक्यत्वे वाक्यभेदायोगात् **स यथा सैन्धवखिल्य** इत्यत्र, स दृष्टान्तो यथेत्यर्थो नादृतः ।

**मनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति; न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १२ ॥**

---

**अनन्तमपारम्** अनन्तं स्वरूपेणापरिच्छेद्यम् **अपारं** गुणतोप्यपरिच्छेद्यं ब्रह्म **विज्ञानघन एव सन्** जीव एव सन्, — जीवशरीरक एव सन्निति यावत् — 'अनेन जीवेनात्मनाऽनुप्रविश्ये' ति श्रुतेः जीवशरीरकतया भूतेष्वनुप्रविश्य, **एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति** । भूतेषु शरीरादिरूपेणोत्पद्यमानेषु तेभ्य एव भूतेभ्यो हेतुभ्यः स्वयमुत्पद्यमानः तेषु नश्यत्सु तानि भूतानि अनु पश्चात् स्वयं विनश्यतीत्यर्थः । देहोत्पत्तिविनाशानुविधाय्युत्पादविनाशवान् भवतीति यावत् । **विनाशो** नाम अत्यन्तज्ञानसंकोचः । "**विनश्यति** न पश्यतीत्यर्थः" इति, "स्वाप्ययसंपत्त्यो" रिति सूत्रे भगवता **भाष्यकृतोक्तम्** । उत्पत्तिर्नाम विकासप्रादुर्भावः । इमावुत्पत्तिविनाशौ विज्ञानमयशब्दिते जीवशरीरके **महद्भूत**मित्युक्ते परमात्मनि जीवद्वारा संभवत इति द्रष्टव्यम् ।

**न प्रेत्य संज्ञाऽस्तीति** । प्रेत्य चरमदेहवियोगं प्राप्य, 'येयं प्रेते विचिकित्सा मनुष्ये' इति प्रयोगात् । तदा मोक्षदशायां स्वाभाविकापरिच्छिन्नज्ञानस्य संकोचाभावेन न संज्ञाऽस्ति । समित्येकीकारे । ज्ञाधातोर्ज्ञानमर्थः । ततश्च भूतसंघातेनैकीकृत्य ज्ञानं संज्ञाशब्दार्थः । सा नास्तीत्यर्थ इति द्रष्टव्यम् । ततश्च पूर्वोक्तभगवदुपासनेन ज्ञानसंकोचहेतुभूतकर्मणो विनाशे निरङ्कुशापरिच्छिन्नज्ञानवतो जीवस्य स्वस्वरूपयाथात्म्यज्ञानेन संज्ञाशब्दितदेहात्मभ्रमादिनिवृत्त्या पूर्वोक्तभूतानुविधानप्रयुक्तोत्पत्तिविनाशादिर्मोक्षदशायां नास्तीति तद्रूपसंसारचक्रभ्रमणनिवृत्त्यर्थं परमात्मोपासनमेव कार्यमिति याज्ञवल्क्यो मैत्रेय्या उपदिदेशेत्यर्थः । अत्र **अरे ब्रवीमी**त्युक्तिः स्वोक्तिप्रामाण्यदार्ढ्यार्थम् । न च, 'महद्भूतमनन्तमपार' मिति निर्दिष्ट-

---

**तान्येवानुविनश्यती**त्यनेन स्थितिकालिक – ऐन्द्रियकज्ञानप्रसररूपावस्थाविरोध्युत्तरावस्थारूपज्ञानसंकोचात्मकविनाशस्य देहवियोगकालिकस्योक्तत्वात् **न प्रेत्य संज्ञास्तीति** पुनस्तत्कथनमयुक्तम् । किञ्च देहवियोगानन्तरं ज्ञानसामान्यस्यैवाभावात् संज्ञेति मोहात्मकज्ञानमात्रस्याभावकथनमप्यनुपपन्नम् । अतः प्रेत्येति मोहाभाव – ज्ञानान्तरसद्भावानुकूलं पुनर्मानवावर्तानावर्तनपर्यवसायि प्रायणं विवक्षितमित्याह **चरमेति** । प्रेत्येति ल्यपः संज्ञापदान्तर्गतधातुनान्वयात् समानकर्तृकता । संज्ञा न प्रायणानन्तरं भवतीत्येवार्थः ।

**सा होवाच मैत्रेय्यत्रैव मा भगवानमूमुहत्, 'न प्रेत्य संज्ञाऽस्ती' ति ।**

---

स्यैव ब्रह्मणः 'विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाये' ति जीवत्वसंसारित्वाऽऽवेदनं साक्षादेवास्तु; किमिति, विज्ञानघनः जीवशरीरक इति व्याख्याय जीवद्वारकं तस्य तदित्युच्यत इति वाच्यम् — 'निरनिष्टो निरवद्यः' इत्यादिश्रुतिप्रतिपन्ननिखिलहेयप्रत्यनीकत्वस्य परमात्मनः संसारित्वासंभवात् । अत एव मोक्षधर्मे जनकयाज्ञवल्क्यसंवादे याज्ञवल्क्येनैव,

'अन्यश्च राजन् स परस्तथाऽन्यः पञ्चविंशकः ।
तत्स्थत्वादनुपश्यन्ति एक एवेति साधवः ॥'

इति शरीरशरीरिणोः जीवेश्वरयोर्भेदे सत्यपि शरीरान्तःस्थितस्य शरीरिण एकत्वात् 'अयमेकः पुरुषः' इति सशरीरे जीवे व्यवहारवत् परमात्मनो जीवान्तरवस्थितिनिबन्धनाः प्रकारैक्यविषयाः जीवेश्वराभेदव्यवहारा इत्युक्तम् । ततश्च तेनैव याज्ञवल्क्येनात्रापि जीवस्य परमात्मशरीरतया तद्वाचिना विज्ञानघनशब्देन परमात्मनोऽभिधानं तद्धर्मभूतोत्पत्तिविनाशादिना धर्मित्वकथनञ्च न विरुद्धम्; उपपन्नतरञ्चेति द्रष्टव्यम् ।

न चोक्तरीत्या निर्विकारे परमात्मन्युत्पत्तिविनाशयोः सद्वारकविशेषणत्वे आवश्यके सति तावन्मात्रमेव कथनीयं स्यात्; न त्वधिकम् । एवं सति विज्ञानघनत्वस्य परमात्मनि साक्षादेव संभवात् विज्ञानघनशब्दस्य जीववाचित्वमाश्रित्य विज्ञानघनशब्देन जीवशरीरकपरमात्माभिधानाश्रयणक्लेशः, "अवस्थितेरिति काशकृत्स्नः" इति सूत्रभाष्ये कुतोऽनुभूयत इति वाच्यम् — परमात्मनः स्वरूपेणोत्थानविनाशासंभवात्, जीवरूपेणोत्थानविनाशयोर्वक्तव्यत्वेन जीववाचिपदस्य कस्यचिद्श्रवणे जीवद्वारकत्वोक्तययोगेन तद्वाचिपदावश्यकत्वात्, अन्यस्य चाभावात्, विज्ञानघनशब्दस्य जीववाचित्वसंभवाच्च, 'विज्ञानघनशब्देन जीवशरीरकपरमात्माऽभिधीयत' इति भाष्योक्तेर्विरोधाभावात्; उपपन्नतरत्वाच्चेति द्रष्टव्यम् ॥ १२ ॥

**सा होवाच मैत्रेय्यत्रैव मा भगवानमूमुहत्, न प्रेत्य संज्ञास्तीति ।** एवं याज्ञवल्क्येनोपदिष्टा मैत्रेय्युवाच । किमिति । **न प्रेत्य संज्ञास्तीत्यस्मिन्**

---

तावन्मात्रमेव उत्थानविनाशवदन्तर्यामित्वमेव, न तु विज्ञानमयान्तर्यामित्वमिति ।

**स होवाच याज्ञवल्क्यो न वा अरेऽहं मोहं ब्रवीम्यलं वा अर इदं विज्ञानाय ॥ १३ ॥**

---

वाक्य एव भगवान् **मा** माम् अमूमुहत् । मुहेर्णौ चङि[1] मोहयति स्मेत्यर्थः । विज्ञानघनशब्दितस्य ज्ञानैकाकारस्यात्मनो मुक्तौ संज्ञाभावो विरुद्ध इत्यतो मुक्तौ संज्ञाभावप्रतिपादके भवद्वाक्ये मोहो मे संवृत्त इति भावः । अत्र 'न प्रेत्य संज्ञाऽस्ती' ति वाक्यस्य विज्ञानघनत्वोक्तिविरोधे आपादनीयेऽपि, मैत्रेय्या गुरुगौरवेण स्वस्य वाक्यार्थास्फूर्तिरूपमोह एव वाचनिकवृत्त्या आपादित इति द्रष्टव्यम् । यद्यपि संज्ञाशब्दो देहात्मैक्यभ्रान्तिपर इति न विरोधः – तथाऽपि तदभिप्रायानभिज्ञानात् मुह्यन्ती मैत्रेयी एवमुक्तवतीति द्रष्टव्यम् ।

**स होवाच याज्ञवल्क्यो न वा अरेऽहं मोहं ब्रवीम्यलं वा अर इदं विज्ञानाय** । स इत्थं पृष्टो याज्ञवल्क्यः प्राह । किमिति । अरे ! मैत्रेयि ! 'न प्रेत्य संज्ञाऽस्ती' ति नाहं **मोहं** मोहकं वचो ब्रवीमि । इदं विज्ञानघनशब्दितं महद्भूतं प्रेत्यापि **विज्ञानायालमेव** ज्ञातुं पर्याप्तमेवेत्यर्थः । ततश्च मुक्तौ सर्वज्ञतया सर्वं पश्यत एव सतो विज्ञानघनस्य मया पूर्वनिर्दिष्टः संज्ञाऽभावो नाम देहात्मैक्यविषयकभ्रान्त्यभावात्मेति भावः ॥ १३ ॥

एवं 'न प्रेत्य संज्ञाऽस्ती' ति स्ववाक्यस्य मुक्तौ देहात्मभ्रमनिवृत्तिपरत्वेन विज्ञानघनत्वाविरोधमुक्त्वा स्वनिष्ठताभ्रमनिवृत्तिप्रतिपादकत्वेनापि तदविरोधमुपपादयति

1. "मुहेर्णौ छन्दसि" इति. क.

---

अलं वा इत्यादिविज्ञानघनत्वं ह्युक्तम् । विज्ञानं तन्मुक्तावस्त्येव । संज्ञानं तु मोहात्मकं तदा नास्तीति नप्रेत्य संज्ञाऽस्तीत्युक्तम् । अतः को विरोध इति भावः । **स्वनिष्ठताभ्रमे**ति । तथा च संज्ञा नाम भिन्नयोरेकीकाररूपो भ्रमः । स च देहात्मभ्रमवत् परतन्त्रे स्वतन्त्रताभ्रमोपीति भावः । यद्वा संज्ञा नाम प्रकृते संकुचितज्ञानम्; परमात्माग्रहेण प्रकारमात्रग्रहणम्; विज्ञानं विशिष्टज्ञानमिति भाव्यम् ।

**यत्र हि द्वैतमिव भवति, तदितर इतरं जिघ्रति, तदितर इतरं पश्यति, तदितर इतरँ शृणोति, तदितर इतरमभिवदति, तदितर**

---

**यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति — विजानाति।** **यत्र** यस्यामवस्थायां **हि** प्रसिद्धं **द्वैतमिव भवति**। स्वनिष्ठतया परमात्मनः पृथगिव भवतीत्यर्थः। स्वतन्त्र इव भवतीति यावत्। स्वातन्त्र्यस्याप्रामाणिकत्वद्योतनार्थ **इव**शब्दः। **तत्** तस्यां दशायां **इतर इतरं पश्यति**। **इतरः** परमात्मनो भिन्नात्मकः — पृथक्सिद्ध इति यावत् — **इतरं** भिन्नात्मकं परमात्मनः पृथक्सिद्धं विषयं पश्यति। अत्र इतरेणेत्यध्याहार्यम्। उत्तरत्र, 'तत् केन कं जिघ्रेत्' इति दर्शनात्। **इतरेण** स्वतन्त्रेण करणेन जिघ्रतीत्यर्थः। एवमुपरत्रापि। अत्र **जिघ्रति पश्यति शृणोति मनुते विजानाती**त्युक्तं सर्वज्ञानेन्द्रियवृत्त्युपलक्षणम्। तत्र **मनुत** इति मनोवृत्तिरुक्ता, **विजानाती**ति बुद्धिवृत्तिरिति तयोर्भेदः। **अभिवदती**त्युक्तो वागिन्द्रियव्यापारः सर्वकर्मेन्द्रियव्यापारोप-

---

**पृथगिवेति**। टीकायां तु द्वैतपदस्य धर्मपरत्वस्वारस्यात् पृथक्त्वमित्युक्तम्। अत्र **वाक्ये, यत्र वा अस्येत्यत्र** स्थितं अस्येतिपदमपकृष्यते। तेन **द्वैतमिवास्य भवति** अविद्यमानमपि द्वैतमनेन गृहीतं भवतीत्यर्थलाभः। अत्र इवेत्यनेनाविद्यमानत्वद्योतनात् प्रकारप्रकारिणोर्वस्तुतो द्वैतस्य विद्यमानत्वात् अविद्यमानं द्वैतं पृथक्त्वरूपमिति सिद्ध्यति।

**यत्र हीत्यादेः** द्वैतपदेतरपदादेर्मुख्यार्थविवक्षया एवमप्यर्थवर्णनं संभवति — द्वितैव द्वैतम्। द्विता भेदः। एवकारेणाभेदनिरास इति वक्तव्यम्। तत्र भेदाभेदयोः स्वतो विरोधात् भेदकथनादेवाभेदाभावः सिद्ध इति तस्यान्यपरत्वमिष्यते। तथाच द्वैतमत्यन्तभेदः। अत्यन्तेत्यनेन भिन्नयोस्तयोर्वस्तुनोर्मुख्यसमानाधिकरणव्यवहारस्याप्यभाव उच्यते। नीलरूपघटयोर्भेदेऽपि नीलो घट इति मुख्यसमानाधिकरणव्यवहारोऽस्ति; तदभाव इहेति। मुख्यसमानाधिकरणव्यवहारानर्हत्वसंवलितो भेदः द्वैतम्। वस्तुतः प्रापञ्चिकपदार्थगोचराणां पदानां परमात्मरूपप्रकारिणमादाय मुख्यसमानाधिकरणव्यवहारसंभवात् तादृशव्यवहारविषयत्वाभावस्याप्रामाणिकत्व**मिवे**त्यनेन द्योत्यते। व्यवहारघटितमिममर्थं द्वैतपदतद्धितार्थं सूचयितुमेव ज्ञानेन्द्रियकार्यमात्रकथनमप्यत्र इतरइतरमभिवदतीति वाग्व्यापारस्यापि प्रस्तावः। तथाच यस्यां दशायां मातृमेयमानानां भेदमात्रमनुभूयते, तस्यां दशायामिन्द्रियाधीनज्ञानविशेष्यभूतानां मातृमेयमानानां मिथो भिन्नत्वात् मानादिरूपात् ज्ञानविशेष्यादितरः मात्रादिरूपाद् ज्ञानविशेष्यादितरं मेयादिरूपाद् ज्ञानविशेष्यादितरेणेन्द्रियेण जानाति। तद्बुद्ध्या साक्षात्कारविशेष्याणि बहूनि भवन्तीत्यर्थः। **इतर इतरमभि-**

इतरं मनुते, तदितर इतरं विजानाति। यत्र वा अस्य सर्वमात्मैवाभूत्, तत् केन कं जिघ्रेत्, तत्केन कं पश्येत्, तत्केन

---

लक्षणार्थ इति द्रष्टव्यम् । एवमुत्तरत्रापि । यत्र वा अस्य सर्वमात्मैवाभूत् तत्केन कं जिघ्रेत् — विजानीयात् । यत्र यदा अस्य जीवस्य सर्वं वस्तु आत्मैवाभूत् परमात्मापृथक्सिद्धमेकात्मकमेवाभूत्, तदा केन भिन्नात्मकेन करणेन कं भिन्नात्मकं विषयं जिघ्रेदित्यर्थः । अत्र क इत्यध्याहार्यम्; 'तदितर इतरं पश्यती' ति पूर्वमुक्तत्वात् । कः भिन्नात्मकः स्वतन्त्रः कर्ता जिघ्रेदित्यर्थः । अत्र किंशब्द इतरशब्दश्च सर्वत्र स्वतन्त्रतत्प्रतिक्षेपपरः । एवं सर्वत्र द्रष्टव्यम् । अत्र सदैकात्मकस्य जगतः कालभेदेन भिन्नाभिन्नात्मकत्वयोः परमात्मपृथक्सिद्ध्यपृथक्सिद्धिरूपयोरसंभवात् आत्मैवाभूदित्यस्य एकात्मकत्वेन ज्ञातमभूदिति, द्वैतमिव भवतीत्यस्य भिन्नात्मकत्वेन ज्ञातं भवतीति चैवार्थो वक्तव्यः । तथा च यस्यात्मभेदप्रतीतिः कियत्यप्यस्ति, तस्य कर्तृकर्मकरणेषु भिन्नात्मकत्वप्रतीतिरनुवर्तते । यस्यात्मभेदप्रतीतिर्यदा सर्वथा नास्ति, तदा विरुद्धधर्मवत्त्वाप्रतीतेः कर्तृकर्मकरणेषु भिन्नात्मकतया प्रतीतिः सर्वथा नास्तीति पर्यवसितोऽर्थः । शिष्टं स्पष्टम् ।

---

वदति तादृशेन वागिन्द्रियेण मुख्यवृत्त्या मेयं विशेष्यतया व्यवहरति च । यदा तु सर्वप्रकारविशिष्टात्मरूपैकार्थविषयकसाक्षात्कारो मुक्तिकालिकः संपन्नः, तदा ज्ञानप्रसरस्येन्द्रियाधीनत्वाभावात् केनेन्द्रियेण किंविशेष्यकज्ञानमश्नुवीत । द्रव्यगुणादितत्तन्मुख्यविशेष्यकदृष्टिघ्राणादिकरणत्वमिन्द्रियाणां नियतम् । परमात्मनोऽतीन्द्रियत्वात् । मुक्तौ चेन्द्रियाणि अकार्यकराणि । साक्षात्कारश्च तदा सर्वविशिष्टब्रह्मैकविशेष्यकः । तत्र मेयज्ञानविशेष्यस्य मातृज्ञानविशेष्यस्य चेतरत्वमेव नास्ति । अतस्तदा इतरइतरमित्यादि उक्तरीत्या वक्तुं न शक्यत इति । अत्रैवमितर इतरं पश्यतीत्युक्तार्थनिषेधस्यैव कार्यतया इतर इतरं न पश्यतीत्येव वक्तव्ये केन कं पश्येदिति भङ्ग्यन्तरादरणम् — इन्द्रियादिसंबन्धविशेष एव ज्ञानस्य नास्तीति बोधनार्थम् । अत्र केन कमितिवत् क इत्यप्रयोगात्, 'परमात्मातिरिक्तो दर्शनकर्ता तु वर्तते । अतो न तन्निषेधः । किंतु इन्द्रियजन्यं रूपविशेष्यकञ्च ज्ञानं नास्ति' इति श्रुतिहृदयमूह्यम् । इतर इतरं पश्यतीति पूर्ववाक्ये इतरेणेति करणानिर्देशः मातृमेययोरेव लोके अहं घटं जानामीति स्वरसतो ग्रहणात् करणस्य तदा ज्ञानाविषयत्वात्, ज्ञानविशेष्यादेकस्मात्

**कं शृणुयात्, तत् केन कमभिवदेत्, तत्केन कं मन्वीत, तत्केन कं विजानीयात्।**

**येनेदं सर्वं विजानाति, तं केन विजानीयात्। विज्ञातारमरे केन विजानीयादिति ॥ १४ ॥**

इति चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥

---

एवं **न प्रेत्य संज्ञास्तीति** वाक्यस्य मुक्तौ देहात्मभ्रमस्वतन्त्रात्मभ्रमनिवृत्तिपरत्वोपपादनेन मैत्रेय्या अज्ञानं परिहृत्य तादृशसार्वज्ञ्यरूपमोक्षाप्त्यै भगवत्प्रसादो निदिध्यासनञ्चेति द्वयमेव साधनमित्यवश्यं निदिध्यासनेन भगवत्प्रसादो मुमुक्षुणा संपादनीय इत्युपसंहरति वाक्यद्वयेन । **येनेदं सर्वं विजानाति तं केन विजानीयात्; विज्ञातारमरे केन विजानीयात्** । **येन** परमात्मना प्रसन्नेनानुगृहीतः **इदं सर्वं विजानाति** सर्वज्ञो भवति, **तं** परमात्मानं **केन** हेतुना विजानीयात् । 'क इत्था वेद यत्र सः' इतिवत् । परमात्मप्रसादमन्तरेण परमात्मा दुरवबोध इत्यर्थः । **विज्ञातारमरे केन विजानीयात्** । अत्र विज्ञातृशब्देन प्रक्रमोदितजगत्कारणत्वाक्षिप्तसर्वज्ञत्वाश्रयः परमात्मैवोच्यते । तादृशं विज्ञातारं सर्वज्ञं परमात्मानं प्रक्रमोदितध्यानं विना केन केवलयज्ञदानाद्युपायेन विजानीयात् । न केनापीत्यर्थः । उक्तञ्च व्यासार्यैः, "परमात्मप्रसादादृते तस्य दुरवगमत्वपरं तं केन

---

ज्ञानविशेष्यस्यान्यस्य स्थितं यत् इतरत्वम्, तस्यैवात्र विवक्षितत्वादित्यपि सुवचम् । तदत्र केन कमित्यनेन, 'मुक्तज्ञाने चक्षुरादेर्न करणत्वम्; नापि प्रपञ्चस्य प्राधान्य' मिति ज्ञापितम् । **केन कमभिवदेत्** शक्तिभ्रमकृतप्रपञ्चविशेष्यकबोधौपयिकशब्दप्रयोगसाधनप्राकृतवागिन्द्रियाभावात् तादृशव्यवहारं न कुर्यात् । परमात्माधीन-सर्वात्मभूतपरमात्मविशेष्यकसाक्षात्कारव्यवहारौ विना नान्यत् तदेति भावः । अतः परमात्मविशेष्यकमनन्तं व्यवहारं कुर्यात्; भङ्क्त्वा विशेषणमात्रविवक्षया प्रयोगमपि मुक्तः कामं कुर्यादिति न तद्व्यवच्छेदः । तदानीं परमात्माधीनसर्वात्मभूततत्साक्षात्कारस्थितिश्च समनन्तरमेव दर्शयिष्यते येनेदं सर्वमिति ।

एवञ्च जीवपरादिविभिन्नार्थवाचकानां पदानां किञ्चिद्रूपेण मुख्यसमानाधिकरणव्यवहारमस्वीकृत्य तादृशव्यवहारस्य लाक्षणिकत्ववादिनः तार्किकादयः द्वैतपदविवक्षितात्यन्तभेदरूपनिरुक्तार्थादरणेन भेदमात्रस्वीकारात् द्वैतिनः । भेदमस्वीकुर्वन्तः, स्वीकृतेऽपि भेदे तादृशमुख्यव्यवहारं समर्थयमानाश्च द्वित्वसंमतावपि द्वैतासंमत्या अद्वैतिन इत्यपि सुविवेचम् ।

येनेदमित्यत्र येनेति तृतीयया, 'अलं वा अरे इदं विज्ञानाय', 'सर्वमात्मैवाभूत्' इति वाक्यद्वयदर्शितसर्वविज्ञानात्मकमुक्तिं प्रति सिद्धोपायत्वं ब्रह्मण उच्यते। तं केन विजानीयादिति

**विजानीया**दिति पूर्ववाक्यम् ; उपासनातिरिक्तकेवलयज्ञदानाद्युपायान्तरनिषेधपरं **विज्ञातारमरे केन विजानीया**दित्युत्तरवाक्यम् " इति। ततश्च परमात्मप्रसादपरमात्मोपासनयोर्द्वयोरप्यावश्यकत्वं द्वाभ्यां वाक्याभ्यां प्रतिपादितं भवति।

अत्र परमात्मोपासनतत्प्रसादसाध्या परमात्मावगतिः किंरूपेति चिन्तायाम्—, दर्शनसमानाकारध्यानरूपावगतिरेव परमात्मप्रसादोपासनसाध्यत्वेन वाक्यद्वयप्रतिपन्नेति केचिदूचुः। मुक्तिकालीना देशविशेषविशिष्टब्रह्मसाक्षात्कारलक्षणा, 'परात् परं पुरिशयं पुरुषमीक्षत' इत्युक्तेत्यपरे। नोभयथाऽपि विरोधं पश्यामः।

इतिशब्दः प्रतिवचनसमाप्तौ ॥

इदञ्च ब्राह्मणं समन्वयाध्याये चतुर्थपादे चिन्तितम्। उपक्रमे पतिजायापुत्रवित्तादिप्रियसंबन्धित्वलक्षणजीवलिङ्गकीर्तनात्, मध्ये च, 'विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यती' ति देहानुबन्धि[1]जननमरणलक्षणजीवलिङ्गप्रतिपादनात्, अन्ते च 'विज्ञातारमरे केन विजानीया' दिति विज्ञातृत्वरूपजीवलिङ्गकीर्तनाच्च कृत्स्नमपि प्रकरणं जीवपरमेव। परमात्मलिङ्गानि तु कथञ्चिन्नेयानीति पूर्वपक्षे पठत्याचार्यः — "वाक्यान्वयात्"। कृत्स्नस्य वाक्यसन्दर्भस्यान्वयः परमात्मन्येवोपपद्यते, नान्यत्र।

तथाहि — 'अमृतत्वस्य तु नाशाऽस्ति वित्तेने' ति याज्ञवल्क्येनाभिहिते, 'येनाहं नामृता स्याम्, किमहं तेन कुर्यामिति अमृतत्वोपायमात्रार्थिन्यै मैत्रेय्यै, 'आत्मा वा अरे द्रष्टव्यः' इति द्रष्टव्यत्वेनोपदिष्टस्यात्मनः परमात्मत्वमेवाभ्युपगन्तव्यम्। आख्यायिकाया विद्यागतविशेषप्रतिपादनोपयुक्तत्वस्य पुरुषार्थपादे स्थितत्वात्।

1. देहानुविधायि. क.

---

तादृशमुक्तिरूपज्ञानसाधनभूतमुपासनरूपं विज्ञानमपि तदधीनमित्युच्यते, 'ददामि बुद्धियोगं तं येन मामुपयान्ति ते' इति हि गीयते। एवञ्च, **विज्ञातारमरे केन विजानीया**दित्यस्य **विजानीया**दिति पूर्वंपदोक्तेनोपासनरूपेण विज्ञानेन विना केन तं मुक्तौ विजानीयादित्यर्थः। अत्र तमित्येवानुक्त्वा **विज्ञातार**मितिपदप्रयोगः **येन**, तमिति पदद्वयपरामृष्टः आश्रितेषु सार्वज्ञ्यानुग्रहौपयिकनिरुपाधिकसार्वज्ञ्यशाली परमात्मेति ज्ञापनार्थः। यद्यपि अत्र परमात्मानं परमात्मप्रसादादेव विजानीयादिति पूर्वमुक्त्वा, **विज्ञातार**मित्यादिना उक्तविज्ञानाश्रयं जीवमपि केन विजानीयात्; परमात्मप्रसादं विना परविद्याङ्गभूतस्वात्मविज्ञानमपि दुर्लभमित्यर्थं उच्येत, जीवात्मविशिष्टपरमात्मध्यानकर्तव्यताया अत्र प्रकरणे सिद्धतया तत्र विशेषणां-

तत्र हि, 'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतु' रित्याद्याख्यानानाम् 'सर्वाण्याख्यानानि पारिप्लवे शंसन्ति' इत्यश्वमेधगतपारिप्लवनामकशस्त्रे विनियुक्तत्वात् पारिप्लवार्थानि आख्यानानि; न तु विद्योपयोगीनीति "पारिप्लवार्था इति चे" दिति सूत्रखण्डेन पूर्वपक्षं कृत्वा, "न विशेषितत्वा" दित्यादिना सिद्धान्तितम्। अयमर्थः— न सर्वाख्यानानि पारिप्लवार्थानि भवितुमर्हन्ति। 'सर्वाण्याख्यानानि शंसन्ती' ति विधाय 'मनुर्वैवस्वतो राजे' त्यादिना केषाञ्चिदाख्यानानामेव विशेषितत्वात्। वाक्यशेषपठितानामेवाख्यानानां [1] पारिप्लवे विनियोगः; न सर्वेषाम्। अतः [1] विद्यासन्निधिपठितानां याज्ञवल्क्याख्यानानां तत्तद्वाक्यगतपरमात्मविषयकत्वादिविशेषप्रतिपादनोपयोगित्वमेव। "तथा चैकवाक्योपबन्धात्"। यथा, 'तेजो वै घृतम्', 'सोऽरोदी' दित्येवमादीनाम्, 'अक्ताः शर्करा उपदधाति', 'तस्माद्बर्हिषि रजतं न देय' मित्यादिविधिनिषेधैकवाक्यतया विधिनिषेधविषयस्तुतिनिन्दाद्युपयोगित्वम् — तथैव, 'आत्मा वा अरे द्रष्टव्य' इत्यादिविधिना आख्यानानामेकवाक्यत्वोपबन्धात् विधेयविद्याविशेषोपयोगित्वमवश्याभ्युपगन्तव्यमिति सिद्धान्तितम्। ततश्चोपक्रमगताख्यायिकावशात् परमात्मविषयत्वमेव प्रकरणस्य। तथा, 'अस्य महतो भूतस्य निश्वसितमेतत्', 'आत्मनो वा अरे दर्शनेन श्रवणेने' त्यादिना प्रतीयमानं सर्वोपादानत्वम्, 'ब्रह्म तं परादा' दित्यादिना प्रतीयमानं सार्वात्म्यञ्च न परमात्मनोऽन्यत्र संभवति। यदुक्तम् — पतिजायापुत्रादिसंबन्धित्वकीर्तनं जीवलिङ्गमिति — तन्न; तस्य वाक्यस्य परमात्मानुगुणतयाऽर्थवर्णनोपपत्तेः। तद्वर्णनप्रकारश्च पूर्वमेव प्रदर्शितः।

नन्वेवम्, 'विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाये' ति जीववाचिविज्ञान-

1. पारिप्लवे विनियोगेन सर्वेषामपि. क.

---

ब्रह्मज्ञानस्य प्राक्संपाद्यस्य विषयेऽपि परमात्मप्रसादापेक्षावचनस्य संगतत्वात् — अथापि परमात्मनः सिद्धोपायतायाः समनन्तरमुक्ततया उपासनमेवानपेक्षितमिति केचिन्मन्वीरन् इति तन्मतिव्युदासाय श्रीभाष्ये उपासनावश्यकत्वपरतया वाक्यमिदं योजितम्।

**नन्वेवं विज्ञानघन इति।** प्रकरणस्य जीवात्मविषयकत्वपूर्वपक्षे, पूर्वसूत्रेण जीवात्मवाचिनोऽपि पदस्य परमात्मवाचित्वमप्यावश्यकम्, तदेव वाक्यान्वयात् इत्युक्तम्। तत्र प्रथमस्य आत्मपदस्य जीवात्मवाचित्वं विनैव श्रीभाष्ये निरूढत्वात् उपरितनसूत्राणि विज्ञानघनपदविषयाणीत्याशयः।

घनशब्देन कथं परमात्मनोऽभिधानम्? उत्पादविनाशादिजीवलिङ्गानाञ्च कथं परमात्मनि समन्वय इति चेत् — तत्राह —

"प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः"। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाऽऽक्षिप्तोपादानोपादेयभावलब्धाभेदसूचकं जीवधर्माणां तत्र कीर्तनमित्याश्मरथ्य आचार्यो मन्यते। "उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः"।

आमुक्तेर्भेद एव स्याज्जीवस्य च परस्य च।
मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः'।

इत्युक्तरीत्या मुक्तिदशायां भाव्यभेदमाश्रित्य परमात्मनि जीवधर्माभिधानमुपपद्यत इत्यौडुलोमिराचार्यो मन्यते। "अवस्थितेरिति काशकृत्स्नः"। जीवे परमात्मनोऽन्तर्यामितया अवस्थितेराकृत्यधिकरणन्यायेन शरीरभूतजीववाचिशब्दैः शरीरिणः परमात्मनोऽभिधानसंभवात् शरीरभूतजीवधर्माणां शरीरिणि परमात्मन्युपपत्तेश्च जीवश्रुतिलिङ्गानां परमात्मनि नानुपपत्तिरिति स्थितम्।

अत्र तु काशकृत्स्नमतमेवाचार्यस्य मतम्। तदुपरि पक्षान्तरानुपन्यासात्, आश्मरथ्यौडुलोमिमतयोर्दुष्टत्वाच्च। उपादानोपादेययोर्भेदाभेदवाद्याश्मरथ्यमतं जैनमतप्रतिक्षेपादेव प्रतिक्षिप्तम्। तर्कपादे जैनानां मतं हि प्रतिक्षिप्तमाचार्येण। "ये[1] चैवं मन्यन्ते —

(२) जीवाजीवास्रवसंवरनिर्जरबन्धमोक्षा नाम सप्त पदार्थाः। बोधात्मको जीवः। इन्द्रियप्रवृत्तिरास्रवः। शमदमादिरूपा प्रवृत्तिः संवरः। तप्तशिलारोहणादिर्निर्जरः। बन्धोऽष्टविधं कर्म। तत्र घातिकर्म चतुर्विधम्, ज्ञानावरणीयं दर्शनावरणीयं मोहनीयमान्तरायिकमिति। तत्र सम्यग्ज्ञानान्न मोक्ष इति विपर्ययो ज्ञानावरणीयं कर्म। आर्हतदर्शनाभ्यासान्न मोक्ष इति ज्ञानं दर्शनावरणीयम्। बहुषु विप्रति-

[1]. ते. ग.

---

**उत्क्रमिष्यत एवम्भावादिति। एवम्भावः** परमात्मैक्यम्। नचात्र सूत्रे उत्क्रान्तिप्रागवस्थायामेव एवम्भावः; पश्चात्तु भेद इत्येव प्रतीयत इति शङ्क्यम् — 'अयमात्मा परमात्मैक्यसंपत्तये उत्क्रमिष्यति किल। अतोऽस्य परमात्मैक्य'मित्युक्तौ इदानीं परमात्मैक्यमिति ग्रहणायोगात्। अतः एवम्भावादित्यस्य भविष्यत इति विशेषणमर्थसिद्धमिति।

षिद्धेषु मोक्षमार्गेषु विशेषानवधारणीयं[1] मोहनीयम् । मोक्षमार्गप्रवृत्तानां तद्विघ्न-[2] करं विज्ञानमान्तरायिकम् । तानीमानि श्रेयोमार्गहन्तृत्वात् घातिकर्माणीत्युच्यन्ते । अथाघातिकर्म चतुर्विधम्, वेदनीयं नामिकं गोत्रिकमायुष्कञ्चेति । तत्र वेदनीयं कर्म शुक्लपुद्गलविपाकहेतुः । तद्धि कर्म बन्धोऽपि न भवति । निःश्रेयस[3]प्राप्ति-हेतुज्ञानाविघातकत्वात् । शुक्लपुद्गलारम्भकं वेदनीयकर्मानुगुणं नामिकं कर्म । तद्धि शुक्लपुद्गलस्यावस्थां[4] कलिलबुद्बुदादिकामारभते । गोत्रिकं तु अव्याकृतं ततोप्याद्यं शक्तिरूपेणावस्थितम् । आयुष्कम् = आयुः कथयत्युत्पादनद्वारेणेत्यायुष्कम् । तान्ये-तानि शुक्लपुद्गलाश्रयत्वादघातिकर्माणि । तदेतत् कर्माष्टकं पुरुषं बध्नातीति बन्धः । विगळितसमस्तक्लेशतद्वासनस्याना[5]वरणज्ञानसुखैकतानस्याऽऽत्मन उपरि देशावस्थानं मोक्ष इत्येके । अन्ये तु ऊर्ध्वगमनशीलस्य जीवस्य शुष्कालाबुफलोन्मज्जनवत् सततोर्ध्वगमनं मोक्ष इति वर्णयन्ति ।

इममन्यमपि प्रपञ्चमाचक्षते । पञ्चास्तिकाया नाम, जीवास्तिकायः पुद्गला-स्तिकायो धर्मास्तिकायोऽधर्मास्तिकाय आकाशास्तिकायश्चेति । अस्तीति कायते शब्द्यत इत्यस्तिकायः । [6]जीव एवास्तिकायो जीवास्तिकायः । एवं सर्वत्र । तत्र च जीवास्तिकायस्त्रिविधः, बद्धो मुक्तो नित्यसिद्धश्च । तत्र नित्यसिद्ध आर्हतः । इतरौ द्वौ प्रसिद्धौ । पूर्यते गळति चेति उपचितापचितं वस्तु पुद्गलशब्देनोच्यते । पुद्गला-स्तिकायश्च षोढा, पृथिव्यादिभूतचतुष्टयं स्थावरं जङ्गमञ्चेति । धर्मास्तिकायः प्रवृत्त्यनु-मेयः । अधर्मास्तिकायः स्थितिहेतुः । आकाशास्तिकायः द्विविधः, लोकाका-शोऽलोकाकाशश्चेति । उपर्युपरि वर्तमानानां लोकानामन्तर्वर्ती आकाशो लोका-काशः । सर्वेषां लोकानामूर्ध्ववर्ती अनावृताकाशोऽलोकाकाशः ।

1. विशेषानवधारणं. क. विशेषावरणीयं. शा. शा. दी. 2. विघटन. क. 3. परि-पन्थिज्ञाना. ख. ग. 4. पुद्गलस्याद्यामवस्थां. ग. पुद्गलाद्यवस्थां. शा. शा. दी. 5. क्लेशतद्वृय-सनावरणज्ञान. क. 6. वाक्यमिदं न क कोशे ।

---

शुक्लपुद्गले विपाकहेतुरिति । अवयवावयविभूतवस्तुसामान्ये तन्मतसिद्धं नाम पुद्गलेति । तदर्थो वक्ष्यते पूर्यते गळति चेति । अतः शुक्लस्य शरीरारम्भकस्य विपाकहेतुरित्यर्थः । अत्र श्रीभाष्योक्तरीत्यपेक्षया तन्मतप्रक्रियावर्णने ईषद्भेदः तन्मतग्रन्थान्तरानुरोधेन व्युत्पादनार्थं दर्शित इति ध्येयम् ।

सर्वेऽप्येते पदार्थाः — स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यम्, स्यादस्ति चावक्तव्यम्, स्यान्नास्ति चावक्तव्यम्, स्यादस्ति च नास्ति चावक्तव्यञ्चेत्येवं सत्त्व—असत्त्व — सदसत्त्व — सदसद्विलक्षणत्व — सत्त्वविशिष्टसदसद्विलक्षणत्व — असत्त्वविशिष्टसदसद्विलक्षणत्व—सदसत्त्वविशिष्टसदसद्विलक्षणत्वरूपसप्तभङ्गीपरिवृताः। स्याच्छब्दोऽयं तिङन्तप्रतिरूपको निपातोऽनैकान्त्य[1]द्योती।

एवं सर्वं वस्त्वनेकान्तमित्यार्हतसमयः साधुः, कस्याप्यप्रतिक्षेपकत्वादिति पूर्वपक्षे प्राप्ते —

"नैकस्मिन्नसंभवात्"। एकस्मिन् वस्तुनि सत्त्वासत्त्वभिन्नत्वाभिन्नत्वादिविरुद्धधर्माणां परस्परविरहस्वरूपाणामसंभवात् तन्मतमसमञ्जसम्। प्रमाणाप्रमाणविभागभङ्गप्रसङ्गेन सर्वव्यवहारोच्छेदप्रसङ्गात्। "एवञ्चात्माकार्त्स्न्यम्"। जीवस्य देहानुरूपपरिमाणत्वमित्येवमभ्युपगच्छतां जैनानां हस्त्यादिशरीरस्थात्मनो न्यूनपरिमाणमशकादिशरीरानुप्रवेशे आत्मनः परिपूर्णता न स्यात्। अथ संकोचविकासधर्मतयाऽऽत्मनः पर्यायेण = अवस्थान्तरापत्त्या न विरोध इति चेत् — तत्राह, "न च पर्यायादप्यविरोधो विकारादिभ्यः"। कालभेदेन संकोचविकासावस्थाभ्युपगमे विकारित्वानित्यत्वादिदोषप्रसङ्गः। "अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः"। जीवस्य यदन्त्यं परिमाणं मोक्षावस्थागतम्, तस्य ततःपरं देहान्तरपरिग्रहाभावेनावस्थितत्वात् तस्य परिमाणस्य तदाश्रयस्य च जीवस्य च (?) उत्तरा[2]वस्थाप्राप्तिविधुरत्वेन नित्यत्वात् तदेव परिमाणं पूर्वत्राप्यविशिष्टमित्येवाभ्युपगन्तव्यम्। उत्तरावधिशून्यस्य पूर्वावध्यभावात्। ततश्च देहभेदेन तदनुरूपपरिमाणभेद इति जैनानां[3] दर्शनमसङ्गतमिति स्थितम्।

ततश्च जैनमतप्रतिक्षेपेणैव भेदाभेदसमावेशवाद्याश्मरथ्यमतमपि निरस्तमेव।

'परमात्मात्मनोर्योगः परमार्थ इतीष्यते।
मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः'॥

1. अनेकान्त. ग. 2. जीवस्य नित्यत्वादुत्तरावधिविधुरत्वेन नित्यत्वात्. ग; शा. शा. दीपिकायामप्येवमेव पाठः। परन्तु अवधिपदस्थाने अवस्थापदम्। 3. जैनानाञ्च, क.

---

**परमात्मात्मनोर्योग** इति। **योगः** ऐक्यम्। एतदर्थः जिज्ञासाधिकरणे पुराणघट्टे द्रष्टव्यः॥

इति स्मरणात् ब्रह्मभिन्नस्य जीवस्य मुक्तौ ब्रह्मैक्यवाद्यौडुलोमिमतमपि निरस्तम् । अतः काशकृत्स्नमतमेव भगवद्बादरायणमतम्[1] । अत एव, "अंशो नाना-व्यपदेशा" दिति जीवस्य ब्रह्मांशत्वमेवोक्तम् ।

(३) तत्र ह्यधिकरणे 'ज्ञाज्ञौ द्वावजावीशनीशौ' इत्यादिभेदश्रुत्यनुरोधादभेद वादो जात्याद्यभेदाभिप्रायेण गौणो नेतव्यः । अथवा तत्त्वमस्याद्यभेदश्रुत्यनुरोधात् भेदव्यपदेश औपाधिकभेदपरतया नेतव्य इत्येवं पूर्वपक्षे प्राप्ते इदमुच्यते — "अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके" । नानाव्यपदेशात् = भेदव्यपदेशात्, अन्यथा चापि = अभेदेनापि व्यपदेशात्, श्रुतिद्वयानुग्रहाय ब्रह्मणोंशो जीव इत्यव (इत्युप?) गम्यते । चिदचिद्विशिष्टं हि ब्रह्मणः स्वरूपम् । तत्र विशेषणभूतचिदंशस्यान्तर्भूतत्वादभेदव्यपदेशोपपत्तिः । विशेष्यापेक्षया विशेषणस्य भिन्नत्वात् भेदव्यपदेशस्याप्युपपत्तिः । 'ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवा उते' ति दाशकितवादीनामपि ब्रह्मत्वमेके शाखिनः अधीयते । नास्याभेदव्यपदेशस्य गौणत्वं वक्तुं युज्यते । नापि सृज्यत्वसंहार्यत्वादिलक्षणभेदव्यपदेशस्य मानान्तरा-सिद्धार्थाभिधायिनोऽनुवादित्वं गौणत्वं वा वक्तुं युज्यते । अतो व्यपदेशद्वयमुख्य-त्वाय नीलगोत्वाद्यपृथक्सिद्धविशेषणभूतरूप[2]जात्यादिविशिष्टद्रव्यस्य यथा रूपजा-त्यादिविशेषणमंशः, एवमपृथक्सिद्धविशेषणभूतः शक्तिस्थानीयो जीवोंश इत्यर्थः ।

"मन्त्रवर्णात्[3]" । 'पादोऽस्य विश्वा भूतानी' ति मन्त्रवर्णेन सर्व-जीवानां भूतशब्दितानां पादशब्दितांशत्वप्रतिपादनाच्च जीवो ब्रह्मविशेषणांशः । "अपि स्मर्यते" । 'ममैवांशो जीवलोके' इति गीतावचनाच्चांशत्वम् । ननु जीवस्यांशत्वे जीवस्य ब्रह्मैकदेशत्वावश्यम्भावेन तद्गता दोषा ब्रह्मणि स्युः । नेत्यु-च्यते, "प्रकाशादिवत्तु नैवं परः" । तुशब्दः चोद्यं व्यावर्तयति । परः = पर-मात्मा, एवं न = जीववन्न दुष्टः, प्रकाशादिवत् । यथा प्रकाशगोत्वादिविशिष्ट-प्रभावद्गवादिद्रव्यस्य प्रभागोत्वादिकमंशः, तादृशोऽयमंशः ; न तु घटाकाशादिवत् तदेकदेशरूपः । अतो न जीवदोषेण परस्य दुष्टता । "स्मरन्ति च" । स्मरन्ति च पराशरादयः —

1. बादरायणाभिमतम्. ग. 2. रूपि. क. 3. मन्त्रवर्णाच्च इति ग. पाठः । नूनमयं श्रीभाष्याद्यभिमतपाठ एव स्यात्?

'एकदेशस्थितस्याग्नेः ज्योत्स्ना विस्तारिणी यथा।
परस्य ब्रह्मणः शक्तिः तथेदमखिलं जगत्॥'

इति प्रकाशाद्यंशसाम्यम्। ननु सर्वेषां ब्रह्मांशत्वे समाने केषाञ्चिद्वेदाध्ययनाद्यनुज्ञा, केषाञ्चिन् परिहार इति व्यवस्था कथं संगच्छताम्? तत्राह – "अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत्"। यथा अग्न्यादेरेकरूपस्यैव श्रोत्रियचण्डालागारादिसंबन्धवशेन हेयत्वोपादेयत्वे, एवं ब्रह्मांशत्वाविशेषेऽपि जीवानां त्रैवर्णिकात्रैवर्णिकशरीरसंयोगात् वेदाध्ययनाद्यनुज्ञापरिहारावुपपद्येते।

"असन्ततेश्चाव्यतिकरः"। प्रतिशरीरं भिन्नानां जीवानामणुत्वेन सर्वत्रासन्ततत्वात् न भोगव्यतिकरदोषोऽपि भवति। ननु जीवब्रह्मभेदपक्षेऽपि अविद्याकृतोपाधिभेदात् भोगासङ्कर उपपत्स्यते। तत्राह–"आभास एव च"। अखण्डैकरसप्रकाशमात्रस्वरूपस्य ब्रह्मणः अविद्याकृतस्वरूपतिरोधानतत्पूर्वकोपाधिभेदपरिकल्पन हेतुराभास एव। प्रकाशस्वरूपस्य तिरोधानं हि प्रकाशनाश एवेति पर्यवस्येत्। ननु पारमार्थिकोपाध्युपहितब्रह्मजीववादे उपाधिभेदहेतुभूतानाद्यदृष्टवशात् भोगव्यवस्था भविष्यति। तत्राह – "अदृष्टानियमात्"। ब्रह्मस्वरूपस्य[1] छेदनभेदनाद्यसंभवेन सर्वेषामप्यदृष्टानामनियतत्वात् न भोगव्यवस्था सिद्ध्येत्। ननु अदृष्टहेतुभूताभिसन्ध्यादिव्यवस्थया अदृष्टव्यवस्था, तद्द्वारा भोगव्यवस्था च भविष्यतीत्यत्राह – "अभिसंध्यादिष्वपि चैवम्"। अभिसन्ध्यादीनामपि छेदनाद्यनर्हब्रह्मस्वरूपमात्रसंबन्धित्वादव्यवस्था तदवस्थैव। "प्रदेशभेदादिति चेन्नान्तर्भावात्"। ननु ब्रह्मस्वरूपस्यैकत्वेऽप्युपाधिसंबन्धिप्रदेशभेदादुपपद्यते भोगव्यवस्थेति चेत् – न; उपाधीनां तत्र तत्र गमनात् सर्वप्रदेशानां सर्वोपाध्यन्तर्भावेन भोगव्यतिकरः तदवस्थ एव। प्रदेशभेदेनोपाधिसंबन्धेऽपि सर्वस्य ब्रह्मप्रदेशत्वात् सर्वसंबन्धि दुःखं ब्रह्मण एव स्यादिति ब्रह्मभावे[2] महान् अनर्थ आपद्येतेति। अतो जीवो ब्रह्मणो विशेषणांश इति स्थितम्।

ततश्चान्तर्यामितया परमात्मनोऽवस्थितेः शरीरवाचिशब्दानाञ्च शरीरिपर्यन्तत्वात् शरीरभूतजीववाचिविज्ञानघनशब्देन शरीरिभूतपरमात्माभिधानं न विरुद्ध्यत इति काशकृत्स्नमतमेव बादरायणमतम्। प्रकृतमनुसरामः॥ १४॥ ४-४.

1. छेदभेद. ग. 2. ब्रह्मभावो महानर्थः. क.

## ४—५.

**इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु, यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ शारीरस्ते-**

---

पूर्वं, 'तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वासः' इति मूर्तामूर्तब्राह्मणे दिव्यमङ्गळविग्रहविशिष्टतया प्रतिपादितः पुरुष एव मैत्रेयीब्राह्मणे 'आत्मा वा अरे द्रष्टव्यः' इत्युक्त आत्मा सर्वान्तर्यामीति प्रतिपादनायेदं ब्राह्मणमारभ्यते— **इयं पृथिवी सर्वेषां भूतानां मधु ; अस्यै पृथिव्यै सर्वाणि भूतानि मधु ।** इयं दृश्यमाना पृथिवी सर्वेषां भूतानां मधु । सर्वभूतानां धारणान्नपानादिहेतुतयोपजीव्यत्वेन पृथिव्याः सर्वभूतमधुत्वम् । **अस्यै पृथिव्यै** । अस्याः पृथिव्या इत्यर्थः । विभक्तिव्यत्ययश्छान्दसः । सर्वभूतानां पृथिवीधार्यत्वेन तत्पोष्यत्वेन तदनुकूलत्वात् पृथिवीं प्रति मधुत्वं द्रष्टव्यम् । एवं पृथिव्याः भूतानाञ्चोपजीव्योपजीवकत्वेन परस्परमधुत्वमित्यर्थः । **यश्चायमस्यां — यश्चायमध्यात्मं शारीरः — अयमेव स योऽयमात्मेदं — सर्वम्** । **अस्यां** सर्वभूतोपजीव्यतया मधुभूतायां पृथिव्याम् ([1] अन्तर्यामितयाऽवस्थितः ।) **तेजोमयः** स्वयम्प्रकाशज्ञानमय इति यावत् । **अमृतमयः** मरण (मर[1]णादिधर्म)शून्यः—अपहतपाप्मत्वादिगुणाश्रय इति यावत् । तत्रान्तर्यामितयाऽवस्थितो यः पुरुषः । (यः पुरुषो वर्तते) **यश्चायमध्यात्मम्** । आत्मनि **अध्यात्मम्** । अत्रात्मशब्देन देहेन्द्रियमनःप्राणजीवसंघात उच्यते । तस्मिन् योऽयं **शारीरः** शरीरान्तर्यामी । तेजो-

---

अनन्तरे मधुब्राह्मणे अधिदैवतं पृथिव्यादीन् अध्यात्मं शरीरादींश्च चतुर्दश चतुर्दश प्रदर्श्य, उभयेष्वप्यन्तर्यामी परमात्मेति निरूप्यते सर्वप्रकारतन्नियम्यत्वप्रत्यक्तये । उक्ताध्यात्मिकांशचतुर्दशकविशिष्टानां सर्वेषां भूतानाम्, उक्तानां चतुर्दशानां देवतानाञ्चान्योन्योपजीव्यत्वादिना मिथो मधुत्वनिर्देशपूर्वकं तन्मधुत्वमन्तर्यामिप्रयुक्तमिति ज्ञप्तये अमृतमयपुरुषस्यान्तर्यामिणः कथनात् इदं मधुब्राह्मणम् ।

**सङ्घात उच्यत** इति । पृथिव्यादिचतुर्दशकाधिष्ठेय शरीरादि चतुर्दशकमध्यात्मशब्दार्थनिविष्टमिति भावः । अत्र चतुर्दशके शरीरं मानुषमिति यत्र द्वयोरभेदेऽपि शरीरमिति व्यवहारप्रयोजकस्य मानुषमिति व्यवहारप्रयोजकस्य चांशस्य भिन्नत्वात् तेनतेन रूपेण पृथगुक्तिः ।

**जोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥१॥**

**इमा आपस्सर्वेषां भूतानां मध्वासामपाँ सर्वाणि भूतानि मधु, यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥ २ ॥**

---

मयोऽमृतमयश्च । (श्चेति पूर्ववत्) । यश्चैष पुरुषः, — अत्र शरीरस्य पृथिवीविकारत्वात् अधिभूतं पृथिव्याः स्थाने अध्यात्मं शरीरस्य निवेशः —, अयमेव सः योऽयमात्मा । **योऽयमात्मा** 'आत्मावारे द्रष्टव्य' इति मैत्रेयीब्राह्मणे आत्मतया निर्दिष्टः, **सोऽयमेव** पृथिव्यन्तर्यामी शरीरान्तर्यामी चायमेवेत्यर्थः । [[1] अयमेव च पुरुषः, 'तस्य हैतस्य पुरुषस्य रूप' मित्युक्तदिव्यमङ्गळविग्रहवानपीति द्रष्टव्यम्] । **इदममृतम्** उपकोसलविद्यादौ, 'एतदमृतमेतदभयमेतद्ब्रह्मे' ति अमृतत्वब्रह्मत्वादिना निर्दिश्यमानमपीदमेव । **इदं ब्रह्मेदं सर्वम्** । 'सर्वं खल्विदं ब्रह्मे' त्यादौ सर्वोपादानतया निर्दिश्यमानमपीदमेव ब्रह्मेत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ १ ॥

**इमा आपः — इदँ सर्वम्** । 'यो रेतसि तिष्ठन् यो रेतसोऽन्तरः' इत्यन्तर्यामिब्राह्मणे रेतसोन्तरतया निर्दिष्टः परमात्मा **रैतस** इत्युच्यते । रेतसो जलविकारत्वात्, 'आपो रेतो भूत्वा शिश्नं प्राविशन्' ति श्रुतेश्च [[1] अधिभूतं] अपां स्थाने अध्यात्मं रेतसो निवेशः । [[2] अन्योन्योपजीव्योपजीवकत्ववतोः अधिभूताध्यात्मयोर्जलरेतोन्त (ध्यात्मगतयोर्जलरेतसोः अन्त ?) र्यामी पूर्वोक्त आत्मेत्यर्थः । शिष्टं स्पष्टम्] ॥ २ ॥

1. अधिकत्वप्रदर्शनाय [ ] एवं कुण्डलितं, पूर्वं पूर्वस्थानापन्नत्वप्रदर्शनाय ( ) एवं कुण्डलितवत् क. कोशस्थम् । 2. इदमधिकं क. कोशे । अशुद्धश्च ।

---

अत्र प्रतिपर्यायम्, **अयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्** इति पठ्यते । तेन, 'आत्मैवेदमग्र आसीत्', 'ब्रह्म वा इदमग्र आसीत्', 'आत्मेत्येवोपासीत', 'आत्मानमेव लोकमुपासीत', प्राणो वा अमृतम्', 'ब्रह्म ते ब्रवाणि', 'अस्मादात्मनः सर्वे प्राणाः', 'आत्मा वा अरे द्रष्टव्यः' इत्येवमधस्तादात्मादिशब्दोक्त ईदृशसर्वान्तर्यामी स्फुरद्दिव्यमङ्गलविग्रह इत्युक्तं भवति ।

अयमग्निस्सर्वेषां भूतानां मध्वस्याग्नेः सर्वाणि भूतानि मधु, यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥ ३ ॥

अयं वायुस्सर्वेषां भूतानां मध्वस्य वायोः सर्वाणि भूतानि मधु, यश्चायमस्मिन् वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥ ४ ॥

?? अयमादित्यस्सर्वेषां भूतानां मध्वस्यादित्यस्य सर्वाणि भूतानि मधु,

---

**अयमग्निः — इदं सर्वम् ।** अग्न्यभिमानिकत्वात् वाचः, 'अग्निर्वाग् भूत्वा मुखं प्राविशत्' इति श्रुतेश्च, अध्यात्मं तत्स्थाने वाचो निवेश उपपद्यते । * एवमुत्तरपर्यायेष्वपि कश्चन संबन्धो द्रष्टव्यः । [ **वाङ्मय** इति । 'यो वाचि तिष्ठन्' इत्यन्तर्यामिब्राह्मणोक्त इत्यर्थः । [1] शिष्टं पूर्ववत् ] ॥ ३ ॥

**अयं वायुः — इदं सर्वम् ।** मुख्यप्राणस्य वायुविकारत्वात् तत्स्थाने तन्निवेशः । **प्राणः** । मुख्यप्राणशरीरकतया, 'प्राण इति होवाच' त्यादावुक्त इत्यर्थः ॥ ४ ॥

?? **अयमादित्यः — इदं सर्वम् ।** [1]सर्वत्रोपजीव्योपजीवकभावेन मधुत्व

* इदं वाक्यं ख. ग. कोशस्थम् । अत एवोपरितनपर्यायेषु प्रायो भाष्याभावस्तत्र ।

?? वायुपर्यायानन्तरमाकाशपर्यायभाष्यं क. कोशे । ख. कोशेऽप्येवमाकाशपर्याय एव पञ्चमतया लिखितः । परन्तु स्तनयित्नुपर्यायानन्तरमाकाशपर्यायो लिखितो भाष्ये इति च तत्रोक्तमस्ति । ग. कोशे तु तत्रैवाकाशपर्यायपठनम् । शाङ्करसंमतः श्रुतिपाठोऽपि आकाशपर्यायस्य दशमत्वेनैव । अतः क. कोशमुपेक्ष्य यथावत् श्रुतिपठनेन क. कोशस्थं तत्तत्पर्यायगतं भाष्यं तत्र तत्र मुद्रितमिह । परन्तु धर्मपर्याये पूर्वखण्डेति पदं स्तनयित्नुपर्यायस्य तदव्यवहितपूर्वतां ज्ञापयतीति स्यात् । अथापि तत्पङ्क्तेः खादिकोशे अदर्शनात्, व्यवहितपूर्वपरतयाऽपि निर्वाहाच्च बहुसंमतश्रुतिपाठरक्षेहेति भाव्यम् ।

1. वाक्यमिदं क. कोशस्थं व्यर्थमिव अविशेषात् ।

**यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं चाक्षुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥ ५ ॥**

**इमा दिशः सर्वेषां भूतानां मध्वासां दिशां सर्वाणि भूतानि मधु ; यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ श्रौत्रः प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥ ६ ॥**

**अयं चन्द्रः सर्वेषां भूतानां मध्वस्य चन्द्रस्य सर्वाणि भूतानि मधु ; यश्चायमस्मिँश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ७ ॥**

---

ज्ञेयम् । 'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविश' दिति श्रुतेरादित्यस्य चक्षुरभिमानित्वादादित्यस्थाने चक्षुर्निवेश इत्येवं सम्बन्धविशेषस्तत्र तत्र द्रष्टव्यः । **चाक्षुष** इति । 'यश्चक्षुषि तिष्ठन्' इत्युक्त इत्यर्थः ॥ ५ ॥

**इमा दिशः — इदं सर्वम्** । **श्रौत्रः** श्रोत्रान्तर्यामी । **प्रातिश्रुत्कः** । **प्रतिश्रुत्का** प्रतिध्वनिः । तत्संबन्धी प्रातिश्रुत्कः । प्रतिशब्दग्राहीति यावत् । मूलशब्दग्राहीत्यपि सिद्धम् । प्रतिशब्दग्रहणस्य मूलशब्दग्रहणपूर्वकत्वात् । तद्ग्राहित्वञ्च परमात्मनः श्रोत्रेन्द्रियाधिष्ठातृत्वादुपपद्यत इति द्रष्टव्यम् । [1] [ दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्निति श्रुतिरत्रानुसन्धेया ] ॥ ६ ॥

**अयं चन्द्रः — इदं सर्वम्** । [**मानस** इति । 'यो मनसि तिष्ठन् मनसोऽन्तरः' इत्युक्तः परमात्मेत्यर्थः । चन्द्रस्य मनोऽधिष्ठातृत्वाच्चन्द्रस्थाने मनोनिवेश इति द्रष्टव्यम्] ॥ ७ ॥

1. ख. कोशे इदं वाक्यं न । ग. कोशे तु दिक्पर्यायभाष्यं किमपि न ।

---

**प्रातिश्रुत्क** इति । शाङ्करेऽपि **प्रतिश्रुत्कायां** प्रतिश्रवणवेलायां भव इत्युक्तम् । नूनमिदं **श्रौत्र** इत्यस्य विवरणरूपं स्यात् । बह्वीनां दिशामेकस्मिन् श्रोत्रे कथमुपयोग इति जिज्ञासाशमनं विवरणफलम् । श्रोत्रगताः, अयं शब्द इतो दिश आगतः ; अयं तु ततः' इति प्रतिनियतदिग्भवत्वं शब्दे ग्राहयन्तो भागाः प्रतिश्रुत्काः । तत्संबन्धी प्रातिश्रुत्क इति । श्रोत्रमेव हि दिगधिष्ठेयम्, न तु प्रतिध्वनिश्रवणादि । अतः श्रोत्रभागग्रहणं युक्तम् ।

इयं विद्युत् सर्वेषां भूतानां मध्वस्यै विद्युतः (ते) सर्वाणि भूतानि मधु; यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तैजसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥ ८ ॥

अयँ स्तनयित्नुः सर्वेषां भूतानां मध्वस्य स्तनयित्नोस्सर्वाणि भूतानि मधु; यश्चायमस्मिँस्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ शाब्दस्सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिद ब्रह्मेदँ सर्वम् ॥ ९ ॥

---

**इयं विद्युत्—इदं सर्वम्**। **अस्यै**[1] अस्याः इत्यर्थः। **तैजसः** कौक्षेयतेजस्संबन्धीत्यर्थः। [विद्युज्जाठरयोः तैजसत्वेनैक्यात्तत्स्थाने तदुक्तिः] ॥ ८ ॥

**अयं स्तनयित्नुः—इदं सर्वम्**। [स्तनयित्नुः मेघगर्जनम्।] **शाब्दः** वागिन्द्रियोच्चार्यमाणशब्दान्तर्यामी। ['यः सर्वेषु वेदेषु तिष्ठ'न्नित्याद्युक्तः।] तस्यैव विशेषणं **सौवरः**। द्वारादित्वात् ऐजागमः। [अत्र स्तनयित्नुरिति मेघनिष्ठगर्जनमेव गृह्यते। अध्यात्मं तत्स्थाने शब्दस्य निवेशादिति द्रष्टव्यम्।] अत्र शब्दस्य अद्रव्यत्वेन शरीरत्वासंभवात् तद्गुणकद्रव्यनिष्ठतया वा तदुक्तिर्द्रष्टव्या; प्रमाणबलादद्रव्यस्यापि शब्दस्य द्रव्यत्वघटितशरीरत्वाभावेऽपि परमात्माश्रयत्वेन प्रकारान्तरेण [2]शरीरत्वोक्तिरविरुद्धेति वा द्रष्टव्यम् ॥ ९ ॥

1. क. कोशे, **अस्यै विद्युते** अस्या विद्युत इत्यर्थः इति पाठः। स च पूर्वं **अस्यै पृथिव्यै** इतिवत् अत्रापि **विद्युते** इति चतुर्थ्यन्तश्रुतिपाठसत्त्वे युक्तः; न तु तस्यै वाच इतिवत् पाठे। 2. अत्र 'शरीरत्वोक्तौ न दोष इति द्रष्टव्यम्' इति **ख. ग.** पाठः अशुद्धः। वाक्यान्तरस्यापेक्षितत्वात्।

---

**तैजस** इति। शाङ्करे कौक्षेयतेज इति नोक्तम्। किं तु त्वक् इति।

अयमाकाशः सर्वेषां भूतानां मध्वस्याकाशस्य सर्वाणि भूतानि मधु; यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥१०॥

अयं धर्मः सर्वेषां भूतानां मध्वस्य धर्मस्य सर्वाणि भूतानि मधु; यश्चायमस्मिन् धर्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥११॥

इदँ सत्यँ सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु; यश्चायमस्मिन् सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ सात्यस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥१२॥

---

अयमाकाशः — इदं सर्वम् । [1]हृद्याकाशः इति । 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः' इत्युक्तः परमात्मेत्यर्थः । शिष्टं स्पष्टम् ॥ १० ॥

अयं धर्मः — इदं सर्वम् । श्रुतिस्मृतिप्रसिद्धो ज्योतिष्टोमादिरूपो धर्मः । [अत्र परमात्मनः, 'यश्चायमस्मिन् धर्मे' इति क्रियारूपधर्मान्तर्यामित्वोक्तिः, 'यस्य वेदाः शरीरं यस्य यज्ञाः शरीर' मित्यादाविव पूर्वखण्डोक्तशब्दवदेव तदाश्रयद्रव्यनिष्ठतया द्रष्टव्या, अपृथक्सिद्धिमात्राभिप्राया वेति न विरोधः ।] धार्मस्तु तत्फलभूतसुखादिरूपः[1]; तदन्तर्यामी पुरुष इत्यर्थः ॥ ११ ॥

इदं सत्यं — इदं सर्वम् । सत्यं सत्यवचनम् । सात्यं तत्फलभूतं सुखादि । [अत्रापि सत्यान्तर्यामित्वोक्तिः पूर्ववत् तदभिमानिदेवतादिद्वारा द्रष्टव्या । ] ॥ १२ ॥

1. अत्र, 'सुखदुःखादिलक्षणः' इति ख. ग. पाठः अशुद्धः; दुःखस्य धर्मफलत्वाभावात् ।

---

धार्म इति । शाब्द इत्यादाविव धर्मान्तर्यामीत्यर्थ एव वक्तव्यः । तत्र धर्मपदेन पुरुषानुष्ठेयधर्मग्रहणम् । अयं धर्म इत्युपक्रमे तु धर्मदेवताग्रहणम् । (अथवा धर्मसामान्यग्रहणं तत्र; धार्म इत्यत्र धर्मपदेन तत्तत्क्रियमाणधर्मविशेषग्रहणम्) । एवं सात्य इत्यत्रापीति सुवचम् — अथापि हेतुफलभेदेन भिन्नभिन्नार्थविवक्षा संभवत्युक्ता ।

**इदं मानुषँ सर्वेषां भूतानां मध्वस्य मानुषस्य सर्वाणि भूतानि मधु; यश्चायमस्मिन् मानुषे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम्॥१३॥**

**अयमात्मा सर्वेषां भूतानां मध्वस्याऽऽत्मनः सर्वाणि भूतानि मधु; यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा[1] तेजोम-**

1. यश्चायमध्यात्ममात्मा . मा. अयमात्मा विरिञ्चः । अध्यात्ममात्मा जीवगतविरिञ्च-गत इति तत्र व्याख्या ।

---

**इदं मानुषं -- इदं सर्वम्** । [1]अत्राधिदैवतं **मानुषं** नाम लक्षणया मनुष्यप्रसिद्धमग्नीन्द्रादिरूपम् । **अध्यात्मं मानुष** इत्यत्र मानुषशब्दो मुख्यमनुष्यान्तर्यामिपरः ॥ १३ ॥

एवमध्यात्मा[धिभूता[2]]धिदैवतभेदभिन्नसर्वाचेतनान्तर्यामित्वम्, तद्द्वारा सर्वाचेतनवैलक्षण्यञ्च ब्रह्मणः प्रतिपादितम् । अथ चेतनान्तर्यामित्वमुखेन सर्वचेतनवैलक्षण्यं प्रतिपादयति **अयमात्मा — इदं सर्वम्** । **आत्मा**[3] प्रत्यगात्मेत्यर्थः । **यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषः** । सर्वेषु पर्यायेषु,

1. ख. ग. पाठस्तु **मानुषं** मनुष्यप्रसिद्धमधिदैवतमग्नीन्द्रादिरूपं सर्वेषां मध्वित्यर्थः अध्यात्मं **मानुष**इत्यत्र मनुष्यब्दो मुख्यमनुष्यपरो द्रष्टव्यः इति । 2. इदं न ग. कोशादौ। 3. **अयमात्मा** ग.

---

**मुख्यमनुष्येति** । मनुष्यस्याध्यात्मं प्रागुक्तं यद्यत्, तदतिरिक्तमध्यात्मगतं सर्वं मनुष्यपदविवक्षितमित्यपि सुवचम् ।

**अयमात्मेति** । नन्वत्र पूर्वपर्यायेष्विव काचिद् देवता हिरण्यगर्भः तदन्या वा आत्मपदेन गृह्यताम् । 'यश्चायमात्मे' त्यत्र आत्मपदं तदधिष्ठेयजीवात्मपरमस्तु इति चेत् – उच्यते । अत्र पूर्वपर्यायेष्विव यश्चायमध्यात्ममात्ममय इतिरीत्या प्रयोगाभावात् अध्यात्मान्तर्गतजीवग्रहणमात्मपदेन न युक्तम् । अतः वाङ्मय इत्यादौ वागादेरिव आत्मनः अमृतमयपुरुषं प्रति प्रकारत्वानुक्तेः अभेदोक्तेश्च स परमात्मैव । तस्यात्मगतामृतमयपुरुषाभेदस्य **अयमात्मे**त्यादिना कथनात् स आत्मैव अध्यात्मशब्दार्थसंघातनिविष्टजीवात्मेति ज्ञायत इति । अतो नात्र पूर्वपर्यायरीतिसंभव इति । अत्र **यश्चायमस्मिन्नात्मनी**त्यादिवाक्यार्थ एवं स्यात्—एतज्जीवान्तार्यामी यस्तेजोमयः, यश्च प्राक्सर्वपर्यायोक्तस्तेजोमयः, स तावत् आत्मामृतब्रह्मादिपदैः श्रुत्यन्तरप्रसिद्धो यः स एवेति । भाष्यपाठो निरीक्ष्यः । **अधिभूताधिदैवतेति** । उक्तेषु पर्यायेषु पृथिव्यादिकमधिभूतम्, आदित्यादि चाधिदैवतं यथायथं भाव्यम् । शाङ्करेऽप्यध्यात्माधिभूताधिदैवेत्युक्तम् ।

**योऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ १४ ॥**

**स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा। तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिताः, एवमेवास्मिन्नात्मनि सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एत आत्मानः समर्पिताः ॥ १५ ॥**

---

'यश्चायं तेजोमयोऽमृतमयः पुरुष' इति निर्दिष्टो यः, सोऽस्मिन् आत्मन्यवस्थितोऽन्तर्यामीत्यर्थः। सोऽपि क इत्यत्राह — **यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्।** [1] पूर्वब्राह्मणयोः पुरुषात्मशब्दाभ्यामुक्तः परमात्मैवेत्यर्थः ॥ १४ ॥

**स वा अयमात्मा — राजा । स वा अयमात्मा** इयता प्रबन्धेन प्रतिपादितः चेतनाचेतनविलक्षण आत्मा सर्वेषां भूतानाम् **अधिपतिः** शेषी। 'पतिशब्दः शेषिणि रूढः' इति व्यासार्यैः [2] प्रथमसूत्रे प्रतिपादितत्वात्। सर्वेषां भूतानां **राजा** नियन्ता। **तद्यथा — समर्पिताः। नाभिः** चक्रमध्यवर्तिसरन्ध्रकाष्ठम्। **नेमिः** बाह्यवलयाकारकाष्ठम्। **अराः** मध्यवर्तिदारुशलाकाः। अरा यथा नाभिनेम्याश्रिताः, एवं सर्वाणि भूतानि देवलोकप्राणजीवाः परमात्माश्रिता इत्यर्थः। चेतनाचेतनात्मकः सर्वोऽपि प्रपञ्चः तदाश्रित इति यावत् ॥ १५ ॥

एवमुपदिष्टमधुविद्यास्तुतये आख्यायिका आरभ्यते। अत्रेयमाख्यायिका अनुसन्धेया। दध्यङ्ङाथर्वणनामा ऋषिः इन्द्रात् मधुब्राह्मणविद्यां प्राप्तवान्। इन्द्रेण च, तदुपदेशसमये स दध्यङ्ङाथर्वण एवमनुशिष्टः — 'अन्यस्मै नैतदुपदेष्टव्यम्। अन्यथा कृते ते शिरश्छेत्स्यामी' ति। इत्युक्तोऽप्यसौ लोभादश्विनोः समीपमागत्य(?) एवमुक्तवान्—'मयेयं मधुविद्येन्द्रात् प्राप्ता। अतोऽस्या अन्यस्मा

1. एतत्स्थाने 'पूर्ववदर्थः' इत्येतावदेव ख. कोशादौ। 2. व्यासार्यैः समर्थितत्वात्. क.

---

**मधुविद्या** मधुब्राह्मणम्। तत्स्तुतिश्च द्वेधा स्वरूपतोऽर्थतश्चेह क्रियते। महता प्रयत्नेन मनुष्याद् देवैरधीतत्वात् परतत्त्वरहस्यप्रतिपादकत्वाच्च मध्विदं सारभूतमिति। प्रथमांशनिरूपणं प्रथमोदाहृतमन्त्रद्वयेन; परनिरूपणं परेण द्वयेन। तत्र हयग्रीवात्मनो दधीच आथर्वणात् मधुलाभार्थमश्विभ्यामुग्रं कर्म कीदृशं कुतः कृतमितीदमाख्यायिकावर्णनेनाह **अत्रेयमिति। इन्द्रादिति।** यद्यपि शतपथप्रवर्ग्याध्यायतः इन्द्रस्योपदेष्टृत्वं न बुध्यते। केवलं दधीच इदं विज्ञानमस्तीति

## इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच।

उपदेशे स इन्द्रो मे शिरश्छेत्स्यतीति भीतोऽस्मि। तद्भयं युवाभ्यां निवार्यते चेत्, युवयोर्मधुब्राह्मणमुपदेक्ष्यामी' ति। ततः ताभ्यामश्विभ्यां स दध्यङ्ङाथर्वण इत्थं प्रत्युक्तः — 'इन्द्रात् ते भयं व्यपैतु। आवां त्वां रक्षिष्यावः। तत्रेत्थमुपायं करिष्यावः। उपदेशात्पूर्वकाले आवामेव त्वदीयं शिरश्छित्वाऽन्यत्र स्थापयित्वा अन्यदीयेन शिरसा त्वां योजयिष्यावः। तेन शिरसा आवाभ्यामुपदिश। उपदेशकुपितेनेन्द्रेण तच्छिरसि छिन्ने त्वदीयमेव शिरो यथापूर्वं प्रतिसन्धास्यावहे' इति। एवं तौ तेन समयं कृत्वा तथैव तेनोपायेन विद्यां प्राप्तवन्तौ; तत इन्द्रेण तच्छिरसि छिन्ने तस्य पूर्वशिरो यथापूर्वं प्रतिसंहितवन्तौ चेति। इमामाख्यायिकामभिप्रेत्याह —

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच।** वैशब्दो यथोक्ताख्यायिकावृत्तान्तस्मरणे। दधि अञ्चतीति **दध्यङ्**। ऋत्विगित्यादिना क्विन्। [1]हल्ङ्यादिलोपे संयोगान्तलोपे 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्। **आथर्वणः** अथर्वणः पुत्रः। स दध्यङ्ङाथर्वणः अश्विभ्यां तदेतत् मधुब्राह्मणमुवाचेत्यर्थः।

1. अयं ग. पाठः। अन्यत्र, 'हलन्तादसंयोगान्तलोपे' इति पाठः। अत्र ऋत्विगित्यादिना सोपपदादञ्चोः क्विनि, 'वेरपृक्तस्ये' ति तल्लोपे, हल्ङ्याभ्य इत्यादिना सूत्रेण सुलोपे, 'संयोगान्तस्य लोपः' इति चो लोपे 'क्विन्प्रत्ययस्ये' ति क्विन्नन्तपदान्तस्य नो ङत्वे दध्यङ् इति रूपनिष्पत्तिः।

---

इन्द्रो ज्ञात्वा अन्यस्मै नोपदेष्टव्यमित्यादि अवोचदित्येतावदेव। अत्रापि समनन्तरवंशब्राह्मणतः आथर्वणस्य दधीचोऽश्विभ्यां उपदेष्टेति ज्ञायते—अथापि प्रथममण्डले एतदृग्व्याख्यानावसरे विद्यारण्येन शाट्यायनाद्यनुसारेणेन्द्रस्योपदेष्टृत्वं वर्णितमत्रानुसंधेयम्। त्वाष्ट्रमधुविद्योपदेष्टा इन्द्रः, मधुब्राह्मणोपदेष्टा चाथर्वा इति वा विभज्य वक्तव्यम। **लोभादिति**। इन्द्रेण दधीचि अन्यस्मै नोपदेष्टव्यमित्यादिष्टे सति रहस्यमिदं विदित्वा अश्विनौ लोभात् तत्तो ग्रहीतुमुपगम्य प्रार्थयामासतुः। अयं तु, 'शिरश्छिद्येतेति भीतोऽस्मि। ततो रक्षितुं शक्तिर्वामस्ति चेत्, उपदेक्ष्यामी' त्युवाच। अथ तयोः रक्षणप्रकारमाविष्कृतवतोः, स्वयं प्राक् उपदेक्ष्यामीत्युक्तवता तस्य सत्यस्य परिपालनाय स्वदुःखमपि सोढ्वा कृत उपदेशः इत्येवेतिवृत्तावगमात् अत्र तदनुगुणः पाठः स्यात्। अत एवात्र मन्त्रेऽपि ऋतायन्निति श्रावितम्। वक्ष्यति च, 'तल्लाभाय युवाभ्यां कृत' मिति। अतो न दधीचः कश्चिल्लोभः। तदनुगुणपाठाभावे च दधीच एव किञ्चिद्रूपो लोभोऽन्वेष्टव्यः।

**तदेतदृषिः पश्यन्नवोचत्—**

**तद्वां नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् ।**
**दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्रयदीमुवाचेति ॥१६॥**

---

**तदेतदृषिः पश्यन्नवोचत् ।** **तदेतत्** अश्विनोर्वृत्तं क्रूरकर्मणा विद्याप्राप्तिरूपं योगसाक्षात्कारेण पश्यन् कश्चिदृषिः अश्विनौ प्रति उवाचेत्यर्थः । किमितीत्यत्राह—

**तद्वां नरा** — । हे **नरा** ! 'सुपां सुलुक्' इत्यादिना द्विवचनस्य आडादेशः । हे **नरौ** दिव्यपुरुषौ, हे अश्विनौ! **वां** युवयोः । **सनये** — सनिः = लाभः — लाभाय । मधुविद्यालाभायेति यावत् । तल्लाभाय युवाभ्यां कृतमिति फलितार्थः । **उग्रं** क्रूरं शिरश्छेदन – पुनःप्रतिसन्धानरूपं **दंसः** कर्म – अस्ति सकारान्तोऽयं **दंस**शब्दः – [[1] तत्] **तन्यतुः** पर्जन्यः । **वृष्टिं न** वृष्टिमिव । **न**शब्द इवार्थे । यथा पर्जन्यो वृष्टिं प्रकाशयति, एवं **तत्** पूर्वकाले युवाभ्यां कृतं कर्म **आविष्कृणोमि** प्रकाशयामि । [[2] लोकप्रसिद्धं यथा तथा घोषयामीत्यर्थः ।] किं तदाविष्क्रियत इत्यत्राह **दध्यङ् ह – उवाचेति** । ईंशब्दोऽनर्थको निपातः । **ह**ः प्रसिद्धौ । हे अश्विनौ! **वां** युवयोः दध्यङ् आथर्वणः **अश्वस्य शीर्ष्णा** स्वशिरोव्यतिरिक्तेनाश्वशिरसा **मधु** मधुविद्यां प्रोवाचेति यत्, तत् [[2] ह प्रसिद्धं यथा तथा] आविष्कृणोमीत्यर्थः । [[3]इति स ऋषिः तावभोषयदिति भावः ।] ततश्च एवं महता प्रयत्नेनाश्विभ्यां दधीचो विद्या संगृहीतेयमिति विद्या स्तुता भवति ॥ १६ ॥

1. इदं क. कोशे न । 2,3. इदमधिकं क. कोशे ।

---

**कश्चिदृषिरिति** । वक्ष्यमाणमन्त्रद्रष्टा ऋषिरित्यर्थः ।

**नशब्द इवार्थे** इति । नञ् पुरस्तादुपचारो निषेधार्थः ; उपरिष्टादुपचारस्तु उपमानार्थो वेदे । अत्र च स्वान्वयिनः **तन्यतु**पदादुपरिष्टादुपचरित इति । मन्त्रे **यन्मधु** इत्यत्र यच्छब्दो मधुविशेषणं प्रसिद्ध्यर्थम् । यत् खलु मधु, तदुवाचेत्यन्वयः । **उवाचेतियत्** तदित्यत्र निवेश्यं यत्पदमुपर्यस्त्येव । **इति यत्** तदित्यनेन प्रवचनं न विवक्षितम् । किन्तु अश्विकृतं यत् दधीचः स्वशिरोऽपधानपूर्वकाश्वशिरःप्रतिधानम्, तत् उग्रं कर्म । तच्च **अश्वस्य शीर्ष्णा** इति तद्वाक्यघटकपदद्वयगमितम् । 'इति यत् त'दित्यनुक्त्वा, **यत्** यस्मात् अश्वशिरःप्रतिधानरूपोग्रकर्मरूपात् कारणात् अश्वस्य शीर्ष्णा वां प्रोवाच, तदुग्रं कर्मेत्यन्वयोऽपि सुवचः । उग्रकर्माविष्कारात् न निन्दा । उग्रकरणेनापि लभ्येयमासीदिति विद्याप्रशंसनात् । उग्रत्वं च लोकदृष्ट्या । भिषग्वरिष्ठाभ्यामश्विभ्यां वेदनालेशेनापि विधुरं दधीचोऽनुकूलं कर्मकरणसंभवात् ।

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच ।**
**तदेतदृषिः पश्यन्नवोचत्—**
**आथर्वणायाश्विनौ दधीचेऽश्व्यँ ( श्वियँ ) शिरः प्रत्यैरयतम् ।**
**स वां मधु प्रवोचदृतायन् त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वामिति ॥ १७ ॥**

---

**इदं वै—पश्यन्नवोचत्** । पूर्ववदर्थः । मन्त्रान्तरप्रदर्शनाय अयमारम्भः । तं मन्त्रमेवाह **आथर्वणायाश्विनौ — कक्ष्यं वामिति** । हे अश्विनौ ! **दधीचे आथर्वणाय** दध्यङ्नाम्ने आथर्वणाय **अश्वियं(अश्व्यं) शिरः** अश्वस्य संबन्धि शिरः **प्रत्यैरयतम्** युवां प्रतिसंहितवन्तौ । सः दध्यङ्नामा ऋषिः **वां** युवयोः **ऋतायन्** [ सन् ] उपदेक्ष्यामीति स्वोक्तं वचः ऋतं कुर्वन् = सूनृतं कुर्वन् **त्वाष्ट्रं मधु** — त्वष्टा = यज्ञशिरः । तत्संबन्धि त्वाष्ट्रम् — [1] शिरस्सं[2]धायकत्वसाम्यात् तादृशं मधु—प्रवर्ग्यमिति यावत् । प्रवर्ग्यस्य [ [3] तु ] त्वाष्ट्रशब्दितयज्ञशिरःप्रति-

1. तादृशं शिरस्संधायकत्वसाम्यान्मधु. ख. ग. 2. समाधायक. क. संधायकेनि ख. कोशे शोधितम् । 3. तुशब्दोऽधिकः क. कोशे ।

---

पूर्वमन्त्रे उग्रं कर्म अविशदमुक्तम् ; उपदिष्टं मधु चेदमिति न दर्शितम् । तदुभयवैशद्यार्थं मन्त्रान्तरं पठितुं पुनराह **इदंवै** इति । दध्यङ् अश्विभ्यां प्रवर्ग्यम्, मधुब्राह्मणमिदञ्चोपदिदेश । अश्विभ्यां किमर्थमेतदपेक्षा कृतेति चेत्-अश्विनौ विहायान्ये देवा. यशोमहिमाप्तये यष्टुमारेभिरे । तत्र विष्णुः श्रेष्ठोऽग्रगामी बभूव । स धनुः सज्यं कृत्वा तत्कोटिनिक्षिप्तचिबुकस्तस्थौ । असहमानेषु देवेषु, देवप्रेरितेषु वम्रिषु ज्यामध्यं भक्षितवत्सु, ( इन्द्रो वम्रिरूपेण भक्षयामासेति क्वचिदस्ति ), ज्यात्रोटनात् धनुःकोटावुद्गतायां तद्बलेन विष्णोः शिरः छिन्नमासीत् । पतितं शिर आदित्यो बभूव । विष्णुर्यज्ञः । अतो यज्ञशिर एव छिन्नम् । यज्ञशिरःप्रतिसंधानाभावे च यज्ञलोप इति तदर्थं प्रवर्ग्यकर्म । तत्र अश्विव्यतिरिक्तैरेव यज्ञारम्भात् अश्विनोरेतद्विषये जिज्ञासा आसी-दिति, इन्द्रः तथा शङ्कित्वा शिरश्छेददण्डमाविरकार्षीदिति च वक्तव्यम् । यद्वा आनन्दगिरीये, "भिषजौ वै स्थ. । तत् यज्ञस्य शिरः प्रतिधत्तम्" इति श्रुत्युदाहरणात् देवैः प्रार्थितावश्विनौ स्वयं भैषज्याय दधीचः तद्जिघृक्षतामिति वक्तव्यम् । अत्र दधीचोपदिष्टं द्वयमत्र **मधु त्वाष्ट्रं कक्ष्यमपीत्यनेनोक्तम्**, त्वाष्ट्रं मधु कक्ष्यञ्च मधूपदिष्टमिति । छिन्नं यज्ञशिर आदित्यो बभूवे-त्युक्तत्वात् त्वष्ट्रा आदित्यो यज्ञशिरः, तत्संबन्धि **त्वाष्ट्रम्** । तस्य मधुत्वं मधुब्राह्मणतुल्यत्वात् । द्वयोः साम्यञ्च शिरस्संधायकत्वम् । मधुब्राह्मणं हि अश्विभ्यां सत्यवचनपालनपरेण दधीचोपदिष्टं सत् इन्द्रेणास्वशिरश्छेदनानन्तरं यथावस्थितशिरस्संधानायासीत् । अनुपदेशे स्वशिरसः छिन्नस्य पुनः प्राप्त्यनापत्तेः । प्रवर्ग्यस्य यज्ञशिरस्संधानार्थत्वमर्थवादसिद्धम् । एवं प्रवर्ग्ये मधुत्वोपपादनञ्च मन्त्रे मधुपदेन विशेष्यसमर्पकेणोभयोर्ग्राह्यत्वात् । मधुब्राह्मणे

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच ।**
**तदेतदृषिः पश्यन्नवोचत्—**
**पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः ।**

---

सन्धानार्थत्वात् [1] त्वाष्ट्रत्वम् । [[2] मधुब्राह्मणस्यापि शिरःप्रतिसमाधानार्थतया त्वाष्ट्र-तुल्यतया त्वाष्ट्रत्वमित्यर्थः । ] तत् **प्रवोचत्** प्रोक्तवान् । हे **दस्रौ**! हे अश्विनौ !—'नासत्यावश्विनौ दस्रौ' इत्यमरः—**कक्ष्यं** गोप्यमपि यत् ब्रह्मसंबन्धि मधुब्राह्मणम् , [ तत् ? ] **वां** युवयोः प्रोवाचेत्यर्थः । [[3] ततश्चानेन क्रूरकर्मणा ब्रह्मविद्याप्राप्तिर्युवां (प्राप्तिः वां ?) अयुक्तेत्युपालम्भः । विद्यास्तुत्यर्थत्वं पूर्ववत् ] ॥ १७ ॥

**इदं वै — पश्यन्नवोचत्** । पूर्ववदर्थः । मन्त्रान्तरप्रदर्शनार्थोऽय-मारम्भः । **पुरश्चक्रे द्विपदः — आविशदिति** । [ मधुविद्याप्रतिपाद्यः सर्वा-न्तर्यामी परमात्मा । कुतः ? **सः** परमात्मा ] **द्विपदः पुरश्चक्रे** । **पुरः** पुराणि । पूर्शब्दोऽयं द्वितीयाबहुवचनान्तः । शरीराणीति यावत् । द्विपात्पुराणि देवमनु-ष्यादिशरीराणि **चक्रे** सृष्टवान् । तथा **चतुष्पदः पुरः** चतुष्पात्पुराणि पश्वा-दिशरीराणि च चक्र इत्यर्थः । एवं देवमनुष्यपश्वादिशरीरं सृष्ट्वा **पुरः** पुरस्ता-

1. त्वाष्ट्रम् . ग. 2. वाक्यमिदमधिकं कोशे । 3. वाक्यमिदं न ख्यादिकोशे ।

---

त्वाष्ट्रत्वं तु कथञ्चिदपि नोपपाद्यम् ; मन्त्रे त्वाष्ट्रमिति प्रवर्ग्यमात्रस्य, कक्ष्यमिति मधुब्राह्मणस्य च पृथग्ग्रहणात् । प्रवर्ग्यस्य मधुत्वं भोग्यत्व – भोग्यद्रव्यकत्वादिनापि यद्यपि सुवचम् – अथापि मधुपदेन मधुब्राह्मणस्य वक्तव्यतया स्वाश्रयत्व – स्वाश्रयसदृशत्वान्यतरसंबन्धेन मधुब्राह्मणत्व-विशिष्टमिति मधुपदार्थविवक्षासौकर्यादेवमुक्तम् ।

अनन्तरमन्त्रौ मधुब्राह्मणस्य कक्ष्यत्वं कथमित्येतदुपपादनपरौ । परमात्मन आत्मत्वस्य, अन्येषां तच्छरीरत्वस्य कथनादस्य रहस्यता । एतदुपदेशश्रवणाच्चाश्विनौ, 'वस्तुतो विष्णो-र्व्यापिनोऽन्तर्यामिणः परमपुरुषस्य शिरसो न च्छेदो न वा प्रतिधानं कस्यचित् कृतिपदमस्ति । तत् सर्वमिदं लीलामात्र'मिति तत्त्वं बुद्ध्येयाताम् । एवञ्चसति भैषज्यमपि सुकरं भवतीति । अत्र मन्त्रद्वये प्रथमे परमात्मकर्तृक आवेश उक्तो द्वितीयेन विशदीक्रियते । तथाविशदीकरणाच्च नेदं जीवद्वारकानुप्रवेशमात्रम् , किंतु अन्यान्यरूपमपीति ज्ञापितं भवति ।

**पुरः स पक्षी भूत्वा पुरः पुरुष आविशदिति ।**

**स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो [1]नानेन किंचनानावृतं [2]नानेन किंचनासंवृतम् ॥ १८ ॥**

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच ।**

**तदेतदृषिः पश्यन्नवोचत्—**

1, 2. नैनेन. शां. मा.

---

त्=आदिकाले **सः** परमात्मा **पक्षी भूत्वा**—संसरणहेतुभूतकाम्यविद्याकर्मावृतो भूत्वेत्यर्थः । अत्र काम्यविद्याकर्मणी एव संसरतो जीवस्य पक्षत्वेन रूप्येते । ताभ्यामेव संसरणात् । संसारिजीवशरीरको भूत्वेति यावत् । परमात्मनः अद्वारककर्मसंबन्धाभावात्—**पुरः आविशत्** । सृष्टानि सर्वाणि पुराणि जीवशरीरः परमात्मा प्रविष्ट इत्यर्थः । [ 'अनेन जीवेनात्मनाऽनुप्रविश्ये' ति श्रुत्यन्तरात् । अत एव **पुरुषः** पुरुष उच्यत इत्यर्थः । ] तमिमं मन्त्रं श्रुतिरेव [ स्वयं ] व्याचष्टे — **स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः ।** वैशब्दः प्रसिद्धौ । **सर्वासु पूर्षु** सर्वशरीरेषु वर्तमानः **सोऽयं** मधुब्राह्मणप्रतिपाद्यः,

'पुरसंज्ञे शरीरेऽस्मिन् शयनात् पुरुषो हरिः ।
शकारस्य षकारोऽयं व्यत्ययेन प्रयुज्यते ॥'

इत्युक्तरीत्या **पुरिशयः** सर्वशरिरान्तर्वर्तीति । [ तस्मात् ] पुरिशयनाद्धेतोः पुरुष इत्यर्थः । तामेव सर्वान्तर्यामित्वरूपां सर्वव्याप्तिं व्यतिरेकमुखेन द्रढयति । **नानेन किंचनानावृतं नानेन किंचनासंवृतम्** । अनावृतं बहिरनावृतमित्यर्थः । असंवृतं अन्तरसंवृतमित्यर्थः । अन्तर्बहिश्चानेन परमात्मना अव्याप्तं **किंचन** किमपि वस्तु नास्तीत्यर्थः । अतोऽस्य पुरुषशब्दवाच्यत्वमिति मन्त्रार्थ इत्यर्थः ॥ १८ ॥

**इदं वै — अवोचत्** । पूर्ववदर्थः । मन्त्रान्तरप्रदर्शनार्थोऽयमारम्भः ।

---

**पक्षीभूत्वेति** । 'द्वा सुपर्णा' इति जीवेश्वरयोः पक्षित्वं प्रसिद्धम् । विज्ञानमयादन्तर आनन्दमयस्त्र पक्षीव दर्शितस्तैत्तिरीये; पुच्छनिर्देशात् । जीवे पक्षं वहतो वत्सलस्यास्य पक्षित्वं युज्यतेऽपि । अथापि व्यापिनोऽस्य कथमावेश इत्याशङ्कायां तत्परिहारोपयुक्तमुत्तरत्रानुक्तं **पक्षीभूत्वेत्यत्र** विवक्षितम् । तथाच व्यापिनोऽपि, 'अनेन जीवेनात्मने' तिवत् जीवद्वारकानुप्रवेशो युज्यत इत्युक्तं भवति । अत एवायं पुरुषः पुरिशयत्वात् । पुरीत्येकत्वमविवक्षितम् । तदुच्यते **सर्वासुपूर्ष्विति** । स्वरूपतो नानुप्रवेशः व्यापित्वादित्याह **नानेनेत्यादिना** ।

**रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय।**
**इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयश्शता दशेति ।**

---

तमेव मन्त्रमाह **रूपं रूपं प्रतिरूपो बभूव**। रूप्यत इति **रूपं** दृश्यं वस्तु। वीप्सायां द्वि[1]र्वचनम्। प्रतिवस्त्विति यावत्। **प्रतिरूपः** सदृशरूप इत्यर्थः। तत्तद्रूपशब्दित-वस्तुसदृशतयाऽन्तर्यामितया परिपूर्णोऽवस्थित इति यावत्। [**बभूवेति**। सर्वदा परिपूर्ण एवेत्यर्थः।] यद्वा प्रतिरूपं (**प्रतिरूपः ?**) प्रतिष्ठितं रूपं [2]यस्य स तथोक्तः। सर्वान्तर्यामीति फलितोऽर्थः। **तदस्य रूपं प्रतिचक्षणाय**। चक्षिङो भावे ल्युट्। प्रतिचक्षणं = व्यवहारः। प्रतिचक्षणाय = व्यवहाराय। तदिति श्रवणात् यदिति शेषः। यत् व्यवहाराय—यत् व्यवहर्तव्यमिति यावत्—तत् सर्वमस्य मधुब्राह्मण-वेद्यस्य परमात्मनो रूपं शरीरमित्यर्थः। यद्वा तत् तस्मादिति वा (?) अर्थः। तथा च यस्मादयं प्रतिरूपो बभूव, तस्मादेव सर्वं व्यवहार्यं वस्तु तच्छरीर-मित्यर्थः। ननु शरीरसंबन्धस्य कर्माधीनत्वात् तत्कर्मानारब्धस्य व्यवह्रियमाणप्रप-ञ्चस्य कथं तद्रूपत्वम्? तस्य कर्माभावादित्याशङ्क्याह **इन्द्रो मायाभिः पुरुरूप ईयते**। **इन्द्रः** परमेश्वरः। 'इदि परमैश्वर्ये' इति हि धातुः। 'माया वयुनं ज्ञान'मिति नैघण्टुकाः। **मायाभिः** सङ्कल्परूपज्ञानैः—विचित्राश्चर्यकारित्वात् ज्ञानरूपत्वाच्च मायाशब्दितत्वं संकल्पस्योपपद्यते—**पुरुरूपः** बहुशरीरः—स

1. द्वित्वम्. ख. ग. 2. अस्य तथोक्तः. ख. ग.

---

**रूपंरूप**मित्यत्र 'प्रति' इति पदमध्याहार्यम्। प्रतिरूप इत्यस्य सदृशरूपइत्यर्थवर्णनेन, 'स एष इह प्रविष्ट आनखाग्रेभ्यः' इत्युक्तरीत्या तत्तद्वस्तुसंस्थानसमानाकारधर्मभूतज्ञानपरिणामः सन् तत्तद्वस्तुसंबद्धः प्रविष्ट इत्युच्यत इत्युक्तं भवति। ईदृशपरिणामवशाच्च सर्ववस्तुशरीरित्व-सिद्धिरिति। तदिदं **छान्दोग्यपरिष्कारे** विशदमावेदयाम। **प्रतिशब्दस्य** सदृशेत्यर्थादरणे-नार्थमुक्त्वा तस्य यावद्वस्तुसत्तं स्थिरत्वसिद्धये प्रतिष्ठितेत्यर्थमादृत्याप्याह यद्वेति। **प्रतिरूपं प्रतिष्ठित** मिति। रूपे रूपे प्रतिष्ठितमित्यर्थः। प्रतिरूप इति चेत् पाठः, तदा प्रतीकधारणं स्यात्। **तदस्यरूपंप्रतिचक्षणाये**त्यस्य **प्रतिरूप** इत्यत्र **रूप**शब्देन विवक्षितं यत् रूपम्, तत् **रूपमस्य** परमात्मनः तत्तद्वस्तुवाचकशब्दैः **प्रतिचक्षणाय** व्यवहाराय भवति इति व्याख्यानेपि एवं धर्मभूतज्ञानपरिणामेन सर्ववस्तुव्यापनात् सर्ववस्तुवाचकवाच्यो भवतीति विवक्षितार्थ-लाभो बोध्यः। उक्तविधधर्मभूतज्ञानसंस्थानात्मकं यत् रूपम्, यच्च व्यूहविभवहार्दार्चारूपमनेक

**अयं वै हरयोऽयं वै दश च शतानि सहस्राणि बहूनि चानन्तानि**

---

परमेश्वरः। स्वसङ्कल्परूपज्ञानेनैव बहुशरीरो भवति, न कर्मापेक्षया — **ईयते** तादृशबहुशरीरस्सन् वर्तत इत्यर्थः । स्वेच्छागृहीतानन्तदेह इति यावत्। ननु **रूपं रूपं प्रतिरूपो बभूवे**त्येतदयुक्तम्। अनन्तेषु ब्रह्मादिस्तम्बपर्यन्तेषु रूपेषु एकस्य परमात्मनः तत्तदन्तर्वर्तितयाऽवस्थानासंभवादित्याशङ्कयाह **युक्ता ह्यस्य हरयश्शता दशेति**। शता शतानीत्यर्थः। 'सुपां सुलु' गित्यादिना आकारादेशः। **अस्य** अनन्तप्रपञ्चस्य **युक्ताः** योग्या इत्यर्थः। तदनुरूपसंख्याशालिन इति यावत्। **शतानि दश हरयः**। शतानि दश=अनन्ता इति यावत्। अनन्ता हरयः। अन्तर्यामिविग्रहानन्त्यादनन्ता **हरय** इत्युक्तमिति द्रष्टव्यम्। सर्वत्र मन्त्रसमाप्ताविति शब्दः।

अमुं मन्त्रं श्रुतिः स्वयमेव व्याकरोति। **अयं वै—अनन्तानि च**। वैशब्दोऽवधारणे। अयमेक एव हरिः दश शतानि च सहस्राणि बहूनि च **हरयो** भवति। अतोऽयमेव अनन्तानि **हरयो** भवति। एवं प्रत्येकं स्वरूपेणापि पर्याप्त्या सर्वशरीरित्वमुपपद्यत इति **च**शब्दार्थः। विचित्रशक्तेः परमात्मनः काऽनुपपत्तिरिति भावः।

अत्र पूर्वमन्त्रे जीवद्वारकसर्वानुप्रवेशेन पुरुषत्वमुपपादितम्। द्वितीयेन तु विग्रहद्वारकानुप्रवेशेन साक्षाद्व्याप्त्या च पुरुषत्वोपपादनमिति भेदः। आभ्यां मन्त्राभ्यां वेद्यभूतपरमात्ममहिमप्रशंसाद्वारा मधुविद्या स्तुता भवति। एतादृशमहिमशालिपरमात्मविषयत्वादेवेयं मधुविद्या पूर्वोक्तरीत्या अश्विभ्यामतिश्रमेणाप्यार्जितेति तन्माहात्म्यवेदिनावृषी ऊचतुरिति फलितार्थः॥

---

त्रिधम्, सर्वं केवलतत्संकल्पवैचित्र्यादित्युच्यते **इन्द्रो मायाभिः पुरुरूप ईयत** इति। एवमनेकावतारपरिग्रहात् एक एव हरिरनन्ता हरय इति। **अस्यहरयः** इति निर्देशो हरिशब्देन विग्रहमात्रविवक्षया। विशिष्टविवक्षायां तु सामानाधिकरण्यम्। अतोऽर्थान्तरं न ग्राह्यमिति प्रतिबोधनाय श्रुतिरेव मन्त्रं व्याख्याति **अयं वै हरय** इति। हरिशब्दस्येन्द्रियाद्यर्थविवक्षा अप्रसिद्धत्वादसंगतत्वाच्चोपेक्ष्या। **शतादशे**ति चानन्त्यपरमिति भावः। तदेवं मधुब्राह्मणेन परमात्मसंबन्धि सर्वं रहस्यमुद्घाटितमिति सर्वसारभूतमिदं विश्वभेषजमुपनिषन्मधु; यस्य ग्रहणार्थमुपसन्नाभ्यामश्विभ्यामाचार्यो दध्यङ् अन्यदीयशिरःप्रतिधाने प्राप्ते अन्यत् सर्वमुपेक्ष्य हयशिरः—प्रतिधानेन साक्षाद्भगवान् लक्ष्मीहयग्रीवो भावितः। तद् युज्यते तयोरश्विनोरश्वित्वमपि।

**च । तदेतत् ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम् ॥**

इति चतुर्थाध्याये पञ्चमं ब्राह्मणम् ॥

---

४—६.

**अथ वँशः — पौतिमाष्यो गौपवनात्, गौपवनः पौतिमाष्यात्, पौतिमाष्यो गौपवनात्, गौपवनः कौशिकात्, कौशिकः कौण्डिन्यात्,**

---

एवमियता प्रबन्धेन निर्दिष्टं ब्रह्मेत्युपसंहरति । **तदेतद् ब्रह्म** । ब्रह्मशब्दितत्रिविधपरिच्छेदराहित्यमुपपादयति **अपूर्वम्** — । **अपूर्वमनपरं** पूर्वोत्तरकालशून्यम् । कालापरिच्छिन्नमित्यर्थः । कालपरिच्छिन्नस्य हि पूर्वोत्तरकालसंभव इति भावः । **अनन्तरमबाह्यम्** । देशपरिच्छेदशून्यमित्यर्थः । देशपरिच्छिन्नस्य हि बाह्याभ्यन्तरव्यवहारार्हत्वमिति भावः । अथ सर्वोत्कृष्टत्वलक्षणं वस्तुपरिच्छेदाभावमुपपादयति **अयमात्मा** । सर्वनियन्तृतया सर्वोत्कृष्ट [त्व] मित्यर्थः । यद्वा सर्वात्मत्वादेव इदमिदं नेति निर्देशानर्हत्वलक्षणवस्त्वपरिच्छेदोऽत्र विवक्षितो द्रष्टव्यः । **अयं** मधुविद्याविषय इत्यर्थः । **ब्रह्म** । एवं त्रिविधपरिच्छेदशून्यतया ब्रह्मशब्दवाच्य इति भावः । **सर्वानुभूः** सर्वज्ञः । इदं जगत्कारणत्वनियन्तृत्वाक्षिप्तसर्वशक्तित्वादिगुणानामप्युपलक्षणम् । अत्र सर्वम् **अनुभवति** सर्वदा सर्वथा साक्षात्करोतीति व्युत्पत्तिर्द्रष्टव्या । **इत्यनुशासनम्** । **अनुशासनम्** = उपदेशः **इति** पर्याप्त इत्यर्थः । ४—५.

अज्ञातसंप्रदायाया विद्याया अभ्युदयफलकत्वाभावेनानादरणीयत्वात्, 'आचार्यवंशो ज्ञेयः' इति श्रवणाच्च विद्याप्रवर्तकाचार्यपरम्परामुपदिशति **अथ वंशः** । **वंशः** शिष्याचार्यपरंपराक्रमः । कीर्त्यत इति शेषः । सर्वत्र प्रथमान्तैः शिष्यनिर्देशः; पञ्चम्यन्तैराचार्यनिर्देशः । **पौतिमाष्यो गौपवनात्** पौतिमाष्यः शिष्य आचार्याद्गौपवनात् । प्राप्तविद्यो बभूवेति शेषः । एवमुत्तरत्रापि द्रष्टव्यम् ।

---

दधीच आथर्वणात् अश्विभ्यां गृहीतं मधु पश्चात् यया परम्परया प्राप्तप्रचारम्, प्राक् च या परम्परा, तद्बुबोधयिषया ऽस्मिन् ब्रह्मोपदेशे आदरं वहन्ती श्रुतिः तद्वंशं दर्शयति **अथ वंश** इति । अयं वंशः द्वितीयमैत्रेयीब्राह्मणानन्तरमपि पुनः पठ्यते ।

कौण्डिन्यश्शाण्डिल्यात्, शाण्डिल्यः कौशिकाच्च गौतमाच्च, गौतमः (१) आग्निवेश्यात्, आग्निवेश्यः शाण्डिल्याच्च आनभिम्लाताच्च, आनभिम्लात आनभिम्लातात्, आनभिम्लात आनभिम्लातात्, आनभिम्लातो गौतमात्, गौतमः सैतवप्राचीनयोग्याभ्याम्, सैतवप्राचीनयोग्यौ पाराशर्यात्, पाराशर्यो भारद्वाजात्, भारद्वाजो भारद्वाजाच्च गौतमाच्च, गौतमो भारद्वाजात्, भारद्वाजः पाराशर्यात्, पराशर्यो बैजवापायनात्, बैजवापायनः कौशिकायनेः, कौशिकायनिः (२)

घृतकौशिकात्, घृतकौशिकः पाराशर्यायणात्, पाराशर्यायणः पाराशर्यात्, पाराशर्यो जातूकर्ण्यात्, जातूकर्ण्य आसुरायणाच्च यास्काच्च, आसुरायणस्त्रैवणेः, त्रैवणिरौपजन्धनेः, औपजन्धनिरासुरेः, आसुरिर्भारद्वाजात्, भारद्वाज आत्रेयात्, आत्रेयो माण्टेः, माण्टिर्गौतमात्, गौतमो वात्स्यात्, वात्स्यः शाण्डिल्यात्, शाण्डिल्यः कैशोर्यात् काप्यात्, कैशोर्यः काप्यः कुमारहारितात्, कुमारहारितो गालवात्, गालवो विदर्भीकौण्डिन्यात्, विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवात्, वत्सनपाद्बाभ्रवः पथः सौभरात्, पन्थाः सौभरोऽयास्यादाङ्गिरसात्, अयास्य आङ्गिरस आभूतेस्त्वाष्ट्रात्, आभूतिस्त्वाष्ट्रो विश्वरूपात् त्वाष्ट्रात्, विश्वरूपस्त्वाष्ट्रोऽश्विभ्याम्, अश्विनौ दधीच आथर्वणात्, दध्यङ्ङाथर्वणोऽथर्वणो दैवात्, अथर्वा दैवो मृत्योः प्राध्वँसनात्, मृत्युः प्राध्वँसनः प्रध्वँसनात्, प्रध्वँसन एकर्षेः, एकर्षिर्विप्रचित्तेः, विप्रचित्तिर्व्यष्टेः, व्यष्टिः सनारोः, सनारुः सनातनात्, सनातनः सनकात्, सनकः [1]परमेष्ठिनः, परमेष्ठी ब्रह्मणः। ब्रह्म

1. परमेष्ठी विराट् इति शाङ्करव्याख्या। माध्वे तत्खण्डनादि।

---

शाण्डिल्यः कौशिकाच्च गौतमाच्च। तस्य शाण्डिल्यस्य आचार्यद्वयं कौशिको गौतमश्चेति भावः। एवमुत्तरत्रापि पञ्चम्यन्तद्वयस्थले द्रष्टव्यम्॥ १, २॥

परमेष्ठी ब्रह्मणः ब्रह्म स्वयम्भु। पूर्वोक्तः सनकगुरुः परमेष्ठी चतुर्मुखः ब्रह्मणः परब्रह्मणः सर्वेश्वरात् नारायणात् प्राप्तविद्यो बभूवेत्यर्थः। तच्च ब्रह्म

**स्वयम्भु । ब्रह्मणे नमः ॥ ३ ॥**

इति चतुर्थाध्याये षष्ठं ब्राह्मणम् ॥

## अथ पञ्चमोऽध्यायः ॥

### ५—१.

**जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे । तत्र ह कुरुपाञ्चालानां ब्राह्मणा अभिसमेता बभूवुः । तस्य ह जनकस्य**

---

नारायणः **स्वयम्भु** स्वयमेव भवतीति स्वयंभु उपदेशमन्तरेण विद्याप्रवर्तकं[1] भवतीत्यर्थः ।

**ब्रह्मणे नमः**। सर्वगुरवे ब्रह्मणे नारायणाय नम इत्यर्थः ॥ ३ ॥ ४–६.

इति बृहदारण्यकोपनिषदि चतुर्थाध्यायभाष्यम् ।

---

अथ मधुकाण्डसिद्धमेव सर्वान्तर्यामित्वं मुखान्तरेणास्मिन्नध्याये दृढीक्रियते। तत्र पुष्कलधनदानं बहुविद्वत्समवायश्च विद्यार्जनोपाय इति प्रदर्शनाय आख्यायिकाऽऽरभ्यते – **जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे** । **ह** इति वृत्तार्थस्मरणे। **वैदेहः** विदेहदेशाधिपतिः जनकः बहुदक्षिणेन यज्ञेन **ईजे** इष्टवान्। **ईजे**। 'असंयोगाल्लिट् कित्' इति कित्त्वात् संप्रसारणम्। **तत्र ह— बभूवुः**। **तत्र** तस्मिन् यज्ञे ह बहुदक्षिणतया प्रसिद्धे विद्वद्भूयिष्ठकुरुपाञ्चालदेशेभ्यः ब्राह्मणा **अभिसमेताः** समागताः। एवं बहुषु ब्राह्मणेष्वागतेषु तस्य ह

1. स्वयम्भुः – विद्याप्रवर्तकः. क.

---

**स्वयम्भु** अन्याधीनोत्पत्तिकत्वाभावात् अन्याधीनज्ञप्तिरूपसत्ताकत्वमपि न तस्य; किन्तु नित्यं नित्यसर्वज्ञश्च तदिति ॥

---

अनूचानेष्वनन्तेष्वपि कश्चिदेव विपश्चित्तमो भवतीति ब्रह्मज्ञानदौर्लभ्यात् तत्राऽऽदरः कार्य इति गमयितुं जनकसभावृत्तमाख्याय तन्मुखेन सर्वान्तर्यामिब्रह्मविषयविद्याविशेषा उच्यन्ते तृतीयेऽध्याये। **जनको ह** नि। सर्वत्र हेति प्रसिद्धौ। ऐतिह्ये इति यावत्। **विजिज्ञासा बभूवेति**। जिज्ञासेयं स्वयमुत्तमगुरुसमाश्रयणाय स्यात्; तादृशे गोदानविशेषेण यज्ञसाद्गुण्याय वा। **दश दश पादा** इति। एकैकं पाददशकमाभरणरूपेण आबद्धम्।

**वैदेहस्य विजिज्ञासा बभूव, कःस्विदेषां ब्राह्मणानामनूचानतम इति। स ह गवाँ सहस्रमवरुरोध। दश दश पादा एकैकस्याः शृङ्गयोराबद्धा बभूवुः ॥ (१)**

**तान् होवाच, ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स एता गा उदजतामिति। ते ह ब्राह्मणा न दधृषुः।**

---

प्रसिद्धं यष्टुं प्रवृत्तस्य जनकस्य वैदेहस्य **विजिज्ञासा** विचारः बभूव। किमिति। **कः स्विदेषां ब्राह्मणानामनूचानतम इति**। एषामागतानां ब्राह्मणानां मध्ये — स्विदिति वितर्के — **कः स्वित्** को वा **अनूचानतमः** अतिशयेन ब्रह्मविद्यानुवचनकुशलः। इति जिज्ञासा बभूवेति पूर्वत्रान्वयः। **स ह गवां सहस्रमवरुरोध**। **सः** जनकः तज्जिज्ञासया ह प्रसिद्धं यथा तथा स्वगोष्ठे गवां **सहस्रमवरुरोध** यूथीचकार। किञ्च **दशदश पादाः — आबद्धा बभूवुः**। **पादः** पलस्य चतुर्थांशः। 'पादस्तुरीयो भागः स्या' दित्युक्तेः। सुवर्णस्य दशदश पादाः — सार्धपलद्वयमिति यावत् — प्रत्येकमेकैकस्या गोः शृङ्गयोर्निबद्धा बभूवुरित्यर्थः ॥ १ ॥

(तान् होवाच) स जनक एवं ब्रह्मिष्ठतम(?) तया निर्धारिताथ देया इति ता गाः सदक्षिणाकाः निरुध्य, तमर्थं ह प्रसिद्धं **तान्** ब्राह्मणान् प्रति उवाच। किमिति। **ब्राह्मणाः — उदजतामिति**। हे **भगवन्तः** पूजावन्तः! हे ब्राह्मणाः। **वः** भवतां मध्ये **यो ब्रह्मिष्ठः** अतिशयेन यो ब्रह्मवित्, स एताः गाः **उदजतां** स्वगृहं प्रति काल्यतु = नयतु इत्युवाचेत्यन्वयः। 'अज गतिक्षेपणयो' रिति हि धातुः। **ते ह ब्राह्मणा न दधृषुः**। एवं वदत्यपि जनके ते ब्राह्मणा **न दधृषुः** न धृष्टा बभूवुः। 'आधृषाद्वे' ति णिजभावे रूपम्। तेषु ब्राह्मणेषु बहुषु मध्ये न कोऽपि ता गाः नेतुं दध्रे। हेत्याश्चर्ये।

---

उदजतामिति। अजधातुः स्वरसतः परस्मैपदी। आत्मनेपदग्रहणं क्रियाफलं कर्तुरभिप्रेत्य। तेन गवामुदजनकर्तृस्वत्वं व्यज्यते। उपरि, 'उदज सामश्रवाः' इति परस्मैपदं ब्रह्मचारिगामित्वाभावादुदजनफलस्य। गुर्वर्थमेव तेनोदजनात्। अत एव तत्कृतमप्युदजनमेतदर्थत्वात् एतत्कृतमेव मन्तव्यमिति ज्ञापनाय स्वमेवेति ब्रह्मचारिविशेषणम्। अतएवोपरिष्टात्, 'ब्रह्मगवीरुदजसे' इति गौतमः।

**अथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाचैतास्सोम्योदज सामश्रवा ३ इति। ता होदकालयत् (होदाचकार)। ते ह ब्राह्मणाश्चुक्रुधुः (चुक्रुशुः), कथं नो ब्रह्मिष्ठो ब्रवीतेति।**

**अथ ह—जनकस्य वैदेहस्य होताऽश्वलो बभूव—स हैनं पप्रच्छ, त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ इति।**

---

**अथ ह याज्ञवल्क्यः—उवाच।** अथैवमधृष्टांस्तान् दृष्ट्वाऽपि याज्ञवल्क्यः **स्वमेव ब्रह्मचारिणं** स्वशिष्यमित्थमुवाचैवेत्यर्थः। **ह**ेत्याश्चर्ये। किमिति। **एताः सोम्योदज सामश्रवा ३ इति।** साम शृणोतीति **सामश्रवाः**। हे **सोम्य** सोमार्ह! हे सामश्रवः! **एताः** गाः अस्मद्गृहान् प्रति **उदज** कालयेति स्वशिष्यमुवाचेत्यर्थः। **ता होदकालयत्**। स सामश्रवाः ताः तद्गृहान् अनयदित्यर्थः। **उदाचकार**ेति पाठेऽपि स एवार्थः। **ते ह ब्राह्मणाश्चुक्रुधुः। कथं नो ब्रह्मिष्ठो ब्रवीतेति।** याज्ञवल्क्येन ब्रह्मिष्ठपणस्वीकरेण आत्मनो ब्रह्मिष्ठता प्रतिज्ञातेति सर्वे क्रुद्धा बभूवुः। कथं नः=अस्मान् अनादृत्य 'अहं ब्रह्मिष्ठः' इति वदेदयं याज्ञवल्क्य इति चुक्रुशुश्चेत्यर्थः। चुक्रुशुरिति पाठेऽपि उक्त एवार्थः। **अथ ह — बभूव। अथ** तदा – विदेहराजस्य जनकस्य होता ऋत्विगश्वलो नामाऽऽसीदित्यर्थः। **स हैनं —ब्रह्मिष्ठोसी ३ इति। नः** समवेतानां बहूनां अस्माकं मध्ये हे याज्ञवल्क्य! त्वमेव खलु प्रसिद्धं ब्रह्मिष्ठोऽसीति अश्वलनामा स होता पप्रच्छेत्यर्थः। **असी ३** इति भर्त्सने प्लुतिः। **नु**रवधारणे।

---

**कथं नो ब्रह्मिष्ठो ब्रवीते**ति क्रोशरूपेण परिणतः क्रोध इत्याशयेन चुक्रुशुश्चेत्युक्तम्। **ब्रह्मिष्ठ** इत्यस्य कर्मब्रह्मात्मकसर्ववेदार्थवित्तम इत्यर्थः; अनूचानतम इति प्रागुक्तेः; उपरि सर्वविषयप्रश्नप्रत्युत्तरदर्शनाच्च। **अस्माननादृत्ये**ति। **नः** इत्यनादरे षष्ठीति न भाष्यार्थ.; 'षष्ठी चानादरे' इति सूत्रे, 'यस्य च भावेन भावलक्षणम्' इत्यनुवृत्तेः। सतामिति पदाध्याहरे च गौरवात्। **त्वं नुखलुनोब्रह्मिष्ठ** इत्युपरितनवाक्य इव अस्माकं मध्ये ब्रह्मिष्ठ इत्येव त्वर्थः। एवञ्च **अस्मान् अनादृत्ये**त्यादेः तात्पर्यार्थत्वात् प्रकृतवाक्यार्थस्तावत्—अस्माकं मध्ये कथमयं ब्रह्मिष्ठः? तथा चेत्, **ब्रवीत** वदतु अहं ब्रह्मिष्ठ इति। अथ वदेत्, तर्हि **ब्रवीत**=यत् यत् पृच्छेम, तत्र तत्रोत्तरं ब्रवीत्। अन्यथा कथं ब्रह्मिष्ठ इति चुक्रुशुरिति। अथेत्यस्य **पप्रच्छे**त्यत्रान्वयः। मध्ये वाक्यमेतच्छेषभूतम्।

**स होवाच नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयँ स्म इति । तँ ह तत एव प्रष्टुं दध्रे होताऽश्वलः ॥ २ ॥**

**याज्ञवल्क्येति होवाच, यदिदं सर्वं मृत्युनाप्तँ सर्वं मृत्युनाऽभिपन्नम्, केन यजमानो मृत्योराप्तिमतिमुच्यत इति ।**

---

**स होवाच** । सः याज्ञवल्क्यः तमश्वलं ह प्रसिद्धं प्रत्युवाचेत्यर्थः । किमितीत्यत्राह **नमो वयं — वयँ स्म इति** । वयं ब्रह्मिष्ठाय नमः कुर्मः । नास्माभिर्ब्रह्मिष्ठत्वाभिमानाद्गावो नीताः; किन्तु गोकामा वयमित्यतो गोकामनयैव नीता इति सोपहासमुक्तवानित्यर्थः । **तं ह तत एव प्रष्टुं दध्रे होताऽश्वलः** । एवमुपहसितो होताऽश्वलः **तत एव** सोपहासवचनादेव क्रुद्धस्सन् **तं** याज्ञवल्क्यं पराजेतुं प्रश्नं प्रष्टुमवस्थितो बभूवेत्यर्थः । 'धृङ् अवस्थाने' इति हि धातुः ॥ २ ॥

**याज्ञवल्क्येति होवाच** । प्रथमं याज्ञवल्क्येति संबोध्य वक्ष्यमाणं प्रश्नमश्वल उवाचेत्यर्थः । तमेव प्रश्नमाह **यदिदं सर्वं — अभिपन्नम्** । **यदिदं** प्रत्यक्षादिप्रसिद्धं जगत् चेतनाचेतनात्मकं **मृत्युना** मृत्युशब्दोपलक्षितेन जन्मजरामरणधर्मेण **आप्तं** व्याप्तम्, न केवलं व्याप्तम्, किन्तु मृत्युनाऽ**भिपन्नं** वशीकृतञ्चे[त्येतत्सिद्धमि]त्यर्थः । यद्वा आप्तमित्यस्य विवरणम**भिपन्न**मिति । इति प्रश्नोपयुक्तं सिद्धमर्थमनूद्य विवक्षितं प्रश्नमाह **केन यजमानो मृत्योराप्तिमतिमुच्यत इति** । एवं सति **यजमानः** ब्रह्मविद्यार्थं कर्म कुर्वन्नधिकारी केनानुष्ठि-

---

नमो वयमित्यादि सविनयावहित्थम् । अस्यायं भावः—अभिसमेतेषु ब्राह्मणेषु अभिज्ञतमान् प्रष्टुमनभिज्ञाः न प्रगल्भन्ते । अनभियुक्ताश्च न ब्रह्मिष्ठा भवितुमर्हन्ति । तदत्र कस्य चिद् ब्रह्मिष्ठत्वं दुर्निर्धारम् । मा भून्निर्धारणमिति चेत्—इष्येत तावदिदम्, यदि गावो न काम्येरन् । तत् अन्येषामुत्कटगोकामनाऽभावेन जोषम्भावेऽपि वयं तत्कामा एवमुत्कालयामः । गोकामा एव वयं ताः त्यक्तुमनिच्छन्तो यथाशक्ति पृथग्युत्तरयितुश्च प्रयतेमहि । अथ भवद्भिरेव ब्रह्मिष्ठत्वेऽनुगृहीते फलेग्रहिरस्मत्प्रयत्न इति ।

अश्वलस्य राजाश्रयत्वात् धैर्येण प्रथमं प्रश्नः । ब्रह्मिष्ठतापरीक्षणाय प्रवृत्तस्य स्वस्य हौतृत्वात् होत्रनुबन्धिनं विशेषं पूर्वं पृच्छति यदिदं सर्वमिति ।

**होत्रर्त्विजाऽग्निना वाचा। वाग्वै यज्ञस्य होता। तद्येयं वाक् सोऽयमग्निः, स होता, स मुक्तिः, साऽतिमुक्तिः ॥ ३ ॥**

---

तेन साधनेन मृत्योराप्तिं व्याप्तिं संसारबन्धमतिक्रम्य क्षिप्रं विद्यासिद्ध्या मुच्यत इत्यर्थः। तमेतं प्रश्नं याज्ञवल्क्यः प्रतिवक्ति–**होत्रर्त्विजाऽग्निना वाचा**। तदर्थमूढं तमश्वलं प्रति पुनः स्वयमेव तदेतद्व्याचष्टे **वाग्वै यज्ञस्य होता — सातिमुक्तिः**। कर्माङ्गभूते होतरि अग्न्यभिन्नत्वेन वा अग्न्यधिष्ठितत्वेन वा ध्यातायां वाचो दृष्टौ कृतायां कर्मणो वीर्यवत्तरतया ब्रह्मोपासनद्वारा जीवद्दशायामेव विश्लिष्टाश्लिष्टपूर्वोत्तरदुरितभरत्वलक्षणा मुक्तिर्भवति, शरीरवियोगानन्तरं प्रकृत्यतिक्रान्तपदाधिरोहणलक्षणा अतिमुक्तिर्भवतीत्यर्थः। क्रमादुद्देश्यविधेयाभिप्रायः **स मुक्तिस्सातिमुक्तिरिति** लिङ्गभेदेनायं निर्देशो द्रष्टव्यः। **वाग्वै यज्ञस्य होता**। यज्ञाङ्गभूतहोतरि वाग्दृष्टिः कर्तव्येत्यर्थः। **तद्येयं वाक्**। या होतर्यध्यस्यमाना वागित्यर्थः। **सोऽयमग्निस्स होता**। सा वागेवाग्न्यधिष्ठितत्वादिना अग्न्यभेदेन ध्याता होतर्यध्यस्यमाना मुक्त्यादिसाधनमित्यर्थः। **स मुक्तिस्साऽतिमुक्तिरिति** कारणे कार्योपचारः ॥ ३ ॥

---

**संसारबन्धमतिक्रम्य क्षिप्रं विद्यासिद्ध्येति**। विद्यासिद्धेः प्राक् बन्धातिक्रमायोगात् अनुष्ठितेन साधनेन क्षिप्रं विद्यासिद्ध्या संसारबन्धमतिक्रम्येत्यन्वय एव तात्पर्यम्। यद्वा संसारातिक्रमः विश्लिष्टाश्लिष्टपूर्वोत्तरदुरितभरता। क्षिप्रं विद्यासिद्धिर्नाम पूर्वोत्पन्नविद्यायाः क्षिप्रपूर्तिः। मृत्युशब्देन, 'अविद्यया मृत्युं तीर्त्वे'त्यत्रेव विद्याप्रतिबन्धककर्ममात्रग्रहणे **मृत्यु–मतिक्रम्येत्यस्य** विद्यासिद्ध्येति विवरणं स्यात्। परन्त्वत्र अकालकाल्यस्थानप्राप्तेरुपरि वर्णनात मृत्युपदेन यथास्वरसं संसारमण्डलग्रहणमेव युक्तम्। केनेति पृष्टं नोपासनम्; **केन यजमान** इति यजमानपदप्रयोगेण यागानुबन्धिन एव पृष्टत्वावगमात्। अतः, 'भवतैव मुच्यत' इति प्रत्युत्तरयति **होत्रेति**। मृत्योरतिक्रमः, अहोरात्रातिक्रमः, पूर्वोत्तरपक्षातिक्रमश्चाभिन्ना एव। अथापि मुखभेदेन तदुक्तिः। अहोरात्र–पूर्वापरपक्षातिक्रमोक्त्या अकालकाल्या स्थितिरुच्यते। तत्र माससंवत्सरादिरूपस्य सौरमानरीत्या अहोरात्रगणनया, चान्द्रमानरीत्या चन्द्रकलारूपतिथ्यात्मकपूर्वोत्तरपक्षगणनया वा ग्राह्यत्वात् आदित्यस्याहोरात्रहेतुत्वात् चन्द्रस्य तिथिप्रयोजकत्वाच्च तद्भेदेन अहोरात्रपूर्वोत्तरपक्षरूपमुखभेदेन द्वेधा कथनम्। **स मुक्तिः सातिमुक्तिरित्यत्र** सा इत्यनेन मुक्तिरपि ग्रहीतुं शक्यते; मुक्तिरतिमुक्तिः = मुक्त्या अतिमुक्तिर्भवतीत्यर्थ इति। अथापि प्रकृतपूर्वतच्छब्दार्थग्रहणमेव युक्तमिति **क्रमादुद्देश्यविधेयाभिप्राय इत्युक्तम्**।

याज्ञवल्क्येति होवाच, यदिदँ सर्वमहोरात्राभ्यामाप्तँ सर्वमहोरात्राभ्यामभिपन्नम्, केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यत इति। अध्वर्युणर्त्विजा चक्षुषाऽऽदित्येन। चक्षुर्वै यज्ञस्याध्वर्युः। तद्यदिदं चक्षुः सोऽसावादित्यः, सोऽध्वर्युः, स मुक्तिः, साऽतिमुक्तिः ॥ ४ ॥

याज्ञवल्क्येति होवाच यदिदं सर्वं पूर्वपक्षापरपक्षाभ्यामाप्तँ सर्वं पूर्वपक्षापरपक्षाभ्यामभिपन्नम्, केन यजमानः पूर्वपक्षापरपक्षयोराप्तिमतिमुच्यत इति। उद्गात्रर्त्विजा वायुना प्राणेन। प्राणो वै यज्ञस्योद्गाता। तद्योऽयं प्राणः स वायुः, स उद्गाता, स मुक्तिः, साऽतिमुक्तिः ॥ ५ ॥

याज्ञवल्क्येति होवाच यदिदमन्तरिक्षमनारम्बणमिव, केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमत इति।

---

स एव पुनः पृच्छति याज्ञवल्क्येति — सर्वमहोरात्राभ्याम् — अतिमुच्यत इति। अहोरात्रयोराप्तिर्नाम कतिपयाहोरात्रैर्विनश्वरत्वम्। उत्तरमाह। अध्वर्युणर्त्विजा —सातिमुक्तिः। आदित्याधिष्ठितत्वादिना आदित्याभेदारोपविषयभूतचक्षुर्दृष्टिविषयः कर्माङ्गभूतोऽध्वर्युर्मुक्त्यादिहेतुरित्यर्थः। शिष्टं पूर्ववत् ॥ ४ ॥

पुनः पृच्छति याज्ञवल्क्येति होवाच यदिदं सर्वं पूर्वपक्षापरपक्षाभ्याम् — अतिमुच्यत इति। पूर्वपक्षापरपक्षयोराप्तिर्नाम कतिपयपक्षैर्विनश्वरत्वम्। उत्तरमाह उद्गात्रर्त्विजा वायुना प्राणेन — सातिमुक्तिः। वायुविकारत्वादिना वाय्वभिन्नमुख्यप्राणदृष्टिविषयभूत उद्गाता कर्माङ्गभूतः पूर्ववत् मुक्त्यतिमुक्तिहेतुरित्यर्थः। शिष्टं पूर्ववत् ॥ ५ ॥

पुनरेवाश्वलः पृच्छति याज्ञवल्क्येति होवाच यदिदमन्तरिक्षम् — आक्रमत इति। अनारम्बणम्। रलयोरभेदः। अन्तरिक्षमिदमनालम्बनमिव दृश्यते, तत् अन्तरिक्षं स्वयमनालम्बनं केनाऽऽक्रमेण आक्रमणसाधनेन केन वा आक्रम्य यजमानः ब्रह्मविद्यार्थकर्मानुष्ठाता स्वर्गं निरतिशयसुखरूपतया स्वर्गाख्यमप्राकृतं मुक्तिस्थानं भगवल्लोकमाक्रमते इत्यर्थः। अत्र स्वर्गलोकशब्दस्य भगवल्लोकवाचित्वे[1] स मुक्तिस्सातिमुक्तिरित्युत्तरवाक्यस्वारस्यं भवति।

1. वाचित्वेन. क.

ब्रह्मणर्त्विजा मनसा चन्द्रेण। मनो वै यज्ञस्य ब्रह्मा। तद्यदिदं मनः सोऽसौ चन्द्रः, स ब्रह्मा, स मुक्तिः, सोऽतिमुक्तिः।

इत्यतिमोक्षाः। अथ संपदः॥ ६॥

याज्ञवल्क्येति होवाच, कतिभिरयमद्यर्ग्भिर्होताऽस्मिन् यज्ञे करिष्यतीति। तिसृभिरिति। कतमास्तास्तिस्र इति। पुरोनुवाक्या च याज्या च

---

उत्तरमाह **ब्रह्मणर्त्विजा मनसा चन्द्रेण**। चन्द्राभिन्नत्वेन वा तदभिमानिकत्वेन वा ध्यातमनोदृष्ट्योपासितो ब्रह्मा भगवल्लोकाक्रमणसाधनमित्यर्थः।

**इत्यतिमोक्षाः। इति** अनेन प्रकारेणा**तिमोक्षाः** प्रकृतिमण्डलातिक्रमणरूपमोक्षप्रश्नाः समाप्ता इत्यर्थः। **अथ संपदः**। उच्यन्त इति शेषः। येनाग्निहोत्रादीनां फलवत्कर्मणामन्तवत्फलाय संपादनम्, सा संपत्॥ ६॥

तमेव सम्पद्विषयमश्वलप्रश्नमाह **याज्ञवल्क्येति होवाच कतिभिरयमद्यर्ग्भिर्होताऽस्मिन् यज्ञे करिष्यति**। अयं होता अद्य यज्ञकाले कतिभिः ऋग्भिः [कतिसंख्याभिः ऋग्भिः।] अस्मिन् यज्ञे करिष्यति। हौत्रमिति शेषः। याज्ञवल्क्य उत्तरमाह **तिसृभिरिति**। ऋग्भिरित्यनुषङ्गः। पुनः प्रश्नः[1] **कतमास्तास्तिस्र इति**। संख्येयऋग्विशेषविषयोऽयं प्रश्नः। पूर्वस्तु ऋङ्निष्ठसंख्याविषय इति भेदः। कास्ता ऋच इत्यर्थः। उत्तरमाह याज्ञवल्क्यः **पुरोनुवाक्या च याज्या च शस्यैव च तृतीया**। यागकालात् प्राक् प्रयुज्यमाना ऋचः पुरोनुवाक्याः। यागसाधनभूता ऋचो याज्याः। शस्त्रार्थाः ऋचः शस्याः। सर्वत्र जात्यभिप्रायेणैकवचनं द्रष्टव्यम्। तिसृष्वेव हौत्रीणामृचामन्तर्भावः; न चतुर्थः

1. पुनः प्रश्नमश्वलस्याह क.

---

ननु चतुर्थपर्याये **समुक्तिः सातिमुक्तिरिति** कथम्। तत्र अतिमुच्यत इति पूर्वमप्रयोगादिति चेत्—न; पूर्वपर्यायेष्वपि **अतिमुच्यत** इत्यत्र मुच्यत इत्यनेन स्वर्गप्राप्तेरेव विवक्षितत्वात्, तत्र मृत्युप्रभृत्यतिक्रमस्योक्तस्य अत्र **आक्रम**शब्देन द्योतनाच्चात्र पर्यायेऽपि तदुक्तेर्मुक्तत्वात्। **इत्यतिमोक्षाः अथसंपद** इति श्रुतिः स्वयं वदति। मोक्षविषयिणी अश्वलोक्तिः समाप्ता; अल्पफलविषयिणी अश्वलोक्तिरथ भवतीत्यर्थः।

एवमृत्विग्विषयप्रश्नेषु गतेषु तत्कार्याणामुपस्थितत्वात् तद्विषये प्रश्नमारभते **कतिभिरि**त्यादिना। **पुरोनुवाक्ये**ति। 'पुरोनुवाक्यामनूच्य याज्यया यजति', 'याज्याया अधि वषट्-

शस्यैव[1] च तृतीया । किं ताभिर्जयतीति । यत्किञ्चेदं प्राणभृदिति ॥ ७ ॥

याज्ञवल्क्येति होवाच कत्ययमद्याध्वर्युरस्मिन् यज्ञ आहुतीर्होष्यतीति । तिस्र इति । कतमास्तास्तिस्र इति । या हुता उज्ज्वलन्ति ; या हुता अतिनेदन्ते ; या हुता अधिशेरते । किं ताभिर्जयतीति । या हुता उज्ज्वलन्ति, देवलोकमेव ताभिर्जयति । दीप्यत इव हि देवलोकः ।

1. चकारः क्वचिन्न ।

---

प्रकार इति भावः । एवमग्रेऽपि । **किं ताभिर्जयतीति** पुनरश्वलप्रश्नः । प्रयुज्यमानाभिः ताभिः ऋग्भिः किं फलं यजमानः प्राप्नोतीत्यर्थः । याज्ञवल्क्य उत्तरमाह **यत्किञ्चेदं प्राणभृत्** । प्राणिजातं यत् किञ्चिदस्ति, तत् सर्वम् । जयतीति शेषः ॥ ७ ॥

पुनरश्वलः प्रश्नमाह **याज्ञवल्क्येति होवाच कत्ययं—होष्यतीति** । किं[1]—संख्याकाः आहुतीर्होष्यतीत्यर्थः । शिष्टं पूर्ववत् । अत्र याज्ञवल्क्यस्योत्तरम् **तिस्र इति** । पुनः प्रश्नः **कतमास्तास्तिस्र इति** । उत्तरं **या हुता उज्ज्वलन्ति — अधिशेरते** । या आहुतयः हुतास्सत्यः उज्ज्वलन्ति, ताः ऊर्ध्वं ज्वलन्त्यः समिदाज्याहुतय एका कोटिरित्यर्थः । या आहुतयो हुताः **अतिनेदन्ते** अतीव कुत्सितशब्दं कुर्वन्ति । 'नेद[2] (णेद?) शब्दकुत्सायाम् । शीत्कारशब्दं कुर्वन्तीत्यर्थः । तादृश्यो मांसाद्याहुतयो द्वितीया कोटिः । यास्त्वाहुतयो हुताः **अधिशेरते**=**अधि** अधोगत्वा अग्नौ शेरते, ताः पयस्सोमाद्या आहुतयः तृतीया कोटिरित्यर्थः । अन्यत् पूर्ववत् । पुनः प्रश्नः **किं ताभिर्जयतीति** । उत्तरं **या हुताः— जयति** । याः हुतास्सत्य उज्ज्वलन्ति, ताभिराहुतिभिः समिदादिभिर्देवलोकं जयतीत्यर्थः । तत्र हेतुमाह । **दीप्यत इव हि देवलोकः** । **हि** यस्मात् अत्रत्यानां

1. कतिसंख्याकाः. क. 2. नेदि. ख. णिदि. ग.

---

करोति', 'वषट्कृते जुहोती' ति पुरोनुवाक्या पूर्वं प्रयुज्यते; पश्चाद् याज्या । यत्र पूर्वार्धे देवताप्रकाशकं पदम्, सा पुरोनुवाक्या । यत्रोत्तरार्धे तत्, सा याज्या । याज्याप्रयोगान्ते च यागः देवतोद्देश्यकद्रव्यत्यागः इन्द्रायेदं न ममेत्यादिः यजमानकर्तृकः । मन्त्रोच्चारणं होतृकार्यम् । [illegible] होमश्चाध्वर्युकर्तृको वषट्कारानन्तरम । अत आह [illegible]दिति । शस्त्रम् अप्रगीतमन्त्र[illegible]गुणाभिधानम् ।

**या हुता अतिनेदन्ते, पितृलोकमेव ताभिर्जयति। एवमिव[1] हि पितृलोकः। या हुता अधिशेरते, मनुष्यलोकमेव ताभिर्जयति। अध इव हि मनुष्यलोकः॥ ८॥**

**याज्ञवल्क्येति होवाच कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो देवताभिर्गोपायतीति। एकयेति। कतमा सैकेति। मन एवेति। अनन्तं वै**

1. अतीव हि ग.

---

देवलोको दीप्यते इव [1]भासते। अत उज्ज्वलानां समिदाज्याहुतीनामुज्ज्वलदेवलोकसाधनत्वमुपपद्यत इति भावः। **या हुताः — जयति**। या हुताः आहुतयः **अतिनेदन्ते** कुत्सितशब्दं कुर्वन्ति, पितृलोकमेव ताभिर्जयतीति। अत्र हेतुमाह **एवमिव हि पितृलोकः**। **एवमिव हि** यस्मात् कुत्सितशब्दयुक्त एवेत्यर्थः। कुत्सितशब्दकर्तृत्वसामान्यात् कुत्सितशब्दयुक्ताभिराहुतिभिः कुत्सितशब्दयुक्तं पितृलोकं जयतीत्यर्थः। पितृलोकसंबद्धायां हि संयमन्यां पुर्यां वैवस्वतेन [2]यात्यमानानां हा हतोऽस्मीति [3]शब्दो भवति। अतः पितृलोकस्य कुत्सितशब्दयुक्तत्वमस्तीति द्रष्टव्यम्। **या हुताः — जयति**। या आहुतयो हुताः अग्नावधिशेरते इत्युक्ताः, तृतीयकोटयन्तर्भूताभिः ताभिर्मनुष्यलोकमेव जयतीति। अत्र हेतुमाह **अध इव हि मनुष्यलोकः**। ऊर्ध्वलोकापेक्षया मनुष्यलोकः अध इव हि वर्तते। अतः तत्सामान्यात् ताभिरधश्शयानाभिर्मनुष्यलोकं जयतीत्यर्थः॥ ८॥

पुनः स एव पृच्छति **याज्ञवल्क्येति — गोपायतीति**। विहारस्य दक्षिणत उपविष्टो ब्रह्मा कतिभिः [कतिसंख्याकाभिः] देवताभिरुपासिताभिः यज्ञं गोपायतीति प्रश्नार्थः। उत्तरमाह याज्ञवल्क्यः **एकयेति**। **कतमा सैकेति** पुनः प्रश्नः। सा देवता केत्यर्थः। उत्तरं **मन एवेति**। तेन किं जयतीति पुनः प्रश्नोऽत्राध्याहर्तव्यः। उत्तरमाह **अनन्तं वै —**। तत्र फलं विवक्षुः प्रथमं

1. दीप्यत इवाभासते ख. 2. पात्यमानानां. ग. 3. हताः स्मेति. क.

---

प्रष्टव्यदेवताया एकत्वेऽपि कतिशब्दस्य नित्यबहुवचनान्तत्वात् **कतिभिर्देवताभिरिति** प्रश्नः।

मनोऽनन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति ॥ ९ ॥

याज्ञवल्क्येति होवाच कत्ययमद्योद्गाताऽस्मिन् यज्ञे स्तोत्रियाः स्तोष्यतीति । तिस्र इति । कतमास्तास्तिस्र इति । पुरोनुवाक्या च याज्या च शस्यैव च तृतीया । कतमास्ता या अध्यात्ममिति । प्राण एव पुरोनुवाक्या, अपानो याज्या, व्यानः शस्या । किं ताभिर्जयतीति ।

---

मनस उपास्तिप्रकारमाह **अनन्तं वै मनः** । मनः आनन्त्यगुणविशिष्टतयोपास्यमित्यर्थः । तदानन्त्ये हेतुमाह **अनन्ता विश्वे देवाः** । **विश्वे** सर्वे इत्यर्थः । **देव**शब्द इन्द्रियपरः । मनसोऽधीनानां सर्वेषामिन्द्रियाणामानन्त्यात् मनस आनन्त्यमिति भावः । एवमुपासनप्रकारमुक्त्वा फलमाह **अनन्तमेव स तेन लोकं जयति**। एवमानन्त्यगुणविशिष्टतयोपासितेन [ ब्रह्मणा ] मनसा अनन्तं भगवल्लोकं मुक्तिस्थानं भगवदुपासनद्वारा जयतीत्यर्थः । एवमुत्तरस्वाभाव्यात् **यज्ञं गोपायतीति** प्रश्नस्यापि विद्यार्थस्य कर्मणः क्षिप्रब्रह्मविद्योत्पादकत्वशक्त्याधानमेवार्थ इति द्रष्टव्यम् ॥ ९ ॥

पुनः स एव पृच्छति **याज्ञवल्क्येति — स्तोष्यतीति** । अयमुद्गाता **अद्य** यागकाले अस्मिन् यज्ञे **स्तोत्रियाः** स्तोत्रसाधनभूताः ऋचः कति[संख्याकाः] स्तोष्यतीत्यर्थः । अत्र याज्ञवल्क्य उत्तरं पठति **तिस्र इति** । पुनः प्रश्नः **कतमास्तास्तिस्र इति** । उत्तरं **पुरोनुवाक्या च याज्या च शस्यैव च तृतीया** । उक्तोऽस्यार्थः पूर्वमेव । पुनः पृच्छति **कतमास्ताः या अध्यात्ममिति** । ताः पुरोनुवाक्याद्यास्तिस्रः **अध्यात्मं कतमा** भवन्ति । आसु किंरूपाध्यात्मदृष्टिः कर्तव्येत्यर्थः । उत्तरं **प्राण एव पुरोनुवाक्याऽपानो याज्या व्यानः शस्या** । पुरोनुवाक्यायाज्याशस्यासु क्रमादध्यात्मं प्राणापानव्यानदृष्टिं कृत्वा उद्गाता ताः प्रयुञ्जीतेत्यर्थः । पुनः पृच्छति **किं ताभिर्जयतीति** । प्राणादिदृष्टिविशिष्टपुरोनुवाक्यादिभिः प्रयुज्यमानाभिः कान् लोकान् जयतीत्यर्थः । उत्तरमाह

---

**भगवल्लोक**मिति । पूर्वम् **अथ संपद** इति अल्पफलस्यैवोपक्रमात् **अनन्तलोक**पदेनापि भगवल्लोकव्यतिरिक्तलोकस्यैवानन्त्यं किञ्चिद्रूपं विवक्षणीयमिति चेत्—मुख्यफलस्य क्वचिदुक्तावपि संपदामेव प्रायिकत्वात् अत्रापि द्वारीभूतफलस्यान्यत्वाच **संपद** इत्येतदुपपत्तिरित्याशय इति ।

पृथिवीलोकमेव पुरोनुवाक्यया जयत्यन्तरिक्षलोकं याज्यया द्युलोकँ शस्यया। ततो ह होताऽश्वल उपरराम ॥ १० ॥

इति पञ्चमाध्याये प्रथमं ब्राह्मणम् ।

---

५—२.

**अथ हैनं जारत्कारव आर्तभागः पप्रच्छ । याज्ञवल्क्येति होवाच, कति ग्रहाः, कत्यतिग्रहा इति । अष्टौ ग्रहा अष्टावतिग्रहा इति । य एते अष्टौ ग्रहा अष्टावतिग्रहाः, कतमे त इति ॥ १ ॥**

**प्राणो वै ग्रहः; सोऽपानेनातिग्रहेण गृहीतः । अपानेन हि**

---

**पृथिवीलोकमेव पुरोनुवाक्यया जयति, अन्तरिक्षलोकं याज्यया, द्युलोकं शस्यया।** स्पष्टोऽर्थः। **ततो ह होताऽश्वल उपरराम**। एवं स्वकृतप्रश्नानामुत्तरे दत्ते प्रष्टव्यान्तराभावात् होता अश्वल **उपरराम** तूष्णीं बभूवेत्यर्थः ॥ १० ॥ ५—१.

**अथ हैनं जारत्कारव आर्तभागः पप्रच्छ** । **अथ** अश्वलपराभवानन्तरम् **एनं** याज्ञवल्क्यं **जारत्कारवः** जरत्कारुगोत्रजः ऋतभागपुत्रः **आर्तभागः** विजिगीषयैव पप्रच्छेत्यर्थः । **याज्ञवल्क्येति — अतिग्रहा इति** । हे याज्ञवल्क्येति संबोधनेन तं स्वाभिमुखं कृत्वा, ग्रहाः कति, अतिग्रहाः कतीति प्रश्नद्वयं पृष्टवानित्यर्थः । उत्तरमाह याज्ञवल्क्यः **अष्टौ ग्रहा अष्टावतिग्रहा इति** । पुनः प्रश्नः **य एते—कतमे ते इति** । ये ग्रहा अतिग्रहाश्चाष्टावष्टाविति त्वयोक्ताः, त एते क इत्यर्थः ॥ १ ॥

अत्र याज्ञवल्क्यस्योत्तरं **प्राणो वै ग्रहः —** । अत्र **प्राण**शब्देन नसत्वसामान्यात् घ्राणेन्द्रियं गौण्या वृत्त्याऽभिधीयते । गृह्णाति = आत्मानं स्ववशं करोतीति **ग्रहः** इन्द्रियम् । पचाद्यच् । **अपानः** गन्धः । अपानेन निश्वासवायुना

---

अश्वलप्रश्ने मुक्त्यतिमुक्त्योः मृत्योश्च प्रस्तुतत्वात्, लोके मोचनस्य ग्रहणपूर्वकतया ग्रहणोपस्थितेः ग्रहातिग्रहयोरुपस्थितयोः, ग्रहातिग्रहौ मृत्युञ्चाधिकृत्य आर्तभागः पृच्छति । ग्रहं क्रान्तः अतिग्रहः, 'अत्यादयः क्रान्ताद्यर्थे द्वितीयये' ति । तत्क्रान्तत्वं तदातिशायितत्वम् । तत्र ग्रहत्वांशे विषयाणामिन्द्रियापेक्षया अतिशयितत्वोपपादनार्थं ग्रहशब्दार्थं तदनुगुणं वर्णयति **गृह्णाति आत्मानं स्ववशं करोतीति** । अन्यथा, गृह्णाति विषयमिति ग्राहकत्वाद् ग्रह इत्येवोच्येत।

**गन्धान् जिघ्रति ॥ २ ॥ वाग् वै ग्रहः ; स नाम्नाऽतिग्रहेण गृहीतः । वाचा हि नामान्यभिवदति ॥ ३ ॥ जिह्वा वै ग्रहः ; स रसेनातिग्रहेण गृहीतः । जिह्वया हि रसान् विजानाति ॥ ४ ॥ चक्षुर्वै ग्रहः ; स रूपेणातिग्रहेण गृहीतः । चक्षुषा हि रूपाणि पश्यति ॥ ५ ॥ श्रोत्रं वै ग्रहः ; स शब्देनातिग्रहेण गृहीतः । श्रोत्रेण हि शब्दाञ्छृणोति ॥ ६ ॥ मनो वै ग्रहः ; स कामेनातिग्रहेण गृहीतः । मनसा हि कामान् कामयते ॥ ७ ॥ हस्तौ वै ग्रहः ; स कर्मणाऽतिग्रहेण गृहीतः । हस्ताभ्याँ हि कर्म करोति ॥ ८ ॥**

---

उपनीयमानत्वात् गन्धोऽपानशब्देन लक्ष्यते । सः घ्राणेन्द्रियात्मको ग्रहः तेन विषयरूपेणा**तिग्रहेण** गन्धात्मना **गृहीतः** व्याप्तो भवति । अतिशयेन स्वस्वविषयिणमिन्द्रियादिकं **गृह्णाति** स्ववशीकरोतीत्यतिग्रहः विषयः । गन्धस्य घ्राणवशीकरणप्रकारमुपपादयति **अपानेन हि गन्धान् जिघ्रति** । अत्र घ्राणेनेत्यध्याहर्तव्यम् । अपानेन निश्वासेनोपनीतान् गन्धान् घ्राणेन जिघ्रतीत्यर्थः । यद्वा **अपान**शब्दो घ्राणपरो द्रष्टव्यः । उत्तरसन्दर्भैकरूप्यात् । अतो गन्धग्राहकत्वात् घ्राणं गन्धाधीनमिति भावः । ततश्च, 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्युक्तरीत्या ग्रहशब्दितेभ्योऽपीन्द्रियेभ्योऽतिग्रहशब्दितानां विषयाणां प्रबलतया तद्वशीकरणे विषयेन्द्रियवियोजनरूप एव यत्नः कर्तव्यो मुमुक्षुणेति भावः ॥ २ ॥

**वाग्वै ग्रह इत्यादि सर्वं पूर्ववत्** ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

---

किञ्च पुरुषस्यैव मुक्तिः पूर्वमुक्तेति ग्रहणमपि तद्विषयमेव वक्तव्यम्; न तु रूपादिपदार्थविषयकमित्यतोऽपि आत्मानं स्ववशं करोतीत्युक्तम् । श्रीभाष्येपि (4.2.12.) "ग्रहातिग्रहरूपेण इन्द्रियेन्द्रियार्थस्वभाव" इत्यनेन उक्तविधग्रहत्वातिग्रहत्वरूपौ तत्स्वभावावेव विवक्षिताविति भावः । तत्र श्रुतप्रकाशिकायां रूपणविवक्षया, ग्रहः पात्रविशेषः, तत्स्थं द्रव्यमतिग्रहः तद्रूपेण, आकर्षकरज्जुतत्समाकृष्यरूपेण वा इति ग्रहातिग्रहरूपेणेत्यस्यार्थ उक्तः ॥ प्राणशब्द इव द्वितीयोऽपानशब्दोऽपि घ्राणेन्द्रियपरः, उत्तरानुसारात् । घ्राणेन्द्रियेण गन्धग्रहणे उच्छ्वास निश्वासयोरुपयोगात् प्राणापानशब्दाभ्यां तद्ग्रहणम् । अत्र प्राणशब्दो न मुख्यार्थे, किंतु लक्ष्यार्थे इत्येतत् तत्रैवापानशब्दप्रयोगेण ज्ञाप्यतेऽपि ।

त्वग् वै ग्रहः ; स स्पर्शेनातिग्रहेण गृहीतः । त्वचा हि स्पर्शान् वेदयते ।

इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः ॥ ९ ॥

याज्ञवल्क्येति होवाच, यदिदं सर्वं मृत्योरन्नम्, का स्वित् सा देवता यस्या मृत्युरन्नमिति । अग्निर्वै मृत्युः ; सोऽपामन्नम् । अप पुनर्मृत्युं जयति, [1] य एवं वेद ॥ १० ॥

1. य इत्यादि क्वचिन्न ।

---

एवं घ्राणवाग्जिह्वाचक्षुश्श्रोत्रमनोहस्तत्वग्रूपान् ग्रहान् तद्विषयरूपान् अतिग्रहांश्चोक्त्वोपसंहरति — **इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः** । स्पष्टोऽर्थः । विषयेन्द्रियमध्ये एतेषामेव प्रबलत्वादवश्यनिग्राह्यत्वाभिप्रायेणाष्टानामेवोक्तिरिति द्रष्टव्यम् ॥ ९ ॥

एवं ग्रहातिग्रहप्रश्नस्योत्तरे दत्ते आर्तभाग एवान्यत् पृच्छति — **याज्ञवल्क्येति होवाच यदिदं — अन्नमिति** । यस्य मृत्योरिदं सर्वं दृश्यमानमन्नम् अदनीयम्, सोऽपि मृत्युर्यस्या देवताया अन्नं भवति, सा का देवतेति प्रश्नार्थः । याज्ञवल्क्य उत्तरमाह **अग्निर्वै मृत्युः सोऽपामन्नम्** । अग्निना हि सर्वं दह्यते । अतः सर्वं तस्यान्नमिति स मृत्युः । सोऽप्यद्भिर्नाश्यते । अतोऽपामग्न्यन्नकत्वमिति भावः । अपामग्न्यन्नकत्वचिन्तनस्य फलमाह **अप पुनर्मृत्युं जयति य एवं वेद** । अपामग्न्यन्नकत्वं चिन्तयन् अपमृत्युं जयतीत्यर्थः । अत्र का स्वित् सा देवतेति प्रश्नानुरोधात् [अप्छब्दस्य [1]] अपामित्यस्य अप्तत्त्वाभिमानिनारायणपरत्वेऽपि न दोषः । केवलस्वप्सु देवताशब्दस्यास्वारस्यात् । अस्मिन् पक्षे अग्निर्वै मृत्युरित्यत्राग्नि-

1. इदमधिकं क. कोशे ।

---

**अग्निर्वै मृत्युरि**त्यस्यत्वप्रश्नात् मृत्यूपस्थित्या ह्ययं मृत्युविषयः प्रश्नः । तत्र अहोरात्रयोः पूर्वोत्तरपक्षयोश्चादित्यचन्द्राधीनत्ववत् मृत्योरग्न्यधीनत्वसिध्द्या मृत्युदेवता अग्निरेवेति ज्ञापितमिति भावः । **अप पुनर्मृत्युं जयती**त्यस्य मृत्युमपजयतीत्येवार्थः **श्रुतप्रकाशिकायाम्** । **श्रीभाष्येऽपि**, 'अग्निजय एव मृत्युजय उच्यते' इत्येवाभाषि ; न तु अपमृत्योः कस्यचिज्जयः । अथाप्यत्र आर्तभागप्रश्नस्य विद्वद्विषयकत्वान्वारोहेण व्याख्याने नैर्भर्यात् अपमृत्युं जयतीत्यर्थवर्णनमिति ध्येयम् ।

**याज्ञवल्क्येति होवाच, यत्रायं पुरुषो म्रियते, उदस्मात् प्राणाः क्रामन्त्याहो (३) नेति । नेति होवाच याज्ञवल्क्यः, अत्रैव समवनीयन्ते । स उच्छ्वयत्याध्मायत्याध्मातो मृतश्शेते ॥ ११ ॥**

---

शब्दस्य कालाग्निरुद्रपरत्वं द्रष्टव्यम् । 'अग्निर्वै रुद्रः' इति प्रसिद्धेश्च । एतदेवाभिप्रेत्य **व्यासार्यैः** "आर्तभागप्रश्नस्य विद्वद्विषयत्वेऽपी" ति ग्रन्थेनास्य प्रकरणस्य परमात्मविषयत्वमपि [ [1] अन्वारुह्योक्त्या ] सूचितम् ॥ १० ॥

पुनः स एव पृच्छति **याज्ञवल्क्येति होवाच यत्रायं पुरुषो — नेति । यत्र** यदा **अयं पुरुषः** जीवो म्रियते, तदा किम**स्मात्** म्रियमाणाज्जीवात् **प्राणा उत्क्रामन्ति** जीवं विहाय यथायथं गच्छन्ति; **आहो** उत न यथायथं गच्छन्ति, किन्तु तत्संयुक्ता एव सन्तः तेन सहैवोत्क्रामन्तीति प्रश्नार्थः । न यथायथं गच्छन्तीत्युत्तरमाह **नेति होवाच याज्ञवल्क्यः** । तर्हि किं भवन्तीत्यत्राह **अत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायत्याध्मातो मृतश्शेते । अत्रैव** अस्मिन्नात्मन्येव **समवनीयन्ते** संयु(यो)ज्यन्ते । समित्येकीकारे । एकीभूततया संयुक्ता भवन्तीत्यर्थः । न तं विहायोत्क्रामन्ति; किन्तु सहैवोत्क्रामन्तीत्यर्थः । **स उच्छ्वयति, सः** पुरुषो मृतः उत्क्रान्तप्राणस्सन् श्वयथुं प्राप्नोतीत्यर्थः । **आध्मायति** बाह्यवायुना पूर्यते । **आध्मातः** एवं बाह्यवायुना पूरितस्सन् शेते इत्यर्थः । यद्यप्युच्छूनत्वाध्मातत्वादिर्देहधर्मः । **न त्वस्मा**दिति निर्दिष्टम्रियमाणजीवधर्मः – तथापि देहात्मनोरभेदोपचारेण [ स ' इति परामृश्य ] तथा निर्देशो द्रष्टव्यः । न च **स उच्छ्वयत्याध्मायत्याध्मातो मृतश्शेत** इति उच्छूनत्वादिविस्पष्टदेहधर्मश्रवणेन

1. इदमधिकं क. कोशे ।

---

मृत्युप्रस्तावे म्रियमाणस्योपस्थित्या तद्विषयकः तृतीयः प्रश्न आर्तभागस्य यत्रायमित्यादिना । **अयं पुरुष** इति जीवग्रहणमेव युक्तम्, न शरीरस्य । 'य एवं वेदे'ति जीवस्यैव प्राग्प्युपस्थितेः । 'यत्रायं पुरुषो म्रियते' इति द्वितीयवाक्ये जीवस्यैव ग्राह्यत्वाच्च । तत्र किमेनं न जहातीत्यत्र **एन**मिति जीवोक्तेः । नामपदवाच्या हि कीर्तिः न केवलशरीरस्य; किंतु तदवच्छिन्नजीवस्य । अतः अस्मात् प्राणाः, इत्यत्र **अस्मा**दित्यपि जीवादित्यर्थकम् । एवं **अत्रै**वेत्येतत्पदमपि । एवं स्वारस्यादुपक्रमे अर्थस्थितिः । चरमश्रुतं **स उच्छ्वयती**ति तत्पदं तु शरीरपरं नीयते । यथा परमते वाक्यान्तरे इति वक्ष्यति, 'योऽकामो निष्काम' इति वाक्यग्रहणेन । अतएव श्रुतिरपि **अय**मिति पूर्वोक्तं पदमप्रयुज्य **स** इति अर्थान्तरविवक्षया तत्पदं प्रयुङ्क्ते इत्यपि

**याज्ञवल्क्येति होवाच, यत्रायं पुरुषो म्रियते, किमेनं न जहातीति । नामेति ।**

---

देहापादानकोत्क्रमणप्रतिषेधविषयकत्वोपपत्तावभेदोपचारमाश्रित्य जीवापादानकोद्गमननिषेधपरत्वं कुत आश्रयणीयमिति वाच्यम्, 'योऽकामो निष्काम आप्तकाम आत्मकामो न तस्मात् प्राणा उत्क्रामन्ती'त्यत्र [1]शरीरापादानकोद्गमनप्रतिषेधवादिनः ['न [2] तस्मा'दित्यस्य परैरपि] अभेदोपचारस्यावश्याश्रयणीयत्वेन दोषसाम्यात् । "प्रतिषेधादिति चेन्न शारीरा" दिति सूत्रभाष्यादावस्यार्थस्य प्रपञ्चितत्वान्नात्रास्माकं वक्तव्यमवशिष्यते ॥ ११ ॥

पुनरार्तभाग एव पृच्छति **याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते किमेनं न जहातीति ।** पूर्वत्र प्राणा म्रियमाणं न जहतीत्युक्तम् । इदानीं तु प्राणेभ्योऽन्यच्च किं वा म्रियमाणं न जहातीति प्रश्नः । याज्ञवल्क्य उत्तरमाह — **नामेति ।** नामधेयं न त्यजतीत्यर्थः । तदत्याग एव प्रदर्श्यते प्रसिद्ध्या **अनन्तं**

1. शारीरा क. । 2. इदमधिकं क. कोशे ।

---

संभवादत्र सुवचम् । अस्मन्मते 'स उच्छ्वयती'त्यादिवाक्यस्य किं फलमिति चेत् — इन्द्रियाश्रयत्वस्य शरीरलक्षणत्वात्, तदापि तस्य शरीरत्वात् प्राणशब्दवाच्येन्द्रियाश्रयत्वमप्यावश्यकमिति शङ्कायाम्, उच्छूनत्वाद्यवस्थान्तरापत्त्या शरीरत्वमेव नास्तीति समाधानार्थं तदिति । अत्र उच्छूनत्वादिदेहधर्मकथनात् 'अयं पुरुष' इति पुरुषादिपदमपि देहपरमितीदं न शाङ्करोपनिषद्भाष्यगतम् । तत्र विद्वद्विषयकतया वाक्ययोजना । अस्माभिस्तु उत्तरसंदर्भानुसारात् अविद्वद्विषयत्वे स्वारस्यमित्युच्यत इत्येतावान् विशेषः । अयं पुरुषः विद्वान् यदा म्रियते, तदा तस्य ब्रह्मणैकीभूतस्य प्राणैरुपयोगाभावात् प्राणाः किमुत्क्रामन्ति, उत न । उत्क्रामन्ति चेत्, जीवमुत्क्रामन्तं हि प्राणा उत्क्रामेयुरिति विद्वदुत्क्रामोऽपि स्यात् । नोत्क्रामन्ति चेत्, न मृतः स्यादित्याशङ्कायाम्, प्राणाः तस्माद् विदुषो नोत्क्रामन्ति । ब्रह्मणि तस्मिन् लीना भवन्ति । एवं लीनत्वादेव न विदुषो मृतत्वहानिरिति तत्र वर्ण्यते । श्रीभाष्येऽपि एतदनुगुण एवानुवादः । अस्मन्मते विद्वद्विषयत्वाङ्गीकारेऽपि एवं वाक्यतात्पर्यवर्णनं नेष्यते; पदार्थवर्णनमुभयत्र तुल्यमिति ध्येयम् । पुरुषादिपदानां शरीरपरत्वेऽपि नास्मदाभिमतार्थासिद्धिः ।

**नामधेयमिति** पाठे, **श्रीभाष्ये**, 'नामवाच्यकीर्ती' ति अत्रत्यनामशब्दस्य कीर्तीत्यर्थस्य भाषितत्वात् अत्र नामधेयमित्युक्तिः कीर्तेर्नामधेयघटितत्वादिति ध्येयम् । ननु किमेनं न जहा-

**अनन्तं [1]ह वै नाम; अनन्ता विश्वे देवाः। अनन्तमेव स तेन लोकं जयति ॥ १२ ॥**

**याज्ञवल्क्येति होवाच, यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति,**

---

**ह वै नाम**। देहे नष्टेऽपि युधिष्ठिरादीनां नामानुवृत्तिदर्शनादनन्तं नाम। नाम्नो नाशो नास्तीत्यर्थः। नामाभिमानिदेवता अप्यनन्ता इत्याह **अनन्ता विश्वे देवाः**। विश्वे देवा नामाभिमानिन इति द्रष्टव्यम्। नामानन्त्यज्ञानस्य फलमाह **अनन्तमेव स तेन लोकं जयति**। तेन अनुवृत्तेन नाम्ना अनन्तं शाश्वतं पुण्यलोकं जयतीत्यर्थः। अत एव हि लोके नामानुवृत्त्यर्थं यतन्त इति भावः ॥ १२ ॥

पुनरप्यार्तभागः पृच्छति **याज्ञवल्क्येति होवाच यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति — पृथिवीं शरीरम्**। अत्र वागादीन्द्रियाणामाकल्पस्थायित्वात्, आहङ्कारिकत्वाच्च मरणदशायाम् अनुपादानभूते अग्न्यादौ तेषां लयासंभवाच्च **अग्निं वागप्येतीति** वाचः अग्नावप्ययो नाम वागिन्द्रियाभिमानिदेवभूतस्याग्नेः वागिन्द्रियाधिष्ठानानुकूलव्यापारमन्तरेणावस्थितिरेव। मरणदशायां म्रियमाणजीवसंबन्धि वागिन्द्रियं तदभिमानी अग्निर्न व्यापारयतीति यावत्। सूत्रितश्च भगवता बादरायणेन — "अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वा" दिति। एवमुत्तर-

---

तीति वाक्यदर्शने – पूर्ववाक्ये यदेनं जहाति, तदुक्तम्; इह तु यन्न जहाति, तत् पृच्छ्यत इति ज्ञायते। तत्र प्राणा आत्मानं न जहति, शरीरं जहातीति ज्ञातम्। अत इह शरीरं किं न जहातीति प्रश्नो युक्तः। जीवस्य प्राणानां बन्धूनां भोग्यभोगोपकरणानाञ्च शरीरत्याज्यत्वेऽपि तेन शरीरेणार्जितां कीर्तिं परं तत् शरीरं न त्यजति। न हि जीवसंपादिताऽपि कीर्तिः शरीरान्तरे तज्जीवे प्रथते। किन्तु अर्जकशरीरावच्छिन्न एवेति युक्तं शरीरं न त्यजतीति इति चेन्न – शरीरस्य नष्टतया, लोकं जयतीति फलस्य जीव एव वर्णनीयतया चात्रापि जीवग्रहणेनैव व्याख्यातुमुचितत्वात्। अत एव **अन्यच्च किं वा न जहातीति** पूरयित्वा व्याख्यातम्। ननु 'तं विद्याकर्मणी समन्वारभेते' इति श्रुत्यन्तररीत्या, किमेनं न जहातीत्यत्र, विद्यादिकं न जहातीति वक्तव्ये, 'नाम न जहाती'ति किमिति याज्ञवल्क्येनोच्यते इति चेन्न–पुण्यादिकर्मविचारस्य उपरि रहसि करिष्यमाणतया प्रकाशं तदविवक्षता याज्ञवल्क्येन गूढमेवमुक्तेः। अत्रापि विद्याकर्मवैविध्यमूलकमेव नामेति तदत्रोक्तप्रायम्। 'अनन्तमेव स लोकं जयती'त्यपि विद्याकर्मफलाभिप्रायं हि भवितुमर्हति। एवं गूढमुच्यमानं विशदं परीक्ष्यामित्येव भङ्ग्यन्तरेण पुनः प्रक्ष्यति।

**वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशश्श्रोत्रं पृथिवीं शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन् केशाः, अप्सु लोहितञ्च रेतश्च निधीयते, क्वायं तदा पुरुषो भवतीति ।**

**आहर सोम्य हस्तमार्तभाग! आवामेवैतस्य वेदिष्यावो न नावेतत्**

---

त्रापि वातं प्राण इत्यादौ द्रष्टव्यम् । अप्ययश्च भाक्तो यथायोग्यं द्रष्टव्यः । आकाशमात्मा । आत्मा देहान्तर्गताकाश इत्यर्थः । **ओषधीर्लोमानि वनस्पतीन् केशाः ।** लोमकेशाभिमानिदेवता ओषधिवनस्पत्यभिमानिदेवतामप्येति = लोमकेशाभिमानित्वं विहाय केवलमोषधिवनस्पत्यभिमानिनी भवतीत्यर्थः । **अप्सु लोहितञ्च रेतश्च निधीयते । निधीयते** प्रक्षिप्यत इत्यर्थः । **क्वायं तदा पुरुषो भवतीति ।** म्रियमाणसंबन्धिषु सर्वेषु उक्तरीत्या तत्तदाधाराश्रितेषु सत्सु अयं शारीरः पुरुषः तदा किमाश्रितो भवतीति प्रश्नः ।

एवं पृष्टो याज्ञवल्क्यः एतदुत्तरस्य सुगोप्यत्य प्रकृतजल्पमार्गेण सर्वजनसमक्षमप्रकटनीयत्वादार्तभागं वादमार्गेण बोधयिष्यन्नाह **आहर सोम्य — न नावेतत् सजने इति ।** हे **सोम्य** सोमार्ह ! हे आर्तभाग ! इति संबोध्य, हस्तं त्वदीयमाहरेत्युक्त्वा प्रसारितमार्तभागहस्तं गृहीत्वा पुनः प्राह, '**आवामेव** एतस्य प्रश्नस्योत्तरं **वेदिष्यावः**' । ज्ञास्याव इत्यर्थः । यद्यपि याज्ञवल्क्य एव विचारको निर्णेता च — अथापि द्विवचनं वीतरागकथात्वद्योतनार्थम् । **नौ** आवयोः **एतत्** प्रकृत-

---

**न नावेतत् सजने** इति । ननु कर्म हैव तदूचतुरिति कर्मानुगुणगतेरेवोपरि कथनात् तस्य चार्थस्य सर्वलोकविदितत्वात् कथं सजने एतदुक्तिनिषेध इति चेत् — कर्मानुगुणा गतिरित्येतदपि परमं वैदिकं रहस्यम् । वेदवासनाविरहितेषु देशेषु अस्य सर्वैर्वाज्ञातत्वात् । वस्तुतः **क्वायं तदा पुरुषो भवतीति** जीवाधारभूतपरमात्मप्रश्नो वा, मुक्तिस्थानप्रश्नो वा, संसारान्तर्गतभोगस्थानप्रश्नो वा, पुनर्जन्मनिमित्तप्रश्नो वा । पुनर्जन्मनिमित्तानि च,

> 'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् ।
> संयोग एषां न त्वात्मभावात् आत्माऽप्यनीशः सुखदुःखहेतोः ॥
> ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् ।'

**सजनइ ति। तौ होत्क्रम्य मन्त्रयाञ्चक्राते। तौ ह यदूचतुः, कर्म हैव तदूचतुः। अथ यत् प्रशशँसतुः, कर्म हैव तत् प्रशशँसतुः, पुण्यो वै पुण्येन कर्मणा भवति, पापः पापेनेति। ततो ह जारत्कारव आर्तभाग उपरराम॥ १३॥**

इति पञ्चमाध्याये द्वितीयं ब्राह्मणम्।

---

प्रश्नोत्तरं **सजने** जनसमुदाये न भवतीत्यर्थः। एवं याज्ञवल्क्योक्तमार्तभागोऽप्यङ्गीचकार। **तौ होत्क्रम्य मन्त्रयाञ्चक्राते**। अथ **तौ** आर्तभागयाज्ञवल्क्यौ तस्मात् देशात् उत्क्रम्य विजनं[1] गत्वा **मन्त्रयाञ्चक्राते** विचारमकुरुतामित्यर्थः। **तौ ह यदूचतुः — प्रशशंसतुः**। **तौ** आर्तभागयाज्ञवल्क्यौ मिळित्वा विचार्य निश्चित्य कार्यकारणसंघातात्मकशरीरान्तरपरिग्रहहेतुतया [ शारीरपुरुषस्य आधारभूतं ] यदुक्तवन्तौ, तत् कर्मैव। **अथ यत् प्रशशंसतुः**। तादृशशरीरान्तरपरिग्रहहेतुषु **यत्** स्तुतवन्तौ, **तत्** कर्मैवेत्यर्थः। यद्यपि ईश्वरकालादीनि कारणान्तराणि सन्ति — तथाऽपि तेषां साधारणकारणत्वात् [ शारीरस्य ] शरीरपरिग्रहहेतूनां मध्ये कर्मैव असाधारणं कारणं पुरुषस्य आश्रयभूतमिति स्तुतवन्तावित्यर्थः। तदेव प्रदर्शयति **पुण्यो वै — पापेनेति**। वैशब्दोऽवधारणे। पुण्येन कर्मणैव **पुण्यो भवति** पुण्यशरीरयुक्तो भवति। पापेन कर्मणैव **पापो भवति** पापशरीरयुक्तो भवतीत्यर्थः। 'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा। अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वे' ति श्रुत्यन्तरादिति भावः। **ततो ह जारत्कारव आर्तभाग उपरराम**। पूर्ववत् स्पष्टोऽर्थः॥ १३॥ ५—२.

1. विजनस्थानं. ख. ग.

---

इति बहूनि सन्ति। अत इह वादप्रतिवादप्रसक्त्याधिक्यात्, 'प्रष्टुरत्र विषये कियद् ज्ञातमस्ति; कियदंशकथनमस्य तृप्तये स्यात्' इति तेन सह संमन्त्र्य निर्णीयाधिकमनुक्त्वा पर्याप्तं वक्तव्यम्। किं मुधा तदज्ञातानामप्रामाणिकानाज्ञानेकेषां पक्षाणामकाण्डे खण्डनप्रयासेनेत्याशयेन एवमुक्तिः। अत एव, 'तौ ह्त्क्रम्य मन्त्रयाञ्चक्राते' इति सुबहुविचारप्रवर्तनं दर्शितम्। कर्महैवेत्यनेन कालस्वभावादीनामकारणत्वं प्रधानकारणत्वञ्च न; किन्तु कर्मण एव प्रधानकारणत्वम्। यद्यपि ईश्वरः सर्वस्वतन्त्रः—अथापि स्वातन्त्र्यादेव, 'सर्वमहमेतत्कर्मानुगुणं करिष्यामी'ति संकल्पितवानस्ति सः। तथा हि, निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि। प्रधानकारणीभूता यतो वै सृज्यशक्तयः इति।

५—३.

अथ हैनं भुज्युर्लाभ्या(ह्या)यनिः पप्रच्छ। याज्ञवल्क्येति होवाच — मद्रेषु चरकाः पर्यव्रजाम। ते पतञ्जलस्य काप्यस्य गृहानैम। तस्यासीद्दुहिता गन्धर्वगृहीता। तमपृच्छाम कोऽसीति। सोऽब्रवीत् सुधन्वाऽऽङ्गिरस इति। तं यदा लोकानामन्तानपृच्छाम, अथैनं [1]ब्रूम क्व पारिक्षिता

[1]. अब्रूम. शां मां. .

**अथ हैनं भुज्युर्लाभ्या(ह्या)यनिः पप्रच्छ।** अथ आर्तभागोपरमानन्तरं **भुज्युः** नामतः, लभ्या (ह्या) यनिः गोत्रतः। लभस्य[1] गोत्रापत्यम्। 'गर्गादिभ्यो यञ्'। तस्यापत्यम्। 'यञिञोश्चे' ति फक्। ततः 'गोत्राद्यूनी' ति नियमादत इञ्। स एनं याज्ञवल्क्यं पप्रच्छेत्यर्थः। **याज्ञवल्क्येति होवाच।** पूर्ववदर्थः। **मद्रेषु चरकाः पर्यव्रजाम।** मद्रा नाम जनपदाः। तेषु चरकाः अध्ययनार्थं व्रतचरणाच्चरकाः[2]। यद्वा मद्रेषु चरन्तीत्यर्थे 'चरेष्टः' इति टप्रत्यये, 'तत्पुरुषे कृति बहुळ' मित्यलुक्। स्वार्थे कः। **पर्यव्रजाम** पर्यटितवन्त इत्यर्थः। 'अस्मदो द्वयोश्चे' त्येकस्मिन् बहुवचनम्। सब्रह्मचार्यपेक्षया वा। ते **पतञ्जलस्य काप्यस्य गृहानैम।** ते वयं नाम्ना पतञ्जलस्य, गोत्रेण काप्यस्य गृहान् ऐम। इणो लङ्। **तस्यासीद् दुहिता गन्धर्वगृहीता।** तस्य काप्यस्य दुहिता पुत्री **गन्धर्वेण** अमानुषेण सत्त्वेनाऽऽविष्टा स्थिता। **तमपृच्छाम।** तं गन्धर्वमपृच्छाम। लङ्। किमिति। **कोऽसीति। सोऽब्रवीत् सुधन्वाङ्गिरस इति। सः** गन्धर्वः, 'नामतोऽहं सुधन्वा, गोत्रत आङ्गिरसः' इत्यब्रवीत्। तं — **अपृच्छाम।** तं गन्धर्वं वयं **लोकानां** पुण्यलोकविशेषाणाम् — **अन्तानपृच्छाम** निश्चयान् पृष्टवन्त इति यत्, तत् त्वां पृच्छामि। जानासि चेत्, वदेति शेषः। **अथ — अब्र-**

1. लाह्यस्य. क. 2. चरणाश्चरकाः. क.

क्वायं तदा पुरुषो भवतीति सामान्यतः प्रश्ने प्राप्ते, 'क्व पारिक्षिता अभवन्' इति व्यक्तिविशेषविषयस्योपस्थितत्वात् तद्विषये तृतीयेन प्रश्नोऽवतार्यते **अथ हैनमिति।** एतत्प्रश्नोत्तरेण याज्ञवल्क्यस्य दिव्यज्ञानसंपत्तिरप्यस्तीति ज्ञापितम्। 'अस्मदो द्वयोश्च' इति एकस्मिन् बहुवचनस्य सविशेषणस्थले प्रतिषेधात् बहुत्वमादायैव बहुवचनं निर्वहति **सब्रह्मचार्यपेक्षया** वेति। सब्रह्मचारिणोऽहश्चेति वयं पर्यव्रजामेत्यर्थः। **तं यदा लोकानामन्तानपृच्छाम, अथेति**

**अभवन्निति । क्व पारिक्षिता अभवन्? स त्वा पृच्छामि, याज्ञवल्क्य! क्व पारिक्षिता अभवन्निति ॥ १ ॥**

**स होवाच, उवाच वै[स]सोऽगच्छन् वै ते तत् यत्राश्वमेधयाजिनो गच्छन्तीति । क्व न्वश्वमेधयाजिनो गच्छन्तीति । द्वात्रिँशतं वै देवरथाह्न्यान्ययं लोकः । तँ समन्तं पृथिवी द्विस्तावत् पर्येति ।**

---

**वन्निति । ब्रूमे**त्यडभावश्छान्दसः । **अथ** अनन्तरम् अन्यदप्येनं गन्धर्वं **ब्रूम** अपृच्छाम । किं तत्? **पारिक्षिताः** परिक्षित्पुत्राः **क्व** कस्मिन् लोके अभवन्निति । संभ्रमे द्विरुक्तिः । **स त्वा पृच्छामि — अभवन्निति** । **सः** ततो गन्धर्वादवगततत्स्वरूपः अहं त्वां पृच्छामि तमेव प्रश्नम्, पारिक्षिताः क्वाभवन्निति इत्यर्थः ॥ १ ॥

**स होवाच । सः** याज्ञवल्क्यः उवाच ह उत्तरम् । किमिति । **उवाच वै स्म सः अगच्छन् वै ते तद्यत्राश्वमेधयाजिनो गच्छन्तीति । यत्र** यस्मिन् लोके अश्वमेधयाजिनो गच्छन्ति, **तत्** तं लोकं ते पारिक्षिता अगच्छन्निति **सः** गन्धर्वः युष्मभ्य**मुवाच वै स** (स) उक्तवान् किलेत्यर्थः । एवमुत्तरे दत्ते याज्ञवल्क्यं पुनः स एव पप्रच्छ । **क्व न्वश्वमेधयाजिनो गच्छन्तीति** । अश्वमेधयाजिनः कं लोकं गच्छन्तीत्यर्थः । एवं पुनः पृष्टो याज्ञवल्क्यस्तु एतस्यैव द्वितीयप्रश्नस्योत्तरे दत्तेऽपि, **लोकानामन्तानपृच्छामे**ति प्रथमप्रश्नस्य प्रतिवचनमन्तरेणायं न शाम्यतीति मत्वा प्रथमप्रश्नस्य, अस्य चोत्तरमाह **द्वात्रिंशतं वै देवरथाह्न्यान्ययं लोकः । देवरथः** सूर्यरथः । तस्य गत्या अह्ना(ह्नः)यावद्देशपरिमाणं परिच्छिद्यते, तत् देवरथाह्न्यम् । द्वात्रिंशद्गुणितदेवरथाह्न्यदेशपरिमितः **अयं लोकः** लोकालोकगिरिपरिवृतदेश इत्यर्थः । **द्वात्रिंशतं** द्वात्रिंशदित्यर्थः । **तं समन्तं पृथिवी द्विस्तावत् पर्येति** । तं लोकालोकवृतं लोकं **समन्त** समन्ततः द्विगुणा पृथिवी पर्येति ।

---

कथनरीतिः लोकान्तप्रश्नसमाधानेषत्प्रतीक्षां दर्शयतीत्याशयेन पूरयति **इति यदित्यादि** वाक्यम्। मूले **यद्**त्यत्र यदिति भाष्यसंमतपाठो वा?

**संभ्रमे** इति । तेन एतत्प्रश्नांशे नैर्भर्य लक्ष्यते । **वैशब्दः** किलार्थे इत्यनन्तरवाक्ये वक्ष्यति । **द्वात्रिंशतमि**ति द्वितीयाया अनन्वयात् अश्नुते इत्यध्याहारे क्लेशाच्च प्रथमाविभक्तिरूपेण विपरिणमयति **द्वात्रिंशदि**ति । **लोकालोकः** लोकस्यालोकस्य च मध्ये स्थितः । लोकः प्राणिवासस्थानं सूर्यालोकश्च । लोकालोकगिरिपर्यन्तमेव तदालोकः । अनन्तरं **त्वलोक इति** ।

**ताँ समन्तं पृथिवीं द्विस्तावत् समुद्रः पर्येति। तद्यावती क्षुरस्य धारा, यावद्वा मक्षिकायाः पत्त्रम्, तावानन्तरेणाकाशः। तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत्; तान् वायुरात्मनि धित्वा तत्रागमयत् यत्राश्वमेधयाजिनोऽभवन्निति। एवमिव वै स वायुमेव प्रशशँस। तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिः।**

---

**तां समन्तं पृथिवीं द्विस्तावत् समुद्रः पर्येति।** तां महापृथिवीं समन्ताद्द्विगुणः समुद्रः पर्येति, यं घनोदकमाचक्षते पौराणिकाः। तत्राश्वमेधलोकमार्गविवरपरिमाणमुच्यते **तद्यावती क्षुरस्य धारा—आकाशः।** क्षुरस्य धारा **यावती** यावदतिसूक्ष्मपरिमाणा, मक्षिकायाः **पत्त्रं** पतत्रं घनेन यावत्परिमाणम्, अतिसूक्ष्मम्, तावानित्यर्थः। **तत्** तत्राण्डकटाहे क्षुरधारया मक्षिकापत्त्रेण वा सदृशः **अन्तरेणाकाशः** मध्ये रन्ध्रमित्यर्थः। तत्र सूक्ष्मरन्ध्रमार्गे पारिक्षितानां गतिप्रकारमाह **तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत्।** **तान्** पारिक्षितान् इन्द्रः **सुपर्णो भूत्वा** समीचीनवाहनं भूत्वा वायवे **प्रायच्छत्** दत्तवानित्यर्थः। कञ्चिन् प्रदेशमिन्द्र एवोढ्वा तान् अनन्तरं वायवे दत्तवानित्यर्थः। **तान् वायुरात्मनि धित्वा — अभवन्निति।** वायुस्तु तान् पारिक्षितान् **आत्मनि धित्वा** स्वशरीरे स्थापयित्वा, **यत्र** ब्रह्मलोकेऽश्वमेधयाजिनो गच्छन्ति, तत्रागमयदित्यर्थः। ततश्चेन्द्रस्यापि प्रवेशायोग्यरन्ध्रमार्गद्वारा वायुः पारिक्षितान् चतुर्मुखलोकमगमयदित्यर्थः। एवं याज्ञवल्क्य उक्त्वा स्वोक्तस्य संवादं दर्शयति **एवमिव वै स वायुमेव प्रशशंस।** एवमेव खलु, **सः** भवद्भिः पृष्टो गन्धर्वः वायुमेव स्तुतवानित्यर्थः। **इव**शब्द एवार्थे; **वै**शब्दः किलार्थे। **तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिः।** **तस्मात्** गन्धर्वेण स्तुतत्वात् स वायुः समष्ट्यात्मकापञ्चीकृतभूतव्यष्ट्यात्मकब्रह्मलोकतदधस्तनलोकसञ्चारितया सूत्रात्मप्राणरूपेण सर्वनिर्वाहकतया

---

**घनेने**ति। **यावदि**ति घनात्मकं परिमाणं विवक्षितम्; न तु दैर्घ्यं वैशाल्यं वा, सूक्ष्मत्वहानेरिति भावः। **अण्डकटाहे** अण्डकपालयोः संधिस्थाने। **तानिन्द्र** इत्यत्र तेनाकाशेनेति पूरणीयम्। **सुपर्णो भूत्वे**ति। बृहदारण्यकारम्भे, 'तस्य प्राची दिक् शिरः' इत्युक्तरीत्या अश्वमेधयाजिभिः सुपर्णाकारचयनस्य कृतत्वात् सुपर्णो भूत्वा **इन्द्रः** परमात्मा एतान्नयतीति शाङ्करम्। सुपर्णेन कार्यो निक्षेपश्च स्वस्य मूर्ततया तदुपरि गन्तुमशक्तेरिति च तत्रोक्तम्। **पारिक्षितपदार्थः** शाङ्करे नोक्तः। आनन्दगिरिदर्शितस्तु—परितो दुरितं क्षीयते येन स परिक्षित् अश्वमेधः, तद्याजी पारिक्षित इत्यर्थं इहानन्वितः। **व्यष्टिः** विभज्य अष्टिः। **समष्टिः** संभूयाष्टिः। अष्टिः। अशू व्याप्तौ। क्तिन्। असु क्षेपे वा। तदा पृषोदरादित्वात् षत्वम्।

**अप पुनर्मृत्युं जयति य एवं वेद। ततो ह भुज्युर्लाह्यायनिरुपरराम ॥ २ ॥**

इति पञ्चमाध्याये तृतीयं ब्राह्मणम् ।

---

५—४.

**अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ । याज्ञवल्क्येति होवाच, यः साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः, तं मे व्याचक्ष्वेति । एष त आत्मा सर्वान्तरः । कतमो याज्ञवल्क्य सर्वान्तरः । यः प्राणेन प्राणिति**

---

व्यष्टिसमष्टिरूप इत्यर्थः ॥ व्यष्टिसमष्ट्यात्मतया वायुचिन्तनस्य फलमाह **अप पुनर्मृत्युं जयति य एवं वेद**। यो वेद, स पुनरपमृत्युं जयतीति संबन्धः। **ततो ह भुज्युर्लाह्यायनिरुपरराम**। पूर्ववदर्थः ॥ २ ॥ ५-३.

एवमस्य याज्ञवल्क्यस्य कर्मकाण्डे अविचाल्यं वैदुष्यं मत्वा जनकसभिकाः ब्राह्मणाः ब्रह्मकाण्डे वा अस्य अप्रतिभां संपादयिष्याम इति मन्यमानाः प्रष्टुं प्रावर्तन्त । तदेवाह **अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ**। नाम्ना **उषस्तः**। चक्रस्य गोत्रापत्यम् — 'नडादिभ्यः फक्' — **चाक्रायणः**। शिष्टं स्पष्टम् । **याज्ञवल्क्येति होवाच**। पूर्ववदर्थः। प्रश्नमेवाह **यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेति । अपरोक्षात्** अपरोक्षमित्यर्थः । 'सुपां सुलुक्' इत्यादिना आदादेशः । अपरोक्षत्वं नाम सर्वदेशकालसन्निहितत्वम् । देशकालसन्निकर्षे ह्यापरोक्ष्यदर्शनात् । यदपरोक्षं **साक्षात् ब्रह्म** अव्यवधानेन ब्रह्म — अगौणं मुख्यं ब्रह्मेति यावत् —, **सर्वान्तर आत्मा** च = 'आत्मा वा अरे द्रष्टव्यः श्रोतव्य' इत्यादिना दर्शनादिकर्मत्वेनोक्तश्च यः, तादृशं वस्तु मे व्याचक्ष्वेति प्रश्नः। **व्याचक्ष्व** विविच्य आचक्ष्व=प्रदर्शयेत्यर्थः । उत्तरत्र, 'न दृष्टेर्द्रष्टारं पश्ये' रिति द्रष्टव्यत्वादेरन्यत्र निषेधात् द्रष्टव्यत्वादिकमपि प्रश्नविषय इति द्रष्टव्यम् ।

याज्ञवल्क्य उत्तरमाह — **एष त आत्मा सर्वान्तरः** । ते य आत्मा स एव सर्वान्तर[1] इत्यर्थः । पृच्छत्युषस्तः **कतमो याज्ञवल्क्य सर्वान्तरः**।

1. ते य आत्मा स एव सर्वान्तर्यामी, अपरोक्षं मुख्यं ब्रह्म द्रष्टव्यश्चेत्यर्थः । पुनः पृच्छति ख. ग.

---

**अपरोक्षत्वं नाम सर्वदेशकालसंनिहितत्वमिति**। एवमेव श्रीभाष्ये "अन्तरा भूतग्रामवत् —" इति सूत्रे विवृतम् । एवं विवरणश्च चेतनान्तरव्यावृत्तविशेषणमपरोक्ष-

**स त आत्मा सर्वान्तरो योऽपानेनापानिति स त आत्मा सर्वान्तरो यो व्यानेन व्यानिति स त आत्मा सर्वान्तरो य उदानेनोदानिति स त आत्मा सर्वान्तरः; एष त आत्मा सर्वान्तरः ॥ १ ॥**

**स होवाचोषस्तश्चाक्रायणो यथा विब्रूयादसौ गौरसावश्व इति, एव-**

यदुक्तम् ते आत्मा सर्वान्तर इति, तदस्तु । किंतु कतम आत्मा सर्वान्तर इति तवाभिप्राय इति न जाने । किं देहेन्द्रियप्राणजीवादिषु कश्चिन्मे आत्मा सर्वान्तरः, उत ततोऽन्य इत्यर्थः । यद्यपि **ते आत्मेति** व्यतिरेकनिर्देशेन प्रत्यक्षदृष्टाभिमुखशरीरव्यतिरेकः सिध्यति — तथाऽपीन्द्रियाद्यन्यतमत्वसन्देहो नापाकृत इति भावः । अत्र याज्ञवल्क्य उत्तरमाह **यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः — सर्वान्तरः** । अत्र, 'एष त आत्मा सर्वान्तर' इत्यत्र उक्त इति शेषः । प्राणित्यपानितिव्यानितीत्यादौ 'रुदश्च पञ्चभ्यः' इतीट् । ('रुदादिभ्यः सार्वधातुके' इति इट् । ?) प्राणादिभिः प्राणनादिव्यापारकर्ता यः, स ते आत्मा । स एव सर्वान्तर आत्मेत्यर्थः । अत्र **प्राणेने**त्यादिना प्राणस्य करणतया निर्देशात् प्राणव्यतिरेकः सिद्धः । सुषुप्तौ बाह्याभ्यन्तरेन्द्रियोपरतावपि प्राणनादिव्यापारदर्शनात् तद्व्यतिरेकोऽपि सिद्धः । सुषुप्तौ जीवस्याप्युपरतव्यापारतया प्राणेन प्राणितृत्वाभावात्तद्व्यतिरेकोऽपि सिद्ध्यतीत्याशयः ॥ १ ॥

**स होवाचोषस्तश्चाक्रायणः** । जीवव्यतिरेको नोक्त इति मत्वा आशयमविद्वानुषस्तः पुनराहेत्यर्थः । किमिति । **यथा विब्रूयादसौ — कतमो याज्ञवल्क्य सर्वान्तरः** । यथा हि गां प्रदर्श्य, असौ गौरसावश्व इति गव्यश्वाभेदोपदेशो विरुद्धः, एवमेव, 'यत् साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वे' ति मामकप्रश्ने, 'एष त आत्मा सर्वान्तरः यः प्राणेन प्राणिती' ति प्राणनादिकर्तुर्मदात्मनो जीवस्य सर्वान्तरत्वकथनं विरुद्धवचनमेव ; जीवस्याणुत्वेन प्रतिदेहभिन्नत्वेन च सर्वान्तरत्वासंभवात् — **विब्रूयात्** विरुद्धं ब्रूयादित्यर्थः — अतः

---

पदेन विवक्षितुं युक्तमित्याशयेन । अत्रेदं सुवचम् — **अपरोक्षशब्दस्यायमन्ततो निष्कृष्टार्थः** । उषस्तस्तु एवं हृदि मन्वानोऽपि गुढमेवं पृच्छति — साक्षादपरोक्षं ब्रह्म सर्वान्तर आत्मेति ब्रह्मविदो वदन्ति । कोऽसौ ब्रह्मपदार्थः? अपरोक्षत्वसर्वान्तरत्वे हि मिथो विरुद्धे । जीवस्यैकैकस्यापि स्वं प्रति स्वस्यापरोक्षत्वेऽपि सर्वान्तरत्वाभावात् । जीवातिरिक्तमहत्त्वे सर्वान्तरत्वसत्त्वेऽपि अपरोक्षत्वाभावात् । न हि पर आत्मा तदन्येन प्रत्यक्ष्येतेति । तत्र याज्ञवल्क्य

मेवैतद्व्यपदिष्टं भवति ; यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः तं मे व्याचक्ष्वेति । एष त आत्मा सर्वान्तरः । कतमो याज्ञवल्क्य सर्वान्तरः । न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुयाः, न मतेर्मन्तारं मन्वीथाः, न विज्ञातेर्विज्ञातारं विजानीयाः; एष त आत्मा सर्वान्तरः । अतोऽन्यदार्तम् ।

---

कतमो याज्ञवल्क्य सर्वान्तरः ? स तावदविरुद्धतया वक्तव्य इत्यर्थः । उत्तरमाह — **न दृष्टेर्द्रष्टारं पश्येः — विजानीयाः** । अत्र **दृष्टेर्द्रष्टार**मित्यादिः पाकं पचतीतिवन्निर्देशः । **द्रष्टारं** कर्तारमित्यर्थः । एवं **श्रोतार**मित्यादावपि । तेन द्रष्टृत्वादेः काल्पनिकत्वनिवृत्तिः । तथाच दर्शनश्रवणमनननिदिध्यासनानां यः कर्ता जीवः, स न द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः । दर्शनादिकर्तुर्जीवादन्य एव दर्शनादिकर्मभूतः सर्वान्तर आत्मा । इन्द्रियाधीनदर्शनादीनां कर्तारं जीवं प्राणनादिकर्तृत्वेन न पश्येः, न मन्वीथा इत्यादिर्वाक्यार्थः । **एष—सर्वान्तरः** । **त आत्मे**ति मयोक्त एष एव । **अतोऽन्यदार्तम्** । अतः एष त आत्मेति मदुक्तात् परमात्मनः

---

आह—न जीवो विवक्षितः । किंतु **एष ते आत्मा सर्वान्तरः**, तव जीवस्य य आत्मा सर्वान्तरत्वभाक् स एव ब्रह्मेति । तर्हि देहेन्द्रियप्राणात्मसंघातरूपे निकाये जीवव्यतिरिक्तमात्मत्वेन वदन् किमत्रात्मत्वेन मन्यसे ? किं देहमिन्द्रियं प्राणं वेति मा शङ्किष्ठाः । **यः प्राणेन प्राणिति** तेषु देहेन्द्रियप्राणेषु यः प्रधानभूतः प्राणः तमपि करणतयोपयोज्य यः प्राणिति, स एव कश्चित् तदन्य इति । अथोषस्तः पप्रच्छ—व्याहतमेतद्वचनम्, 'यः प्राणेन प्राणिति, स मे अन्तरात्मे'ति । प्राणितीति हि प्राणभृति जीव एव व्यवहारः । अतो यच्छब्देन स एव ग्राह्यः । तस्य कथं मदन्तरात्मत्वं सर्वान्तरत्वञ्चेति । तत्र याज्ञवल्क्यः प्रत्युवाच — न मया द्रष्टा श्रोतेति प्रसिध्दो जीवः प्राणितीति विवक्षित इति । तथाच सुषुप्तिकाले निद्राण एव जीवे यः प्राणं व्यापारयन् प्राणनादि निर्वहति, स प्राणनादिकर्ता परमात्मा । प्राणितीत्याख्यातस्यापि, 'प्राणस्य प्राणम्' 'प्राणन्नेव प्राणो नाम' इत्यादिप्रयोगबलेन पचतीत्यादाविव चेतनव्यापाररूपमुख्यकर्तृत्वपरत्वावगमादिति तदाशयः । एवं श्रुत्वा च, 'जीवातिरिक्तः सर्वान्तरत्वात् सूक्ष्म एव ब्रह्मशब्दमुख्यार्थः । तस्यापरोक्षत्ववचनमौपचारिकम् । ब्रह्म सर्वं प्रत्यपरोक्षमित्यस्य सर्वदेशकालेष्वपि सन्निकृष्टमित्यर्थ इत्येवं याज्ञवल्क्यो मन्यत'इत्युषस्तो विमृश्योपरत इति । **श्रीभाष्ये** एवंरीत्या निष्कृष्य एवमर्थवर्णनमिति । कहोळप्रश्नाशयश्च कथयिष्यामः ।

**न दृष्टेर्द्रष्टार**मिति श्रुतेः दृष्टेःकर्तारमिति **भर्तृप्रपञ्चो**क्तार्थदूषणेन **शाङ्करे**ऽन्योऽर्थो वर्णितः । **श्रीभाष्ये** दृष्टेरिति पञ्चमीस्वीकारेण, 'ज्ञानातिरिक्तं ज्ञातारं न पश्येः ज्ञातुर्ज्ञानस्वरूपत्वमप्यस्ती' त्येकमर्थमुपवर्ण्य, दृष्टेः कर्तारमित्यर्थोऽपि भाषितः । द्वितीय एवार्थः जीवात्मव्यतिरिक्तत्वस्य ब्रह्मणि साधनार्थेऽस्मिन् संदर्भे स्वीकर्तव्य इतीह भाष्ये दर्शितः । अत्राधिकविवेचनमस्माभिः

**ततो होषस्तश्चाक्रायण उपरराम ॥ २ ॥**

इति पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥

---

५—५.

**अथ हैनं कहोलः कौषीतकेयः पप्रच्छ । याज्ञवल्क्येति होवाच, यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः, तं मे व्याचक्ष्वेति । एष त आत्मा सर्वान्तरः । कतमो याज्ञवल्क्य सर्वान्तरः ।**

---

**अन्यत्** व्यतिरिक्तं त्वदभिमतमौपाधिकप्राणितृत्वादिमत् जीवजात**मार्तं** दुःखीत्यर्थः । अतः स न परमात्मेति भावः । अत एव नित्यमुक्तानां कदाऽप्यस्पृष्टदुःखत्वात् **अतोऽन्यदार्त**मित्युक्तिः कथमिति शङ्का प्रत्युक्ता । तेषामिहाप्रसक्तत्वात् । **अन्य**-शब्दस्य संनिहितप्राणितृत्वादिमत्संसारिजीवपरत्वात् । यद्वा, **आर्तं** जीवाख्यं त्वद-भीष्टं न निर्विकारं वस्तु । तस्य कर्मकृतस्वभावविकारवत्त्वादिति भावः । **ततो होषस्तश्चाक्रायण उपरराम** । पूर्ववत् ॥ २ ॥                    ५–४.

**अथ हैनं कहोळः कौषीतकेयः पप्रच्छ**—**कहोळः** नामतः । कुषीतक-स्यापत्यं कौषीतकेयः । 'विकर्ण–कुषीतकात् काश्यपे' इति ढक् । अन्यत् पूर्ववत् । **याज्ञवल्क्येति होवाच** । पूर्ववत् । **यदेव साक्षादपरोक्षा**दित्यादिः प्रश्नः । तत्र याज्ञवल्क्यस्योत्तरम् **एष त आत्मा सर्वान्तरः** । पुनः प्रश्नः **कतमो याज्ञवल्क्य सर्वान्तरः** । पूर्ववदर्थः । यद्यपि प्रश्नोऽयमुषस्तेन कृत एव; दत्तोत्तरश्च । निरु-पाधिकसर्वप्राणिप्राणनहेतुत्व–निरङ्कुशसर्वान्तरत्वाचैरस्य जीवव्यावृत्तिरपि सिद्धा । 'न दृष्टेर्द्रष्टार' मित्यादिना दर्शनश्रवणादिकर्तुर्जीवस्य द्रष्टव्यत्वादिनिषेधमुखेन मुख्य-ब्रह्मत्वमपि प्रतिषिद्धम् — तथापि प्राणितृत्वस्य जाग्रदादिदशाविशेषे जीवेऽपि

---

**परमार्थप्रकाशिकायां** कृतं तत्रैव द्रष्टव्यम् ॥ **जीवेऽपि सं..वादिति** । कहोलस्य पुनः प्रष्टुर-यमाशयः — 'यत् साक्षादपरोक्षाद् ब्रह्मे'ति पूर्वप्रश्ने साक्षादिति कुत्रान्वितम् ? **साक्षाद् ब्रह्मे**-त्यन्वये ब्रह्मशब्दमुख्यार्थ इत्यर्थादपरोक्षत्वमन्यथा निरूढम् । **साक्षादपरोक्षादिति** संनिहित-

**योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति ।**

---

संभवात्, यत्किञ्चिद्देहाद्यपेक्षया आन्तरे जीवे आपेक्षिकसर्वान्तरत्वसंभवात्, ' न दृष्टेर्द्रष्टार ' मित्यत्रापि दृष्टिव्यतिरिक्तद्रष्टृनिषेधपरत्वसंभवेन ज्ञानस्वरूपस्यैव सतो जीवस्य ज्ञानगुणकत्वप्रतिपादकत्वसंभवात् उक्तधर्माणां परमात्मैकान्तिकत्वं निश्चेतुमसमर्थस्य कहोळस्य दृढतरेण व्यावर्तकधर्मेण जीवव्यावृत्तिनिश्चिचीषया पुनः प्रश्न उपपन्न इति द्रष्टव्यम् । अत एव, " व्यतिहारो विशिंषन्ति हीतरवत् " इति सूत्रे, " व्यावर्तकधर्मभूयस्तया व्यावृत्तिबुद्ध्यतिशयार्थमेकविषयकप्रश्नद्वय " मित्युक्तं व्यासार्यैः ।

तदभिप्रायं जानन् याज्ञवल्क्यो दृढतरजीवव्यावृत्तिसिद्धये व्यावर्तकधर्मान्तरमाह **योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति** । **अशनाया** बुभुक्षा। पातुमिच्छा **पिपासा** । **शोकः** इष्टानिष्टवियोगसंयोगजः । **मोहः** कामादिजनितः, अज्ञानं वा । जरामृत्यू प्रसिद्धौ । जीवस्य कर्माधीनदेहसंसर्गितया अशनायाद्यतीतत्वाभावात् तद्व्यावृत्तिः सिद्ध्यतीति भावः । यद्यपि मुक्तानां नित्यानाञ्च अशनायाद्यतीतत्वमस्ति — तथापि तेषामशनायाद्यतीतत्वस्य परमात्मसंकल्पायत्तत्वादनन्यसंकल्पाधीनाशनायाद्यतीतत्वमुपाध्यनुक्तिसिद्धं परमात्मन एव । किञ्च प्रकृते बद्ध-

---

पदान्वयेनापरोक्षशब्दमुख्यार्थविवक्षायां ब्रह्मशब्देन जीव एव वक्तव्यो भवेत्; अन्यस्य जीवं प्रत्यपरोक्षत्वाभावात् । तथा चापरोक्षत्वस्य प्रधानतया स्वीकारे सर्वान्तरत्वादिकं सर्वमन्यथा नेयमिति। तत्रोक्तं याज्ञवल्क्येन **योऽशनायापिपासे** इत्यादि । अयमाशयः — यदि अपरोक्षत्वं सर्वबद्धपुरुषं प्रत्यपि ब्रह्मणो वक्तव्यम्, तर्हि प्रागुक्तमेव। साक्षादपरोक्षमिति विवक्षायामपि अशनायाद्यतीतत्वेन प्रसिद्धं ब्रह्मैव सर्वान्तरत्वादिविशिष्टं तथाविधं सुप्रसिद्धम्। न हि अपरोक्षमित्यस्य इन्द्रियग्राह्यमित्यर्थः, जीवेऽपि तदभावात। साक्षादपरोक्षमित्यस्य, ज्ञानान्तरमद्वारीकृत्य जीवं प्रति प्रकाशमानमित्यर्थं इति चेत् — तथाप्रकाशमानत्वं जीवं प्रत्यपि ब्रह्मणः सुवचम्। कर्मणा तिरोधानादिदानीं तदभावेऽपि स्वप्रकाशं ब्रह्म मुक्तौ जीवं प्रति धर्मभूतज्ञाननिरपेक्षं प्रकाशत इति स्वीकारात्। अयमंशश्च श्रीभाष्ये **न दृष्टे**रित्यादेः प्रथमयोजनया व्यञ्जितः। प्रथमयोजनापक्षे उषस्तस्य पुनः प्रश्नेऽयमाशयः — सर्वान्तरस्यापरोक्षत्वं न भवतीति शङ्का त्वया न परिहृता; गवि अश्वत्वमिव सर्वान्तरे अपरोक्षत्वं बाधितमिति । तत्रोक्तं याज्ञवल्क्येन — आत्मा हि न केवलं ज्ञाता, किन्तु ज्ञानस्वरूपोऽपि। अतोऽपरोक्षत्वं ब्रह्मणोऽप्यव्याहतमिति। कहोलस्तु द्वितीययोजनारीत्या अर्थं मत्वा इममर्थमगृहीत्वा पप्रच्छ। अथवा अस्मान् बद्धान् प्रत्यपि अपरोक्षत्वं वर्णनीयमिति मेने। तदपि साक्षात्कारविषयत्वरूपमपरोक्षत्वं परमात्मन्यस्ति। परमात्मनो जीवा-

**एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति । या ह्येव पुत्रैषणा, सा वित्तैषणा; या वित्तैषणा, सा लोकैषणा; उभे ह्येते एषणे एव भवतः ।**

---

जीवव्यावृत्तेरेव **स त आत्मेति** निर्दिष्टस्योपदेष्टव्यतया नित्यमुक्तव्यावर्तकधर्मानुक्तावपि न दोष इति द्रष्टव्यम् ।

अथ व्यावर्तकधर्मान्तरमप्याह **एतं वै तमात्मानं विदित्वा ब्राह्मणाः— चरन्ति । तमेवैतं ( तमेतं वै ? )** सर्वान्तरमशनायाद्यतीतमेव परमात्मानमनार्तं विदित्वा, — **ब्राह्मणा** इत्यनेन क्षत्रियादिव्यावृत्तिः । **पुत्रैषणायाश्च** । इषेर्ण्यन्तात् स्त्रियां 'ण्यासश्रन्थो युच्' इति युच् । क्तिनोऽपवादः । अण्यन्तात्तु इच्छेति निपातः । इषेः स्वार्थे णिच् छान्दसः । **पुत्रैषणे**त्यनेन तृतीयाध्याये 'जाया मे स्यात् प्रजायेये' ति योक्ता, सा गृह्यते । **वित्तैषणायाश्चे**त्यनेन 'वित्तं मे स्यादथ कर्म कुर्वीये' ति योक्ता, सा गृह्यते । **लोकैषणायाश्चे**त्यनेन जायाप्रजावित्तकर्मसाध्यसकललोकेच्छा गृह्यते —, उक्तैषणात्रयात् **व्युत्थाय** एषणात्रयं हित्वा – यथाविधि संन्यस्येति यावत् – **अथ** अनन्तरं देहयात्रार्थं **भिक्षाचर्यं चरन्ति** भिक्षाटनं कुर्वन्तीत्यर्थः । इदञ्चोपलक्षणं सर्वसंन्यासाश्रमधर्मानुष्ठानस्य । अत्र अप्राप्तत्वात् पारिव्राज्यं विधीयते । **या ह्येव पुत्रैषणा सा — सा लोकैषणा** । अवर्जनीयात् परस्परसंबन्धादन्योन्याविनाभूता एतास्तिस्रोऽपीति भावः । **उभे ह्येते एषणे एव भवतः** । सर्वथा साध्यसाधनविषयकैषणाद्वयमेव

---

त्मना योगेन साक्षात्क्रियमाणत्वादित्याह याज्ञवल्क्यः । एवमपरोक्षशब्दार्थसमर्थनार्थमेव, 'एतं वै तमात्मानं विदित्वा' इति याज्ञवल्क्यवचनं कहोलप्रश्नोपरि प्रवृत्तमिति तत एवमाशय उन्नेयो भवतीत्यलम् ।

**इषेर्ण्यन्तादिति** । ईषणाशब्दो व्यवहारगतः ईषधातुतो णिचि निष्पाद्योपि उञ्छगत्याद्यर्थक एव; नेच्छार्थकः । क्लिष्टगत्या तत्परत्वेपि इह एषणाशब्दस्य निर्विवादत्वात् इष(षु) धातुरेव ग्राह्यः । तत्रापि, 'इषेरनिच्छार्थस्ये'ति वार्तिकसिद्धे एषणेति रूपे इच्छार्थकत्वभङ्ग एव। अतो ण्यन्तेषधात्वाश्रयणम् । इच्छोपधायकव्यापाररूपणिजर्थग्रहणस्यानपेक्षितत्वात् स्वयमिच्छाव्युत्थितत्वरूपवैराग्यव्यक्तये च स्वार्थे इत्युक्तम् । भिक्षाचर्यरूपव्यापारवर्णनानुगुणं रागवर्धकव्यापारव्युत्थानमेवेह सुविवक्षमिति चेत्-काममस्तु । **भिक्षाचर्यं चरन्तीति** पाकं पचतीतिवन्निर्देशः । **उभे ह्येते इति** । पुत्रैषणा हि स्वयमिव स्वपुत्रद्वारापि कर्मानुष्ठानेन स्वयं तत्तल्लोकानु-

**तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्। बाल्यश्च पाण्डित्यश्च निर्विद्याथ मुनिः।**

---

पर्यवस्यतीति भावः। ([1]सर्वथा तिस्र एताः साध्यसाधनविषयकैषणाद्वयमेव भूत्वा पर्यवस्यन्तीति भावः)। **तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्।** यस्माद्वैराग्यमावश्यकम्, तस्मात् **ब्राह्मणः** — अधीतवेद इत्यर्थः। ब्रह्म = वेद-मधीते इति **ब्राह्मणः**। जातिपरो वा — **पाण्डित्यं निर्विद्य** — ऊहापोहक्षमा धीः पण्डा। साऽस्य संजातेति पण्डितः। तस्य कर्म (धर्मः) पाण्डित्यम्, औप-देशिकार्थाधिगमरूपं विवेक(कं)निर्वेदविरक्तिफलकं [तत्पाण्डित्यं] **निर्विद्य** लब्ध्वा **बाल्येन** स्वमाहात्म्यानाविष्करणलक्षणबालस्वभावेन युक्तस्सन् **ब्रह्मणि तिष्ठासेत्** तन्निष्ठां लभेत। उपासीतेति यावत्। तथैव व्याख्यातञ्च **व्यासार्यैः**। **बाल्यश्च पाण्डित्यश्च निर्विद्याथ मुनिः**। बाल्यपाण्डित्ये पूर्वोक्ते **निर्विद्य** लब्ध्वाऽथ **मुनिः स्यात्**। आलम्बनसंशीलनलक्षणमननशीलस्स्यादित्यर्थः। ध्यानविच्छेद-दशायामपि अत्यन्तविषयोन्मुखत्वराहित्याय शुभाश्रयवस्तुसंशीलनं कर्तव्यमित्यर्थः।

1. अयं क. पाठः

---

भवाय। तदर्थमेव स्व-स्वपुत्रोभयानुरूपं विशेषतो वित्तैषणाऽपि। अत इयं त्रिविधा एषणा द्वेधा विभक्तुं शक्यते साध्यविषयिणी साधनविषयिणी चेति। **उभे एषणे एव** एषणाद्वयमेव। **एते** इति विधेयानुसारात् द्विवचनम्।

औपदेशिकार्थाधिगमो नाम स्वानुष्ठेयविद्याविशेषो यद्रूपः, अन्यूनानतिरिक्ततद्रूप-विशिष्टतदधिगमादिः। अयञ्च श्रवणमननाभ्यामुपनिषत्सु व्युत्पन्नेन ऊहापोहसमर्थेन पण्डितेन स्वाधिकारं निर्धार्य तदुचितोपायानुष्ठानप्रावण्ये सति उपदेशतः संपाद्यः। **तथैव व्याख्यातञ्चेति**। यद्यपि सहकार्यन्तरविध्यधिकरणभाष्यपरामर्शे **बाल्येन तिष्ठासेदि**त्यत्र बाल्यविधानमेव प्रतीयते; नोपासनविधानम्। अतः **तिष्ठासेदि**ति पदं स्वमाहात्म्याविष्करणरूप-व्यापारात्मकगतिनिवृत्तिपरम्, नोपासनापरमिति शङ्क्येत — अथापि अन्तराभूताधिकरणे **तिष्ठासेदि**ति विधिप्रत्ययं दर्शयता भगवता भाष्यकृता उपासनविधिरेव तत्रेष्ट इत्यवधार्य व्या-सार्यैरेवं व्याख्यातत्वात्, इहोपासनविधायकविध्यन्तराभावात्, बाल्यपदेनैव स्वमाहात्म्यानाविष्का-रस्योक्ततया बाल्यविशिष्टः **तिष्ठासेत्** निदिध्यासेत् योगं चित्तवृत्तिनिरोधं निष्ठामुपासनं कुर्यादिति विशिष्टविधानमेव युक्तम्। **अथब्राह्मण** इत्यस्य तु अथ ब्राह्मणः स्यादित्यर्थकस्य विद्याकाष्ठां लभेतेत्यर्थ इति भावः। बाल्यमात्रे विधिप्रत्ययसंक्रम इत्यङ्गीकारेऽपि तिष्ठासेदिति उपासनस्यै-वानुवाद इत्यतोऽप्युपासनार्थकत्वं नाऽऽक्षेप्यम्। वस्तुतस्तु तस्यापि विधिरिति।

**अमौनञ्च मौनञ्च निर्विद्याथ ब्राह्मणः । स ब्राह्मणः केन स्यात् । येन स्यात् , तेनेदृश एव । अतोऽन्यदार्तम् । ततो ह कहोळः कौषीतकेय उपरराम ॥ १ ॥**

इति पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥



---

**अमौनञ्च मौनञ्च निर्विद्याथ ब्राह्मणः ।** **अमौनं** मौनादन्यत्, मौनात्पूर्वनिर्दिष्टं बाल्यपाण्डित्यलक्षणं द्वयम्, **मौनम्** आलम्बनसंशीलनात्मकम्, अमौनं मौनञ्चेत्येतदुभयं निर्विद्य अथ **ब्राह्मणः** ब्रह्मविद्भवति, लब्धनिदिध्यासनो भवतीत्यर्थः । पुनः कहोळः पृच्छति **स ब्राह्मणः केन स्यात्** । **स ब्राह्मणः** त्वदुक्तो लब्धनिदिध्यासनो ब्रह्मवित् उक्तोपायादन्येन केन स्यादिति प्रश्नार्थः (श्नः) । याज्ञवल्क्यस्योत्तरम् **येन स्यात्तेनेदृश एव** । **येन** मौनपर्यन्तसाधनेन ब्राह्मणस्यादित्युक्तम्, तेनैवेदृशस्स्यात्; न केनाप्यन्येनोपायेनेत्यर्थः । **अतोऽन्यदार्तम्** । **अतः** अस्मात् परमात्मनः यदन्यत् प्राणिजातम्, तदार्तं दुःखीत्यर्थः । ततश्च यः स्वयमशनायाद्यतीत एव सन् आर्तिरूपात् संसाराद्विरक्तस्य तस्माद्ब्राह्मण इत्याद्युक्तसाधनसाध्यनिदिध्यासनं कुर्वतो जीवस्य संसारमोक्षं करोति, स एव मया **स त आत्मेत्युक्तः**, न तु त्वदभिमतो बद्धजीव इति भावः । अत एव नित्यमुक्तव्यावृत्तिश्च सिद्धेति दृढतरजीवव्यावृत्तिबुद्धिरिति द्रष्टव्यम् । **ततो ह कहोळः कौषीतकेय उपरराम** । स्पष्टोऽर्थः । अत्र —

---

**स ब्राह्मणःकेनस्यात् सः** ब्रह्मवित् केनोपायेन **ब्राह्मणःस्यात्** विद्याकाष्ठां लभेतेत्यर्थः । **ईदृश एवे**त्येवकारं **तेने**त्यनेन योजयित्वा यथाभाष्यमर्थ उक्तः । मूले **ईदृश एवे**ति वाक्ये ब्राह्मणः स्यादित्यस्यानुषङ्गः स्वरससिद्धः । तदा च येनोपायेन ब्राह्मणः स्यात्, तेनेदृश एव ब्राह्मणः स्यादिति विशिष्टवाक्यम् । **ईदृश** इत्यस्य मौनामौनविशिष्ट इत्यर्थः । ततश्च येनान्येनोपायेन ब्राह्मणः स्यात्, मौनामौनविशिष्टस्सन्नेव तेनोपायान्तरेण ब्राह्मणो भवेदित्यर्थः सुवचः । अथापि **येने**त्यस्य येनान्येनेत्यध्याहारेणार्थो मा भूत् । करणसामान्यपरत्वमेव भवतु । ईदृश इत्यस्यैव च ब्राह्मण इत्यर्थो विनाऽनुषङ्गं भवत्वित्याशयेन, “ तेनैवेदृशः ” इति योजितं **भाष्ये** । सर्वथाऽपि तात्पर्यमेकमेव । तदेवं प्रष्टुराशयः—सिद्धोपायस्य परमात्मनोऽनुग्रहेणोपायनिष्पत्तिः क्वचिदाम्नायते । अत्र च **पूर्वं व्युत्थाये**ति शमदमादेः, **भिक्षाचर्यं चरन्तीति** नित्यनैमित्तिकस्य चोपायत्वमुक्तम् । इदानीं (**बाल्यं**) पाण्डित्यं **मौनञ्चो**क्तम् । अत्र केन स्याद् ब्राह्मण इति । तत् तत् विकल्पेन साधनमिति प्रष्टा मन्यते । प्रतिवक्तुराशयस्तु — उपात्तपाण्डित्यादिविशिष्टस्सन्नेव तेन परमात्मना तेन शमदमकर्मादिना च ब्राह्मणः स्यात् । उक्तशमदमकर्मपाण्डित्यादिना मौनपर्यन्तेन सर्वेण

(१) 'बाल्येन तिष्ठासेत्' इत्यत्र बाल्यशब्दस्य भावकर्मसाधारणत्वेऽपि वयोविशेषलक्षणबालभावस्य इच्छया संपादयितुमशक्यत्वेनाविधेयत्वात् कर्मैव विधेयम्। तत्र कामचारकामवादकामभक्षत्वादिकं यत् बालस्य कर्म, यच्च डम्भादिराहित्यलक्षणं स्वमाहात्म्यानाविष्करणरूपं कर्म, तत् सर्वं बाल्यशब्देन विधेयम्; अविशेषात्। न च निषिद्धस्य कामचारादेर्विधानमयुक्तमिति वाच्यम् — वामदेव्योपासनाङ्गतया प्रार्थयमानसर्वयोषिदपरिहार[1]लक्षणनिषिद्धकर्मविधानवत् विद्याङ्गतया निषिद्धस्यापि कामचारादेर्विधानसंभवादिति पूर्वपक्षे प्राप्ते उच्यते — "अनाविष्कुर्वन्नन्वयात्"। स्वमाहात्म्यमनाविष्कुर्वन्नेव विद्वान् वर्तेत। स्वमाहात्म्यानाविष्करणलक्षणबाल्यस्यैव विद्यायामन्वयसंभवात्; 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुया'दिति विशिष्य विद्यायामपि प्रतिषिद्धस्य कामचारादेर्विद्याङ्गतयाऽन्वयासंभवादिति अङ्गपादे (३—४.) स्थितम्।

(२) तत्रैव, 'तस्मात् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिः' इत्यत्र मुनिशब्देन पाण्डित्यशब्दविहितं ज्ञानमेवानूद्यते। न ततोऽर्थान्तरं [ ज्ञानं ] विधीयते, प्रमाणाभावादिति पूर्वपक्षे प्राप्ते उच्यते — "सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्"। विधीयत इति कर्मसाधनो विधिशब्दः। सहकार्यन्तरञ्च तत् विधिश्च सहकार्यन्तरविधिः। तद्वतः = विद्यावतः तृतीयं = बाल्यपाण्डित्यापेक्षया तृतीयं मौनं विद्यायाः सहकार्यन्तरं विधीयत इत्यर्थः। न च मुनिशब्दार्थस्य पाण्डित्यशब्देनैव प्राप्तत्वात् विधेयत्वानुपपत्तिरिति वाच्यम् — पक्षेण प्रकृष्टमननशीले व्यासादौ मुनिशब्दप्रयोगात्। [2]प्रकृष्टं मननमेव मुनिशब्दार्थः। तच्च पाण्डित्यशब्दितादौपदेशिकार्थाधिगमात्, श्रवणप्रतिष्ठार्थात् मननाच्चार्थान्तरभूतमालम्बनसंशीलनात्मकमिति तस्याप्राप्तत्वेन विधानार्हत्वाद्विधेयत्वं युज्यते। पक्षः परिग्रहः। 'पक्ष परिग्रहे' — इति हि धातुः। आदर इति यावत्। तत्कृतप्रकर्षयुक्तं यत् मननं मौनम्, तदेव मुनिशब्देन विधीयते। सादर-

1. अपहार. क. 2. पक्षप्रकृष्टं. ख. ग.

---

विशिष्ट एवेदृशः स्यात् ब्राह्मणः स्यादिति सर्वसमुच्चय इति।

तदेवं दर्शनसमानाकारध्यानविषयीकार्यत्वात् साक्षादपरोक्षं ब्रह्म सर्वान्तर आत्मेति।

मननमालम्बनसंशीलनं विधीयत इत्यर्थः । विध्यादिवत् । अत्रापि विधिशब्दः कर्मसाधनः । विधिश्चासावादिश्चेति समासः । विधेयादिवदित्यर्थः । प्रस्तुतमननापेक्षया आदिर्यो विधेयः=प्राक्तनो यो विधेयः, पाण्डित्यबाल्यलक्षणः, [तद्वत् । ?] । ततश्चायमर्थः — विद्याङ्गतया यथा बाल्यपाण्डित्ये विधीयेते, एवमेव मुनिशब्देनापि आलम्बनसंशीलनलक्षणं सादरं मननं तृतीयं सहकारि विधीयत इत्यर्थः (इति?) । यद्वा विध्यादिवदित्यत्र विधिशब्देन विधेयं यज्ञदानाद्युच्यते । आदिपदग्राह्यं रागप्राप्तं श्रवणं मननञ्च । सहकार्यन्तरविधिरित्यत्र च सहकार्यन्तरेति पृथक्पदं लुप्तविभक्तिकम् । ततश्चायमर्थः — तृतीयं मौनं यत्, तत् यजनश्रवणमननवत् बाल्यपाण्डित्यापेक्षया सहकार्यन्तरं सत् अर्थान्तरं सत् विध्यर्हमित्यर्थः (मिति?) । पाण्डित्याभिन्नत्वे ह्यनुवाद्यता स्यादित्यर्थः ।

ननु बाल्यपाण्डित्यमौनशमादि – नानाश्रमधर्मभूतयज्ञाद्यङ्गिकाया विद्यायाः सर्वेष्वाश्रमेषु संभवात्, छान्दोग्ये 'अभिसमावृत्य कुटुम्बे शुचौ देशे' इत्यारभ्य, 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' इति गार्हस्थ्यधर्मेणोपसंहारः कथमित्यत्राह "कृत्स्नभावात्तु गृहिणोपसंहारः" । तुशब्दः पक्षं व्यावर्तयति । कृत्स्नेष्वाश्रमेषु ब्रह्मविद्यायाः सद्भावात् छान्दोग्ये गृहस्थेनोपसंहारः उपलक्षणार्थः । यथा छान्दोग्ये गृहस्थधर्मकीर्तनमितराश्रमधर्मोपलक्षणार्थम्, एवं बृहदारण्यके, 'भिक्षाचर्यं चरन्ती' ति संन्यासिधर्मकीर्तनमाश्रमधर्मान्तरोपलक्षणार्थमित्याह "मौनवदितरेषामप्युपदेशात्" । अत्र मौनशब्देन मौनसमभिव्याहृतसंन्यासिधर्मभूतभिक्षाचरणादिकं लक्ष्यते । मौनवत् = संन्यासिधर्मवत् इतरेऽप्याश्रमधर्माः[1] विद्याङ्गमित्यर्थः । इतरेषामप्याश्रमिणाम् 'ब्रह्मसंस्थोऽमृतत्वमेती' ति ब्रह्मविद्यायाः, मोक्षस्य चोपदेशात् इति स्थितम् ।

(३) उषस्तकहोळब्राह्मणद्वयञ्चेदं गुणोपसंहारपादे "अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत्" इत्यत्र चिन्तितम् । तत्र हि एतद्ब्राह्मण-

1. इतरोऽप्याश्रमधर्मः . क.

---

1. आदिश्चेति आदिशब्देन अविधेयस्य ग्रहणे सहकार्यन्तरविधिरित्यत्र विध्यंशे दृष्टान्तत्वायोगादेवमर्थवर्णनम् । उत्तरपक्षे तु श्रवणमननादेः सहकार्यन्तरभावमात्रे दृष्टान्तता । लुप्तविभक्तिकत्वाभावेपि सहकरणरूपक्रियांशे वत्यर्थान्वयो घटते ।

द्वयप्रतिपाद्यविद्ययोर्भेदोऽस्ति, नेति विशये पूर्वपक्षी प्रत्यवतिष्ठते, 'अन्तराभूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेत्' इति। अन्तरशब्दाद्भावप्रधानात् 'सुपां सुलुक्' इति तृतीयैकवचनस्याऽऽकारादेशे अन्तरेति रूपम्। अन्तरा=अन्तरत्वेनेत्यर्थः। अन्तराशब्दो मध्यवचनोऽप्यस्ति। तयोरेकशेषेण सूत्रेऽयमन्तरेति निर्देशः। ततश्चायमर्थः — मध्ये उषस्तब्राह्मणे, 'एष त आत्मा सर्वान्तरः' इति सर्वान्तरत्वेन निर्देशः भूतग्रामवत्स्वात्मनः, भूतग्रामवान् यः स्वात्मा = भूतग्रामशब्दिताचेतनान्तर्यामी यः प्रत्यगात्मा तद्विषयकः; 'प्राणेन प्राणिती'ति प्राणितृत्वादिजीवधर्मस्य वाक्यशेषे कीर्तनात्। कहोळब्राह्मणं तु अशनायाद्यतीतस्वरूपपरमात्मलिङ्गात् परमात्मविषयकमेव। यदि ब्राह्मणद्वयमपि परमात्मविषयं स्यात्, तर्ह्युषस्तेन पृष्टे प्रत्युक्ते च परमात्मस्वरूपे कहोळस्य पुनः प्रश्नः प्रतिवचनञ्चासङ्गतं स्यात्।' अतो वेद्यभेदाद्विद्याभेद इति पूर्वपक्षे प्राप्ते—"नोपदेशवत्"। न वेद्यभेदो युज्यते; 'यत् साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः' इति मुख्यब्रह्मत्वलक्षणसाक्षाद्ब्रह्मत्व – सर्वदेशसर्वकालसन्निहितत्वलक्षणापरोक्षत्व – सर्वान्तर्यामित्वरूपसर्वान्तरत्वरूपपरमात्मलिङ्गविशिष्टविषयत्वेन प्रश्नद्वयस्याप्येकविषयत्वावश्यम्भावात्। 'यः प्राणेन प्राणिती'ति वाक्यशेषश्रुतस्यापि निरुपाधिकसर्वप्राणिप्राणनहेतुत्वस्य परमात्मलिङ्गत्वात्, उत्तरत्र 'न दृष्टेर्द्रष्टारं पश्येः' इत्यादिना इन्द्रिया-

---

**आकारादेश** इति। क्लेशोऽयं **अन्तरत्वेने**ति भाष्यस्थं पद**मन्तरा**शब्दार्थदर्शकमिति पक्षनिर्वाहाय। अक्लेशेन निर्वहति **मध्यवचनोऽपी**ति। **अन्तरा** मध्ये – प्रश्नयोर्मध्ये इत्यर्थः। प्रश्नद्वयमध्यगतं प्रतिवचनं भूतग्रामवत्स्वात्मविषयकमिति सूत्रार्थः। मध्यगतं प्रतिवचनमित्युक्तौ प्रथमप्रतिवचनमिति सिद्ध्यति। तस्य च सर्वान्तरत्वविषयकत्वात् सर्वान्तरत्वेन प्रथमप्रतिवचनमिति भाषितम्; न तु अन्तरापदस्य अन्तरत्वेनेत्यर्थाभिप्रायेणेति। एवमेव यद्यपि भाष्यनिर्वाहो भवति – अथापि सूत्रे अन्तरत्वेनेत्यर्थस्याभिमतत्वे अन्तरत्वेनेत्येव निर्देशः स्यात्; प्रथमप्रतिवचनमित्यर्थाभिमतौ प्रथममित्येव निर्देशः स्यात्। एवमनिर्दिश्य **अन्तरे**ति निर्देशः आवृत्त्या अर्थद्वयाभिप्रायेण। अतश्च प्रश्नद्वयमध्ये अन्तरत्वेन प्रतिवचनं जीवविषयकमित्यर्थः। तत्र **मध्ये** इत्यर्थे वर्णिते प्रथममिति लाभात् द्वितीयप्रतिवचनव्यावृत्तिः। ततः तस्य परमात्मविषयकत्वं सूचितं भवति। अन्तरत्वेनेत्यर्थवचनाच्च जीवात्मनः सर्वान्तरत्वं नासंभावितमिति सूचनम् इति मन्वान आह **तयोरेकशेषेणे**ति। **एकशेषेण** एकेन पदेनावृत्त्या अर्थद्वयबुबोधयिषयेत्यर्थः। यद्वा तयोर्मध्ये एकतरस्य कस्यापि समुचितस्य शेषणेन अवधारणेनेत्यर्थः।

धीनदर्शनादीनां कर्तारं प्रत्यगात्मानं प्राणनस्य कर्तृत्वेनोक्त इति न मन्वीथा इति प्रत्यगात्मव्यावृत्तेः प्रतिपादितत्वाच्च उषस्तप्रश्नप्रतिवचनमपि परमात्मविषयमेव । अत एव कहोळप्रश्ने, 'यदेव साक्षादपरोक्षाद्ब्रह्म' ति एवकारेण पूर्वपृष्टाधिकविषयत्वं व्यावर्तितम् । नन्वेवं सति पुनः प्रश्नवैयर्थ्यमिति चेन्न — उपदेशवत् । यथा सद्विद्यायाम्, 'उत तमादेशमप्राक्ष्यः' इति प्रक्रान्ते सदुपदेशे, 'भगवांस्त्वेव मे तद्ब्रवीतु' इति, 'भूय एव मा भगवान् विज्ञापयतु' इति प्रश्नस्य, 'स एषोऽणिमैतदात्म्यमिदं सर्वं' मिति प्रतिवचनस्य च भूयो भूय आवृत्तिः सतो ब्रह्मणः तत्तन्माहात्म्यविशेषप्रतिपादनाय दृश्यते, तद्वत् एकस्यैव सर्वान्तरभूतस्य कृत्स्नप्राणिप्राणनहेतोः परस्य ब्रह्मणः अशनायाद्यतीतत्वादिरूपब्रह्मलिङ्गान्तरप्रतिपादनाय कहोळस्य पुनः प्रश्नोपपत्तेः ।

"व्यतिहारो विशिंषन्ति हीतरवत्" । हि = यस्माद्धेतोः एकमेव परमात्मानं याज्ञवल्क्यवचनानि सर्वप्राणिप्राणनहेतुत्वाशनायाद्यतीतत्वादिधर्मैर्विशिंषन्ति, तस्माद्धेतोर्वेद्यैक्याद्विद्यैक्येन व्यतिहारः = ब्राह्मणद्वयश्रुतानां गुणानामितरेतरत्रोपसंहारः कर्तव्यः । इतरवत् = यथा सद्विद्यायां वेद्यैक्यप्रयुक्तविद्यैक्यबलात्, 'भूय एव मा भगवान् विज्ञापयतु' इति, 'तथा सोम्येति होवाच' इति प्रश्नप्रतिवचनभेदेऽपि सर्वप्रतिवचनगतानां सर्वेषां धर्माणां सर्वत्रोपसंहारः, तद्वत् ।

ननु सद्विद्यायामपि प्रश्नप्रतिवचनभेदात् भेद एवास्त्वित्यत्राह — "सैव हि सत्यादयः" । सैव हि = सच्छब्दाभिहिता देवतैव हि, 'तत् सत्यं स आत्मे' ति श्रुता[1] । सत्यत्वादयश्च धर्माः, 'उद्दालको हारुणिः श्वेतकेतुं पुत्रमुवाचे' त्यारभ्य प्रवृत्तेषु नवस्वपि खण्डेषु अनुगताः दृश्यमानाः वेद्यैक्यमवगमयन्ति । अतो न दृष्टान्तासिद्धिशङ्का कार्येति स्थितम् । प्रकृतमनुसरामः ॥ १ ॥ ५—५.

1. सच्छब्दाभिहिता देवता, तत् सत्यं स आत्मेति श्रुताः सत्यत्वादयश्च ख. ग.

---

ननु ब्रह्मज्ञस्योषस्तस्य याज्ञवल्क्यवाक्यतः, जीव एव द्रष्टव्यः श्रोतव्यो मन्तव्यो विज्ञातव्य इति बुद्धेरजातत्वेन किमिति, 'न पश्येः, न शृणुयाः' इत्येवमप्रसक्तप्रतिषेध इत्याशङ्कायाम्, दृष्टिमित्यादिशब्दप्रयोगसंपातायातं **पश्येरि**त्यादि ; न मन्वीथा इत्येव विवक्षितमिति दर्शयितुमुक्तमिह, भाष्ये च **न मन्वीथा** इति । अन्यथा तु **परमार्थप्रकाशिको**क्तं भाव्यम् ।

५—६.

अथ हैनं गार्गी वाचक्नवी पप्रच्छ । याज्ञवल्क्येति होवाच यदिदं सर्वमप्स्वोतश्च प्रोतश्च, कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति । वायौ गार्गीति । कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेति । अन्तरिक्षलोकेषु गार्गीति । कस्मिन्नु खल्वन्तरिक्षलोका ओताश्च प्रोताश्चेति । गन्धर्वलोकेषु गार्गीति । कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्चेति । आदित्यलोकेषु गार्गीति । कस्मिन्नु खल्वादित्यलोका ओताश्च प्रोताश्चेति । चन्द्रलोकेषु गार्गीति । कस्मिन्नु खलु चन्द्रलोका ओताश्च प्रोताश्चेति । नक्षत्रलोकेषु गार्गीति । कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति ।

---

**अथ हैनं गार्गी वाचक्नवी पप्रच्छ**। गर्गस्य गोत्रापत्यं गार्ग्यः। 'गर्गादिभ्यो यञ्'। स्त्रीत्वविवक्षायाम्, 'यञश्चे'ति ङीप्। 'यस्येति च' इत्यकारलोपः। 'हलस्तद्धितस्य' इति यकारलोपः। गर्गगोत्रजा स्त्रीत्यर्थः। **वाचक्नवी**। वचक्नुर्नाम ऋषिः। तस्यापत्यं स्त्री। अणि ङीपि आदिवृद्धौ ओर्गुणे अवादेशे, 'यस्येति चे' त्यकारलोपे वाचक्नवी। वचक्नुपुत्रीत्यर्थः। अन्यत् स्पष्टम्। **याज्ञवल्क्येति होवाच**। पूर्ववत्। **यदिदं सर्वमप्स्वोतश्च प्रोतश्च**। यदिदं दृश्यमानं पार्थिवं सर्वं धातुजातं कारणभूतास्वप्सु **ओतश्च प्रोतश्च** दीर्घतन्तुषु पटवदोतम्, तिर्यक्तन्तुषु पटवत् प्रोतश्चास्ति — अप्सु प्रोतत्वाभावे पार्थिवो धातुः सक्तुमुष्टिवद्विशीर्येतेति भावः — ता आपः कस्मिन्नु खल्वोताः प्रोताश्चेति प्रश्नः। तत्र याज्ञवल्क्यस्योत्तरं **वायौ गार्गीति**। हे गार्गि! त्वदुक्ता आपः वायौ ओताश्च प्रोताश्चेत्यर्थः। एवमुत्तरत्रापि प्रश्नप्रतिवचनरूपतया वाक्यानि नेयानि।

---

**ओतश्च प्रोतश्च** विस्तारतो वैशाल्यतश्च कार्त्स्न्येन तदाश्रितम्। मूले **यदि**त्यस्य प्रतिसंबन्धि पदं तत्कारणभूता इत्येवम् **आप** इत्यत्राध्याहार्यम्। तदाह **ता** इति। **वायाविति**। अपामग्नावोतत्वमुपेक्ष्यते, अग्नेः पार्थिवमाप्यं वा किञ्चिदनाश्रित्य आत्मलाभाभावादिति **शाङ्करे**। एतदुक्तं भवति — अग्निः काष्ठादिजन्मा। अपामुपादानं तु तेजस्सामान्यम्। तत्र ता ओताः प्रोताश्च। अथाप्यत्र व्यष्टिप्रपञ्चस्यैव प्रस्तूयमानतया अन्तरिक्षलोकगन्धर्वलोकादिनिर्देशबलेन ज्ञायमानतया सक्तूनामिव पृथिव्याः पिण्डीभावस्य तोयाधीनतायाः, अपामन्तरिक्षमार्गेण मेघमण्डलप्राप्त्यावर्थं वायावोतत्वादेश्चानुभूयमानतया, अग्न्यधीनास्थितेरननुभूयमानतया च वायोरनन्तरनिर्देशः, अग्नेस्त्यागश्चेति।

**देवलोकेषु गार्गीति । कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेति । इन्द्रलोकेषु गार्गीति । कस्मिन्नु खल्विन्द्रलोका ओताश्च प्रोताश्चेति । प्रजापतिलोकेषु गार्गीति । कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति । ब्रह्मलोकेषु गार्गीति । कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति । स होवाच गार्गि! माऽतिप्राक्षीः; मा ते मूर्धा व्यपप्तत् । अनतिप्रश्न्यां वै देवतामतिपृच्छसि गार्गि! माऽतिप्राक्षीरिति ।**

---

**प्रजापतिलोकः** दक्षादिलोकः । **ब्रह्मलोकः** चतुर्मुखलोकः । न चात्राबादेः स्वयोनिभूतवाय्वादौ ओतत्वादिसंभवेऽपि, अधःस्थितानामन्तरिक्षलोकादीनामुपरितनेषु गन्धर्वलोकादिष्वोतत्वप्रोतत्वे अनुपपन्ने इति शङ्क्यम् — पर्वतानामुपरिस्थितानां क्षितिधारकत्ववत्, ऊर्ध्वस्थितस्य ध्रुवस्य ज्योतिश्चक्रधारकत्ववच्च एतदुपपत्तेः । [ इति द्रष्टव्यम् । ] **स होवाच** । स याज्ञवल्क्य उवाच हेत्यर्थः । किमितीत्यत आह **गार्गि मातिप्राक्षीर्मा ते मूर्धा व्यपप्तत्** । हे गार्गि! ब्रह्मलोकमप्यतिक्रम्य तत ऊर्ध्वस्य तदाधारस्य प्रश्नं मा कुरु ; ते मूर्ध्नः पतनं मा भूदित्यर्थः । पुनः पृच्छसि चेत्, पतिष्यतीति भावः—**अपप्तत्** । लुङि लृदित्वादङ् । 'पतः पुम्' इति पुमागमः — तत् कुत इत्यत्राह **अनतिप्रश्न्यां वै — माऽतिप्राक्षीः** । [[1]प्रश्नमर्हतीति प्रश्न्या] नियमाद्युपेतप्रश्नमर्यादामतिक्रम्य वर्तमानः प्रश्नः **अतिप्रश्नः** । आक्षेप इति यावत् । अतिप्रश्नमर्हतीत्यति**प्रश्न्या** आक्षेपार्हेत्यर्थः । सा न भवतीत्यनतिप्रश्न्या । आक्षेपमुखेन ज्ञातुमयोग्यां परदेवतामाक्षेपमुखेन ज्ञातुमिच्छसी-

1. इदमधिकं ख. ग. कोशयोः ।

---

घृणया स्त्रियं शप्तुमनिच्छता भर्त्सनमात्रं क्रियते **गार्गि मातिप्राक्षीरिति** । परदेवतां कथञ्चिदेवं पृष्ट्वा ज्ञातुमिच्छसि । सा तावत् देवता त्वया क्रियमाणस्यातिप्रश्नस्यानर्हेति । आगमेन प्रष्टव्यां देवतामनुमानेन पृच्छसीत्ययमतिप्रश्न इति शाङ्करम् । अतिप्रश्न आक्षेपः । तन्मुखेन ज्ञातुमयोग्यत्वादनतिप्रश्नयत्वमत्रोक्तम् । तर्हि उद्दालकपराजयात् पश्चात् पुनः गार्गी कथमेवं पृच्छतीति चेत् — अकर्तव्यस्यापि प्रश्नस्य ब्राह्मणानामनुमतिमवष्टभ्य धैर्येण करणमिति निर्वाहः कार्य इत्याहुः । अत्रेदं विवक्षितं स्यात् — गार्ग्या उपर्युपरि आधारप्रश्ने प्रवर्तिते ब्रह्माण्डान्तरवस्थिताः ब्रह्मलोकपर्यन्ता लोकाः क्रमेणोक्ताः, तया स्वीकृताश्च । अथ तु, 'कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चे' ति तत्प्रश्नो न युक्तः, चतुर्मुखलोकोपरि ब्रह्माण्डान्तर्लोकाभावात् । अतो यां देवतामतिक्रम्य ब्रह्माण्डान्तःस्थितविषयः प्रश्नो न कर्तुं शक्यते, तां चतुर्मुखदेवता-

**ततो ह गार्गी वाचक्नव्युपरराम ॥ १ ॥**

इति पञ्चमाध्याये षष्ठं ब्राह्मणम् ॥

५—७.

**अथ हैनमुद्दालक आरुणिः पप्रच्छ । याज्ञवल्क्येति होवाच, मद्रेष्ववसाम पतञ्जलस्य काप्यस्य गृहेषु यज्ञमधीयानाः । तस्यासीद् भार्या**

---

[त्यतो यद्येवं पुनः पृच्छसि ततस्ते मूर्धा पतिष्यती] त्यर्थः। [स्वरूपसत्ता न ते सिद्ध्येदिति भावः ।] यद्यपि ब्रह्मलोकाधारविषयः प्रश्नो न परदेवताविषयः; अपि तु अव्याकृताकाशविषयः — तथाऽपि तदनन्तरप्रश्नः परदेवताविषयो भविष्यतीति दूरदृष्ट्या ब्रह्मलोकाधारप्रश्नमेव प्रतिचिक्षेपेति द्रष्टव्यम् ।

**ततो ह गार्गी वाचक्नव्युपरराम** । [पूर्ववदर्थः । ततश्चेयं वाचक्नवी परदेवतां स्वयं जानन्त्यपि ऋषेर्भीतेत्यूह्यम् ] ॥ १ ॥ ५—६.

**अथ हैनमुद्दालक आरुणिः पप्रच्छ** । नाम्ना **उद्दालकः** । अरुणस्यापत्यमारुणिः । शिष्टं स्पष्टम् । **याज्ञवल्क्येति होवाच** । पूर्ववदर्थः । **मद्रेषु— यज्ञमधीयानाः** । वयं मद्रेषु देशेषु, गोत्रतः काप्यस्य, नाम्ना पतञ्जलस्य गृहेषु— 'गृहाः पुंसि च भूम्न्येवे' ति एकस्मिन् बहुवचनम् — **यज्ञं** कल्पसूत्रमधीयानाः **अवसाम** उषितवन्त इत्यर्थः। **तस्यासीद्भार्या गन्धर्वगृहीता । तस्य** काप्यस्य

---

मतिक्रम्य पृच्छति सा । तदनुपपन्नम् । तथा या परा देवता तया प्रष्टव्याऽभिमता, सा एवमतिप्रश्नार्हा न भवति। न खलु ब्रह्माण्डान्तर्गतब्रह्मलोकमात्राधारत्वेन किञ्चित् प्रसिद्धमस्ति, यन्मुखेन परदेवता प्रतिबोध्या स्यात् । अव्याकृताकाशमुखेन परदेवता यद्यपि प्रतिबोध्या भवति— अथाप्यव्याकृताकाशविषयकः प्रश्नो ब्रह्मलोकमात्रमेवं गृहीत्वा न कर्तुं युक्त इति । अतो गार्गी संप्रत्युपरराम । पश्चात्तु केन प्रकारेण प्रश्नो न दोषाय स्यादिति विमृश्य ब्रह्मलोकमात्रग्रहणमुपेक्ष्य, व्यष्टिसमष्टिसर्वकार्यजातग्रहणेन आधारं प्रक्ष्यति । प्रत्युत्तरयिष्यति च याज्ञवल्क्यः प्रश्नं समुचितं प्रवृत्तं परिकल्पयन्निति । भाष्ये च **आक्षेप** इत्यनेनेदमुक्तं भवति — ब्रह्माण्डान्तर्वर्तिलोकेषु क्रमेण कथ्यमानेषु ब्रह्मलोकोपरि लोकाभावे सति त्वया कृतः प्रश्नः प्रष्टव्यतत्त्वगौरवहानिकरत्वादाक्षेपरूप एव स्यात्। नैवं प्रश्नो युज्यत इति ।

**उद्दालक आरुणिः** । अयं बहुविद्यावित्; छान्दोग्ये सद्विद्यामधुविद्यापञ्चाग्निविद्यावैश्वानरविद्यासु एतत्प्रस्तावात् । विष्णुपुराण (३—५) वर्णितरीत्या प्रथमतो वैशम्पायनशिष्यभूतः, पश्चादादित्यादधीतापूर्वयजुर्वेदो याज्ञवल्क्योऽयमस्य गौतमस्यांशतः शिष्य इति चात्रैवोपनिषदि (८—३—७ ; ८—५—४) ज्ञायते ।

**गन्धर्वगृहीता । तमपृच्छाम, कोऽसीति । सोऽब्रवीत्, कबन्ध आथर्वण इति ॥ १ ॥**

**सोऽब्रवीत् पतञ्जलं काप्यं याज्ञिकांश्च, 'वेत्थ नु त्वं काप्य! तत् सूत्रम्, येनायञ्च लोकः परश्च लोकः सर्वाणि च भूतानि संदब्धानि भवन्ती' ति । सोऽब्रवीत् पतञ्जलः काप्यो नाहं तद् भगवन् वेदेति॥ २ ॥**

**सोऽब्रवीत् पतञ्जलं काप्यं याज्ञिकांश्च, वेत्थ नु त्वं काप्य! तमन्तर्यामिणम्, य इमञ्च लोकं परञ्च लोकँ सर्वाणि च भूतानि योऽन्तरो यमयतीति । सोऽब्रवीत् पतञ्जलः काप्यो नाहं तं भगवन् वेदेति ॥ ३ ॥**

---

पतञ्जलस्य । **तमपृच्छाम** । तं ग्रहीतारं गन्धर्वं वयं पृष्टवन्तः । किमिति । त्वं कोसीति । **सोऽब्रवीद्**गन्धर्वः । किमिति । अहं **कबन्ध आथर्वण** इति । नाम्ना कबन्धः, अथर्व[णः]पुत्रश्चेत्यर्थः । इतरत् स्पष्टम् ॥ १ ॥

**सोऽब्रवीत् पतञ्जलं काप्यं याज्ञिकांश्च** । **सः** गन्धर्वः **याज्ञिकान्** यज्ञाध्येतॄनस्मान्, तमध्यापकं काप्यञ्चाब्रवीदित्यर्थः । तदेवाह **वेत्थ नु त्वं काप्य तत् सूत्रं—भवन्तीति** । येन सूत्रेण **अयञ्च लोकः** भूलोकादिः, **परश्च लोकः** ऊर्ध्वलोकाः, चतुर्दशभुवनानि, तत्स्थानि च सर्वाणि भूतानि संदब्धानि—येन सूत्रेण, सूत्रेण पुष्पाणीव, ग्रथ (न्थ) नेन विष्टब्धानीत्यर्थः — तदेतादृशं त्वं वेत्थ किमिति प्रश्नः । **सोऽब्रवीत् पतञ्जलः काप्यो नाहं तद्भगवन् वेदेति।** स्पष्टोऽर्थः ॥ २ ॥

एवं सूत्रं पृष्ट्वा अन्तर्यामिणं पप्रच्छेत्याह—**सोऽब्रवीत् पतञ्जलं काप्यं याज्ञिकांश्च** । पूर्ववदर्थः । प्रश्नमेवाह **वेत्थ नु त्वं काप्य तमन्तर्यामिणं — वेदेति** । य इमञ्च लोकं परञ्च लोकमन्तरो यमयति, सर्वाणि च भूतानि योऽन्तरो यमयतीति यच्छब्दद्वयान्वयः । शिष्टस्य स्पष्टोऽर्थः ॥ ३ ॥

---

**भार्येति** । पूर्वं भुज्युप्रश्ने दुहिता गन्धर्वगृहीतोक्ता; इह भार्या । स गन्धर्वः सुधन्वा आङ्गिरसः; अयं कबन्ध आथर्वणः ।

**वेत्थ नु त्वमिति** । एकमेकवचनादिबलात् पतञ्जलं प्रत्येव प्रश्नः । याज्ञिकानामपि श्रोतृत्वात्तु याज्ञिकांश्चेत्युक्तम् । यद्वा सर्वान् प्रत्येव प्रश्नः । गुरुसंबोधनं शिष्यविशिष्टगुर्वभिप्रायम् ।

**सोऽब्रवीत् पतञ्जलं काप्यं याज्ञिकांश्च, यो वै तत् काप्य! सूत्रं विद्यात् तञ्चान्तर्यामिणमिति, स ब्रह्मवित् स लोकवित् स देववित् स वेदवित् स भूतवित् स आत्मवित् स सर्वविदिति। तेभ्योऽब्रवीत्। तदहं वेद। तच्चेत् त्वं याज्ञवल्क्य! सूत्रमविद्वाँस्तञ्चान्तर्यामिणं ब्रह्मगवीरुद्-जसे, मूर्धा ते विपतिष्यतीति ॥ ४ ॥**

**वेद वा अहं गौतम! तत् सूत्रं तञ्चान्तर्यामिणमिति ।**

---

**सोऽब्रवीत् पतञ्जलं काप्यं याज्ञिकांश्च** । पूर्ववत्। **यो वै तत् काप्य सूत्रं विद्यात् तञ्चान्तर्यामिणमिति** । इतिशब्दः प्रकारवचनः । हे काप्य ! तत् सूत्रम्, तञ्चान्तर्यामिणमस्मत्पृष्टम् इति अस्मदवगतप्रकारेण यो विद्यादित्यर्थः। **स ब्रह्म-वित्—सर्वविदिति**। स एव परब्रह्मवित् । स एव तन्नियम्यलोकदेव[वेद?] भूत[1]-वित् । स एव आत्मवित् परमात्मवित्। परब्रह्मणः परमात्मत्वप्रकारं स एव जाना-तीत्यर्थः। स एव च सर्ववित् इत्येवं(वम् ?) **तेभ्योऽब्रवीत्**। तेभ्यः काप्ययाज्ञिकेभ्यः स गन्धर्वोऽब्रवीदित्यर्थः। [ 'अज्ञातज्ञानार्थोऽयं प्रश्नः; न वादिपराभवार्थः। अज्ञातान्त-र्यामिकथनञ्च सनियमकप्रश्नसाध्यम् । अतो नैवं प्रष्टव्य' मित्याशङ्कां वारयति[1] ] **तदहं वेद** । तत् सर्वमहं जाने इत्यर्थः । [ततो नाज्ञातज्ञानार्थोयं मम प्रश्न इति भावः[2] ।] **तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वान्—विपतिष्यतीति** । तत् सूत्रं तञ्चान्तर्यामिणमविदित्वा त्वं हे याज्ञवल्क्य! **ब्रह्मगवीः** ब्रह्मविद्यापणबन्धभूताः गाः —'गोरतद्धितलुकी' ति टचि[3] 'टिड्ढाणञ्' इत्यादिना ङीप्—**उदजसे चेत्** काल्यसि चेत्, ते मूर्धा पतिष्यतीति याज्ञवल्क्यमुद्दालकः शशापेत्यर्थः ॥ ४ ॥

अत्र, **वेद वा अहं गौतम तत्सूत्रं तञ्चान्तर्यामिण**मिति याज्ञवल्क्यस्य प्रतिवचनम्। हे गौतम! तत् सूत्रं तञ्चान्तर्यामिणं त्वया पृष्टमहं वेदैवेत्यर्थः। एव-

1. तन्नियाम्यदेवलोकभूतादि. क. 2. कुण्डलितद्वयं क. कोशमात्रे। 3. लुकि समासान्ते, क.

**यो वा इदं कश्चिद् ब्रूयात् वेद वेदेति ; यथा वेत्थ, तथा ब्रूहीति ॥ ५ ॥**

**स होवाच – वायुर्वै गौतम! तत् सूत्रम्। वायुना वै गौतम! सूत्रेणायञ्च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति। तस्माद्वै गौतम! पुरुषं प्रेतमाहुः, व्यस्रँसिषतास्याङ्गानीति। वायुना हि गौतम! सूत्रेण संदृब्धानि भवन्तीति। एवमेवैतत् याज्ञवल्क्य!। अन्तर्यामिणं ब्रूहीति ॥ ६ ॥**

---

मुक्त उद्दालक उवाच **यो वा इदं — ब्रूहीति**। यः **कश्चिद्वै** सर्वज्ञदम्भोऽपि कश्चित् लोके अहमिदं वेद इदं वेदेति केवलं वाचा ब्रूयादपि । तेन किं फलमित्यर्थः। अतस्त्वं **यथा वेत्थ तथा ब्रूहि**। येन प्रकारेण वेत्थ, तेन प्रकारेण ब्रूहि। किम्, अहं वेदेति केवलविकत्थनवचसा वञ्चयसीत्यर्थः ॥ ५ ॥

**स होवाच वायुर्वै गौतम तत्सूत्रम्**। हे गौतम! तव् सूत्रं त्वया पृष्टं वायुरेवेत्यर्थः। वैशब्दोऽवधारणे। वायोरेव सर्वलोकभूताधारत्वं सूत्रलक्षणमस्तीत्याह **वायुना वै — भवन्ति**। उक्तेऽर्थे गमकमाह **तस्माद्वै गौतम — भवन्तीति**। यस्मात् सर्वाणि वायुना ग्रथितानि, तस्मादेव हेतोः उत्क्रान्तप्राणस्य पुरुषस्याङ्गानि उत्सूत्रमाल्यानीव विस्रस्तानि भवन्ति। अत एव जनाः मृतस्याङ्गानि व्यस्रंसिषतेत्याहुः। अतो वायुना संदृब्धानि सर्वलोकभूतानीति स याज्ञवल्क्य उवाचेति संबन्धः। **व्यस्रंसिषत**। लुङ्। उक्तमर्थमुद्दालकः अङ्गीकरोति। **एवमेवैतद्याज्ञवल्क्य**। भवत्वेतदेवम्। इतरद् ब्रूहीत्याह **अन्तर्यामिणं ब्रूहीति**। स्पष्टोऽर्थः ॥ ६ ॥

---

गार्गीब्राह्मणे हि अन्तरिक्षलोकस्य वायूपजीव्यत्वकथनात् तदुपरि अनेकलोकवर्णनाच्च वायोर्निकर्षः प्रतीतः पतञ्जलप्रश्नसमाधानमुखेन निरस्यते; परदेवता च तदा अनुक्ता प्रख्याप्यते। ब्रह्माण्डान्तर्गतानां सर्वेषां लोकानाम्, एकोपरि अन्यो यथा न पतेत् तथा बाह्येन वायुना, तत्रत्यप्राणिनाञ्च सर्वेषामाभ्यन्तरेण च विष्टब्धत्वात् मूर्तभूतत्रयोपादानस्य वायोर्वरिष्ठत्वम्। 'तस्मिन्नपो मातरिश्वा दधाती' त्युक्तरीत्या तस्य तद्विष्टब्धस्य च तद्विकस्य च सर्वस्यान्तर्यामी परमात्मेति चात्र निगद्यते।

पृथिव्यबग्न्यन्तरिक्षवायुद्य्वादित्यदिक्त्रयम्।
चन्द्रतारक आकाशे तमस्यर्चिषि भूततः ॥ १ ॥
प्राणे वाच्यक्षिणि श्रोत्रे चित्ते त्वच्यात्मवाङ्गविदे।
विज्ञाने रेतसीहोक्तस्त्वमृतोऽन्येषु चेतरैः ॥ २ ॥

**यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद, यस्य पृथिवी शरीरम्, यः पृथिवीमन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः ॥ ७ ॥**

---

याज्ञवल्क्य आह **यः पृथिव्यां तिष्ठन्—एष त आत्माऽन्तर्याम्यमृतः**। पृथिव्यां स्थितः तदन्तर्गतः तदवेद्यः तच्छरीरकश्च सन् योऽन्तःप्रविश्य प्रवृत्तिनिवृत्तिलक्षणनियमनं करोति, एषोऽन्तर्यामी ते अमृत आत्मा निरुपाधिकामृतत्वशाली आत्मेत्यर्थः। अत्र ते आत्मेति व्यतिरेकनिर्देशादन्तर्यामिणो जीवव्यतिरेकः सिद्धः, अमृतत्वविशेषणाच्च सिद्ध्यति। तद्धि विशेषणं जीवव्यावृत्त्यर्थम्। अन्तर्यामी ते आत्मेत्युक्ते आत्मशब्दस्य स्वरूपवचनत्वशङ्कया जीवव्यावृत्तिर्न प्राप्नोतीति हि अमृत इत्युक्तम्। जीवस्यामृतत्वसिद्धेः परमात्मप्रसादाधीनत्वान्न तत् तस्य निरुपाधिकमिति निरुपाधिकामृतत्वशाली आत्मा परमात्मैव। अत्र अमृतत्वस्योपाध्यनुक्त्या निरुपाधिकत्वसिद्धिर्द्रष्टव्या।

---

**पृथिव्या** इति पञ्चमी; **अद्भ्योऽन्तर** इत्याद्यनुरोधात्। **अन्तर** इत्यस्य सूक्ष्म इति वा अबहिरिति वाऽर्थः। तेन पृथिव्यन्तर्गतत्वसिद्धिः। एवञ्च **पृथिव्यां तिष्ठन्निति** बहिः स्थितिरुच्यते। शेषमस्मदीये **आचार्यभाष्यतात्पर्ये** विस्तरेण द्रष्टव्यम्। **यस्य पृथिवी शरीरमिति**। ननु शरीरत्वं नाम नेन्द्रियाश्रयत्वमर्थाश्रयत्वादि वा; नैयायिकोक्तस्य तस्यास्माभिरनभ्युपगमात्। तत्र यस्येति षष्ठ्यर्थस्य निरूपितत्वस्य सुखमनन्वयाच्च। न चान्तःप्रविश्यनियम्यत्वम्; तस्य **यः पृथिवीमन्तरो यमयतीत्युक्ततया** पौनरुक्त्यादिति चेत् — न — अनुक्तयोः नियमेन धार्यत्वशेषत्वयोरेव गोबलीवर्दन्यायेन शरीरपदविवक्षितत्वात्। चेतनापृथक्सिद्धद्रव्यत्वरूपं वा शरीरत्वमत एव **न्यायसिद्धाञ्जनदर्शितमिति** कृत्वा तदस्तु इह विवक्षितम्। तेनैव सर्वदा **नियम्यत्वधार्यत्वादेरर्थात्** सिद्ध्या न शरीरपदस्यानेकार्थकल्पनापत्तिरूपदोषोऽपि।

पृथिवीपदस्य अचेतनपृथिवीमात्रपरत्वे तस्याः वेदितृत्वप्रसक्त्यभावेऽपि, 'यं पृथिवी न वेदे, त्युक्तिः 'न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि' इत्यत्र 'नान्तरिक्ष' इत्यादिवत् सिद्धानुवादमात्रम्। आत्मपर्याये, 'यमात्मा न वेदे' ति अवश्यं वक्तव्यम्। तथा च परमात्मनो वेदनविषये चेतन आत्मा पृथिव्याद्यचेतनतुल्य इति व्यञ्जनमनुवादफलम्। अननुवादत्वमभिसंधाय, 'यं पृथिवी न वेदे' त्यस्य, पृथिव्यभिमानिदेवता न वेदेत्यर्थस्वीकारे, 'यः पृथिव्यां

अत्र प्रश्नानुरूप्येण, 'इमं च लोकं परञ्च लोकं सर्वाणि च भूतानि योऽन्तरो यमयत्येष त आत्मान्तर्यामी' इति एकेनैव निर्देशेन सर्वान्तर्यामिणः उद्दालकं प्रति, 'ते आत्मे' त्यात्मत्वप्रतिपादनसंभवात्, 'यः पृथिव्यां तिष्ठन्', 'योऽप्सु तिष्ठन्' इत्यादिपर्यायोपदेशबाहुल्यं किमर्थमिति चेन्न — पृथिव्यादिके एकैकवस्तुनि प्रत्येकं परिपूर्णत्वेन नियन्तृतया स्थितिज्ञापनार्थत्वेन सार्थक्यात्। 'परिपूर्णत्वञ्च अणुमात्रेऽपि वस्तुनि स्थितस्य निरवधिकषाड्गुण्यविशिष्टतया प्रतिपत्तियोग्यत्वमिति **व्यासार्यैर्वाक्यान्वयाधिकरणे** वर्णितम्। इदं हि पूर्णत्वं नैकेन पूर्वोक्तरीत्या निर्देशेन सिद्ध्यति। ननु, 'सर्वाणि च भूतानि योऽन्तरो यमयति, तं मे ब्रूही' ति, 'सर्वभूतानामप्यन्तर्यामी एकोऽस्ति, स वक्तव्य' इति पृष्टवन्तमुद्दालकं प्रति, 'पृथिव्यन्तर्याम्येव ते अन्तर्यामी, जलान्तर्याम्येव ते अन्तर्यामी' ति पृथिव्याद्यन्तर्यामिणश्च उद्दालकान्तर्यामिणश्चाभेदबोधनमसङ्गतम्; अन्तर्याम्यैक्यस्य प्रागेव निश्चितत्वात्। अतः **स त आत्मे**त्यत्रात्मशब्दो नान्तर्यामिवचनः; अपि तु स्वरूपवचन इत्येव युक्तमिति चेन्न — आत्मशब्दस्य शेषित्वाधारत्वाद्यर्थकत्व-

---

तिष्ठन्' इत्यादावप्यैकरूप्याय पृथिव्यभिमानिदेवतायां तिष्ठन्नित्यर्थं इष्यताम्। तर्हि अचेतनान्तर्यामित्वं न सिद्ध्येदिति चेत्—अचेतनविशिष्टदेवतारूपचेतनेऽन्तर्यामित्वम् उच्यमानम् अबाधात् विशेष्यविशेषणोभयनिरूपितं स्वरसतः सिद्धमिति कथनीयम्। तर्हि, य आत्मनि तिष्ठन्निति पर्यायः किमर्थं इति चेत्—अभिमानिदेवतातिरिक्तजीवानां शुद्धजीवात्मस्वरूपस्य च तच्छरीरत्वप्रतिबोधनायेति। परन्तु पृथिव्यादिपदमभिमानिदेवतायां न मुख्यवृत्तम्। श्रुतप्रकाशिकायामन्तर्याम्यधिकरणे, 'सर्वेषु वेदेषु', 'सर्वेषु यज्ञेषु' इति वेदयज्ञपर्याययोरभिमानिदेवतापरत्वमभिहितम्; गुणक्रियामात्रविवक्षायां शरीरत्वायोगात्। द्रव्यस्यैव शरीरत्वात्। तेनान्यत्राभिमानिदेवतापर्यन्तविवक्षा नास्तीति ज्ञायते। पृथिव्यादितेजःपर्यन्तपाठानन्तरम् इत्यधिदैवतमित्युपसंहारात् पृथिव्यादिपदानां देवतापरत्वेपि, भूतपदस्य अचेतनविशिष्टचेतनार्थकतया यः **सर्वेषु भूतेषु** इत्यत्र भूतपदस्य च जीवपर्यन्तत्वेऽपि आध्यात्मिकप्राणादिपर्यायेषु प्राणादिपदानि उपकरणमात्रपराणीत्येव स्वरसमिति वा स्वीक्रियतामित्यलम्।

*व्यासार्यैरिति। **भट्टपराशरपादैश्च नामसहस्रभाष्ये** पूर्णत्वं स्वतएवावाप्तसमस्तकामत्वमित्युक्तम्। यथा हि जीवः एकस्मिन् शरीरे निविष्टोऽन्यशरीरावच्छेदेन कर्तव्यं न कर्तुं क्षमते, परिकरवैकल्यात्—न तथाऽयम्; संकल्पमात्रसाध्यसर्वकार्यत्वादित्यादि भाव्यम्।

याऽप्युपपत्तेः **ते आत्मे**ति व्यधिकरणनिर्देशस्वारस्यभङ्गायोगात् । 'पतिं विश्वस्ये' त्यादिवाक्यैर्विश्वशेषिणः कस्यचिद्वगतत्वात् तेन वाक्येन प्रतिपन्नस्ते आत्मा = ते शेषी पृथिव्यादीनामन्तर्यामीति प्रघट्टार्थः ॥ ७ ॥

---

**ते शेषी पृथिव्यादीनामन्तर्यामीति प्रघट्टार्थ** इति। यथा सूत्रस्य सर्वलोकसर्वभूतविष्टम्भकत्वं प्रष्ट्रैवोक्तमिति तस्य सूत्रस्य वायुत्वमेव याज्ञवल्क्येन ज्ञापनीयम्—तथैव सर्वलोकसर्वभूतान्तर्नियन्तृत्वं प्रष्ट्रैवोक्तमिति नान्तर्यामित्वमत्र ज्ञाप्यते। अतो यः पृथिव्यां तिष्ठन्नित्येवं यच्छब्दानां प्रयोगेणान्तर्यामिशब्दार्थं विवृत्यानूद्य **एष ते आत्मान्तर्याम्यमृत** इति विधीयते। अन्तर्यामिणः पृथिव्यादि अन्तः प्रविश्य नियन्तृत्वरूपं चेतनत्वं प्रागेव ज्ञातमिति, 'कोसावन्तर्यामी'ति प्रश्नस्य जीवादभिन्नो वा भिन्नो वेति प्रश्नरूपतैव वक्तव्या; को देवताविशेष इति प्रश्नरूपता वा। तत्रेदं याज्ञवल्क्यस्योत्तरम्। सुबालोपनिषदीव सर्वभूतान्तरात्मेत्यनुक्त्वा **ते आत्मे**ति वक्तुरयमाशयः— इममन्तर्यामिणं जीवं न मन्येथाः। अयं खलु देहेन्द्रियसंघातात्मनि निकाये निविष्टानामर्थानामधिष्ठानदेवतासु, पृथिव्यादिषु — आरम्भकेषु, भोग्यभोगस्थानभोगोपकरणेषु, देहेषु—, उपकरणे प्राणे, इन्द्रियेषु वागादिषु चान्तर्वर्ती यन्ता अत एव तत्तच्छरीरकः कथं जीवात्मा भवितुमर्हति। न खलु त्वां प्रति त्वदीयदेहेन्द्रियतदधिष्ठानदेवतादीनां सर्वेषां शरीरत्वम्, तव वा तत्सर्वनियन्तृत्वमस्ति। अतस्त्वदधिक एव तवान्तर्याम्येव कश्चित् सः। अत एवम्भूतस्यान्तर्यामिणस्त्वदभिन्नत्वायोगात् त्वां प्रति आत्मत्वात् तन्न्यायात् एषोऽन्तर्यामी न म्रियमाणोऽष्टमूर्त्यादिरूपजीवोऽपि; किन्त्वमृतोऽन्य इति। अत्र वाक्ये **अमृतत्वं** मृतविलक्षणत्वं जीवविलक्षणत्वं विधेयम् जीवाभिन्नत्वे त्वदभिन्नत्वापत्त्या, 'अहमेतत्सर्वान्तर्यामी'ति तवानुभावापत्तिरिति, तस्य त्वन्निरूपितात्मत्वात् जीवविलक्षणत्वमिति तदुपपादनार्थं 'त आत्मे'ति हेतुगर्भविशेषणम्। एषोन्तर्यामी ते आत्मेत्यप्रयुज्य अनुवादरूपादन्तर्यामिपदात् प्रागेव **त आत्मेति** प्रयोगात् 'त्वदन्तर्यामित्वमपि न मया विशेषतो ज्ञापनीयम्, सर्वाणि भूतान्यन्तरो यमयतीति त्वयैवोक्ततया भूतशब्दस्याचेतनविशिष्टचेतन एव रूढतया सर्वचेतनान्तर्यामित्वस्य सुग्रहत्वा'दिति सूचितम्। यथा त्वदभिन्नत्वमन्तर्यामिणि त्वया स्वीकर्तुं न शक्यते—तथाऽस्मदभिन्नत्वमस्माभिः सर्वैरपीति सर्वभूतान्तरात्मनः सर्ववैलक्षण्यसिद्धिरिति। **अमृत** इत्युक्त्यैव देवताविशेषोऽपि दर्शितः। ब्रह्मरुद्रादीनां जननमरणभाक्त्वस्य प्रमाणसिद्धतया परिशेषात् नारायण एवामृतत्वविश्रमात्। अमृतो हिरण्मय एवानन्तोऽच्युतो नारायणोन्तर्यामी नारायणानुवाके निष्कृष्टः। इदं शाङ्करे सिद्धिवत्कृत्यानूदितम्, 'य ईदृगीश्वरो नारायणाख्यः **पृथिवीं** पृथिवीदेवतां यमयती'ति। व्यक्तञ्च सुबालोपनिषदन्तर्यामिप्रकरणे, 'यः पृथिवीमन्तरे संचरन्—एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इति। आत्मत्वेऽप्यमृतोऽपहतपाप्मा दिव्यो देव एकोऽयम्।

योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्यापश्शरीरं योऽपोऽन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः ॥ ८ ॥

योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद, यस्याग्निश्शरीरम्, योऽग्निमन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः ॥ ९ ॥

योऽन्तरिक्षे तिष्ठन्नन्तारिक्षादन्तरो यमन्तरिक्षं न वेद, यस्यान्तरिक्षं शरीरम्, योऽन्तरिक्षमन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः ॥ १० ॥

यो वायौ तिष्ठन् वायोरन्तरो यं वायुर्न वेद, यस्य वायुः शरीरम्, यो वायुमन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः ॥ ११ ॥

यो दिवि तिष्ठन् दिवोऽन्तरो यं द्यौर्न वेद, यस्य द्यौश्शरीरम्, यो दिवमन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः ॥ १२ ॥

य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद, यस्यादित्यश्शरीरम्, य आदित्यमन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः ॥ १३ ॥

यो दिक्षु तिष्ठन् दिग्भ्योऽन्तरो यं दिशो न विदुर्यस्य दिशश्शरीरम्, यो दिशोऽन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः ॥ १४ ॥

यश्चन्द्रतारके तिष्ठँश्चन्द्रतारकादन्तरो यं चन्द्रतारकं न वेद, यस्य चन्द्रतारकँ शरीरम्, यश्चन्द्रतारकमन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः ॥ १५ ॥

य आकाशे तिष्ठन्नाकाशादन्तरो यमाकाशो न वेद, यस्याकाशश्शरीरम्, य आकाशमन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः ॥ १६ ॥

यस्तमसि तिष्ठँस्तमसोऽन्तरो यं तमो न वेद, यस्य तमश्शरीरम्, यस्तमोऽन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः ॥ १७ ॥

यस्तेजसि तिष्ठँस्तेजसोऽन्तरो यं तेजो न वेद, यस्य तेजश्शरीरम्, यस्तेजोऽन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः ।

इत्यधिदैवतम् । अथाधिभूतम् ( १८ )—

---

एवमप्सु अग्नौ अन्तरिक्षे वायौ दिवि आदित्ये दिक्षु चन्द्रतारके आकाशे तमसि तेजसि चान्तर्यामिणमुक्त्वाऽऽह **इत्यधिदैवतम्**। उपदिष्ट (उक्त?)मन्तर्यामिस्वरूपमिति शेषः । **अथाधिभूतम्**। अन्तर्यामिस्वरूपमुच्यत[1] इति शेषः ॥ ८—१८

1. उपदिश्यते क.

यस्सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यँ सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरम्, यः सर्वाणि भूतान्यन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः ।

इत्यधिभूतम् । अथाध्यात्मम् ( १९ )—

यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद, यस्य प्राणश्शरीरम्, यः प्राणमन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः ॥ २० ॥

यो वाचि तिष्ठन् वाचोऽन्तरो यं वाङ्न वेद, यस्य वाक् शरीरम्, यो वाचमन्तरो यमयति , एष त आत्माऽन्तर्याम्यमृतः ॥ २१ ॥

यश्चक्षुषि तिष्ठँश्चक्षुषोऽन्तरो यं चक्षुर्न वेद, यस्य चक्षुश्शरीरम्, यश्चक्षुरन्तरो यमयति , एष त आत्माऽन्तर्याम्यमृतः ॥ २२ ॥

यश्श्रोत्रे तिष्ठन् श्रोत्रादन्तरो यँ श्रोत्रं न वेद, यस्य श्रोत्रँ शरीरम्, यश्श्रोत्रमन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः ॥ २३ ॥

यो मनसि तिष्ठन् मनसोऽन्तरो यं मनो न वेद, यस्य मनश्शरीरम्, यो मनोऽन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः ॥ २४ ॥

यस्त्वचि तिष्ठँस्त्वचोऽन्तरो यं त्वङ् न वेद, यस्य त्वक् शरीरम्, यस्त्वचमन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः ॥ २५ ॥

यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद, यस्य विज्ञानँ शरीरम्, यो विज्ञानमन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः ॥ २६ ॥

---

सर्वेषु भूतेषु चान्तर्यामिणमुक्त्वाऽऽह **इत्यधिभूतम्** । अन्तर्यामिस्वरूपमुक्तमिति शेषः । **अथाध्यात्मम्** । अन्तर्यामिस्वरूपमुच्यत इति शेषः ॥ १९. ॥

एवं प्राणे वाचि चक्षुषि **श्रोत्रे मनसि** त्वचि चोक्त्वाऽऽह **यो विज्ञाने —अमृतः** । अत्र विज्ञानशब्दो जीवात्मपरः । समानप्रकरणे माध्यन्दिनशाखायामत्रत्यविज्ञानशब्दस्थाने, 'आत्मनि तिष्ठन्' इति आत्मशब्देन निर्देशदर्शनात्, ज्ञानस्वरूपस्य तस्य तच्छब्दवाच्यत्वयोगाच्चेति द्रष्टव्यम् ॥ २०–२६ ॥

---

सर्वाणि भूतान्यन्तरो यमयतीति यत् संमुग्धमुक्तम्, ततो जीवात्मान्तर्यामित्वमपि ज्ञातप्रायमित्यभिप्रेत्यानुवदति **यो विज्ञाने तिष्ठन्नि**त्यादि ।

**यो रेतसि तिष्ठन् रेतसोऽन्तरो यँ रेतो न वेद, यस्य रेतश्शरीरम् यो रेतोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ।**

**अदृष्टो द्रष्टा अश्रुतश्श्रोता अमतो मन्ता अविज्ञातो विज्ञाता; नान्योऽतोऽस्ति द्रष्टा, नान्योऽतोऽस्ति श्रोता, नान्योऽतोऽस्ति मन्ता, नान्योऽतोऽस्ति विज्ञाता; एष त आत्माऽन्तर्याम्यमृतः । अतोऽन्यदार्तम् । ततो होद्दालक आरुणिरुपरराम ॥ २७ ॥**

इति पञ्चमाध्याये सप्तमं ब्राह्मणम्

---

एवं रेतस्यन्तर्यामिणमुक्त्वाऽऽह **अदृष्टो द्रष्टा — विज्ञाता** । अत्र द्रष्टृत्वं रूपसाक्षात्कारवत्त्वम् । न तु चक्षुर्जन्यज्ञानवत्त्वम्; तस्य परमात्मन्यसंभवात् । श्रोतृत्वं शब्दसाक्षात्कारवत्त्वम् । मन्तृत्वं मन्तव्यविषयसाक्षात्कर्तृत्वम् । विज्ञातृत्वं विज्ञानशब्दितनिदिध्यासनविषयसाक्षात्कर्तृत्वम् । द्रष्टृत्वादिकं जीवस्याप्यस्तीति अदृष्टत्वादिना द्रष्टृत्वादिकं विशेषितम् । तादृशञ्च तत्र जीवस्यास्तीति भावः । अत्र च द्रष्टृत्वादौ उपाध्यनुक्तेः निरुपाधिकद्रष्टृत्वमर्थसिद्धमिति द्रष्टव्यम् । **नान्यो —विज्ञाता । एष त आत्माऽन्तर्याम्यमृतः । अतोऽन्यदार्तम्** । अन्यशब्दादेः सर्वनाम्नः पूर्वनिर्दिष्टसदृशान्यपरत्वस्य, 'समानेषु पूर्वत्वात्' ('समाने पूर्ववत्त्वात्?) इति साप्तमिकाधिकरणे व्यवस्थितत्वात् अत्राप्यन्यशब्देन पूर्वनिर्दिष्टादृष्टत्वादिविशेषितनिरुपाधिकरूपादिसाक्षात्कारादिमतो निषेध उपपद्यते । जीवस्य करणायत्तज्ञानत्वात् अन्यस्तत्सदृशोऽदृष्टो द्रष्टा नास्तीत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । शिष्टं स्पष्टम् । **ततो होद्दालक आरुणिरुपरराम** । पूर्ववत् ।　　　　(२७)

(१) इदञ्च ब्राह्मणमधिकृत्य समन्वयाध्याये द्वितीयपादे चिन्तितम् । 'यः पृथिव्यां तिष्ठन्' इत्यारभ्यान्तर्यामिब्राह्मणेऽधिदैवतमधिलोकमधिवेदमधियज्ञमधिभूतमध्यात्मञ्च अन्तरवस्थितत्वेनोक्तोऽयमन्तर्यामी जीव एव स्यात्, वाक्यशेषे, 'द्रष्टा श्रोते'ति करणायत्तज्ञानवत्त्वोक्तेः । न च—दर्शनश्रवणादिशब्दाः रूपशब्दादिसाक्षा-

---

**अदृष्टः अश्रुतः** इत्येवंपदैः यं प्रथिवी न वेदेत्युक्तार्थपरिग्रहः । परमात्मनोऽन्यस्य जीवस्य सत्त्वात् कथमन्यनिषेध इत्यत्र तदर्थमाह **अन्यशब्दादे**रिति । **सदृशान्ये**ति । सदृशरूपान्येत्यर्थः । **साप्तमिके**ति । (मी. 7-1-2.) तत्र, 'समाने पूर्ववत्त्वादुत्पन्नाधिकारः स्यात्' इति प्रथमं पूर्वपक्षसूत्रम् । 'समानमितरच्छ्येनेने'ति वाक्यं विषयः ।

त्कारपराः । तादृशसाक्षात्कारवत्त्वञ्च परमात्मनोऽपि संभवतीति वाच्यम्—तथा हि सति, 'नाऽन्योऽतोऽस्ति द्रष्टे' ति तदतिरिक्तद्रष्टृनिषेधानुपपत्तेः। जीवस्यैव तदतिरिक्तस्य रूपादिसाक्षात्कारवतः सत्त्वात् । द्रष्ट्रादिशब्दानां करणायत्तज्ञानवत्त्वार्थकतया जीवपरत्वे तु जीवव्यतिरिक्तस्य करणायत्तज्ञानवतो निषेध उपपद्यते ; ईश्वरस्य करणायत्तज्ञानवत्त्वाभावादिति पूर्वपक्षे प्राप्ते — उच्यते, "अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्" । अधिदैवाधिलोकादिषु श्रूयमाणोऽन्तर्यामी परमात्मैव ; सर्वभूतान्तरत्वामृतत्वादेः परमात्मधर्मस्य श्रवणात् । अधिलोकादयो माध्यन्दिने द्रष्टव्याः । अन्यशब्दस्य पूर्वोक्तन्यायेन पूर्वनिर्दिष्टादृष्टत्वादिविशेषितनिरुपाधिकरूपादिसाक्षात्कर्त्रन्तरपरत्वेन वाक्यशेषोऽप्युपपद्यते ।

"न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च" । यथा स्मार्तं प्रधानम् , 'अदृष्टो द्रष्टे' ति श्रुतस्यादृष्टत्वविशिष्टद्रष्टृत्वस्य, सर्वान्तर्यामित्वादेश्च तदसंभावितधर्मस्य श्रवणान्न प्रतिपाद्यम् — एवं न जीवोऽप्यत्र प्रतिपाद्यते (द्यः) ।

"उभयेऽपि हि भेदेनैनमधीयते" । काण्वा माध्यन्दिनाश्चोभयेऽपि अन्तर्यामिणं जीवभिन्नमेव आमनन्ति। माध्यन्दिना हि, 'य आत्मनि तिष्ठन्नात्मनोऽन्तरः' इति, काण्वाश्चात्मपर्यायस्थाने, 'यो विज्ञाने तिष्ठन्' इति आत्मपदस्थाने विज्ञानपदमधीयते । अतो न जीवोऽन्तर्यामीति स्थितम् ।

(२) ननु आत्मनो ज्ञानाश्रयस्य कथं विज्ञानशब्दवाच्यत्वमिति चेन्न — अस्यार्थस्य वियत्पादे चिन्तितत्वात् । तथा हि—'यो विज्ञाने तिष्ठन्', 'विज्ञानं यज्ञं तनुते', 'ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः' इति श्रुतिस्मृतिभिर्ज्ञानस्वरूपत्वेनै[1]वात्मनः प्रतीतेर्न ज्ञाता आत्मा । अथवा 'यो वेदेदं जिघ्राणीति स आत्मा', 'एष हि द्रष्टा श्रोता' इत्यादिश्रवणात्, अहं जानामि, अज्ञासिषमित्याद्यनुभवाच्च आगन्तुकज्ञानाश्रय एव ; न स्वयं ज्ञानरूपः । ज्ञानरूपत्ववचनानि तु लाक्षणिकानीत्येवं पूर्वपक्षे प्राप्ते उच्यते—"ज्ञोऽत एव" । अत एव = 'एष हि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' इति विज्ञानात्मन एव

1. स्वरूपत्वस्यैव. क.

निरुपाधिकेत्यादि । निरुपाधिकं यथा तथा रूपादिसाक्षात्कर्तेत्यर्थः ।

जीवस्य द्रष्टृत्वादिश्रुतेरेव ज्ञानात्मकोऽपि सन् स्वाभाविकज्ञानाश्रयश्च भवतीत्यर्थः ।

ननु विभोरात्मनः स्वाभाविकज्ञानाश्रयत्वे तज्ज्ञानस्य सर्वपदार्थसंबन्धात् सार्वज्ञ्यं सर्वदा स्यादित्याशङ्क्याह — "उत्क्रान्तिगत्यागतीनाम्" । विभुत्वे स्यादियं शङ्काऽपि, 'तेन प्रद्योतेनैष आत्मा निष्क्रामति', 'ये वै के चास्माल्लोकात् प्रयन्ति, चन्द्रमसमेव ते सर्वे गच्छन्ति', 'तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे' इति जीवस्योत्क्रान्तिगत्यागतीनां श्रवणात् जीवो न विभुः । अतो न सर्वदा सार्वज्ञ्याप्तिरित्यर्थः । ननु शरीरादुत्क्रमणं नाम शरीरविषयकाभिमानराहित्यम् । तच्च विभोरप्यात्मनः संभवतीत्यत्राह "स्वात्मना चोत्तरयोः" । चशब्दोऽवधारणे । विभुत्वपक्षे उत्क्रमस्य कथञ्चित्संभवेऽपि उत्तरयोः गमनागमनयोः स्वात्मना = स्वरूपेणैव संपाद्यत्वात् विभुत्वे तदसंभवः । किञ्च भूतकरणग्रामासंपरिष्वक्तस्यैव, 'एतास्तेजोमात्राःसमभ्याददानो हृदयमेवान्ववक्रामति', 'शुक्रमादाय पुनरेति स्थान' मिति शरीर एव स्वात्मनैव गत्यागतिश्रवणात् विभुत्वे च तयोरसंभवात् न विभुरात्मा । "नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्" । 'योऽयं विज्ञानमयः प्राणेषु' इति जीवं प्रस्तुत्य, 'स एष महानज आत्मा' इति महत्त्वश्रुतेर्नाणुर्जीव इति चेन्न — 'यस्यानुवित्तः प्रतिबुद्ध आत्मा' इति जीवेतरं परमात्मानमधिकृत्य तस्यैव तत्र महत्त्वप्रतिपादनात् । "स्वशब्दोन्मानाभ्याञ्च" । 'एषोऽणुरात्मा चेतसा वेदितव्यः' इति अणुत्वलक्षणस्य स्वस्य वाचकशब्दश्रवणात्, 'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः' इति अणुसदृशं वस्तूद्धृत्य तन्मानत्वस्य जीवे आमननाच्चाणुरेव।

नन्वणुत्वे सति एकदेशस्थस्य कथं सकलदेहव्यापिवेदनोपलम्भ इत्यत्र मतान्तरेण परिहारमाह "अविरोधश्चन्दनवत्" । यथा हरिचन्दनबिन्दुः शरीरैकदेशस्थोऽपि सकलदेहव्यापिनमाह्लादं करोति, एवं जीवोऽपि भविष्यति । "अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि" । हरिचन्दनबिन्द्वादेर्हृदयादिरूपदेशविशेषावस्थितिविशेषादस्तु तथाभावः, आत्मनो न देशविशेषावस्थितिरस्तीति कथं तथात्वमिति चेन्न — 'हृदि ह्ययमात्मे' ति जीवस्यापि शरीरप्रदेशविशेषा-

लोकान्तरगत्यागत्योः सूक्ष्मशरीरोपाधिकत्वेनोपपत्त्या स्वरूपेणैव संपाद्यत्वाभावादन्यत् स्थलमाह किञ्चेति । एवं देहान्तः स्वप्नसुषुप्तिस्थानगत्यागती च द्रष्टव्ये ।

वस्थित्यभ्युपगमात् । अथ स्वमतेन परिहारमाह "गुणाद्वाऽऽलोकवत्" । वाशब्दो मतान्तरव्यावृत्त्यर्थः । लोके यथा एकदेशस्थानामपि मणिद्युमणिप्रभृतीनां प्रभा व्यापिनी, एवमेकदेशस्थितस्यापि जीवस्य प्रभास्थानीयधर्मभूतज्ञानव्याप्त्या सर्वाङ्गीणसुखदुःखाद्यनुभवसंभवान्नानुपपत्तिः ।

नन्वात्मव्यतिरिक्तं ज्ञानं नास्तीत्यत्राह "व्यतिरेको गन्धवत् तथा च दर्शयति" । यथा गन्धस्य पृथिवीव्यतिरेकः प्रत्यक्षसिद्धः, तथा, अहं जानामीति ज्ञानस्यात्मव्यतिरेकः प्रत्यक्षसिद्धः । 'जानात्येवायं पुरुषः' इति श्रुतिश्च तथा दर्शयति । "पृथगुपदेशात्" । विज्ञानात्मनोः, पृथक्कृत्य = 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति तत्तद्वाचकशब्दैरेव [1] पृथक्कृत्य, उपदेशदर्शनादात्मधर्मभूतं ज्ञानमस्त्येव । ननु ज्ञानस्यात्मापेक्षया पृथक्त्वे, 'विज्ञाने तिष्ठन्' इत्यादिश्रुतीनां का गतिरित्यत्राह "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" । तुशब्दश्चोद्यं व्यावर्तयति । जीवे विज्ञानगुणस्यैव सारभूतगुणत्वात् विज्ञानमिति जीवो व्यपदिश्यते । यथा प्राज्ञस्य परमात्मनः आनन्दगुणसारत्वात्, 'यदेष आकाश आनन्दो न स्यात्' इत्यानन्दशब्देन व्यपदेशः । "यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्" । यथा गोत्वादीनां यावद्गोव्यक्तिभावित्वाद्गोत्ववाचिभिर्गवादिशब्दैर्व्यक्तिनिर्देशो दृश्यते, एवमेव ज्ञानरूपधर्मस्य यावदात्मभावित्वात् तद्वाचिना [2] ज्ञानशब्देन धर्मिणो व्यपदेशो न दोषायेत्यर्थः । अत्र चकारात्, ज्ञानवत् आत्मनोऽपि स्वप्रकाशत्वेन, ज्ञानमिति व्यपदेशो न दोषायेति समुच्चिनोति ।

ननु सुषुप्त्यादिषु ज्ञानाभावान्न ज्ञानस्य यावदात्मभाविधर्मत्वम् । तत्राह "पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्" । यथा सर्वदा विद्यमानस्य पुंस्त्वव्यञ्जकधातोः यौवने अभिव्यक्तिः, एवं सर्वदा विद्यमानस्यापि ज्ञानस्येन्द्रियसंप्रयोगदशायामभिव्यक्तिः । अतश्च ज्ञानस्वरूपोऽणुरात्मा ज्ञाता च ।

ननु [वि] ज्ञानरूप एवात्मा विभुरस्तु, तत्राह—"नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा" । किं सर्वगत आत्मा उपलब्धेरेव वा अनुपलब्धेरेव वा हेतुः, उतोभयत्र । आद्यपक्षद्वये उपलब्धेरेव वा अनुपलब्धेरेव

1. पृथगुपदेश. क. 2. तद्वाचिशब्देन क.

वेत्यन्यतरनियमः स्यात् । तृतीयपक्षे सर्वदा उपलब्ध्यनुपलब्धी स्याताम् । ततश्चोपलम्भानुपलम्भौ पर्यायेण दृश्यमानौ नोपपद्येयाताम् । अणोर्ज्ञानस्वरूपस्यैवात्मनः इन्द्रियसंप्रयोगादिकारणमहिम्ना कादाचित्की धर्मभूतज्ञानाभिव्यक्तिरिति सिद्धान्तपक्षे तु नानुपपत्तिरिति स्थितम् ।

(३) तथा तत्रैव पादे—"कर्ता शास्त्रार्थवत्त्वा" दिति प्रतिपादितं जीवानां कर्तृत्वं न परमात्मायत्तम् । तथात्वे हि प्रवृत्तिनिवृत्त्योः सालभञ्जिकावत् अस्वतन्त्रं जीवं नियोजयतोः विधिनिषेधशास्त्रयोरानर्थक्यं स्यादिति पूर्वपक्षे प्राप्ते – उच्यते – "परात्तु तच्छ्रुतेः"। तुशब्दः पक्षं व्यावर्तयति । तच्च कर्तृत्वं परात्=परमात्मा[1]-यत्तमित्यर्थः । 'य आत्मानमन्तरो यमयती' ति तत्कर्तृत्वस्य परायत्तत्वश्रवणात् ।

नन्वेवं विधिनिषेधशास्त्रानर्थक्यम् । तत्राह "कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः"। परमात्मा जीवकृतं पूर्वप्रयत्नमपेक्ष्य तदनुमतिदानेन प्रवर्तयति। एवंसति विधिप्रतिषेधावैयर्थ्यानुग्राहकत्वादिकं सिद्ध्यति । स भगवान् पुरुषोत्तमः अवाप्तसमस्तकामः सर्वज्ञः सर्वेश्वरः सत्यसंकल्पः स्वमाहात्म्यानुगुणलीलाप्रवृत्तः, 'एतानि कर्माणि समीचीनानि, एतान्यसमीचीनानी' ति कर्मद्वैविध्यं [2]संविधाय, तदुपादानोचितदेहेन्द्रियादिकं तन्नियमनशक्तिञ्च सर्वेषां क्षेत्रज्ञानां सामान्येन प्रदिश्य, स्वशासनाववोधि शास्त्रञ्च प्रदर्श्य, अन्तरात्मतयाऽनुप्रविश्य अनुमन्तृतया च नियच्छंस्तिष्ठति । ते च क्षेत्रज्ञाः तदाहितशक्तयः तत्प्रदिष्टकरणकळेबरादिकाः तदाधाराः स्वयमेव स्वेच्छानुगुण्येन पुण्यापुण्यरूपे कर्मणी उपाददते । ततश्च पुण्यरूपकर्मकारिणं स्वशासनानुवर्तिनं ज्ञात्वा धर्मार्थकाममोक्षैर्वर्धयति (ते)। शासनातिवर्तिनञ्च तद्विपर्ययेण योजयति । अतः स्वातन्त्र्यदयाळुत्वादिवैकल्यचोद्यस्य नावकाशः। दया हि नाम स्वार्थनिरपेक्षा परदुःखासहिष्णुता । सा स्वशासनातिवृत्तिव्यवसायिन्यपि वर्तमाना न गुणायावकल्पते। प्रत्युत अपुंस्त्वमेवाऽऽवहते। तन्निग्रह एव तत्र गुणः। अन्यथा शत्रुनिग्रहादीनामगुणत्वप्रसङ्गात् । स्वशासनातिवृत्तिव्यवसायनिवृत्तिमात्रेण अनाद्यनन्तकल्पोपचितदुर्विषहानन्तापराधानङ्गीकारेण निरतिशयसुखसंवृद्धये स्वयमेव प्रयतते । यथोक्तम् —

1. परायत्त. क. 2. सर्वं विधाय. क.

'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥' इति ।

ननु कूपे पतन्तं बालकं दृष्ट्वा उपेक्षमाणस्य, अनुमतिं कृतवतो वा पुंसो नैर्घृण्यादिप्रसक्तिवत् स्वाहितकर्मप्रवृत्तपुरुषविषये उपेक्षकत्वे वा, अनुमन्तृत्वे वा, प्रयोजकत्वे वा सर्वेश्वरस्य तस्य निर्दयत्वादिकमवश्यम्भावीति चेत्[1] — शास्त्रप्रवर्तनमुखेन सामान्येन अहितप्रवृत्तिनिवारणस्य कृतत्वात् नोपेक्षणम् । तत्तत्प्रवृत्तिकाले विशेषतो निवारकत्वाभावलक्षणमुपेक्षकत्वं तु स्वतन्त्रस्य न पर्यनुयोज्यम् । एतादृशस्वातन्त्र्यमेव दोष इति चेत् — तत्र किं प्रमाणम्? न प्रत्यक्षम् ; तस्येश्वरविषये अप्रमाणत्वात् । नाप्यनुमानम् । तत्र हि किमीश्वराख्यं धर्मिणं शास्त्रैकसमधिगम्यमभ्युपेत्य तत्स्वातन्त्र्यस्य दोषत्वमनुमीयते, उतानभ्युपगम्य? अनभ्युपगमे हेतोराश्रयासिद्धिः । अभ्युपगमे धर्मिग्राहकेण शास्त्रेण तस्य गुणत्वेन प्रतिपन्नत्वात् कालात्ययापदिष्टत्वम् । चिकीर्षापूर्वककृतिमत्त्वेन सालभञ्जिकाविलक्षणतया जीवस्य कर्तृत्वात् न शास्त्रानर्थक्यम्; प्रवर्तकज्ञानचिकीर्षोत्पादकत्वेन साफल्यात् । कालादिवत् साधारणकृतिहेतोरीश्वरस्य न वैषम्यादिप्रसक्तिश्च । उक्तञ्च भगवता पराशरेण—

'निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि ।'

इति । निमित्तमात्रं = साधारण [कारण?] मात्रमित्यर्थः । गीतञ्च भगवताऽपि —

'तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥'

इति । साधरण[2]कर्तारं विद्धि । असाधारणकर्तारं न विद्धीति हि तस्यार्थः । उक्तञ्च व्यासार्यैः —

"वैयर्थ्यं यावता न स्यात् विधानप्रतिषेधयोः ।
नियन्तृत्वश्रुतेस्तावान् सङ्कोचो न त्वतः परः" ॥ इति ।

नन्वेवं साधारणकारणै[3]रेव सर्वकार्योत्पत्तिसंभवे ईश्वरस्य प्रयोजकत्वानुमन्तृत्वादिकं (अनुमन्तृत्व प्रयोजकत्वादिकं?) कुतोऽभ्युपगन्तव्यमिति चेत् — कल्पनायामेवेदृशचोद्यावकाशः । 'अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा', 'एष ह्येव साधु कर्म कारयती' त्यादिप्रमाणप्रतिपन्नार्थे ईदृशचोद्यानवकाशादिति स्थितम् ।

1. चेन्न. क 2. साधारणं कर्तारं. क. 3. कारणत्वादिभिरेव. क.

५—८.

**अथ ह वाचक्नव्युवाच—ब्राह्मणा भगवन्तो हन्ताहमिमं द्वौ प्रश्नौ प्रक्ष्यामि। तौ चेन्मे वक्ष्यति, न वै जातु युष्माकमिमं कश्चित् ब्रह्मोद्यं जेतेति।**

---

(४) तथा प्राणपादे — जीवस्य यत् स्वभोगसाधनशरीराद्यधिष्ठातृत्वम्, न तत् परमात्मायत्तमिति पूर्वपक्षे उच्यते — "ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवता शब्दात्"। प्राणवता जीवेन सह ज्योतिरादीनाम् अग्न्यादिदेवतानां यत् प्राणविषयमधिष्ठानम् = जीवेन अग्न्यादिदेवताभिश्च क्रियमाणं प्राणकर्मकाधिष्ठानं यत्, तत् तदामननात् = तस्य परमात्मन आमननात् संकल्पादेव भवति; 'योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयति', 'य आत्मनि तिष्ठन्' इत्यादिशब्दात्। "तस्य च नित्यत्वात्"। सर्वेषां परमात्मनाऽधिष्ठितत्वस्य यावत्स्वरूपभावित्वाच्चेति स्थितम्। प्रकृतमनुसरामः॥ (५-७.)

**अथ ह वाचक्नव्युवाच**। अन्तर्यामिब्राह्मणे प्रसिद्धे ब्रह्मविदि उद्दालके याज्ञवल्क्येन पराजिते, सर्वेषां ब्राह्मणानामेवमेव पराजयो भविष्यतीति मन्यमाना गार्गी, 'मातिप्राक्षीर्मा ते मूर्धा व्यपप्तत्' इति याज्ञवल्क्यस्य सक्रोधोक्त्या भीत्या पूर्वमुपरताऽपि ब्राह्मणानुज्ञां प्राप्य पुनः प्रष्टुकामा अनुज्ञादानाय ब्राह्मणानुवाचेत्यर्थः। **ब्राह्मणा भगवन्तो हन्ताहं — ब्रह्मोद्यं जेतेति**। हन्त! हे भगवन्तो ब्राह्मणाः! इमं याज्ञवल्क्यमहं प्रश्नद्वयं प्रक्ष्यामि। तस्य चेदुत्तरं मे प्रश्नद्वयस्य याज्ञवल्क्यो वक्ष्यति, तदेमं याज्ञवल्क्यं युष्माकं मध्ये ब्रह्मोद्यं ब्रह्मवादं प्रति जेता कोऽपि जातु नास्तीत्यर्थः। **ब्रह्मोद्यम्**। 'वदस्सुपि क्यप् चे' ति क्यप्।

---

अतिप्रश्नानुपसंहारे मूर्धपातः स्यादिति गार्गीं भर्त्सितवता याज्ञवल्क्येन उद्दालके अस्मत्प्रश्नानुत्तरणे मूर्धपातस्ते भविष्यतीति पश्चाद् भर्त्सितवति पराजिते गार्गी, सकृदुपरतायाः पुनः प्रश्नार्थमुद्यमोऽनुमतो भवेन्नवेति शङ्कया ब्राह्मणानुमतिमपेक्षमाणा, अनुत्तरणे मूर्धपातः स्यादिति स्वयं शापदानपूर्वकं प्राक्कृतातिप्रश्नरीतिं परित्यज्य यथाक्रमं पुनःप्रष्टुमारभते इत्याह **अथ ह वाचक्नवीति**। **यदूर्ध्वमित्यादिना** भूतभविष्यत्सर्वव्यष्टिसमष्टिकार्यजातग्रहणेन तदाधारप्रश्नः पूर्वकृतचतुर्मुखलोकमात्राधारप्रश्नापेक्षया विलक्षण इति नायमतिप्रश्नः। **प्रसिद्धे** इति। उद्दालकस्य प्रसिद्धिः पूर्वब्राह्मणारम्भे दर्शिता।

[[1] तौ चेन्मे न विवक्षिष्यति, मूर्धाऽस्य विपतिष्यतीति] । पृच्छ गार्गीति ॥ १

सा होवाच—अहं वै [2] याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठेदेवमेवाहं त्वा द्वाभ्यां प्रश्नाभ्यामुपोदस्थाम् । तौ मे ब्रूहीति । पृच्छ गार्गीति ॥ २ ॥

सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदर्वा(वा) क् पृथिव्या यद-

1. इदं मूलमेतद्भाष्यञ्च क. कोशेऽधिकम् । माध्यन्दिने तु एतत्पाठो निर्विवादः । परन्तु विवक्ष्यति इति पदं तत्र । तदेव तत्र युक्तम्, 'व्यवोचः', (५-९-२६) इत्याद्यनुसारात् ।
2. 'अहं वै त्वा' शां । द्वौ प्रश्नौ प्रक्ष्यामीति प्रथग्वाक्यता तत्र दर्शिता । इह भाष्ये त्वा इति न । उपोदस्थामित्यन्तमेकं वाक्यम् । परन्तु अहमिति पुनर्वचनमिह व्यर्थमिव । अथापि व्यवहितस्याहम्पदस्य स्मारणाद्यर्थं तदिति वक्तव्यम् ।

---

[तौ चेन्मे न विवक्षिष्यति मूर्धाऽस्य विपतिष्यतीति । मे मम तौ प्रश्नौ अयं याज्ञवल्क्यो न प्रतिवक्ष्यति यदि, तर्हि माम्, 'मा ते मूर्धा व्यपप्त' दित्यन्यायेनाब्रह्मवादिनीमिव पूर्वं शप्तवतोऽस्य याज्ञवल्क्यस्याब्रह्मिष्ठस्य मूर्धा विपतिष्यति ब्रह्मिष्ठपणग्रहणादिति अस्मिन्नर्थे ब्राह्मणा अनुगृह्णन्त्वित्यर्थः ।] एवमुक्ता ब्राह्मणाः आद्दत्यानुमतिमदुः । पृच्छ गार्गीति स्पष्टोऽर्थः ॥ १ ॥

सा होवाच । तदेव याज्ञवल्क्यं प्रति ब्राह्मणानुमतया वाचक्नव्योक्तमाह अहं वै याज्ञवल्क्य—ब्रूहीति । हे याज्ञवल्क्य! अहम्, वै प्रसिद्धं यथा तथा काशीदेशभवः विदेहदेशभवो वा उग्रपुत्रः शूरवंश्यः यथा उज्ज्यम् उत्सृष्टज्यं धनुः पुनरपि सज्यं कृत्वा द्वौ बाणवन्तौ — बाणशब्देन शराग्रे यो वंशखण्डः, सोऽभिधीयते । तद्वन्तौ — सपत्नातिव्याधिनौ सपत्नात्यन्तव्यथनशीलौ च शरौ हस्ते गृहीत्वा उपोत्तिष्ठेत् सपत्नसमीपं गच्छति, एवमेवाहं (?) द्वाभ्यां प्रश्नाभ्यां त्वामुपस्थिताऽस्मि — उपोदस्थाम् । स्थाधातोर्लुङ् । 'गातिस्थाघुपाभूभ्यः' इति सिचो लुक् — तौ मे प्रश्नौ ब्रूहीत्यर्थः । एवमुक्त आह याज्ञवल्क्यः पृच्छ गार्गीति । स्पष्टोऽर्थः ॥ २ ॥

सा होवाच । सा गार्गी पप्रच्छ । तदेवाह यदूर्ध्वं याज्ञवल्क्य दिवो यदर्वाक् पृथिव्याः — प्रोतञ्चेति । हे याज्ञवल्क्य! दिवो यदूर्ध्वं द्युलो-

**न्तरा द्यावापृथिवी इमे यद् भूतश्च भवच्च भविष्यच्चेत्याचक्षते, कस्मिँस्त-दोतश्च प्रोतश्चेति ॥ ३ ॥**

**स होवाच यदूर्ध्वं गार्गि दिवो यदर्वा(वा)क् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद् भूतश्च भवच्च भविष्यच्चेत्याचक्षते, आकाशे तदोतश्च प्रोतश्चेति ॥ ४ ॥**

**सा होवाच नमस्तेऽस्तु याज्ञवल्क्य, यो म एतं व्यवोचः। अपरस्मै धारयस्वेति। स होवाच पृच्छ गार्गीति ॥ ५ ॥**

---

कात् यत् ऊर्ध्वं [1] वस्तुजातम्, **यदर्वाक् पृथिव्याः** पृथिव्याश्चाधस्तनं यद्वस्तुजातम्, [2] अनयोर्द्यावापृथिव्योरन्तरालवर्ति यत्, ये चेमे द्यावापृथिव्यौ, कालत्रयपरिच्छिन्नञ्च यद्वस्तुजातम् [व्यवहारविषयं (यः ?),] एतत् सर्वं कुत्र वा, दीर्घतिर्यक्तन्तुष्विव पटः, ओतं प्रोतञ्च, तत् ब्रूहीति प्रश्नार्थः। 'यदवाक् पृथिव्याः' इति पाठेऽप्ययमेवार्थः ॥ ३ ॥

**स होवाच।** याज्ञवल्क्योऽत्रोत्तरमाह वक्ष्यमाणम्। **यदूर्ध्वं — आकाशे तदोतश्च प्रोतश्चेति।** हे गार्गि! **यदूर्ध्व**मित्यादि त्वदुक्तं सर्वमाकाशे ओतञ्च प्रोतञ्चेत्यर्थः। **आकाशशब्देन** चात्र न वायुमदम्बरं गृह्यते। तस्य सर्वविकाराश्रयत्वाभावात्। किन्त्वव्याकृताकाशः। एतच्च, "अक्षरमम्बरान्तधृतेः" इत्यत्र स्थितम्। शिष्टं पूर्ववत् ॥ ४ ॥

**सा होवाच।** अथ गार्ग्युवाच। किमिति। **नमस्ते — व्यवोचः।** हे याज्ञवल्क्य! यस्त्वं मे एतं प्रश्नं विविच्योक्तवानसि, तस्मै ते नमोऽस्तु। इति तदुक्तमुत्तरमङ्गीकृत्याह **अपरस्मै** द्वितीयप्रश्नाय **धारयस्व** चित्तं सावधानं कुर्वित्यर्थः। **स होवाच पृच्छ गार्गीति।** सः याज्ञवल्क्यः, हे गार्गि! पृच्छेत्यनुमेने इत्यर्थः ॥ ५ ॥

1. लोकजातं ख. ग. 2. **अनयो**रित्यादिस्थाने, 'द्यावापृथिव्यन्तरालवर्ति कालत्रयपरिच्छिन्नञ्च' इत्येतावदेव ख. ग. कोशयोः। उपरिमुद्रितपाठे मूले **इमे** इत्यस्यानैरर्थ्याय, द्यावापृथिवीसंग्रहाय च ये इमे इति व्याख्यातम्। वस्तुतोऽस्य, कृत्स्नस्य वाक्यस्य त्रैकाल्यवर्तिसर्वविकारजातनिर्देशनैर्भर्यस्य श्रीभाष्यतोऽवगमात्, यद् भूतश्चेत्यादिकमेव मुख्यम्। यदूर्ध्वमित्यादिभागस्तु अंशत उदाहरणमात्रमिति ध्येयम्।

सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदर्वा(वा)क् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतश्च भवच्च भविष्यच्चेत्याचक्षते कस्मिँस्तदोतश्च प्रोतश्चेति। स होवाच यदूर्ध्वं गार्गि दिवो यदर्वा(वा)क्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतश्च भवच्च भविष्यच्चेत्याचक्षते, आकाश एव तदोतश्च प्रोतश्चेति। कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति ॥ ६ ॥

---

**सा होवाच**। सा गार्गी पप्रच्छ। किमिति। **यदूर्ध्वं याज्ञवल्क्य — आकाश एव तदोतश्च प्रोतश्चेति। कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति।** [1]य आकाशस्त्वयोक्त इति शेषः। यदूर्ध्वं दिव इत्याद्यस्मदुक्तसर्ववस्तुजातम् आकाश एव तदोतश्च प्रोतश्चेति त्वया य आकाश उक्तः, **स आकाशः कस्मिन्नु खल्वोतश्च प्रोतश्च**। सोऽव्याकृत आकाशः किमाश्रित इत्यर्थः ॥ ६ ॥

1. य आकाशस्त्वयेत्यादेः, य आकाश उक्त इत्यन्तस्य स्थाने, 'आकाश उक्त इति शेषः' इति ख. ग.

---

द्वितीयप्रश्नोत्तरं दुष्करमिति कृत्वा गार्गी पृच्छति **सा होवाचेति**। एतदनन्तरं यदूर्ध्वमित्यादि, **कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चे**त्यन्तं न गार्गीवाक्यमेव; मध्ये **सहोवाचे**त्येतदनन्वयात्। तद्वाक्यत्वे हि '**सहोवाचे**त्येतत्स्थाने, 'इति मत्प्रश्ने त्वं ह्यवोचः'इति वचनभङ्ग्या भाव्यम्। अथ पूर्वकृतप्रश्नोत्तरयोः पुनःश्रुत्यैव पाठः कृत इति चेत् — तद् व्यर्थम्। **कस्मिन्नु खल्वाकाश** इति प्रश्नारम्भात् प्राक् सा होवाचेत्येतदभावात् न्यूनता च स्यात्। अत एवं वाच्यम् — **अपरस्मै धारयस्वे**त्यनेन तावदियम्, 'द्वितीयप्रश्नं प्रवर्तयिष्यामि। प्रथमप्रश्नोत्तरं त्वदुक्तमविस्मृत्य धारयित्वा समुचितं समाधानं ब्रूही'ति दर्शयामास। अतस्तस्य पूर्वप्रश्नोत्तरधारणसंपत्तये स्वयं पूर्वप्रश्नं गार्गी अनूद्य, 'इति खलु मया पृष्टम्; तत्र त्वयैवमुत्तरं दत्तम्। तदुपर्ययं प्रश्नः' इति विवक्षन्ती **यदूर्ध्व**मित्यादिना प्रश्नमनूवाद। एवं तदनुवादावसानक्षण एव तदुत्तरस्य तयानुवादात् प्रागेव याज्ञवल्क्यः स्वयमेव त्वरया स्वोक्तसमाधानदार्ढ्यजिज्ञापयिषया च स्वोक्तमुत्तरमनूवाद। तदुच्यते मध्ये **सहोवाचयदूर्ध्वं गार्गी**ति। दार्ढ्यार्थमेवेह **आकाश एवे**ति एवकारनिर्देशः। तच्छ्रुत्वा, धृतमनेनेति ज्ञात्वा स्वप्रष्टव्यमेव सा पप्रच्छ **कस्मिन्न्वि**ति। अव्याकृतस्याचेतनस्य आधारप्रश्ने जीवमेव स निर्दिशेत्। तथाच पराजितः स्यादिति गार्ग्या अभिमानः।

**स होवाच—एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवायुनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यम्। न तदश्नाति किञ्चन। न तदश्नाति कश्चन॥ ७॥**

**एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः।**

---

**स होवाच।** अत्र याज्ञवल्क्य उत्तरमाह। किमित्यत्राह **एतद्वै तदक्षरं गार्गि—अबाह्यम्।** हे गार्गि! तदेतत् वै सर्वासूपनिषत्सु, 'यस्य तमश्शरीरम्', 'यस्याव्यक्तं शरीर' मित्यादिषु प्रसिद्धम्। **अक्षरम्** अश्नुते व्याप्नोतीति वा, न क्षरतीति वा अक्षरं ब्रह्म अव्याकृताकाशस्याप्याधारतया **ब्राह्मणाः** ब्रह्मविदः अभिवदन्ति। अत्र ब्राह्मणाभिवदनकथनेन, नाहं किञ्चिद्विप्रतिपन्नं वक्ष्यामीति हृदयम्। तदेव ब्रह्म विशिनष्टि—**अस्थूलं** स्थूलभिन्नम्। तर्हि किमण्वित्यत्राह **अनण्विति।** तर्हि किं ह्रस्वमित्यत आह **अह्रस्वमिति।** किं तर्हि दीर्घमित्यत्राह **अदीर्घमिति।** एवमुत्तरत्रापि द्रष्टव्यम्। **अमात्रम्।** मात्राः इन्द्रियाणि; यद्वा मात्रा=परिच्छेदः। तद्रहितमित्यर्थः। **अनन्तरमबाह्यम्।** स्वाव्याप्तदेशशून्यमित्यर्थः। **न तदश्नाति किञ्चन।** **तत्** अक्षरं कर्तृ किञ्चिदपि नाश्नाति। अवाप्तकामतया भक्ष्यनिरपेक्षमित्यर्थः। तत् स्वयं न कस्यापि भक्ष्यमित्याह **न तदश्नाति कश्चन। तत्** ब्रह्म कर्म। शिष्टं स्पष्टम्॥ ७॥

**एतस्य — तिष्ठतः।** वैशब्दोऽवधारणे। **प्रशासने** आज्ञाचक्रे सूर्या-

---

**एतद्वैतदिति।** **एतत्** अव्याकृताकाशाधारभूतं **तत्** श्रुत्यन्तरे मुण्डकादौ प्रसिद्धमित्यर्थः। **अस्थूल**मित्यादिकमपि द्वितीयान्तम्। तत्र **अच्छायम् अवायु अचक्षुष्कम् अवाक् अतेजस्कम् अमात्र**मिति पदानि बहुव्रीहिवृत्तानि यद्यपि—अथापि असति बाधे क्लिष्टसमासस्य त्याग उचित इति अन्यत्र तत्पुरुष एवाद्रियते। अक्षरस्य **न तदश्नाति किञ्चनेति** भोक्तृवैलक्षण्यस्य, **न तदश्नाति कश्चनेति** भोग्यवैलक्षण्यस्य चोक्ततया चिदचिद्विलक्षणत्वं सिद्धम्। तथाच न क्षरतीत्यक्षरमित्यस्य परिणामात्मकं क्षरणं परिणतभोग्यसंबन्धप्रयुक्तसुखदुःखभाक्त्वरूपं क्षरणञ्च नास्तीत्यर्थविवक्षया तदुपपादनमेव **अस्थूल**मित्यादिना कृतम्। साक्षात् स्थूलत्वादिपरिणामसंबन्धो वा तदधीनचित्तविकारो वा नास्तीति तदर्थः। परमात्मनः कर्मानधीननियमनरूपो वाय्वाद्यशेषसंबन्धस्तावदस्त्येव। स च वक्ष्यत एव समनन्तरम्।

**एतद्वै** इत्यनेन स्वरूपतोऽव्याकृताकाशाधारत्वमुक्तम्; अथ संकल्पाधीनं सर्वधारण-

**एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः। एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवस्संवत्सरा इति विधृतास्तिष्ठन्ति । एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्यो नद्यस्स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः, प्रतीच्योऽन्या यां यांश्च दिशमनु ।**

---

चन्द्रमसौ — 'देवताद्वन्द्वे चे' ति पूर्वपदस्याऽऽनङ् — **विधृतौ** विशेषेण धृतौ सन्तौ तिष्ठत इत्यर्थः । प्रकृष्टं शासनं प्रशासनम् । क्वचिदप्यप्रतिहतत्वमेव शासनस्य प्रकर्षः । ततश्च सर्वविषयकं शासनमिति फलति । 'प्रशासितारं सर्वेषा' मिति प्रमाणानुसारात् । ततश्च सर्वविषयकशासनाधीनसूर्याचन्द्रद्यावापृथिव्यादि[1]धारकत्वं फलितम् । ततश्च प्रधानजीवयोः स्वरूपेण यत्किञ्चिद्धारकत्वेऽपि प्रशासनशब्दितसर्वविषयकशासनाधीनसर्वधारकत्वासंभवात् नात्र जीवो वा प्रधानं वा प्रतिपाद्यते । इदञ्च, "सा च प्रशासना" दिति सूत्रे स्पष्टम्। **एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः।** स्पष्टम् । **एतस्य — संवत्सरा इति विधृतास्तिष्ठन्ति ।** इतिशब्दः प्रकारवचनः । संवत्सरा इत्येवंजातीयकाः कालविशेषा इत्यर्थः । **एतस्य — प्राच्यो नद्यः — दिशमनु ।** अत्र **प्रशासने** इति सतिसप्तमी। **प्राच्यः** प्राक्प्रवाहाः प्रसिद्धा गङ्गाद्या नद्यः **श्वेतेभ्यः** हिमवदादिभ्यः पर्वतेभ्यः लोकोपकाराय स्यन्दन्ते । तत्प्रशासनाभावे ताः स्यन्दनाय न प्रभवन्तीति भावः । **प्रतीच्यः** = प्रत्यङ्मुखाः, **अन्याः** उदीच्यश्च नद्यः तथा यां यां च दिशमनुप्रस्थिता मताः (गताः?), सर्वा एता एतस्य प्रशासने सति प्रस्यन्दन्ते इत्यर्थः ।

1. शासनाधीनद्यावापृथिव्यादिधारणवत्त्वमर्थ इति पर्यवस्यति । अत्र प्रधानस्य जगद्धारकत्वेऽपि शासनाधीनधारकत्वाभावात् जीवस्य प्रशासनाधीनयत्किञ्चिद्धारकत्वेऽपि प्रशासनशब्दितसर्वविषयकशासनाधीनसर्वधारकत्वासंभवाच्च नात्र' इति ख. ग.

---

मुच्यते । एतस्य वा इति संकल्पाधीनस्थितिकत्वमुक्तम् । संकल्पाधीनप्रवृत्तिकत्वमुच्यते प्राच्यो

**एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशँसन्ति, यजमानं देवा दर्वीं पितरोऽन्वायत्ताः ॥ ८ ॥**

**यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणि, अन्तवदेवास्य तद्भवति । यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति, स कृपणः । अथ य एतदक्षरं गार्गि**

---

**एतस्य — प्रशासने ददतो — अन्वायत्ताः** । एतस्यैवाक्षरस्य प्रशासने निमित्ते **ददतः** — तत्प्रशासनरूपया तदाज्ञया दानं कुर्वत इत्यर्थः — आज्ञाकैङ्कर्यबुद्ध्या दानं कुर्वतो जनान् **अन्वायत्ताः** अनुवशास्सन्तः मनुष्याः प्रशंसन्तीत्यर्थः । **प्रशासन** इत्येतत् **यजमानं देवा** इत्यत्र, **दर्वीं पितर** इत्यत्रापि संबध्यते । **अन्वायत्ता** इति पदं देवमनुष्यपितृसाधारणम् । द्वितीयान्तपदानां **प्रशंसन्तीत्यनेनान्वयः** । तथाच परमात्माज्ञया यागं कुर्वाणमन्वायत्तास्सन्तो देवाः प्रशंसन्ति । परमात्माज्ञया प्रवृत्तं दर्वीहोममन्वायत्तास्सन्तः पितरः प्रशंसन्तीत्यर्थः । एवमेव व्याख्यातं **व्यासार्यैः** ॥ ८ ॥

**यो वा एतदक्षरं गार्ग्यविदित्वा- —भवति** । उक्ताक्षरपरब्रह्मज्ञानमन्तरेण क्रियमाणं होमयज्ञबहुकालसाध्यतपआदिकं सर्वमप्यस्य कर्तुः **अन्तवदेव** नश्वरफलसाधनं भवतीत्यर्थः । **यो —स कृपणः** । तज्ज्ञानमन्तरेण लोकादस्माल्लोकान्तरं गतस्यापि शोच्यता भवतीत्यर्थः । **कृपणः** शोच्यः । तदज्ञानात् संसारो भवतीति

---

**नद्यः स्यन्दन्त** इत्यादिना । अत्राचेतनप्रवृत्तिः ; उपरि चेतनप्रवृत्तिः । तत्र **ददतो मनुष्या** इति लौकिकप्रवृत्तिः ; **यजमानं दर्वी**मिति वैदिकप्रवृत्तिः । ननु **ददत** इत्यत्र **अन्वायत्ता** इति पदं माऽपकृष्यताम् । यजमानं दर्वीमित्यनयोश्च **अन्वायत्ता** इत्यनेन शान्ताकाङ्क्षत्वात् **प्रशंसन्ती**त्यनुषङ्गोऽपि मा भूदित्यत्राह **एवमेव व्याख्यात**मिति । अन्वायत्ता इति वक्ष्यमाणपदप्रतीक्षां विनैव पूर्वश्रुत**प्रशंसन्ति**पदान्वयेनैव यथापाठं **यजमानं देवा**इत्यादेः शान्ताकाङ्क्षतया अन्ते प्रयुक्तं **अन्वायत्ता** इति पदमविशेषात् सर्वत्रान्वेतीति भावः । एवमत्र **प्रशासन** इत्यस्य **प्रशंसन्ती**त्यत्र नान्वयः, **किन्तु ददत** इत्यादौ ; 'यागदानहोमादिकं यस्याज्ञया प्रवर्तत' इति भाष्यानुसारादिति च **एवमेवे**त्यादिना सूचितम् ।

यदज्ञाने संसारः, यज्ज्ञाने च मोक्षः, तदिदं प्रमेयमित्याह **योवा एतदि**ति । **स कृपण** इति । यो हि स्वकीयं भोग्यं स्वयमभुक्त्वा कथञ्चित् क्षुद्रोपजीवननिर्वर्तितस्वयात्रः, स कृपणः । दायप्राप्तपरमात्मभोगमकृत्वा स्वर्गादौ प्रवृत्तोऽपि ईदृश एवेति ।

**विदित्वाऽस्माल्लोकात् प्रैति, स ब्राह्मणः ॥ ९ ॥**

**तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतँश्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ। नान्यदतोऽस्ति द्रष्टृ नान्यदतोस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ। एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति ॥ १० ॥**

---

यावत्। यो वा एतदक्षरं **गार्गि विदित्वाऽस्माल्लोकात् प्रैति** ब्रह्मज्ञानवान् म्रियते, सः **ब्राह्मणः** ब्रह्मवित् ब्रह्मणोऽनुभविता। मुक्त इति यावत्। तथा च भगवता **भाष्यकृता, यो वा एतदक्षरं गार्गीत्येतत्** व्याकुर्वता, "यदज्ञानात संसारप्राप्तिः, यज्ज्ञानाच्चामृतत्वप्राप्तिः, तदक्षरं परं ब्रह्मे" ति भाषितम् ॥ ९ ॥

**तद्वा एतदक्षरं गार्ग्यदृष्टं—विज्ञातृ।** अयोगिभिरदृश्यं सत् **द्रष्टृ** रूपादिसाक्षात्कर्तृ। एव**मश्रुतममतमविज्ञात**मित्यत्राप्ययोगिभिरिति योज्यम्। योगिविषये, 'द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्युक्तेः। **श्रोतृ** शब्दसाक्षात्कर्तृ। **मन्तृ** मन्तव्यसाक्षात्कर्तृ। **विज्ञातृ** अध्यवसेयसाक्षात्कर्तृ। **नान्यदतोऽस्ति द्रष्टृ — विज्ञातृ।** अत्रापि अन्तर्यामिब्राह्मणव्याख्यानोक्तरीत्या **अन्यशब्दस्य** तत्सदृशपरत्वमेव। यथा, 'चोळ एव भूपतिः, नान्यः' इत्युक्तेः तत्सदृशभूपतिनिषेधपरत्वम्, एवमिहाप्यदृष्टत्वादिविशेषितनिरुपाधिकद्रष्टृत्वाश्रयस्य परमात्मनः सदृशं किमपि नास्तीत्येवार्थः। यद्वा यथा एतदक्षरमन्यैरदृष्टं सत् स्वव्यतिरिक्तसमस्तद्रष्टृ स्वव्यतिरिक्तसमस्ताधारभूतञ्च, एवमनेनाक्षरेण अदृष्टम् एतस्याक्षरस्याधारभूतमेतस्य द्रष्टृ नास्तीत्यर्थः। पूर्वव्याख्यायां समनिषेधः; अस्यां व्याख्यायामधिकनिषेधः फलति। न च, 'नेह नानाऽस्ती' तिवत् 'नान्यदतोऽस्ती' त्यादिवाक्यस्यापि अब्रह्मात्मकवस्तुनिषेधपरत्वोपपत्तौ समाभ्यधिकनिषेधपरतया व्याख्यानं किमर्थमिति वाच्यम् — तद्वदत्रैक्यविधिविशेषत्वाभावेन समाभ्यधिकनिषेधपरत्वस्यैव युक्तत्वात्। उपसंहरति **एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति।** स्पष्टोऽर्थः। इतिशब्दः प्रतिवचनसमाप्तौ ॥ १० ॥

---

**स ब्राह्मण** इत्यनेन, 'मौनञ्चामौनञ्च निर्विद्याथ ब्राह्मण' इति कहोलं प्रति उक्तं स्मारितम्। **अदृष्टं द्रष्टृ**त्यादिना च उद्दालकं प्रति अदृष्टो द्रष्टेत्याद्युक्तस्मारणम्। अनेन समाभ्यधिकरहितत्वबोधनेन मुमुक्षूपास्यत्वोक्तस्यैव मुक्तप्राप्यत्वमपीति सूचितं भवति। अस्य अन्तर्यामिवेदनस्य फलं सर्ववित्त्वमिति च कबन्धवाक्यानूक्त्या गौतमेन ज्ञापितमेव। इयमेवाक्षरविद्या **मुण्डकेऽपि**।

**सा होवाच–ब्राह्मणा भगवन्तस्तदेव बहुमन्येध्वं यदस्मान्नमस्कारेण मुच्येध्वम्। न वै जातु युष्माकमिमं कश्चित् ब्रह्मोद्यं जेतेति। ततो ह वाचक्नव्युपरराम ॥ ११ ॥**

इति पञ्चमाध्याये अष्टमं ब्राह्मणम्।

---

एवं याज्ञवल्क्येन प्रत्युक्ता वाचक्नवी तदुक्तमभ्युपगम्य ब्राह्मणान् दृष्ट्वा आहे· त्याह **सा होवाच**। उक्तमेवाह **ब्राह्मणा भगवन्तस्तदेव बहुमन्येध्वं यदस्मान्नमस्कारेण मुच्येध्वम्।** हे भगवन्तो ब्राह्मणाः! यूयं तदेव बहुमन्येध्वम्। किं तत्? **यदस्मात्** याज्ञवल्क्यात् **नमस्कारेण मुच्येध्वं** नमस्कारं कृत्वा मुच्यध्व-मिति **यत्** — मुक्ता भवतेति यदित्यर्थः — तदेव बहुमन्येध्वमित्यन्वयः। न कदा· चिदप्यस्य याज्ञवल्क्यस्य पराजयः शङ्कनीयः। अतो नमस्कारं कृत्वाऽस्मान्मुक्ता भवतेत्यर्थः। **मन्येध्वं मुच्येध्व**मिति लिङ्मध्यमबहुवचनम्। **न वै जातु युष्माकमिमं कश्चित् ब्रह्मोद्यं जेतेति।** युष्माकं मध्ये **इमं** याज्ञवल्क्यं कश्चिदपि **ब्रह्मोद्यं** ब्रह्मवादं प्रति जेता नैवास्तीत्यर्थः। **ततो ह वाचक्नवी उपरराम।** एवं ब्राह्मणान् प्रति उक्त्वा तूष्णीं बभूवेत्यर्थः। (११)

(१) इदञ्च ब्राह्मणं समन्वयाध्याये तृतीयपादे चिन्तितम्—'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ती' त्यत्र अक्षरशब्दितं प्रधानमेव। 'अक्षरात् परतः परः' इत्यादावक्षरशब्दस्य प्रधाने प्रयोगात्; 'अस्थूल' मित्यादिनिषेधानाञ्च स्थूलत्वादि-प्रसक्तिमति अचेतने सामञ्जस्यात्; 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चे' त्या-काशाधारत्वेन प्रश्नस्य आकाशोपादानतया तदाधारभूतप्रधानविषयत्वौचित्याच्चेत्येवं प्राप्ते उच्यते – "अक्षरमम्बरान्तधृतेः"। अक्षरं परं ब्रह्म। अम्बरान्तधृतेः। अम्ब-रस्य आकाशस्य अन्तः = पारभूतं प्रधानम्; तद्धारकत्वादित्यर्थः। अयं भावः— 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चे' त्यत्राऽऽकाशो न वायुप्रकृतिभूताकाशः; अपि त्वव्याकृताकाशः। 'यदूर्ध्वं गार्गि दिवो यदर्वाक्पृथिव्याः यदन्तरा द्यावापृथिवी इमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षते आकाश एव तदोतञ्च प्रोतञ्चे' ति कालत्रय-वर्तिविकाराधारतयोच्यमानत्वस्य भूताकाशे असंभवेनाव्याकृताकाश एव संभवात्। तस्याप्याधारतया निर्दिश्यमानमक्षरं परमेव ब्रह्म भवितुमर्हति।

ननु जीवस्याप्यचेतनाधारत्वसंभवात् जीव एवाक्षरशब्दितः किं न स्यादित्यत्रोत्तरम्,—"सा च प्रशासनात्"। सा च अम्बरान्तधृतिः, 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादिना प्रशासनाधीनाऽत्र श्रूयते। प्रकृष्टं शासनं प्रशासनम्। शासनस्य प्रकर्षश्च असंकुचितसर्वविषयत्वम्। ततश्चासंकुचितचिदचिच्छासनं परमात्मधर्मः।

"अन्यभावव्यावृत्तेश्च"। 'तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ' इत्यादिना उपदिश्यमानैः इतरादृष्टत्वे सति सर्वद्रष्टृत्वादिरूपैर्धर्मैः [1] परमात्मान्यप्रकृतिजीवभावव्यावृत्तेश्च परमात्मैवेति स्थितम्।

(२) तथा गुणोपसंहारपादे—'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्व' मित्यादिनिर्दिष्टाः अक्षरसंबन्धिनः अस्थूलत्वादयः प्रपञ्चप्रत्यनीकतारूपाः सर्वकर्मत्वसर्वकामत्वादिवत् सर्वासु परविद्यासु नोपसंहर्तव्याः। उपसंहारे प्रमाणाभावात्। ननु स्वरूपनिरूपकाणां सत्यत्वज्ञानत्वादिधर्माणां सर्वपरविद्योपसंहारस्य, "आनन्दादयः प्रधानस्य" इत्यधिकरणसिद्धत्वात् तद्वदेवास्थूलत्वादिकं किं न स्यादिति चेन्न—सत्यत्वादिकमन्तरेण ब्रह्मस्वरूपस्यैव प्रत्येतुमशक्यतया सत्यत्वादेः सर्वविद्योपसंहारेऽपि अस्थूलत्वादीनामभावरूपाणाम्,

'लब्धरूपे क्वचित् किञ्चित् तादृगेव निषिध्यते'।

इति न्यायेन ब्रह्मप्रतीत्यनन्तरभाविप्रतीतिकानां ब्रह्मस्वरूपप्रतीत्युपयोगित्वाभावेन सर्वपरविद्योपसंहारे प्रमाणाभावादिति प्राप्ते — उच्यते — "अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम्"। अक्षरब्रह्मसंबन्धिनीनामस्थूलत्वादिधियां सर्वासु परविद्यास्ववरोधः = संग्रहणं कर्तव्यम्। कुतः? सामान्यतद्भावाभ्याम्। सर्वेषूपासनेषु उपास्यस्याक्षरब्रह्मणः समानत्वात्, अस्थूलत्वादीनां ब्रह्मप्रतिपत्त्यन्तर्भावाच्चेत्यर्थः। यथा सत्यत्वादिकमन्तरेण ब्रह्मस्वरूपं प्रतिपत्तुमशक्यम्, तथा अस्थूलत्वादिकमन्तरेण जीवव्यावृत्तं ब्रह्मस्वरूपं सत्यज्ञानादिवाक्यैर्न प्रतिपत्तुं शक्यम्। सत्यत्वादेः प्रत्यगात्मसाधारणत्वेन प्रत्यगात्मव्यावृत्तत्वाभावात्। स्थूल-

1. परमात्मनः प्रकृतीति क. पाठः। भावपदं न ग. कोशे।

त्वादि[1]हेयानर्हत्वं तु न जीवसाधारणम्। ततश्च अस्थूलत्वादीनां निषेधरूपतया सत्यादिवाक्यजन्यब्रह्मप्रतीत्युपजीवकत्वेऽपि स्वेतरसमस्तव्यावृत्तब्रह्मस्वरूपप्रतीतेः अस्थूलत्वादिकमन्तरेणासंभवात्[2] अस्थूलत्वादिकं सकलपरविद्योपसंहार्यमेव।

"इयदामननात्"। आभिमुख्येन मननं आमननम्। ध्यानमिति यावत्। आमननात् = ध्यानाद्धेतोः = ध्यानार्थमियदेवापेक्षितम्; न सर्वकर्मत्वसर्वकामत्वादिकमपि। तेन विनाऽपि इतरव्यावृत्तब्रह्मस्वरूपस्य प्रत्येतुं शक्यतया न सर्वकर्मत्वादेः सर्वपरविद्योपसंहारः। अपितु यत्र प्रकरणे आम्नातम्, तत्रैव व्यवतिष्ठते। अस्थूलत्वादिकं तु सामर्थ्यरूपलिङ्गवशात् सर्वविद्यानुयायि। अत एव हि, "संभृतिद्युव्याप्त्यपि चातः" इत्यधिकरणे व्याप्त्यादेः सामर्थ्यवशादल्पायतनविद्यासु न निवेश इत्युक्तम्। तत्र हि —

(३) 'ब्रह्म ज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान। ब्रह्म भूतानां प्रथमो हि जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः' इति राणायनीयानां खिलेषु मन्त्रः श्रूयते। अस्य मन्त्रस्यायमर्थः — ब्रह्म = ब्रह्मणेत्यर्थः। व्यत्ययश्छान्दसः। ज्येष्ठा = ज्येष्ठानि। शेः, 'शेश्छन्दसी' ति लोपे ('सुपां सुलुक्' इति लुकि) नलोपे च रूपम्। वीर्या = वीर्याणि। संभृतानि = धृतानि। तथा च ब्रह्मणा बहूनि श्रेष्ठानि वीर्याणि धृतानीत्यर्थः। ब्रह्माग्रे ज्येष्ठं दिवमाततान = तच्च ज्येष्ठं ब्रह्म अग्रे = इन्द्रादिजन्मनः प्रागेव दिवम् = स्वर्गम् आततान = व्याप्तवत्। किञ्च, 'ब्रह्म देवानां प्रथमो हि जज्ञे'। ब्रह्म देवानामुत्पत्तेः प्रागपि विद्यमानमित्यर्थः। 'तेनार्हति ब्रह्मणा स्पर्धितुं कः'। तादृशेन ब्रह्मणा कः स्पर्धितुं क्षमेतेत्यर्थः। अत्र परिच्छेदातीते ब्रह्मणि द्युव्यापकत्वादिकथनस्य स्वरूपोपदेशार्थत्वाभावेन उपासनार्थत्वस्य सिद्धतया स्वप्रकरणे उपासनाद्यश्रवणेन अनारभ्याधीतस्य द्युव्यापनादेः प्रकरणान्तरश्रुतविद्यार्थत्वे वक्तव्ये नियामकाभावादस्थूलत्वादिवत् सत्यत्वादिवच्च सर्वविद्यार्थत्वे प्राप्ते उच्यते — "संभृतिद्युव्याप्त्यपि चातः"। संभृतिद्युव्याप्तोति समाहारद्वन्द्वत्वादेकवद्भावः। संभरणं द्युव्यापनञ्च अतः = [3] स्थानवशाद्व्यवतिष्ठते। अल्पस्था-

1. हेयेत्यत्र भेदेति. क. 2. स्वरूपप्रतीत्यर्थमस्थूलत्वादिकं. क. 3. क. कोशे अतः स्थानवशादिति न; किन्तु तत्तत्स्थानवशादिति।

५—९.

**अथ हैनं विदग्धः शाकल्यः पप्रच्छ, कति देवा याज्ञवल्क्येति ।**

---

नासु दहरशाण्डिल्यादिविद्यासु अल्पत्वद्युव्यापकत्वयोर्विरोधाल्लिङ्गवशादल्पायतनानवरुद्धविद्यास्वेव व्यवतिष्ठते । न चैवमल्पायतनासु दहरशाण्डिल्यादिविद्यासु आनन्त्यस्याप्युपसंहारासंभवेन सत्यत्वज्ञानत्वानन्तत्वादेः सर्वविद्यानुयायित्वस्य, "आनन्दादयः प्रधानस्य" त्यधिकरणसिद्धस्य विरोधः स्यादिति वाच्यम् — स्वाभाविकानन्त्यस्यौपाधिकाल्पायतनत्वस्य चानुसन्धाने विरोधाभावात् । इह द्युपरिच्छिन्नत्वरूपद्युव्यापकत्वस्य च हृदयाद्यल्पायतनावच्छिन्नत्वस्य चौपाधिकतया परस्परविरुद्धौपाधिकपरिमाणद्वयानुसन्धानविरोधात् । इति हि तत्र स्थितम् । प्रकृतमनुसरामः ॥ ५—८.

**अथ हैनं विदग्धश्शाकल्यः पप्रच्छ** । शकलस्यापत्यं शाकल्यः । **विदग्धः** समर्थम्मन्य इति यावत् । प्रश्नमेवाह — **कति देवा याज्ञवल्क्येति** ।

---

नमो वयं ब्रह्मिष्ठाय कुर्महे इति याज्ञवल्क्यः सविनयं प्राक् प्राह स्म । अथाश्वलं पुरस्कृत्य संभूय परीक्षितुं प्रारेभिरे । परीक्षायां प्रचालितायां प्रष्टृषु सर्वेषु प्राप्तसदुत्तरेषु पुनरुपोत्थिता गार्गी स्वयमुपक्षिप्यमाणयोः प्रश्नयोः प्रत्युत्तरप्राप्तौ याज्ञवल्क्य एव ब्रह्मिष्ठ इति स एव सर्वैर्नमस्कार्य इति ब्राह्मणान् विज्ञाप्य तेष्वनुमतवत्सु प्रश्नावुपक्षिप्य प्रत्युत्तरं यथावदवाप । किमितो भवितुमुचितम् । ब्रह्मगवीनामुदजनं याज्ञवल्क्यकृतं सर्वैरभिनन्दनीयम्; सभां विघटय्य प्रस्थातव्यञ्च । एवं स्थिते कश्चिदब्रह्मविदेव वैयात्यात् वादमेव पुनः प्रवर्तयितुं प्रारेभे । याज्ञवल्क्यश्च, किमिमं ब्राह्मणाः प्रतिषेधन्ति, नेति पश्यन् तूष्णीम्भूतेषु तेषु तदनुमतिमेव तत्राभ्यूह्य शान्तचित्त एव शापादावप्रवृत्य समाधाने ससज्ज । एवमभ्यूहितामनुमतिमेवोपरि व्यञ्जयिष्यति, 'त्वां स्विदिमे ब्राह्मणा अङ्गारावक्षयणमक्रता' इति । तथापि नोपरंस्यति स विदग्धः । तदेवं बहुमान्ये याज्ञवल्क्ये बह्वपचरन् स्वात्मनाशमप्यविगणय्य स्थितः सर्वथैवासमर्थो विदग्धो नूनमन्वर्थनामेति दर्शयति **समर्थम्मन्य इति यावदि**त्यनेन । न तु विदग्धपदस्य तन्नामत्वमुपेक्ष्यते; सार्वत्रिकश्रुतिनिर्देशशैल्या तत्सिद्धेः । नाम्ना कुलनामसहितेन सर्वनिर्देशिनी हि श्रुतिः । अत एव शाङ्करम्, 'विदग्ध इति नामतः, शकलस्यापत्यं शाकल्यः' इति । उपरितनेऽध्याये च विदग्धः शाकल्य इति नाम्ना निर्देक्ष्यति ।

**स हैतयैव निविदा प्रतिपेदे, यावन्तो वैश्वदेवस्य निविद्युच्यन्ते, त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति। ओमिति होवाच, कत्येव देवा याज्ञवल्क्येति। त्रयस्त्रिँशदिति। ओमिति होवाच, कत्येव देवा याज्ञवल्क्येति। षडिति। ओमिति होवाच, कत्येव देवा याज्ञवल्क्येति। त्रय इति। ओमिति होवाच, कत्येव देवा याज्ञवल्क्येति। द्वाविति। ओमिति होवाच, कत्येव देवा याज्ञवल्क्येति। अध्यर्ध इति। ओमिति होवाच, कत्येव देवा याज्ञवल्क्येति। एक इति।**

**ओमिति होवाच, कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥ १ ॥**

---

किंसंख्याका देवा इत्यर्थः। **स हैतयैव निविदा प्रतिपेदे**। सः एवं पृष्टो याज्ञवल्क्यः **एतया** वक्ष्यमाणयैव निविदा देवतासंख्यां **प्रतिपेदे** प्रत्यपादयत्। उक्तवानिति यावत्। तदेव व्याकरोति **यावन्तो वैश्वदेवस्य निविद्युच्यन्ते**। वैश्वदेवस्य शस्त्रस्य निविदि — **निविन्नाम** वैश्वदेवशस्त्रे शस्यमानः देवतासंख्यावाचकपदयुक्तमन्त्रविशेषः। तस्यां निविदि — यावन्तो देवाः श्रूयन्ते, तावन्तो देवा इत्यर्थः। कियन्तः तत्रोच्यन्त इत्यत्राह **त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति**। **त्रयश्च त्री च शता** = त्रयश्च त्रीणि शतानीत्यर्थः। [उभयत्र] 'सुपां सुलु' गित्यादिना पूर्वसवर्णादेशः। त्र्यधिका त्रिशतीत्यर्थः। एवमुत्तरत्रापि। **त्रयश्च त्री च सहस्रा**। त्र्यधिका त्रिसहस्रीति यावत्। उक्तमङ्गीकरोति शाकल्यः ओमिति। (होवाच) **उवाच**। विदग्ध इति शेषः। पुनरपि सूक्ष्मदृष्ट्या पृच्छति **कत्येव देवा याज्ञवल्क्येति**। उत्तरमाह **त्रयस्त्रिंशदिति**। शाकल्योऽङ्गीकरोति ओमिति। पुनरपि सूक्ष्मदृष्ट्या पृच्छति **कत्येव**—। याज्ञवल्क्य उत्तरमाह **षडिति**। अभ्युपगच्छति। **ओमिति**। एवमुत्तरत्रापि द्रष्टव्यम् — **अध्यर्ध** इति। एक इति शेषः। अर्धाधिक एक इत्यर्थः। शिष्टं स्पष्टम्। एवं देवतासंकोचविकासविषयां संख्यां पृष्ट्वा संख्येयस्वरूपं पृच्छति शाकल्यः, **कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति**। पूर्ववदर्थः॥ १

**स होवाच—महिमान एवैषामेते ; त्रयस्त्रिँशत्त्वेव देवा इति। कतमे ते त्रयस्त्रिँशदिति। अष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिँशत् ; इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिँशाविति ॥ २ ॥**

**कतमे वसव इति। अग्निश्च पृथिवी च वायुश्चान्तरिक्षश्चाऽऽदित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसवः। एतेषु हीदं वसु सर्वं हितमिति, तस्माद्वसव इति ॥ ३ ॥**

---

**स होवाच**। अत्र याज्ञवल्क्य उत्तरमाहेत्यर्थः। तदेवाह **महिमान एवैषामेते ; त्रयस्त्रिंशत्त्वेव देवाः**। **एषां** त्रयस्त्रिंशतो देवानामेते [1] षडधिकत्रिशताधिकत्रिसहस्रभेदाः **महिमान एव** गुणभूता इत्यर्थः। तथैव व्यासार्यैः "विरोधः कर्मणी" ति सूत्रे उक्तम्। तस्मात् त्रयस्त्रिंशदेव देवा इत्यर्थः। पृच्छति **कतमे ते त्रयस्त्रिंशदिति**। उत्तरम् **अष्टौ वसवः —**। स्पष्टम्। **इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति**। [2] त्रयस्त्रिंशतः पूरणावित्यर्थः। [3] इन्द्रो द्वात्रिंशः। प्रजापतिस्त्रयस्त्रिंश इत्यर्थः ॥ २ ॥

पुनः पृच्छति **कतमे वसव इति**। अष्टौ वसव इत्युक्ता वसवः के इत्यर्थः। उत्तरम् **अग्निश्च पृथिवी च — एते वसवः**। स्पष्टम्। उक्तानां वसुत्वमुपपादयति **एतेषु हीदं वसु सर्वं हितमिति, तस्माद्वसव इति**। यस्मादेतेषु अग्न्यादिषु सर्वमिदं वसुशब्दवाच्यं धनं हितं निहितम्, ते तस्मात् वसव इत्युच्यन्त इत्यर्थः। अस्मिन् प्रकरणे **अग्निपृथिव्यादिशब्दाः** तत्तदभिमानिदेवतापरा इति द्रष्टव्यम् ॥ ३ ॥

1. षडधिकेति न. ख. ग. 2. एवमर्थवर्णनं. ख. ग. कोशयोः। 3. एवमर्थवर्णनं. क. कोशे।

---

**कतमे वसव** इति। श्रीविष्णुपुराणे, 'आपो ध्रुवश्च सोमश्च धर्मश्चैवानिलोऽनलः। प्रत्यूषश्च प्रभासश्च वसवो नामभिः स्मृताः। हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः। वृषाकपिश्च शम्भुश्च कपर्दी रैवतस्तथा। मृगव्याधश्च शर्वश्च कपाली च महामुने। एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः,' विष्णुश्च, अर्यमा चैव धाता च त्वष्टा पूषा तथैव च। विवस्वान् सविता चैव मित्रो वरुण एव च। अंशुर्भगश्चातितेजाः आदित्या द्वादश स्मृताः' इति वसुरुद्रादित्यनिर्देशोऽन्यथा दृश्यते। अथापि नामभेदेऽप्यर्थैक्यमिति वा, अत्राभिमन्यमानवस्तुना मुखेन विष्णु-

**कतमे रुद्रा इति। दशमे ( दशेमे ) पुरुषे प्राणा आत्मैकादशः। ते यदाऽस्माच्छरीरान्मर्त्यादुत्क्रामन्ति, अथ रोदयन्ति। तद्यद्रोदयन्ति, तस्माद्रुद्रा इति ॥ ४ ॥**

**कतम आदित्या इति। द्वादश वै मासास्संवत्सरस्य। एत आदित्याः। एते हीदँ सर्वमाददाना यन्ति। तस्मादादित्या इति ॥ ५ ॥**

**कतम इन्द्रः कतमः प्रजापतिरिति। स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति। कतमः स्तनयित्नुरिति। अशनिरिति। कतमो यज्ञ इति। पशव इति ॥ ६ ॥**

---

पृच्छति **कतमे रुद्रा इति**। एकादश रुद्रा इत्युक्ताः के इत्यर्थः। उत्तरं **दशमे पुरुषे प्राणा आत्मैकादशः**। ज्ञानकर्मेन्द्रियाणि दश पुरुषस्थानि—**दशमे** दशेम इत्यर्थः—**दशेमे पुरुषे** इति पाठे स्पष्टोऽर्थः — एकादशस्त्वात्मा मन इत्यर्थः। **ते — इति**। ते प्राणा यदाऽस्मात् **मर्त्यात्** मरणधर्मकात् शरीरादुत्क्रामन्ति, **अथ** तदा म्रियमाणं पुरुषं रोदयन्तीति रुद्रा इत्यर्थः ॥ ४ ॥

पृच्छति **कतम आदित्या इति**। द्वादशादित्या इत्युक्ताः के इत्यर्थः। उत्तरं **द्वादश वै मासाः संवत्सरस्यैत आदित्या इति**। स्पष्टम्। तेषामादित्यत्वमुपपादयति **एते हीदं सर्वमाददाना यन्ति — तस्मादादित्या इति**। एते हि मासा **इदम्** उत्पत्तिमतां जीवितं सर्वमाददानाः अपहरन्तो **यन्ति** गच्छन्ति। तस्मादादित्या इत्यर्थः ॥ ५ ॥

**कतम इन्द्रः कतमः प्रजापतिरिति** प्रश्नः। **स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरि**त्युत्तरम्। **कतमः स्तनयित्नुरिति** पुनः प्रश्नः। **अशनिरि**त्युत्तरम्। **कतमो यज्ञ** इति प्रश्नः। अत्रोत्तरम् **पशव इति**। यज्ञसाधनत्वात् पशव एव यज्ञ इत्युच्यन्त इत्यर्थः ॥ ६ ॥

---

पुराणोक्ता अधिष्ठातार एव विवक्षिता इति वा निर्वाह्यम्। वसुरुद्रादित्यशब्दनिर्वचनञ्च कृतमिह—आददानाः यन्तीत्यादित्याः, रोदयन्तीति रुद्राः, वसु निहितमेतेष्विति वसव इति। वसन्ति वासयन्ति चेति वसव इति तु शाङ्करे भाव उक्तः माध्यन्दिनाद्यनुसारात्।

**कतमे षडिति । अग्निश्च पृथिवी च वायुश्चान्तरिक्षश्चादित्यश्च द्यौश्च । एते षट् । एते हीदँ सर्वँ षडिति ॥ ७ ॥**

**कतमे ते त्रयो देवा इति । इम एव त्रयो लोकाः । एषु हीमे सर्वे देवा इति । कतमौ तौ द्वौ देवाविति । अन्नञ्चैव प्राणश्चेति । कतमोऽध्यर्ध इति । योऽयं पवत इति ॥ ८ ॥**

**तदाहुर्यदयमेक एवेव[1] पवते अथ कथमध्यर्ध इति । यदस्मिन्निदँ सर्वमध्यार्ध्नोत् तेनाध्यर्ध इति ।**

1. इवैव. शा.

---

**कतमे षडिति** प्रश्नः । षडित्युक्ता देवाः के इत्यर्थः । एवमग्रेऽपि । उत्तरम् — **अग्निश्च पृथिवी च वायुश्चान्तरिक्षश्चादित्यश्च द्यौश्च । एते षडेते हीदं सर्वं षडिति ।** उक्तमिदं सर्वम् एते षट् । **एते** अग्न्यादयः । अत एव एते षडित्यर्थः ॥ ७ ॥

**कतमे ते त्रयो देवा** इति प्रश्नः । उत्तरम् **इम एव त्रयो लोकाः — देवा इति ।** सर्वदेवाश्रयत्वात् त्रय एव लोका देवा इत्यर्थः । प्रश्नः **कतमौ तौ द्वौ देवाविति ।** उत्तरम् **अन्नञ्चैव प्राणश्चेति । कतमोऽध्यर्ध** इति प्रश्नः । उत्तरं **योऽयं पवत** इति । वायुरेवेत्यर्थः ॥ ८ ॥

**तदाहुर्यदयमेक एव — अथ कथमध्यर्ध इति । यत्** यस्मादयं वायुरेक एव पवते, तत् कथमिवाध्यर्ध इति शङ्कायामेवमुत्तरमाहुरित्यर्थः । तदेवोत्तरमाह **यदस्मिन्निदं सर्वमध्यार्ध्नोत्तेनाध्यर्ध इति । अध्यार्ध्नोत्** । 'ऋधु वृद्धौ' । अधिकवृद्धिं यस्मिन् वायाविदं जगत् प्राप्तम्, तेनायं वायुरध्यर्ध इत्युच्यत

---

अध्यार्ध्नोत् तेनाध्यर्ध इति । संख्याप्रकरणानुरोधात् **अध्यर्ध** इत्यस्य अर्धाधिक एक इत्येवार्थ इति एतदनुगुणमुपपादनं हि कार्यम् । तत् कथमध्यार्ध्नोदिति उपपादनमिति चेत्— न; वस्तुत एक एव वायुः । तथापि जगतः तत्कृत उपकारः ततः प्रतीक्षितादुपकारात् अर्धगुणमधिक एव वर्तते इति एकस्यैवाध्यर्धदेवताकार्यकरत्वादध्यर्धत्वमित्याशयात् । **तदाहुरि**त्यस्य चोदयन्तीत्यर्थापेक्षया, उक्तमर्थं चोदनापूर्वकं विवृत्याऽऽहुरित्यर्थो युक्त इत्याशयेन **एवमुत्तरमाहुरि**ति व्याख्यातम् ।

**कतम एको देव इति । प्राण इति । स ब्रह्म त्यदित्याचक्षते ॥ ९ ॥**

**पृथिव्येव यस्यायतनमग्निर्लोको मनोज्योतिः । यो वै तं पुरुषं विद्यात् सर्वस्यात्मनः परायणम्, स वै वेदिता स्याद्याज्ञवल्क्य । वेद वा अहं**

---

इत्यर्थः । **कतम एको देव** इति प्रश्नः । उत्तरं **प्राण इति** । ननु प्राणः पवमान-(पवन ?) पर्यायः । स चाध्यर्ध इत्युक्तः कथमेक इत्युच्यत इत्यत्राह **स ब्रह्म-त्यदित्याचक्षते** । अत्र **प्राण**शब्देन, **त्यत्** अन्यत् सर्वविलक्षणं ब्रह्मेति यदाहुः, तदेवोच्यत इत्यर्थः । ततश्च ब्रह्मणो महिमानः सर्वे देवा इति पर्यवसि-तोऽर्थः ॥ ९ ॥

शाकल्यः पृच्छति — **पृथिव्येव यस्यायतनं — याज्ञवल्क्य** । यस्य पृथिव्येव **आयतनम्** आधारः । शरीरमिति यावत् । यस्याग्निर्लोकः । लोक्यते अनेनेति **लोकः** । दर्शनसाधनमित्यर्थः । अग्निना हि पश्यति । **मनो ज्योतिः** । मन एव ज्योतिः संकल्पविकल्पादिकार्यकारि यस्य सः मनोज्योतिः । पृथिव्याय-तनकत्वेनाग्निदर्शनसाधनकत्वेन मनसा संकल्पयितृत्वेन च सर्वात्मनां=सर्वजीवानां परायणः परमप्राप्यभूतः पुरुषशब्दितः परमात्मा वेद्य इति सिद्धम् । तत्र कीदृशविशे-षणविशिष्टः परमात्मा पृथिव्यायतनकत्वेनाग्निदर्शनसाधनकत्वेन मनसा संकल्पयितृ-त्वेन च ध्यातव्य इति प्रश्नस्य फलितार्थः । ईदृशः परमात्मा पृथिव्यायतनकत्वादिना ज्ञातव्य इति यो ज्ञाता, स एव ज्ञाता हे याज्ञवल्क्य !; नान्य इत्यर्थः । एवमुक्तो याज्ञवल्क्य आह **वेद वा अहं—यमात्थ** । **वै**शब्द एवार्थः । अहं (अहं वेदैव ?)

---

**प्राणशब्देने**ति । अत्रत्यं प्राणपदं ब्रह्मपरमिति, 'विरोधः कर्मणी' ति सूत्रे व्यासार्यै-रुक्तम् । तदनुसारेणैवं व्याख्यातम । अतः, 'प्राणब्दार्थो ब्रह्म' ति श्रुत्यर्थत्वे त्यत्पदवैयर्थ्यमिति, प्रसिद्धब्रह्मवत् मुख्यप्राणोऽप्यन्यद् ब्रह्मेति तत्प्रशंसेह क्रियतामिति न शङ्क्यम् । सर्वेषां विष्ण्वादिदेवानां मुख्यप्राणमहिमत्वायोगात् । मुख्यप्राणवैलक्षण्यार्थतयैव च त्यत्पदसार्थक्यात् ।

'**पृथिवी**त्यादि याज्ञवल्क्यवाक्यम्; याज्ञवल्क्येत्यारभ्य **स एष** इत्यन्तं शाकल्यवाक्य' मिति स्वीकारे, याज्ञवल्क्येन स्वयमेवाप्रसक्तार्थोपक्षेपपूर्वकं प्रश्ने प्रवृत्तमिति वक्तव्यम् । तन्न रुचिर-मिति **पृथिवी**त्यादि याज्ञवल्क्येत्यन्तं शाकल्यवाक्यमित्येवेष्यते । तदुपरि **वेद वा** इत्यारभ्य

**तं पुरुषँ सर्वस्यात्मनः परायणम्, यमात्थ। य एवायँ शारीरः पुरुषः स एषः। वदैव शाकल्य तस्य का देवतेति। अमृतमिति होवाच ॥ १० ॥**

---

सर्वस्यात्मनः परायणं पृथिव्याद्यायतनकत्वादिना उपास्यं यं त्वं वदसि, तमहं जानाम्येवेत्यर्थः। कोऽसावित्यत्राह **य एवायं शारीरः पुरुषः, स एषः।** **शारीरः** जीवः। तदन्तर्यामीति यावत्। यद्वा, **शारीरः** जगच्छरीरकः। ततश्च जगच्छरीरकत्वविशिष्टः सर्वात्मपरायणभूतः पुरुषशब्दितः परमात्मा पृथिव्याय-तनकत्वादिना ध्यातव्य इत्यर्थः। एवं तस्योत्तरमुक्त्वा अस्मिन् विषये ज्ञेयं विशेषणान्तरं याज्ञवल्क्यः स्वयं पृच्छति **वदैव शाकल्य तस्य का देवतेति।** तस्य पृथिव्यायतनत्वादिवेदितुः उपास्यदेवता **का,** पुनरपि [1] किङ्गुणविशिष्टा किंरूपविशिष्टा ध्यातव्या। तत् शाकल्य! त्वं वदेत्यर्थः। उत्तरमाह शाकल्यः **अमृतमिति।** अमृतमिति [2] संज्ञया अमृतत्वगुणेन वा विशिष्टा ध्यातव्येत्यर्थः। 'स त आत्माऽन्तर्याम्यमृतः' इति अन्तर्यामिणोऽमृतत्वाऽऽवेदनादिति द्रष्टव्यम्। यद्वा याज्ञवल्क्य आह **वदैव शाकल्येति।** हे शाकल्य! **वदैव** पृच्छैव। यत् प्रष्टव्यम्, तत् सर्वं पृच्छेत्यर्थः। **तस्य का देवतेति** शाकल्यप्रश्नः। **अमृतमिति** याज्ञवल्क्योत्तरम्। एवमुत्तरत्रापि द्रष्टव्यम् ॥ १० ॥

1. किंसंज्ञादिविशिष्टा ध्यातव्या. ग. 2. अमृतामितिसंज्ञादिविशिष्टा. ग.

---

देवतेत्यन्तं याज्ञवल्क्यवाक्यम्। इतिशब्दपर्यन्तमेकस्य वाक्यमित्यस्य युक्तत्वात्। एवञ्च वदेत्यपि उत्तरं वदेत्यर्थकं स्वरसमिति स्वयं भाष्ययोजना। **शाकल्येत्यन्तमेव** याज्ञवल्क्य-वाक्यम्; उपरि प्रष्टाऽपि शाकल्य एवेति शाङ्करयोजना। सा यद्वेति दर्शिता। **मनोज्योतिरिति**पद-द्वयञ्चेत् यस्येति पदमनुषज्यते। ऐकपद्ये तत् बहुव्रीहिवृत्तम्। स इति तच्छब्दादिरध्याहार्यः।

**शारीरो जीवः तदन्तर्यामीति यावदिति।** एवं परमात्मपरतया व्याख्यानादेव **तस्य का देवतेत्यत्र तस्येत्यनेन** शारीरपुरुषग्रहणासंभवात् वेदितृपुरुषपरतया व्याख्यानम्, वेदितुरुपास्यदेवता किङ्गुणविशिष्टेति तात्पर्यकल्पनञ्च। शाङ्करे **तु, शारीरः पुरुषः** त्वङ्मांसरुधिरात्मकः मातृजकोश इत्युक्तम्। मातृजेति पितृजस्य अस्थिमज्जाशुक्ररूपकोशस्य व्यावृत्तिरिव। अब्रह्मवित्त्वात् शाकल्यस्य तद्वाक्यं परमपुरुषातिरिक्तार्थकमेव युक्तमिति पक्षमपि उपरीह भाष्ये दर्शयिष्यति **केचित्तु बालाकीति। उभयथापि न विरोध** इति तत्स्वीकारोऽपि सूचयिष्यत एव।

काम एव यस्यायतनं हृदयं लोको मनोज्योतिः। यो वै तं पुरुषं विद्यात् सर्वस्यात्मनः परायणम्, स वै वेदिता स्याद्याज्ञवल्क्य। वेद वा अहं तं पुरुषँ सर्वस्यात्मनः परायणम्, यमात्थ। य एवायं काममयः पुरुषः, स एषः। वदैव शाकल्य तस्य का देवतेति। स्त्रिय इति होवाच ॥ ११ ॥

रूपाण्येव यस्यायतनं चक्षुर्लोको मनोज्योतिः। यो वै तं पुरुषं विद्यात् सर्वस्यात्मनः परायणम्, स वै वेदिता स्याद्याज्ञवल्क्य। वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणम्, यमात्थ। य एवासावादित्ये पुरुषः, स एषः। वदैव शाकल्य तस्य का देवतेति। सत्यमिति होवाच ॥ १२ ॥

आकाश एव यस्यायतनँ श्रोत्रं लोको मनोज्योतिः। यो वै तं पुरुषं विद्यात् सर्वस्यात्मनः परायणम्, स वै वेदिता स्याद्याज्ञवल्क्य। वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणम्, यमात्थ। य एवायं श्रौत्रः प्रातिश्रुत्कः पुरुषः, स एषः। वदैव शाकल्य तस्य का देवतेति। दिश इति होवाच ॥ १३

तम एव यस्यायतनं हृदयं लोको मनोज्योतिः। यो वै तं पुरुषं विद्यात् सर्वस्यात्मनः परायणम्, स वै वेदिता स्याद्याज्ञवल्क्य। वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणम्, यमात्थ। य एवायं छायामयः पुरुषः, स एषः।

---

**काम एव यस्यायतनम्** —। **काममय इति**। कामशरीरक इत्यर्थः। **स्त्रिय इति होवाचेति**। [1]स्त्रीसंज्ञकतया ध्यातव्य इत्यर्थः ॥ ११ ॥

**रूपाण्येव यस्यायतनम्** —। **सत्यमिति होवाचेति**। 'तद्यत् सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषः' इति श्रुतेरिति भावः ॥ १२ ॥

**आकाश एव यस्यायतनम्** —। **श्रौत्रः प्रातिश्रुत्क इति**। **प्रातिश्रुत्कः** प्रतिध्वनिविशिष्टः। **श्रौत्रः** श्रोत्रेणानुभूयमानः। श्रोत्रानुभूयमानत्वञ्च परमात्मनः प्रतिध्वनिद्वारा द्रष्टव्यम्। **दिश इति होवाचेति**। दिक्छरीरकः, दिङ्नामको वा उपास्य इत्यर्थः ॥ १३ ॥

**तम एव यस्यायतनम्** —। **छायामयः** छायाशरीरक इत्यर्थः।

1. स्त्रीशरीरकतया. ग.

वदैव शाकल्य तस्य का देवतेति । मृत्युरिति होवाच ॥ १४ ॥

रूपाण्येव यस्यायतनं चक्षुर्लोको मनोज्योतिः। यो वै तं पुरुषं विद्यात् सर्वस्यात्मनः परायणम्, स वै वेदिता स्याद्याज्ञवल्क्य। वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणम्, यमात्थ। य एवायमादर्शे पुरुषः, स एषः। वदैव शाकल्य तस्य का देवतेति। असुरिति होवाच ॥ १५ ॥

आप एव यस्यायतनं हृदयं लोको मनोज्योतिः। यो वै तं पुरुषं विद्यात् सर्वस्यात्मनः परायणम्, स वै वेदिता स्याद्याज्ञवल्क्य। वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणम्, यमात्थ। य एवायमप्सु पुरुषः, स एषः। वदैव शाकल्य तस्य का देवतेति। वरुण इति होवाच ॥ १६ ॥

---

**मृत्युरिति होवाचेति** । मृत्युसंज्ञिक इत्यर्थः । बालाक्यजातशत्रुसंवादे छायापुरुषे, 'मृत्युरिति वा अहमेतमुपास' इति दर्शनादिति भावः ॥ १४ ॥

[1] **रूपाण्येव यस्यायतनम्** — । पूर्वमादित्यपुरुषे रूप [चक्षुः] सामान्यमुक्तम्; इह तु तद्विशेष इति भिदा। **असुरिति होवाचेति**। 'बालाकिब्राह्मणे प्रातिश्रुत्कपुरुषे असुत्वमुक्तम्; इह तु आदर्शपुरुषे असुत्वम्। तत्र आदर्शपुरुषे रोचिष्णुत्वमुक्तम्; विद्याभेदसंभवादिति द्रष्टव्यम्। इयांस्तु विशेषः — बालाकिब्राह्मणे ब्रह्मलिङ्गाभावात् तत्रत्यपुरुषशब्दो न ब्रह्मपर्यन्तः। इह तु सर्वात्मत्वपरायणत्वादिरूपब्रह्मलिङ्गात् ब्रह्मपर्यन्तः' इति विवेकः। केचित्तु बालाकिब्राह्मण इव अत्रत्यपुरुषशब्दानामपि ब्रह्मपर्यन्तत्वं नाभ्युपगच्छन्ति। उभयथाऽपि न विरोधः॥ १५

**आप एव यस्यायतनम्**— । य एवायमप्सु **पुरुषः** अप्छरीरक इत्यर्थः। **वरुण इति होवाचेति**। वरुणनामक इत्यर्थः ॥ १६ ॥

1. माध्यन्दिने तु पुनर्न रूपपर्यायः; किं तु तेजःपर्यायः।

---

**रूपाणी**त्यादिपूर्वप्रश्नसरूपत्वादर्थवैलक्षण्यं कल्पयति पूर्वमित्यादिना। **आदर्शे पुरुष** इति प्रत्युत्तरानुसारात् **रूपाणी**त्यस्य प्रतिरूपाणीत्यर्थो युज्येत।

रेत एव यस्यायतनं हृदयं लोको मनोज्योतिः। यो वै तं पुरुषं विद्यात् सर्वस्यात्मनः परायणम्, स वै वेदिता स्याद्याज्ञवल्क्य। वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणम्, यमात्थ। य एवायं पुत्रमयः पुरुषः, स एषः। वदैव शाकल्य तस्य का देवतेति। प्रजापतिरिति होवाच ॥ १७ ॥

शाकल्येति होवाच याज्ञवल्क्यः, त्वाँ स्विदिमे ब्राह्मणा अङ्गारावक्षयणमक्रता३ इति ॥ १८ ॥

याज्ञवल्क्येति होवाच शाकल्यो यदिदं कुरुपाञ्चालानां ब्राह्मणान-

---

**रेत एव यस्यायतनम्** —। स्पष्टम्।

उक्ताष्टपुरुषेषु मनोज्योतिष्ट्वं सर्वत्राऽनुगतम्; आयतनानां लोकानां धर्माणाञ्च भेदः ॥ १७ ॥

**शाकल्येति होवाच याज्ञवल्क्यः** एवं प्रतिवादकुपितो याज्ञवल्क्यः शाकल्येति संबोध्य तमुवाचेत्यर्थः। तदेवाह **त्वां स्विदिमे ब्राह्मणा अङ्गारावक्षयणमक्रता इति**। स्विदिति वितर्के। इमे नूनं ब्राह्मणाः स्वयं मत्प्रतिवादे भीतास्सन्तः, **अङ्गारावक्षयणम्** — अङ्गारा अवक्षीयन्ते गृह्यन्ते येन पात्रेण तदङ्गारावक्षयणम् — तन्नूनं त्वाम् **अक्रत** कृतवन्तः ब्राह्मणाः (?) । त्वं तु न बुध्यसे आत्मानं मया दह्यमानमित्यभिप्रायः ॥ १८ ॥

**याज्ञवल्क्येति होवाच शाकल्यः। उवाच** अत्रोत्तरमाहेत्यर्थः। किमिति। **यदिदं कुरुपाञ्चालानां**—सप्रतिष्ठाः। कुरुपाञ्चालानां ब्राह्मणानिमान्

---

**अङ्गारावक्षयण**मिति। याज्ञवल्क्यकरिष्यमाणशापादिः अङ्गारत्वेनाध्यवसयते। 'क्षय निवासे' इत्यस्मात् ल्युटि **अवक्षयण**माधार इत्यर्थोऽपि सुवच इव। यद्वा अवक्षयो विनाशः। मदीयशापाङ्गारप्रसक्तविनाशं त्वां ब्राह्मणाः कृतवन्त इति। इदञ्च **त्वांस्विदिति** वाक्यम्, **एतान्यष्टावायतनानी**त्यादिना वक्ष्यमाणं प्रश्नमुपक्षिप्य शाकल्यः शकलयितव्य इति समुद्युञ्जानस्य महर्षेरुद्घातरूपम्। अब्रह्मवित्तु शाकल्यः तथाप्रश्नस्यावकाशमप्रदाय अन्यतस्तमाक्रष्टुं प्रवृत्ते। तत् प्रदर्श्यते **याज्ञवल्क्येती**त्यादिना।

**त्यवादीः किं ब्रह्म विद्वानिति दिशो वेद सदेवाः सप्रतिष्ठा इति। यद्दिशो वेत्थ सदेवाः सप्रतिष्ठाः (१९) किन्देवतोऽस्यां प्राच्यां दिश्यसीति। आदित्यदेवत इति। स आदित्यः कस्मिन् प्रतिष्ठित इति। चक्षुषीति। कस्मिन्नु चक्षुः प्रतिष्ठितमिति। रूपेष्विति। चक्षुषा हि रूपाणि पश्यति। कस्मिन्नु रूपाणि प्रतिष्ठितानीति। हृदय इति होवाच, हृदयेन हि**

---

सर्वान् विदुषो**ऽत्यवादीः** अत्युक्तवानसि = अधिक्षिप्तवानसि किल, 'स्वयं भीताः त्वामङ्गारावक्षयणं कृतवन्त' इति। **किं ब्रह्म विद्वानिति** —। कीदृशब्रह्मविद्यावानिति हेतोरेवमधिक्षिपसि ब्राह्मणान्। अहं तु दिशः तदधिष्ठातृदेवताश्च तत्प्रतिष्ठाश्च **इति** एवम्प्रकारेण जाने। त्वमप्यहमिव दिशो देवताः तत्प्रतिष्ठाश्च यदि वेत्सि तर्हि, पृच्छामि, वदेत्यर्थः॥ १९.॥

इत्युक्त्वा, तर्हि पृच्छेत्युक्तः शाकल्यः पृच्छति **किन्देवतोऽस्यां प्राच्यां दिश्यसीति**। अस्यां प्राच्यां दिशि किन्देवतः त्वमसि? का देवता यस्य सः किन्देवतः। प्राग्दिगधिष्ठातृत्वेन कां देवतामुपास्स इत्यर्थः। याज्ञवल्क्य उत्तरमाह **आदित्यदेवत इति**। आदित्यो देवता यस्य सः **आदित्यदेवतः**। प्राच्यां दिश्यधिष्ठातृत्वेनादित्यमहमुपासे इत्यर्थः। शाकल्यः पृच्छति **स आदित्यः कस्मिन् प्रतिष्ठित** इति। उत्तरं **चक्षुषीति**। प्रतिष्ठित इत्यनुषङ्गः। पुनः पृच्छति **कस्मिन्नु चक्षुः प्रतिष्ठितमिति**। उत्तरं **रूपेष्विति**। तत्रोपपत्तिमाह **चक्षुषा हि रूपाणि पश्यति**। हि यस्माच्चक्षुषा रूपाणि पश्यति, अतश्चक्षुः स्वविषये प्रतिष्ठितमित्यर्थः। पृच्छति **कस्मिन्नु रूपाणि प्रतिष्ठितानीति**। उत्तरं **हृदय इति होवाच**। तत्रोपपत्तिमाह **हृदयेन हि** —। हि यस्माल्लोको हृदयेनैव

---

अत्र किं ब्रह्म विद्वानित्यन्तं शाकल्यवाक्यम्, दिश इति याज्ञवल्क्यस्य; यद्दिशइत्यादि शाकल्यस्येति शाङ्करः प्रकारः, बहुज्ञेन याज्ञवल्क्येन दिशो वेदेति विशेषकथनमप्रसक्तमिति कृत्वाऽत्र तदपि शाकल्यवाक्यतयैव योजितमिह। अत्र ब्रह्म विद्वानित्याशयेन किमत्यवादीः, किं वा दिशोऽपि सदेवाः सप्रतिष्ठा जानामीति अत्यवादीरिति शाकल्यः पृच्छतीत्यपि योजना भवेत्। तदा वेदेत्यस्य कर्ता याज्ञवल्क्यः।

रूपाणि सर्वो लोको जानाति, हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीति।

**एवमेवैतद्याज्ञवल्क्य (२०), किन्देवतोऽस्यां दक्षिणायां दिश्यसीति। यमदेवत इति। स यमः कस्मिन् प्रतिष्ठित इति। यज्ञ इति। कस्मिन्नु यज्ञः प्रतिष्ठित इति। दक्षिणायामिति। कस्मिन्नु दक्षिणा प्रतिष्ठितेति। श्रद्धायामिति। यदा ह्येव श्रद्धत्ते, अथ दक्षिणां ददाति; श्रद्धायाँ ह्येव दक्षिणा प्रतिष्ठितेति। कस्मिन्नु श्रद्धा प्रतिष्ठितेति। हृदय इति होवाच, हृदयेन हि श्रद्धां जानाति, हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीति।**

**एवमेवैतद्याज्ञवल्क्य (२१), किन्देवतोऽस्यां प्रतीच्यां दिश्यसीति। वरुणदेवत इति। स वरुणः कस्मिन् प्रतिष्ठित इति। अप्स्विति। कस्मिन्न्वापः प्रतिष्ठिता इति। रेतसीति। कस्मिन्नु रेतः प्रतिष्ठितमिति।**

---

रूपाणि जानाति, तस्मात् हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्ति। अन्तः-करण एव वासनात्मना प्रतिष्ठितानि भवन्तीत्यर्थः। उक्तमङ्गीकरोति **एवमेवैतद्या-ज्ञवल्क्य** ॥ २० ॥

अथान्यत् पृच्छति **किन्देवतोऽस्यां दक्षिणायां दिश्यसीति**। पूर्वव-दर्थः। उत्तरमाह **यमदेवत इति**। पृच्छति **स यमः कस्मिन् प्रतिष्ठित इति**। उत्तरं **दक्षिणायामिति**। कस्मिन्नु दक्षिणा प्रतिष्ठितेति प्रश्नः। श्रद्धाया-मित्युत्तरम्। तत्रोपपत्तिमाह **यदा ह्येव श्रद्धत्ते—प्रतिष्ठितेति**। यदा श्रद्धा जायते, तदैव दक्षिणां ददाति। अतः श्रद्धायामेव दक्षिणा प्रतिष्ठितेत्यर्थः। पृच्छति **कस्मिन्नु श्रद्धा प्रतिष्ठितेति। हृदय इति होवाच**। उत्तरमिति शेषः। तत्रोपपत्तिमाह **हृदयेन हि —**। हृदयेन हि यस्मात् श्रद्धां जानाति करोति, अतो हृद्येव श्रद्धा प्रतिष्ठिता भवतीत्यर्थः। **एवमेतद्याज्ञवल्क्य**। पूर्ववत् ॥ २१ ॥

अन्यत् पृच्छति **किन्देवतोऽस्यां प्रतीच्यां दिश्यसीति**। उत्तरं **वरुण-देवत इति। स वरुणः कस्मिन् प्रतिष्ठित** इति प्रश्नः। **अप्स्वित्युत्तरम्। कस्मिन्न्वापः प्रतिष्ठिता** इति प्रश्नः। **रेतसीत्युत्तरम्। कस्मिन्नु रेतः**

---

दिग्रूपदक्षिणायाः द्रव्यरूपदक्षिणायाश्च अभेदाध्यवसायादेवं स्यात्।

**हृदय इति। तस्मादपि प्रतिरूपं जातमाहुर्हृदयादिव सृप्तो हृदयादिव निर्मित इति, हृदये ह्येव रेतः प्रतिष्ठितं भवतीति ।**

**एवमेवैतद्याज्ञवल्क्य (२२), किन्देवतोऽस्यामुदीच्यां दिश्यसीति। सोमदेवत इति। स सोमः कस्मिन् प्रतिष्ठित इति। दीक्षायामिति। कस्मिन्नु दीक्षा प्रतिष्ठितेति। सत्य इति। तस्मादपि दीक्षितमाहुः सत्यं वदेति, सत्ये ह्येव दीक्षा प्रतिष्ठितेति। कस्मिन्नु सत्यं प्रतिष्ठितमिति। हृदय इति होवाच, हृदयेन हि सत्यं जानाति, हृदये ह्येव सत्यं प्रतिष्ठितं भवतीति।**

**एवमेवैतद्याज्ञवल्क्य (२३), किन्देवतोऽस्यां ध्रुवायां दिश्यसीति। अग्निदेवत इति। सोऽग्निः कस्मिन् प्रतिष्ठित इति। वाचीति। कस्मिन्नु**

---

**प्रतिष्ठितमिति** प्रश्नः। **हृदय** इत्युत्तरम्। तत्रोपपत्तिमाह **तस्मादपि प्रतिरूपं -- निर्मित इति**। यस्माज्जातं पितुः **प्रतिरूपं** पितृसदृशसंस्थानं पुत्रं जनाः पितुर्हृदयान्निर्गत इव वर्तते, पितृहृदयान्निर्मित इव वर्तते अयं कुमार इत्याहुः — अतो हृदय एव पुत्रपरिणामि रेतः प्रतिष्ठितमित्यर्थः। उक्तमङ्गीकरोति शाकल्यः **एवमेवैतद्याज्ञवल्क्य** ॥ २२ ॥

अन्यत् पृच्छति **किन्देवतोऽस्यामुदीच्यां दिश्यसीति। सोमदेवत** इत्युत्तरम्। **स सोमः कस्मिन् प्रतिष्ठित** इति प्रश्नः। **दीक्षायामि**त्युत्तरम्। कस्मिन्नु दीक्षा प्रतिष्ठितेति प्रश्नः। **सत्य** इत्युत्तरम्। तत्रोपपत्तिमाह **तस्मादपि दीक्षितम्** —। यस्मात् दीक्षितं सत्यं वदेति दीक्षासिद्ध्यै तद्याजकाः शिक्षमाणा आहुः, तस्मात् सत्ये ह्येव दीक्षा प्रतिष्ठितेत्यर्थः। **कस्मिन्नु सत्यं प्रतिष्ठित**मिति प्रश्नः। उत्तरं **हृदय इति**। तदुपपादयति **हृदयेन हि** —। अङ्गीकरोति **एवमेवैतद्याज्ञवल्क्य** ॥ २३ ॥

पृच्छति **किन्देवतोऽस्यां ध्रुवायां दिश्यसीति**। स्वर्लोकापेक्षया भूमेर्ध्रुवत्वात् भूमिरूपा अधोदिक् **ध्रुवे**त्युच्यते। उत्तरम् **अग्निदेवत** इति। **सोऽग्निः कस्मिन् प्रतिष्ठित** इति प्रश्नः। उत्तरम् **वाचीति। कस्मिन्नु**

---

**दीक्षायामि**ति। सोमलताया दीक्षासंबन्धात् लताचन्द्रयोः सोमत्वेनैक्याध्यासमूलकमिदं स्यात्। ऊर्ध्वा दिक् **ध्रुवे**ति शाङ्करम्। तत्राग्निदेवत्यत्वं क्लेशनिर्वाह्यम्।

**वाक् प्रतिष्ठितेति । हृदय इति ।**

**कस्मिन्नु हृदयं प्रतिष्ठितमिति ॥ २४ ॥**

**अहल्लिकेति होवाच याज्ञवल्क्यो यत्रैतदन्यत्रास्मन्मन्यासै यद्ध्येतदन्यत्रास्मत् स्यात्, श्वानो वैनदद्युर्वयाँसि वैनद्विमथ्नीरन्निति॥ २५ ॥**

**कस्मिन्नु त्वं चात्मा च प्रतिष्ठितौ स्थ इति। प्राण इति।**

---

**वाक् प्रतिष्ठितेति** प्रश्नः । **हृदय** इत्युत्तरम् ।

पुनः पृच्छति **कस्मिन्नु हृदयं प्रतिष्ठितमिति** । एवं सर्वदिग्देवतानां प्रतिष्ठाभूतं हृदयं क्व प्रतिष्ठितमित्यर्थः ॥ २४ ॥

**अहल्लिकेति होवाच याज्ञवल्क्यः** । अहल्लिकेत्युक्त्वा याज्ञवल्क्य उत्तरमाहेत्यर्थः । 'अहल्लिक' इति शाकल्यस्य नामान्तरमिति केचित् । '**अहल्लिकः** षण्डः । कोपादेवं शाकल्यं याज्ञवल्क्यो ब्रूते' इति केचित् । **यत्रैतदन्यत्रास्मन्मन्यासै — विमथ्नीरन्** इति । **अस्मत्** अस्माच्छरीरादित्यर्थः । यद्वा अस्मदिति पञ्चमीबहुवचनान्तोऽस्मच्छब्दो द्रष्टव्यः । **अस्मत्** अस्मत्त इत्यर्थः । अस्माच्छरीरादन्यत्र यत्र क्वाप्येतद्धृदयं प्रतिष्ठितमिति किल **मन्यासै** मन्यसे । यद्येतत् हृदयम् **अस्मत्** अस्मत्तोऽन्यत्र गच्छेत्, तदा **एनत्** इदं शरीरं **श्वानो** वा **अद्युः** भक्षयेयुः; **वयांसि** पक्षिणो वा **विमथ्नीरन्** लोडयेयुः । तस्मात् शरीरस्य मध्ये हृदयं प्रतिष्ठितमित्यर्थः । [ अभेदोपचाराच्छरीरमेवास्मदित्युक्तमिति द्रष्टव्यम् ]॥ २५

पुनः पृच्छति **कस्मिन्नु त्वञ्चात्मा च प्रतिष्ठितौ स्थ इति** । हृदयप्रतिष्ठाधारभूत'**स्त्वम्** — अस्मदिति त्वयोक्तं शरीरञ्च — **आत्मा च** — आत्मशब्देनात्र हृदयमुच्यते । [2] त्वच्छरीरं त्वद्धृदयञ्च — कस्मिन् प्रतिष्ठितावित्यर्थः । **स्थ** इति अस्तेर्मध्यमपुरुषद्विवचनम् । उत्तरं **प्राण** इति । प्राणा-

1. 'त्वञ्चात्मा च' इत्येतावदेव. ख. ग. 2. त्वदित्यादि इत्यर्थ इत्यन्तं क. कोशमात्रे ।

---

पञ्चस्वपि दिक्प्रश्नेषु अन्ततो हृदयस्य प्रतिष्ठात्वमदर्शि । तत् हृदयं कुत्र प्रतिष्ठितमिति शाकल्येन पृष्टे, पुरुषे प्रतिष्ठितमिति आञ्जस्येन समाधाने वक्तव्येऽपि, अतिप्रसिद्धार्थप्रश्नो न युक्त इति क्रोधोत्पीडेन तमर्थं भङ्ग्यन्तरेणाह **अहल्लिकेत्यादिना** । **इति केचिदिति** । अहनि लीयत इति विगृह्य पदमिदं प्रेतवाचीत्यानन्दगिरीये प्रकारान्तरमूहितम् । **त्वञ्चात्मा चेति** । पूर्वं हृदयं शरीरे प्रतिष्ठितमित्येवोक्तम्; न तु शरीरं हृदये प्रतिष्ठितमित्यपि ।

**कस्मिन्नु प्राणः प्रतिष्ठित इति । अपान इति । कस्मिन्न्वपानः प्रतिष्ठित इति । व्यान इति । कस्मिन्नु व्यानः प्रतिष्ठित इति । उदान इति । कस्मिन्नूदानः प्रतिष्ठित इति । समान इति ।**

**स एष नेति नेतीत्यात्मा अगृह्यो न हि गृह्यते; अशीर्यो**

---

धीनप्रतिष्ठत्वा[1]च्छरीरमनसोरिति भावः । एवमुत्तरत्रापि द्रष्टव्यम् । **कस्मिन् नु प्राणः प्रतिष्ठित** इति प्रश्नः । **अपान** इत्युत्तरम् । **कस्न्न्विपानः प्रतिष्ठित** इति प्रश्नः । **व्यान** इत्युत्तरम् । **कस्मिन् नु व्यानः प्रतिष्ठित** इति प्रश्नः। **उदान** इत्युत्तरम् । **कस्मिन्नूदानः प्रतिष्ठित** इति प्रश्नः । **समान** इत्युत्तरम् ।

एवं प्रश्नप्रतिवचनपरम्परायां परिसमाप्तायां तूष्णीम्भूते शाकल्ये समानप्रतिष्ठाधारप्रश्नस्य तेन कृतत्वाभावात् तमसौ न वेत्तीति निश्चित्य याज्ञवल्क्यः समानप्रतिष्ठाधारं स्वयं शाकल्यं पृच्छति (प्रक्ष्यन् ?) तमेव समानप्रतिष्ठाधारं विशिनष्टि [2]**स एष नेति नेतीत्यात्मा** । **स एषः** उक्तसमानप्रतिष्ठाधारभूतः । 'अथात आदेशो नेति नेती' ति निर्दिष्टो य आत्मा, स एषः=समानप्रतिष्ठाधारभूत इत्यर्थः । **अगृह्यो न हि गृह्यते** । इन्द्रियग्रहणायोग्यत्वादिन्द्रियेण न गृह्यते । **अशीर्यो**

1. जीवमनसोः ख. ग. 2. 'पृच्छति स एषनेति' इत्येतावदेव. ख. ग. कोशयोः ।

---

शाङ्करे तु **त्वञ्चात्माचे**त्यस्य शरीरञ्च हृदयञ्चेत्यर्थात् अन्योन्यप्रतिष्ठितत्वं पूर्वं विवक्षितमित्युक्तम् । आत्मा हि मध्यकायो हृदयं भवतीत्याशयात् । इह भाष्ये उपरि तदर्थस्वीकारेऽपि अन्योन्यप्रतिष्ठा नादृता । वस्तुतो याज्ञवल्क्येन शरीरे हृदयं प्रतिष्ठितमिति साक्षादकथनात् अस्मासु प्रतिष्ठितमित्येव तद्वाक्यतः प्रतीत्या, अस्मत्पदेन जीवः शरीरमिति द्वयं ग्रहीतुं शक्यते। तदुभयं विवक्षितं चेत्, तर्हि पृच्छामि तदुभयं कुत्र प्रतिष्ठितमित्याशयः **त्वञ्चात्माचे**ति वक्तुः शाकल्यस्य स्यात् ।हृदयस्य प्रतिष्ठायाः प्राग्दर्शिततया तत्प्रतिष्ठाप्रश्नस्य पुनरयोगादिति ।

एवमन्यत्राकृष्टः पिपृच्छिषितविषयप्रश्नस्य पुनरवसरं प्राप्तमाकलय्य प्रष्टुं प्रारभते । तत् वाक्यमवतारयति **एवं प्रश्नप्रतिवचनपरम्परायामि**ति । **स एष** इत्यादिकं श्रुत्या स्वरूमुच्यते; **एतानीत्यादि** याज्ञवल्क्यवाक्यमिति शाङ्करविभागे मानाभावात् सर्वं याज्ञवल्क्यवाक्यमेव । तत्र **स एष** इत्यस्य वक्ष्यमाणयच्छब्दप्रतिसंबन्धिमात्ररूपत्वे पूर्वसंदर्भेण संगतिर्न सिद्ध्येदिति प्रकृतः समानः **स** इति ग्राह्यः । आत्मनि तदभेदायोगात् तत्प्रतिष्ठानरूपार्थविवक्षेति ।

**न हि शीर्यते; असङ्गो न हि सज्यते; असितो न व्यथते, न रिष्यति। एतान्यष्टावायतनान्यष्टौ लोका अष्टौ देवा अष्टौ पुरुषाः; स यस्तान् पुरुषान्नि[1]रूह्य प्रत्यूह्यात्यक्रामत्, तं त्वौपनिषदं पुरुषं पृच्छामि;**

1. निरुह्यप्रत्युह्य. पा०.

---

**न हि शीर्यते।** विशरणयोग्यावयवशून्यत्वान्न शीर्यते। **असङ्गो न हि सज्यते।** निर्लेपत्वात् पापफलं नानुभवतीत्यर्थः। **असितो न व्यथते न रिष्यति।** असितः; 'षिञ् बन्धने'। कर्मबन्धशून्यत्वादेव सर्वदेहान्तर्गतोऽपि **न व्यथते** न शोचति, **न रिष्यति** न हिंस्यते वेत्यर्थः। एतादृशं समानप्रतिष्ठाधारभूतं याज्ञवल्क्यो मनसि निधाय, एतं शाकल्यो न वेत्तीति निश्चित्य पृच्छति **एतान्यष्टावायतनान्यष्टौ लोका अष्टौ देवा अष्टौ पुरुषाः** –। यानि प्रागुक्तानि पृथिव्यादीन्यष्टावायतनानि, अग्न्याद्या अष्टौ लोकाः, अमृताद्या अष्टौ देवाः, शारीराद्या अष्टौ पुरुषाः, स यः प्रसिद्धः पुरुषः एतान् पुरुषान्निरूह्य प्रत्यूह्यात्यक्रामत् — अत्र **पुरुषा**नित्युपलक्षणम्। आयतनलोकदेवादीनित्यपि द्रष्टव्यम्। एतान्**निरूह्य प्रत्यूह्य** = सम्यङ्निर्धारणार्थो निरूहः। प्रतिव्यक्त्यूहः प्रत्यूहः। आयतनदेवलोकपुरुषान् — प्रतिव्यक्ति तर्केण तत्तत्स्वरूपं—निर्धार्य, तान् सर्वान् **योऽत्यक्रामत्** यः पुरुषः अत्यक्रामत्=सकलकार्यवर्गविलक्षणत्वेन निश्चित इत्यर्थः। यद्यपि अतिक्रमणकर्तृत्वमौपनिषदात्मगतम्; निरूहप्रत्यूहकर्तृत्वं तु पुरुषगतम्,—तथापि ण्यर्थगर्भतया य ऊहयित्वा अत्यक्रामदित्युक्तौ न विरोध इति द्रष्टव्यम्। ऊहविषयस्य परमात्मनः ऊहयितृत्वसंभवात्। अतिक्रमणं नाम, इदं वा परमिदं वा परमिति संशयविषयतातिक्रमणम्। तच्च परमात्मकर्तृकं संभवतीति द्रष्टव्यम् — **तं त्वौपनिषदं पुरुषं पृच्छामि**

---

**अगृह्यत्वाशीर्यत्वे** अच्छिद्रयावर्तके। असंगत्वासितत्वे चिद्रयावर्तके। **निरुह्य प्रत्युह्येति** ह्रस्वपाठे 'नामरूपयोर्निर्वहिते' त्यस्यानुसारात् उत्पाद्य उपसंहृत्येति क्रमेणार्थः। दीर्घपाठे, उदीचोऽङ्गारान् निरूह्य अङ्गारमग्नौ प्रत्यूह्ये' तिवत् प्रयोगः। **औपनिषद**मिति। अत एव हि शास्त्रयोनित्वादित्यसूत्रि। जीवस्तु न वेदैकसमधिगम्यः, स्वप्रकाशत्वात्। सांख्यादिभिरपि स्वीकाराच्च। नैयायिकस्येश्वरानुमानमपि जीवेनैव गतार्थम्, नेश्वरसाधकमिति हि ब्रूमः। अतोऽपि जीवसिद्धिः। यद्वा श्रौतीमेवात्मसिद्धिं श्रोत्रियाः संगिरन्ताम्। श्रुतार्थापत्त्यादिना वेदे कर्मकाण्डतोऽपि देहातिरिक्तात्मसिद्धिरिति न स औपनिषदः। उपनिषदां प्रधानप्रतिपाद्यश्चाच परमपुरुष एवौपनिषद इति।

**तं चेन्मे न विवक्ष्यसि, मूर्धा ते विपतिष्यतीति ।**

---

तं सर्वविलक्षणमौपनिषदम् उपनिषदेकसमधिगम्यं त्वा पृच्छामि; तं चेन्मे न विवक्ष्यसि, तर्हि मूर्धा ते विपतिष्यतीति याज्ञवल्क्यः शाकल्यं शशापेत्यर्थः। सूत्रितञ्च परमपुरुषस्यौपनिषदत्वं भगवता बादरायणेन, "शास्त्रयोनित्वा" दिति।

(१) तत्र ह्यधिकरणे—अङ्कुरादिकं सकर्तृकं कार्यत्वादित्यनुमानसिद्धेश्वरानुवादितया न वेदान्तवाक्यं तत्र प्रमाणम्। अतो वेदान्तन्यायग्रथ(न्थ)नात्मकमीमांसाशास्त्रमनारम्भणीयम्। न चेश्वरमनुमानसिद्धमनूद्य वेदान्तैर्जगदुपादानत्वादिकं बोध्यताम्; अतः शास्त्रमारभ्यतामिति वाच्यम्— कार्यत्वस्योपादानभिन्नकर्तृकत्वेन व्याप्ततया अभिन्ननिमित्तोपादानत्वप्रतिपदकवेदान्तवाक्यस्य धर्मिग्राहकानुमानजातीयनिमित्तोपादानभेदग्राह्यनुमानबाधितत्वात्। अतो न वेदान्तवाक्यं ब्रह्मणि प्रमाणमिति प्राप्ते—उच्यते—"शास्त्रयोनित्वात्"। शास्त्रं योनिः प्रमाणं यस्य तत् शास्त्रयोनि; तत्त्वात्, शास्त्रैकसमधिगम्यत्वाद्वेदान्तानां प्रमाण्यमस्तीत्यर्थः। कार्यत्वेन हेतुना सकर्तृकत्वसाधने, तेनैव हेतुना गुणत्रयवश्यकर्तृकत्व—शरीरजन्यत्वादेरपि प्रसङ्गात्। प्रासादादिविपुलकार्यस्यानेककर्तृकत्वदर्शनेन क्षित्यादिकार्यस्यापि तथात्वप्रसङ्गाच्च। ईश्वरस्य नित्यकृत्यभ्युपगमे तद्द्वारा हेतुभूतयोर्ज्ञानेच्छयोरीश्वरे असिद्धिप्रसङ्गेन ज्ञानेच्छाप्रयत्नलक्षणगुणत्रयाश्रयेश्वरासिद्धिप्रसङ्गात्। अतः शास्त्रैकसमधिगम्येश्वरस्वरूपोपादानत्वप्रतिपादकवेदान्तभागस्य नानुपपत्तिः।

(२) अत एव सांख्यपक्षस्याप्रतिष्ठिततर्कमूलत्वेन यथा आभासत्वम्, एवं कणभक्षाक्षपादक्षपणकबौद्धपक्षाणां परमाणुकारणत्वपक्षपातिनां शुष्कतर्कमूलत्वाद्वैदिकपरिग्रहशून्यत्वाच्च नादरणीयत्वमिति स्मृतिपादे, "एतेन शिष्टापरिग्रहा अपि व्याख्याताः" इत्यधिकरणे निर्णीतम्। शिष्टाः=परिशिष्टाः। ते च ते अपरिग्रहाश्च शिष्टापरिग्रहाः। अवशिष्टाः वैदिकपरिग्रहशून्याः कणभुगादिपक्षाः एतेन सांख्यपक्षदूषणेनैव दुष्टत्वेन व्याख्याता इति सूत्रार्थः।

(३) तथा तर्कपादेऽपि परमाणुकारणवादो दूषितः। तथाहि(तत्र हि)-काणादपक्षस्य युक्तियुक्ततया आदरणीयत्वमस्त्विति पूर्वपक्षे प्राप्ते—उच्यते "महद्दीर्घवद्वा

ह्रस्वपरिमण्डलाभ्याम्"। पारिमण्डल्यपरिमाणाश्रयेण परस्परसंयुक्तपरमाणुद्वयेनाणुह्रस्वं द्व्यणुकमुत्प(त्पा ? )द्यते, परस्परसंयुक्तेनाणुह्रस्वद्व्यणुकत्रयेण महद्दीर्घं त्र्यणुकमुत्पद्यते इत्यसमञ्जसप्रक्रियावत् इतराऽपि तत्प्रक्रिया असमञ्जसैव। किं तत्रासमञ्जस्यमिति चेत् न—निष्प्रदेशे परमाणौ प्रादेशिकसंयोगासंभवात्। संयोगस्याव्याप्यवृत्तित्वनियमात्। परस्परासंयुक्तप्रदेशाभावे ततोऽधिकपरिमाणकार्यानुत्पत्तिप्रसङ्गात्।

"उभयथाऽपि न कर्मातस्तदभावः"। परमाणुनिष्पाद्यं कर्म अदृष्टकारितमिति हि तै रभ्युपगम्यते। तत्र न परमाणुसमवेतमदृष्टं क्रियाहेतुः; अचेतनस्यादृष्टानाधारत्वात्। नाप्यात्मगतं परमाणुक्रियाहेतुः; व्यधिकरणत्वात्। अतः, 'अदृष्टकारिताद्यकर्मणा परमाणुद्वयसंयोगः' इति तत्प्रक्रिया न युक्ता।

"समवायाभ्युपगमाच्च साम्यादनवस्थितेः"। जातिगुणादिविशिष्टप्रतीतिनिर्वाहकतया समवायाभ्युपगमे, 'तन्तुषु पटः समवेतः' इति समवायविशिष्टप्रतीतिनिर्वाहकतासाम्येन संबन्धान्तरस्यावश्यकत्वात्, [2] तत्रापि संबन्धान्तराभ्युपगमे अनवस्था च स्यात्।

"नित्यमेव च भावात्"। समवायलक्षणसंबन्धस्य नित्यं सत्त्वात् संबन्धिनोरपि नित्यसत्त्वावश्यम्भावेन जगतो नित्यत्वमेव स्यात्।

"रूपादिमत्त्वाच्च विपर्ययो दर्शनात्"। रूपादिमत्त्वाच्च परमाणोः त्वदभिमतनित्यत्वनिरवयवत्वादिव्यतिरेकः प्रसज्येत। लोके रूपादिमतामनित्यत्वादिदर्शनात्। नन्वेतद्दोषशान्तये रूपादिशून्या एव पमाणवः सन्तु। तत्राह —"उभयथा च दोषात्"। कारणगुणपूर्वकत्वात् त्वन्मते कार्यगुणानाम्, द्व्यणुकादीनामपि रूपादिशून्यत्वप्रसङ्गः।

"अपरिग्रहाच्चात्यन्तमनपेक्षा"। वैदिकपरिग्रहशून्यत्वाच्च तत्पक्षस्य, निःश्रेयसार्थिभिस्तत्पक्षेऽनपेक्षैव कार्या इति स्थितम्।

(४) वैशेषिकादयोऽर्धवैनाशिका इति हि शिष्टगोष्ठीप्रसिद्धिः। [1] ते हि—जाठराग्निना पच्यमानानां भुक्तपीताहारौषधरसद्रव्यरूपाणामवयवानां प्रतिक्षणमुपचयापचय-

1. नैयायिकैः क. 2. आवश्यकता क.

वैषम्यात् अवयवि शरीरमपि प्रतिक्षणमुपचयापचयवदन्यदन्यद्भवति । यद्यपि शरीरस्य प्रतिकलमुपचयापचयदर्शनं नास्ति—तथाऽपि वर्षधारानिपातैस्तटाकजलस्येव, घटीयन्त्रोत्क्षेपणैः कूपजलस्येव चान्ते तद्दर्शनात् यौक्तिकं प्रतिक्षणं किञ्चित्किञ्चिदुपचयापचयवत्त्वज्ञानमस्त्येव । चन्द्रतारकादीनां मुहूर्तादिकालव्यवधानेन बहुदेशान्तरप्राप्तिदर्शनात् प्रतिक्षणं स्वल्पदेशान्तरप्राप्तिज्ञानवत् इत्य[1]भ्युपगच्छन्ति । एवं प्रतिक्षणमवश्यम्भाविभिः खननपूरणादिभिः भूगोळकस्य, नदीजलसंसर्गशीकरोत्पतनैः समुद्रस्य चोपचयापचयवतः क्षणिकत्वमभ्युपगच्छन्ति । अतस्ते अर्धवैनाशिकाः । बौद्धास्तु सर्वस्य प्रपञ्चस्य [च] क्षणिकत्वमभ्युपगच्छन्तः सर्ववैनाशिका इति हि वैदिकानां व्यवहारः । अतो वैनाशिकत्वपरमाणुकारणवादित्वसाम्यादेव काणादमतप्रतिक्षेपानन्तरं बौद्धमतमपि प्रतिक्षिप्तं तत्पादे, "समुदाय उभयहेतुकेऽपि तदप्राप्तिः" इत्यादिना ।

तत्र हि खरस्नेहोष्णेरण[3] स्वभावैः परमाणुभिः पृथिव्यादिभूतलक्षणः संघात उत्पद्यते । पृथिव्यादिभिश्च भूतैः शरीरेन्द्रियविषयसंघातलक्षणः समुदाय उत्पद्यते इति हि (?) तेषां प्रक्रिया । तत्राणुहेतुके पृथिव्यादिभूतात्मकसमुदाये, भूतहेतुके च (?) शरीरेन्द्रियविषयलक्षणभौतिकसमुदाये च सति जगदात्मकसमुदायोत्पत्तिर्नोपपद्यते । सर्वेषां क्षणिकत्वाभ्युपगमे यावत्संघातभावापत्ति अवस्थानासंभवात् ।

"इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न संघातभावानिमित्तत्वात्" । यद्यपि सर्वे पदार्थाः क्षणिकाः — तथाप्यविद्यादीनामितरेतरकारणत्वादुपपद्यते लोकयात्रा । ते चाविद्यादयः अविद्या, संस्कारः, विज्ञानम्, नामरूपम्, षडायतनम्, स्पर्शः, वेदना, तृष्णा, उपादानम्, भवः, जातिः, जरा, मरणम्, शोकः, परिदेवना, दुःखम्, दौर्मनस्यमित्येवञ्जातीयकाः इतरेतरहेतुकाः सुगतसमये अभ्युपगम्यन्ते । अविद्या = क्षणिककार्यदुःखशून्येषु स्थायिनित्यसुखवस्तुबुद्धिः । ततो रागद्वेषमोहधर्माधर्म(र्माः?)संस्काराः । संस्कारवशाज्जीवस्य गर्भाशयद्रव्ये वृत्तिलाभो विज्ञानम् । विज्ञानसंसर्गात् गर्भद्रव्यस्य कललपेश्याद्याकारेणाभिव्यक्तिर्नामरूपम् ।

1. तेहीति पूर्ववाक्यारम्भे पठ्यते । अथापि नयमयूखमालिकानुसारात् अत्र निवेशः । अपेक्षितत्वात् । अन्यथा हिशब्दाधिक्याच्च । 2. इति हीति क पाठः । 3. अयं ख ग. पाठः । उष्णस्वभावैः क. उष्णतेरणस्वभावैः (नय. म. मा.).

तदभिव्यक्तिक्रमेण षडिन्द्रियायतनशरीरनिर्वृत्तिः षडायतनम् । निर्वृत्तशरीरेन्द्रियस्य गर्भगतविषयेन्द्रियसंसर्गजं ज्ञानं स्पर्शः । तन्निमित्ते सुखदुःखे वेदना । सुखदुःखप्राप्तिपरिहारार्था विषयोपादानेच्छा तृष्णा । तया विषयेषु प्रवृत्तिरुपादानम् । ततः क्रमेण गर्भान्निष्क्रमणं भवः । निर्गतस्य मनुष्यत्वादिजात्यभिमानो जातिः । क्रमभाविनी जरामरणे प्रसिद्धे । म्रियमाणस्य पुत्रकळत्राद्यभिषङ्गादन्तर्दाहः शोकः । तदुत्थः प्रलापः परिदेवना । मरणक्लेशो दुःखम् । मानसदुःखं दौर्मनस्यम् । एतेषामितरेतरहेतुत्वस्यानुभवसिद्धत्वादुपपद्यते लोकयात्रेति चेन्न — संघातभावानिमित्तत्वात् अस्थिरेषु स्थिरत्वबुद्धिरूपाविद्याश्रयस्य कस्य चित् स्थिरस्य [ चेतनस्य ] अभावेनाविद्यया भूतो ( रागो ) त्पत्तेरसंभवेन संघातहेत्वभावस्तदवस्थ एव ।

" उत्तरोत्पादे च पूर्वनिरोधात् "। बौद्धमते वस्तुतः कालो नास्ति। उदयन्नेव ( उद्यन्नेव ? ) स्वरसभङ्गुरो घटादिः क्षणपरिकल्पनामात्रनिमित्तं भवति । स च घटादिः स्वोदयविनाशपरिकल्पितक्षणवत्त्वात् क्षणिकोऽपि भवति । वस्तुतः स्वव्यतिरिक्तक्षणाभावात् स्वयमेव क्षणो भवतीति हि तेषां प्रक्रिया । ततश्च पूर्वघटक्षणस्योत्तरघटक्षणोत्पत्तिकालेऽसतः तद्धेतुत्वं न संभवति । असतोऽपि हेतुत्वेऽतिप्रसङ्गात् ।

"असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा " । असत्यपि कारणे कार्यस्योत्पत्तौ 'अधिपतिसहकार्यालम्बनसमनन्तरप्रत्ययाश्चत्वारश्चित्तचैत्तोत्पत्तिहेतवः ' इति बौद्धानां प्रतिज्ञाया उपरोधप्रसङ्गः । अधिपतिः इन्द्रियम् । तद्धि ज्ञानस्य रूपादिषु पञ्चसु एकैकमात्रविषयत्वनियामकम् । नियामकश्च लोकोऽधिपतिरुच्यते । सहकारि आलोकादिकम् । आलम्बनं घटादिर्विषयः । समनन्तरप्रत्ययः पूर्वज्ञानम् । एतैः चतुर्विधैर्हेतुभिश्चित्तशब्दितस्य ज्ञानस्य चैत्तशब्दितानां चित्ताभिन्नसुखादीनाञ्चोत्पत्तिरिति हि तेषां प्रतिज्ञा । सा प्रतिज्ञा हीयेत, यदि पूर्वोत्तरक्षणवर्तित्वं न स्यात् । तत्र यदि पूर्वक्षणवर्तित्वं न स्यात् , तदा कारणत्वं हीयेत । उत्तरक्षणवर्तित्वाभावे च वर्तमानत्वग्राहिप्रत्यक्षविषयत्वं न स्यात् । अतः क्षणद्वयवर्तित्वमभ्युपेतव्यमिति क्षणिकत्वविरोधः । यद्येतद्दोषपरिजिहीर्षया कारणघटक्षणस्यापि कार्यघटक्षणोत्पत्तिदशायां सत्त्वमभ्युपगम्यते, तदा घटक्षणद्वययौगपद्यप्रसङ्ग इत्यर्थः ।

“ प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ” । बौद्धाः सर्वस्य वस्तुनो निरन्वयो विनाश इति वदन्ति । स च द्विविधः, स्थूलः सूक्ष्मश्च । मुद्गरपाताद्यनन्तरं सर्वैरुपलभ्यमानो घटादीनां विनाशः स्थूलः । सः प्रतिसंख्यानिरोध इत्युच्यते । प्रतिसंख्या = विषयसत्त्वप्रतिकूला तदसत्त्वग्राहिणी लौकिकानां बुद्धिः ; तद्विषयो निरोध इत्यवयवार्थान्वयात् । तद्विपरीतो निरोधः अप्रतिसंख्यानिरोधः । स च सूक्ष्मो लौकिकबुद्ध्ययोग्यो बौद्धैर्युक्त्या साध्यमानः प्रतिक्षणविनाशः । तयोरुभयोरप्राप्तिः असंभवः । कुतः? अविच्छेदात् । पिण्डघटकपालादिरूपेण स्थितस्य द्रव्यस्य स्वरूपविच्छेदाभावात् । न च द्रव्यानुवृत्तौ विनष्टो घट इत्यादिप्रतीतेर्निर्विषयत्वापत्तिः, अवस्थान्तरापत्तिविषयत्वसंभवात् ।

“ उभयथा च दोषात् ” । बौद्धाः किलैवं वर्णयन्ति । प्रतिसंख्यानिरोधः, अप्रतिसंख्यानिरोधः, आकाशश्चेत्येतत्त्रितयं वस्तु निरुपाख्यं तुच्छम् । अन्यत्तु क्षणिकमुत्पाद्यमिति मन्यन्ते । तत्र पूर्वोत्पन्नस्य घटक्षणस्य तदानीमेव निरुद्धत्वप्राप्त्या तुच्छात् [1]निरोधादेव कार्यघटक्षणस्योत्पत्तिरिति यदभ्युपगम्यते, तत्र तुच्छादुत्पत्त्यसंभवस्तावदेको दोषः । तुच्छादुत्पत्त्यभ्युपगमे हि तुच्छस्य निर्विशेषत्वेन कारणविशेषकृतः कार्यविशेष इति व्यवस्थाया अभावात् घटक्षणानन्तरं सर्वजगत उत्पत्तिः स्यात् । तथा तुच्छादुत्पद्यमानं कार्यमपि तुच्छमेवोत्पद्येत, न तु सद्रूपम् ; कारणानुसारित्वात् कार्यस्येत्यपरो दोष इत्यर्थः ।

“ आकाशे चाविशेषात् ” । घटोऽयम् , पटोऽयमिति प्रत्यक्षप्रतीतिवत् , ‘कूपोऽसौ, रन्ध्रमेतत् , खग इह पतति ’ इत्यादिप्रत्यक्षस्याविशेषेण, आकाशं निरुपाख्यं तुच्छम् , घटादिकं क्षणिकतुच्छमित्यत्र प्रमाणाभावात् । न च, ‘इह श्येनः पतती ’ त्यादिप्रतीतेरालोक एव विषयोऽस्त्विति वाच्यम्—इहालोकः, इहान्धकार इत्यालोकान्धकाराधारत्वेन प्रतीतस्य आलोकरूपत्वाभावात् ।

“ अनुस्मृतेश्च ” । तदेवेदमिति प्रत्यभिज्ञावशात् स्थिरत्वस्यैवाभ्युपगन्तव्यत्वेन क्षणिकत्वासंभवादित्यर्थः ।

1. अयं ख. ग. पाठः । तुच्छस्य. क.

"नासतोऽदृष्टत्वात्" यदुच्यते सौत्रान्तिकैः, 'ज्ञानगतै र्नीलाद्याकारैः बाह्यार्थगतास्तेऽनुमीयन्ते । अतो ज्ञानकाले विषयस्य क्षणिकतया असत्त्वेऽपि न दोषः । यद्यपि नीलादिज्ञानमपरोक्षतयाऽनुभूयते ; इन्द्रियव्यापारान्वयव्यतिरेकानुविधायि च भवति, — तथापि यदिन्द्रियसन्निकृष्टेन येनार्थेन यत् ज्ञानं जायते, न तत् ज्ञानं तद्विषयकम्; किन्तु स्वयमप्यर्थवत् नीलाद्याकारं भवतीति तत् ज्ञानं स्वप्रकाशकतया स्वात्मानं विषयीकुर्वत् स्वगतं नीलाद्याकारमपि विषयीकरोति । अतो न नीलादिज्ञानस्य आपरोक्ष्यानुभवविरोधः, न वा इन्द्रियव्यापारानुविधानविरोधः । नीलाद्यर्थिनो बहिः प्रवृत्तिस्तु नापरोक्षज्ञानात् । किंतु तदनन्तरभाविन आनुमानिकज्ञानात् । यथा वायुनिषेवणार्थिनां शाखाचलनं दृष्ट्वा वृक्षमूले प्रवृत्तिः । न चैवमर्थस्य क्षणिकतया ज्ञानकालेऽनवस्थानात् ज्ञानाविषयत्वं स्यादिति वाच्यम् — ज्ञानोत्पत्तिहेतुत्वमेव हि ज्ञानविषयत्वम्; न ज्ञानकालेऽवस्थानम् । न चैतावता चक्षुरादेर्ज्ञानविषयत्वप्रसङ्गः । स्वाकारसमर्पणेन ज्ञानहेतोरेव ज्ञानविषयत्वाभ्युपगमात् । ज्ञाने स्वाकारं समर्प्य नष्टोऽप्यर्थो ज्ञानगतेन नीलाद्याकारेणानुमीयते । न च पूर्वपूर्वज्ञानेनोत्तरोत्तरज्ञानाकारसिद्धिः । नीलज्ञानसन्ततौ पीतज्ञानानुत्पत्तिप्रसङ्गात् । अतोऽर्थकृतमेव ज्ञानवैचित्र्यमिति । तत्रोच्यते—' नासतः ' । योऽयं विज्ञाने नीलाद्याकार उपलभ्यते, स विनष्टस्य असतोऽर्थस्याऽऽकारो भवितुं नार्हति । कुतः ? ' अदृष्टत्वात् ' । न खलु धर्मिणि विनष्टे धर्मस्य आकारान्तरे संक्रमणं दृष्टम् । प्रतिबिम्बादिकमपि स्थिरस्यैव भवति । तत्रापि न धर्ममात्रस्य । अतोऽर्थवैचित्र्यकृतं ज्ञानवैचित्र्यमर्थस्य ज्ञानकालेऽवस्थानादेव भवति । जपाकुसुमादेः स्फटिकादौ स्वाकारार्पणहेतुत्वेऽपि असतस्तददर्शनेन असतो विषयस्य ज्ञाने स्वाकारार्पणाक्षमत्वात् ।

" उदासीनानामपि चैवं सिद्धिः " । तत्काले असत एवोत्पादकत्वे उदासीनानाम्=अनुद्युञ्जानानां पुरुषाणाम् उद्युञ्जानपुरुषवत् सर्वकार्यसिद्धिः स्यात् । उद्युञ्जानानुद्युञ्जानयोस्तत्कालासत्त्वाविशेषादिति स्थितम् ॥ [1] एतत्पक्षोक्तदोषः अर्धवैनाशिकमतेऽपि समान इति तन्मतं सर्वथा नादर्तव्यमेवेति स्थितम् ।

1. वाक्यमिदं क. मात्रे ।

**तँ ह न मेने शाकल्यः। तस्य ह मूर्धा विपपात। अपि हास्य परिमोषिणोऽस्थीन्यपजह्रुरन्यन्मन्यमानाः ॥ २६ ॥**

(५) तथा सर्वज्ञपशुपतिप्रणीतत्वात् पाशुपतं मतमादरणीयमिति पूर्वपक्षे प्राप्ते उच्यते — "पत्युरसामञ्जस्यात्"। पत्युः पशुपतेर्मतमनादरणीयम्। वेदविरुद्ध-मुद्रिकाषट्कधारण—सुराकुम्भस्थापन—शवभस्मस्नानादिधर्माणां निमित्तमात्रेश्वरस्य चाभ्युपगमेन तन्मतस्यासमञ्जसत्वात्। "अधिष्ठानानुपपत्तेश्च"। अवैदिकस्य तदभि-मताशरीरेश्वरस्य प्रधानाद्यधिष्ठातृत्वानुपपत्तेश्च। "करणवच्चेन्न भोगादिभ्यः"। यथा जीवस्य करणकळेबराधिष्ठाने करणकळेबरान्तरनैरपेक्ष्यम्, एवं प्रधानाद्यधिष्ठानेऽपि शरीरनैरपेक्ष्यमस्त्विति चेन्न — भोगादिभ्यः=पुण्यपापरूपकर्मफलभोगार्थं पुण्यपाप-रूपादृष्टकारितं हि तदधिष्ठानम्। तद्वत् पशुपतेरपि पुण्यपापरूपादृष्ट—तत्फल-भोगादि सर्वं प्रसज्येत। ततो नाधिष्ठानसंभवः। "अन्तवत्त्वमसर्वज्ञता वा"। वाशब्दश्चार्थे। पशुपतेः पुण्यपापरूपादृष्टवत्त्वे जीववदन्तवत्त्वं सृष्टिसंहाराद्यास्पदत्व-मसर्वज्ञता च स्यादि[1]त्यनादरणीयमेवेदं मतमिति स्थितम्। [[2] एतत्पक्षोक्तदूषणाना-मप्यानुमानिकेश्वरवादिनामर्धवैनाशिकानां मतेऽपि समानत्वात् तन्मतं सर्वथा नादर्त-व्यमिति स्थितम्।]

(६) तथा, "एतेन योगः प्रत्युक्तः" इत्यधिकरणे केवलनिमित्तेश्वरवादि-हैरण्यगर्भमतमपि कपिलमतवदेव वेदविरुद्धत्वादप्रामाणिकमिति वदता सूत्रकारेण भगवता बादरायणेन सकलजगदाधारभूतस्य सकलजगदेककारणस्य परब्रह्मणो नारायणस्य पुरुषोत्तमस्यौपनिषदत्वमेव स्थिरीकृतम्।

**तं ह न मेने शाकल्यः**। तमेतं तर्कागोचरं प्रमाणान्तरागम्यमौपनि-षदात्मानं शाकल्यो नाज्ञासीदित्यर्थः। **तस्य ह मूर्धा विपपात**। विविधं शीर्णः पतितः। **अपि हास्य परिमोषिणोऽस्थीन्यपजह्रुरन्यन्मन्यमानाः**। एवं शाप-वशात् मूर्धनि पतिते तस्य कोपाग्निना शरीरञ्च दग्धमभवत्। संस्कारार्थं शिष्यैर्गृहान्नीयमानानि अस्थीन्यपि, **अन्यत्** = धनं मन्यमानाः **परिमोषिणः**

1. अतो निमित्तोपादानभेदवादि पाशुपतमतमनादरणीयम्. ख. ग. 2. कुण्डलितं क. मावे।

**अथ होवाच ब्राह्मणा भगवन्तो यो वः कामयते स मा पृच्छतु ; सर्वे वा मा पृच्छत ; यो वः कामयते तं वः पृच्छामि ; सर्वान् वा वः पृच्छामीति । ते ह ब्राह्मणा न दधृषुः ॥ २७ ॥**

---

तस्कराः **अपजह्रुः** अपहृतवन्तः। यद्वा **परिमोषिणः** मुषितशरीरस्य — नष्टशरीरस्येति यावत् — **तस्य** शाकल्यस्यास्थीन्येवान्यन्**मन्यमानाः** शरीरं मन्यमानाः और्ध्वदैहिकक्रियार्थं तत्पुलाद्या अपहृतवन्त इत्यर्थः ॥ २६ ॥

**अथ होवाच — पृच्छामीति।** अथ शाकल्यमरणानन्तरं याज्ञवल्क्यो ब्राह्मणान् प्रत्याह। किमिति। हे पूजावन्तो ब्राह्मणाः! युष्माकं मध्ये यः प्रष्टु-कामः, स मां स्वाभीष्टं पृच्छतु। सर्वे वा मिळित्वा मां पृच्छत। अथवा **वः** युष्माकं मध्ये यः प्रत्युत्तरं दित्सति, तमहं प्रश्नं पृच्छामि। यदि सर्वेषां समूह्य प्रत्युत्तरदित्सा, तर्हि मिळितान् वा सर्वान् युष्मान् पृच्छामीति याज्ञवल्क्य उक्तवा-नित्यर्थः। **ते ह ब्राह्मणा न दधृषुः।** ते ब्राह्मणाः याज्ञवल्क्येन सह जल्प-कथायां न प्रगल्भा बभूवुः ॥ २७ ॥

---

**परिमोषिणस्तस्करा** इति। आख्यायिकेयं माध्यन्दिनशाखायां (11-6.3) पूर्वत्रापि लक्ष्यते। तत्र यथा – ब्रह्मगवीनामुदजने याज्ञवल्क्येन कृते ब्राह्मणाः संरेभिरे, को न इमं प्रक्ष्यतीति। तदैव शाकल्यः अहमस्मीति प्रवव्रते। तदानीमेव याज्ञवल्क्यः प्राह स्म, त्वां स्विदेते उल्मुकावक्षायणमक्रता ३ इति। अथ, 'कत्येव देवा' इत्यादिप्रश्नपरम्परायाम् कतम एको देव इत्यन्तिमः प्रश्नः। प्राण इति समाधिः। समनन्तरमेव याज्ञवल्क्यः, 'अनतिप्रश्न्यां मा देव तामत्यप्राक्षी' रित्युक्त्वा शशाप, 'पुरेऽतिथ्ये मरिष्यसी' ति, 'न तेऽस्थीनि चन गृहान् प्राप्स्यन्ती' ति च। स ह तथैव ममार। तस्य ह्याप्यन्यन्मन्यमानाः परिमोषिणोऽस्थीन्यपजह्रुः। तस्मान्नोपवादी स्यात्, उत ह्येवंवित् परो भवतीति। तत्र बृहदारण्यकानुसारात् शाकल्यप्रश्नात् प्राक् अश्वलादिगार्ग्यन्तप्रश्नाः वृत्ता इति ग्राह्यम्। तत्र अस्थ्नामपि गृहप्राप्तिर्न भविष्यतीति शापबलादेव शिष्यनीतमस्थिभारं धनभारं मन्वानाः तस्करा अपजह्रुरित्येष एवार्थः समुचितः। शाङ्करेऽपि काण्वानुरोधिनि पूर्वत्र अष्टाध्याय्यामियमाख्यायिकाऽस्तीत्युक्त्वा अनूद्यायमर्थ उक्तः। तद्दर्शनपूर्वं तथैव व्याख्यातॄणामेषामत्र यद्वेति व्याख्यानस्य न प्रसक्तिः। अतः तत्पाठो विमृश्यः। तथाऽर्थवर्णनेऽपि तस्करकृतमपहरणं पूर्वश्रुत्यवसेयं नोपेक्षितम्, किंतु तत् ततः पश्चाद् वृत्तमित्यभिमतमिति ग्राह्यम्।

**तान् हैतैः श्लोकैः पप्रच्छ—**

**यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा ।**
**तस्य लोमानि पर्णानि त्वगस्योत्पाटिका बहिः ॥**
**त्वच एवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः ।**
**तस्मात्तदातृण्णात् प्रैति रसो वृक्षादिवाहतात् ॥**
**मांसान्यस्य शकराणि किनाटँ स्नाव तत् स्थिरम् ।**
**अस्थीन्यन्तरतो दारूणि मज्जा मज्जोपमा कृता ॥**

---

**तान् हैतैः श्लोकैः पप्रच्छ** । याज्ञवल्क्य इति शेषः । **तान्** ब्राह्मणान् । श्लोकानेव पठति — **यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा** । यथा **वनस्पतिः** फलपुष्पोपेतो वृक्षः, तादृश एव पुरुषः । **अमृषा** सत्यमित्यर्थः । 'वानस्पत्यः फलैः पुष्पैः' इति हि निघण्टुः । तत्साधर्म्यमेवाह **तस्य लोमानि पर्णानि त्वगस्योत्पाटिका बहिः** । **तस्य** पुरुषाख्यवृक्षस्य लोमान्येव पर्णानि । अस्य पुरुषस्य या त्वक्, सा बहिर्भूता उत्पाटिका । वृक्षानुपमर्देनैवोत्पाट्यत इति उत्पाटिका चिञ्चादेरिव बहिस्त्वक् । रुधिरावारकाच्चर्मणो या बहिर्भूता सा बहिस्त्वक् । **त्वच एवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः** । उत्क्रम्य **पट**ति गच्छतीत्युत्**पटः** क्षीरादिसारः । **अस्य** पुरुषवृक्षस्य त्वच एव हि रुधिरं प्रस्यन्दि भवति । वृक्षस्य च त्वच एव क्षीरादिसारः स्यन्दि (न्दी?) भवति । अतः साधर्म्यमित्यर्थः । **तस्मात्तदातृण्णात् प्रैति रसो वृक्षादिवाहतात** । [तत् = वृक्षसाधर्म्यादेव हेतोः । ] **आतृण्णात्** 'तृदिर् हिंसायाम्' । **आतृण्णात्** छिन्नात्, तस्मात् पुरुषरूपाद् वृक्षात्, वृक्षादाहतात् रस इव, [तत्?] रुधिरं निर्गच्छतीत्यर्थः । **मांसान्यस्य शकराणि** । **अस्य** पुरुषस्य मांसानि वृक्षस्य **शकराणी**व शकलानीवेत्यर्थः । **किनाटं स्नाव तत्स्थिरम्** । **स्नावे**त्येतत् नान्तं नपुंसकम् । सिरेति यावत् । तदेव वृक्षस्य स्थिरं किनाटम् । किनाटं नाम दार्वस्थिभागादुद्गतवल्कः । वृक्षस्य तत् **स्थिरं** वल्कान्तर्गतस्थिरांशः । **अस्थीन्यन्तरतो दारूणि** । अस्य पुरुषस्यास्थीन्येवान्त**रतो दारूणि** अन्तःस्थदार्वंश इत्यर्थः । **मज्जा मज्जोपमा कृता** । दारुणि या

---

अब्रह्मविदयं शाकल्यः पुनर्जनिष्यत इति बुबोधयिषया उद्दितं प्रश्नमारभते यथेति ।

**यद् वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः ।**
**मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात् प्ररोहति ॥**

**रेतस इति मा वोचत जीवतस्तत् प्रजायते ।**
**धानारुह इव वै वृक्षोऽञ्जसा प्रेत्यसंभवः ॥**

---

मज्जा, सा अस्य **पुरुषस्य** मज्जोपमा कृता भवति । तथा च वृक्षमज्जास्थाने पुरुषस्य प्रसिद्धमज्जा भवतीत्यर्थः ।

**यद् — कस्मान्मूलात् प्ररोहति** : एवं वृक्षस्य शरीरस्य च साम्ये सत्यपि वृक्षो **वृक्णस्सन्** छिन्नस्सन् **मूलान्नवतरः** अत्यन्तं नवस्सन् पुनः प्ररोहति । मर्त्यस्तु मृत्युना वृक्णस्सन् कस्मान्मूलात् प्ररोहतीति प्रश्नः । **रेतस इति मा वोचत जीवतस्तत् प्रजायते ।** रेतस एव मूलात् पुनर्मर्त्यः प्ररोहतीति मा वोचत । कुतः? जीवत एव हि **तत्** रेतः **प्रजायते** । अयं तु मृत इति नात्र रेतो मूलं वक्तुं शक्यम् । न हि वृक्षस्य छिन्नावशिष्टमूलमिवास्य रेतोमयं स्वकं मूलमवशिष्यते ; यतः पुनः प्ररोहतीति कल्प्येत । **धानारुह इव वै वृक्षोऽञ्जसा प्रेत्य संभवः** । किञ्च वृक्षो धानारुहो भवति । **धाना** बीजम् । धानाभ्यो रोहतीति [स]तथोक्तः । बीजरुहोऽपि वृक्षो भवति ; न केवलं काण्डरुह एव । **इव**शब्दोऽप्यर्थः । वृक्षः **अञ्जसा** साक्षात् **प्रेत्य** मृत्वा धानातोऽपि संभवेत् ।

---

**कस्मान्मूलाद**िति । निमित्तमात्रं ब्रह्म । प्रधानमूलं तु भूतमात्राविद्याकर्मवासनारुचिप्रकृतिसंबन्धरूपमत्र तदभिप्रेतं स्यात् । वृक्षस्थले समूलहानिवत् एतन्मूलनाशे पुनः शरीरानुत्पादः, वृक्षाद्धाना इव सर्वमिदं शरीरात् संभ्रियते चेति इदं हि मूलं स्यादिति । आर्तभागप्रश्ने कर्म रहसि विमृष्टम् । तत् सदस्यैर्न यथावद् ज्ञातम् । वक्ष्यति च, 'तं विद्याकर्मणी समन्वारभेते, पूर्वप्रज्ञा चे' ति । अत्र, 'नवतर. पुनः' इतिवत्, तत्रापि, 'नवतरं कल्याणतरं रूपम्' इति नवतरपदं प्रयोक्ष्यते । **रेत** इति स्वकीयं रेत उच्यते उत परकीयम्? नाद्य इत्याह **जीवत एवे**ति । छिन्नावशिष्टमूलमित्यनेन परकीयस्य रेतसः पृच्छ्यमानमूलरूपत्वं नास्तीति व्यञ्जितम् । जीवत्पुरुषान्तररेतसः वृक्णशरीरांशत्वाभावात् । 'धानारुह इव वै' इत्यत्र **इव**शब्दोऽनर्थक इति शाङ्करम् । अत्र अप्यर्थक **इत्युक्तम्** । सादृश्यार्थकत्वादरणे **तु प्रेत्यसंभवः** प्रेत्य पुनर्जाय-

**यत् समूलमावृहेयुर्वृक्षं न पुनराभवेत् ।**
**मर्त्यस्स्विन्मृत्युना वृक्णः कस्मान्मूलात् प्ररोहति ॥**
**जात एव न जायते को न्वेनं जनयेत् पुनः ।**

---

**यत्समूलमावृहेयुर्वृक्षं न पुनराभवेत्** । यत् यदि समूलं मूलेन धानया वा सह **आवृहेयुः** उत्पाटयेयुः, तदा स वृक्षो न पुनरागत्य भवेत् । अतो मूलं बीजञ्च वृक्षस्य रोहे कारणं दृष्टमित्यर्थः । **मर्त्यस्स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति** । अतो हेतोः पृच्छामि, वृक्षसधर्मा अयं मर्त्यो वृक्णः कस्मात् प्ररोहति मूलादिति । ननु यस्तु मृत्युहतः स हत एव, अन्य एव तु कश्चिज्जायते, अतो वृक्णस्य मर्त्यस्य पुनर्जनिहेतुप्रश्नोऽनुपपन्न इत्यत्राह **जात एव न जायते को न्वेनं जनयेत् पुनः** । यदि नष्टस्य पुनर्जननं न स्यात्, तर्हि कृतहानाकृताभ्यागमप्रसङ्गः । अतो मृतस्य पुनर्जननं सिद्धम् । अतो वः पृच्छामि को न्वेनं पुनर्जनयेदितीत्यर्थः । तथा च जगतो मूलं किमिति प्रश्नार्थः ॥

यतो जगतो मूलं तैर्जनकसभिकैर्ब्राह्मणैर्न ज्ञातम्, अतो याज्ञवल्क्येन ब्राह्मणा जिताः । समाप्ता आख्यायिका । यत् जगतो मूलं याज्ञवल्क्येन पृष्टम्,

---

मानो मर्त्यः **अञ्जसा** आञ्जस्येन धानारुहो वृक्ष इव भवति । तदा च धानास्थानापन्नं मूलं वाच्यमित्यर्थः स्यात् । एतावता सूक्ष्मभूतरूपं मूलम्, कर्मवासनादिरूपं मूलञ्चाभिमतं स्यात् । **जात एव न जायते** इत्यस्य प्रकृतभाष्यरीत्या, 'पूर्वं जातोऽप्ययं पुनर्नैव जायते चेत् इत्यर्थे, 'कोन्वेनं जनयेत् पुनः' इत्यत्र पुनरितिपदं व्यर्थकं स्यात् । कस्तु एनं पूर्वमपि जनितवान्? पूर्वजन्मानङ्गीकारे अस्य जन्मनो ऽप्यप्रसक्तिः । अन्यथा अकृताभ्यागमः स्यात् । उत्तरजन्मानङ्गीकारे च कृतविप्रणाशः स्यादिति भावः । शाङ्करे तु **जातएवेति** शङ्कावाक्यम् । **नेत्यादि** परिहारवाक्यम् । अयमर्थः – प्राक् जात एवायम्; न तु जन्मान्तरभागिति चेत् – तन्न । किं तर्हि? जायत एवेति । इदं स्वपक्षप्रतिज्ञावाक्यम् । तथाच कारणमवश्यं वक्तव्यम् । अतः पृच्छयते, कोन्वेनं जनयेत् पुनरितीति । एवं वा श्रुत्यर्थः स्यात्–पूर्वं जातोऽयं स्वयमेव पुनर्न जायते चेत् – स्वयं पुनर्जननौपयिकमूलरहितश्चेत्, तर्हि निरस्तसमस्तबन्धं कोन्वेनं जनयेत् पुनः? ईश्वरोऽपि मूलरहितं स्रष्टुं न समीहत इति मूलमावश्यकमिति । एवं वा–**अयं जात एव न** = पूर्वजन्ममात्रवान्, किंतु **जायते** अमुक्तत्वाज्जायत एव । एनं **को नु पुनर्जनयेत्** जनयिता क इति । पूर्वमचेतनभूतमूलप्रश्नः; इदानीं तत्कारणसचिवस्य स्रष्टुर्विषये प्रश्न इति ।

एवं याज्ञवल्क्यवाक्यं समाप्तम् । आख्यायिका च समाप्ता । विज्ञानमानन्दमिति तु श्रुत्या स्वयमुच्यत इत्येवात्र, शाङ्करेऽपि गतिः । **एतैः श्लोकैः पप्रच्छेत्येव** पूर्वमारम्भात् प्रश्न-

**विज्ञानं मानन्दं ब्रह्म रातिर्दातुः परायणम् ॥**
**तिष्ठमानस्य तद्विद इति ॥ २८ ॥**

इति पञ्चमाध्याये नवमं ब्राह्मणम् ।

इति बृहदारण्यके पञ्चमोऽध्यायः ॥

---

तत् श्रुतिः स्वयमेवाह **विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणं तिष्ठमानस्य तद्विदः** । **रातिः** रातेः । षष्ठ्यर्थे प्रथमा । धनस्येत्यर्थः । रातेः = धनस्य दातुः—कर्मकृतो यजमानस्येति यावत् — **परायणं** परमगतिः । तत्तत्कर्मानुगुणफलप्रदमित्यर्थः । **तिष्ठमानस्य** ब्रह्मसंस्थस्य **तद्विदः** ब्रह्मविदः **परायणं** परमप्राप्यं विज्ञानानन्दरूपं ब्रह्मैव याज्ञवल्क्येन पृष्टं जगन्मूलमित्यर्थः ॥ २८ ॥ ५–९.

इति बृहदारण्यके पञ्चमाध्यायप्रकाशिका ।

---

मात्रेणोपरन्तव्यमिति तदाशयः । परन्तु अत्र इतिशब्दाश्रवणात्, **तिष्ठमानस्य तद्विद इती**ति इतिशब्दश्रवणात् तावदन्तं याज्ञवल्क्यवचनमेव भवितुमर्हति । अस्मिन् परां काष्ठामापन्ने ब्राह्मण-कोलाहले जोषम्भूतोऽध्यक्षो जनको जेत्राऽवश्यं प्रशंसनीयश्च । एवं सप्तमश्लोकस्योत्तरार्धम-पेक्षितमिति **विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायण**मिति तदुत्तरार्धं युक्तम् । एतदर्थस्तु—दातुः ब्रह्मगवीनां दातुः जनकस्य राज्ञः **रातिः**, 'अनन्तं बत मे वित्त' मित्युक्तरीत्या धनभूतं विज्ञानमानन्दं ब्रह्म **परायणम्** परमाधारभूतम् । अवान्तरमूलानि त्वन्यानि सन्तीति । एतत्कथनञ्च ब्रह्मिष्ठेनैवेतरप्रश्नोत्तरं वक्तुं शक्यम् । तद् युक्तम मया कृतं गवामुदजनमिति ज्ञापनाय । माध्यन्दिने श्लोकान्तर्गततयैव मन्ये **विज्ञान**मित्यादेः पाठः । तत्र **रातेर्दातु**रिति च पाठः । तदा **रातेः** धनस्य ब्रह्मगवीभूतस्य दातुरित्यर्थः । **तिष्ठमानस्य तद्विद** इति पदद्वयमपि दातुर्जनकस्य विशेषणमेव । विलक्षणमुत्कर्षेण प्रकाशमानस्य ब्रह्मविद इति तदर्थः । **तद्विदः** मूलविद इति वा । यद्वा तिष्ठमानस्य तद्विद इति पृथग्वाक्यम् । रातिदस्य जनकस्य ब्रह्म हि परमाभिमतम् । अतः तद्विदः = ब्रह्मविदः तिष्ठमानस्य ब्रह्मिष्ठस्य इमा गाव इति । तदिति पृथक्पदं वा तस्मादित्यर्थे । तस्माद् ब्रह्मविद एवेमा गाव इति ।

अश्वलश्चार्तभागश्च भुज्युश्चाब्रह्मचिन्तकाः ।
उषस्तश्च कहोलश्च गार्गी चोद्दालकश्च सा ॥

ब्रह्मचिन्तापराः पश्चाद् विदग्धस्तु विश्रृङ्खलः ।
याज्ञवल्क्योऽखिलान् जित्वा ब्रह्मिष्ठः पृष्टवान् धनी ॥

## अथ षष्ठोऽध्यायः

### ६—१.

**जनको ह वैदेह आसाञ्चक्रे । अथ ह याज्ञवल्क्य आवव्राज । तँ होवाच—याज्ञवल्क्य! किमर्थमचारीः पशूनिच्छन्, अण्वन्तानिति । उभयमेव सम्राडिति होवाच ॥ १ ॥**

---

**जनको ह वैदेह आसाञ्चक्रे** । दर्शनकामेभ्यो दर्शनं दातुं वैदेहो जनकः सभायामासाञ्चक्रे स्थित इत्यर्थः । **अथ ह याज्ञवल्क्य आवव्राज** । अथ अस्मिन्नवसरे याज्ञवल्क्य **आवव्राज** आगतः । **तं होवाच**। जनक इति शेषः । तं याज्ञवल्क्यमित्यर्थः । उक्तिमेवाह **याज्ञवल्क्य किमर्थमचारीः पशूनिच्छन्नण्वन्तानिति** । हे **याज्ञवल्क्य! किमर्थमचारीः** आगतोऽसि । किं पुनरपि पशूनिच्छन्, आहोस्वित् अण्वन्तानिति । अन्तः निश्चयः । **अणोः** सूक्ष्मस्य वस्तुनः प्रत्यगात्मादेः **अन्तान्** निश्चयान् कर्तुमित्यर्थः । याज्ञवल्क्यस्योत्तरमाह **उभयमेव सम्राडिति होवाच** । त्वदनुग्रहार्थमेवागतोऽस्मि । तत्प्रसङ्गे यदि पशवश्च पुनः स्युः, तदपि न प्रतिषेधामः हे सम्राडिति होवाच । याज्ञवल्क्य इति शेषः । **सम्राट्** । हे सार्वभौमेत्यर्थः ॥ १ ॥

---

याज्ञवल्क्यः साक्षात् सहस्रभानोरधीतापूर्वयजुर्वेद इति पौराणिकी प्रसिद्धिः । एतद्बृहदारण्यकान्ते याज्ञवल्क्यघटितगुरुपरम्परायामादित्यः कूटस्थतया दर्शितः; साक्षादाचार्यश्च गौतम इति । तच्च आंशिकं स्यात् । तत्रैव 'आदित्यात्तानी' ति आदित्यादेव याज्ञवल्क्येन सर्वग्रहणश्रवणात् । तस्य ब्रह्मगवीनामुदजितुर्ब्रह्मिष्ठता पूर्वस्मिन्नध्याये प्रपञ्चिता । स एषः, नाननुशिष्य हरेतेति स्वपित्रा प्रतिबोधितं स्मरन् जनकाय राज्ञे किञ्चिदुपदिश्य गाः ग्रहीतुं जनकसविधमाययौ । तत्र पूर्वगवीग्रहणकाल एवायं जनकसविधसमागमः, उतान्यदेति विचारे, उपरि 'सहस्रं ददामि' 'सहस्रं ददामी'ति पौनःपुन्येनापूर्वगवीदानावगमात् अन्यदैव कृतः समागम इह कथ्यते 'इत्यभिप्रेत्य पूर्वसंदर्भमस्पृष्ट्वैव भाषितम् । **पशूनिच्छन्निति** । 'गोकामा एव वयं स्मः' इति हि गोग्रहणकाले प्रागवादीः । अतो मदीयान् पशून् ग्रहीतुम् आहो मदीयान् सूक्ष्मतत्त्वविषयनिर्णयान् तद्विषयमीमांसाप्रवर्तनाय ग्रहीतुमचारीरिति पृच्छामि । पूर्वं पशुग्रहणावसरे भवदधिगतसूक्ष्मार्थमध्ये किमपि मह्यं नोपदिष्टमिति खलु विषण्णोऽस्मीति भावः ।

**यत् ते कश्चिदब्रवीत्, तच्छृणवामेति। अब्रवीन्मे जित्वा शैलिनिः[1], वाग्वै ब्रह्मेति । यथा मातृमान् पितृमान् आचार्यवान् ब्रूयात्, तथा तच्छैलिनो[2]ऽब्रवीद्वाग्वै ब्रह्मेति; अवदतो हि किं स्यादिति; अब्रवीत्तु ते तस्याऽऽयतनं प्रतिष्ठाम् । न मेऽब्रवीदिति । एकपाद्वा एतत् सम्राडिति। स वै नो ब्रूहि याज्ञवल्क्य ।**

1. शैलिनः. मा.

---

एवमुक्त्वा विशेषोपदेशाय प्रवृत्तो याज्ञवल्क्यो जनकं पुनराह **यत् ते कश्चिदब्रवीत्, तच्छृणवामेति** । यत् ते तुभ्यं कश्चिदाचार्योऽब्रवीत् — अनेकाचार्योपसेवी हि भवान् — तत् शृणवाम । श्रुत्वा उपदेष्टव्यांशमुपदेक्ष्याम इति भावः । जनक आह **अब्रवीन्मे जित्वा शैलिनिर्वाग्वै ब्रह्मेति** । नामतो जित्वा शिलिनस्यापत्यं **शैलिनिः** वागेव ब्रह्मेति[1] = ब्रह्मप्रतीकतया वाग्देवता उपास्येति मे उक्तवानित्यर्थः । इतर आह **यथा मातृमान् — प्रतिष्ठाम्** । माता यस्य विद्यते अनुशासनकर्तृतया, स **मातृमान्** । पिता यस्य तथा विद्यते, स **पितृमान्** । आचार्यो यस्य तथा विद्यते, स **आचार्यवान्** । उपनयनात् प्राक् मातापितरावनुशिष्टः । ऊर्ध्वमाचार्योऽनुशास्ति । तैरेवं यथाकालं शिक्षितो हि सम्यक् ज्ञानवान् भवति । तथाच मात्रा पित्रा आचार्येण चानुशिष्टो यथा ब्रवीति, तथा शैलिन उक्तवान् वाग्वै ब्रह्मेति । सम्यगुक्तवानित्यर्थः । तत्रोपपत्तिमाह **अवदतो हि किं स्यादिति** । **अवदतः** वाग्व्यापाररहितस्य । न हि मूकस्यैहिकमामुष्मिकं वा किञ्चित् सिद्ध्येत् । तस्मात् युक्तं वाग्वै ब्रह्मेति शैलिनिनोक्तम्, सर्वपुरुषार्थसाधनत्वात् वाचि ब्रह्मदृष्टिः कर्तव्येतीत्यर्थः । **अब्रवीत्तु ते तस्यायतनं प्रतिष्ठाम्** । परन्तु तस्यायतनं प्रतिष्ठाञ्च ते स किमब्रवीत् । **आयतनं** शरीरम् । **प्रतिष्ठा** त्रिष्वपि कालेष्वाश्रयः । एतद्द्वयमपि शैलिनिरुक्तवान् किमित्यर्थः । जनक आह **न मेऽब्रवीदिति** । इतर आह **एकपाद्वा एतत्सम्राडिति** । एकः पादः यस्य, तत् एकपात् । **एतत्** ब्रह्म । वाग्रूपं ब्रह्म उपास्यमानमपि एकपात् त्रिभिः पादैः शून्यं न फलाय भवतीत्यर्थः । जनक आह **स वै नो ब्रूहि याज्ञवल्क्य** । हे याज्ञवल्क्य ! स त्वं विद्वान्नः अस्मभ्यं ब्रूहि । आयतनादीति शेषः ।

1. वाग्वै वाग्देवता ब्रह्मेति.क. 2. शैलिनिः शां.

वागेवायतनमाकाशः प्रतिष्ठा ; प्रज्ञेत्येनदुपासीत । का प्रज्ञता याज्ञवल्क्य । वागेव सम्राडिति होवाच ; वाचा वै सम्राड् बन्धुः प्रज्ञायते ; ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टं हुतमाशितं पायितमयञ्च लोकः परश्च लोकः सर्वाणि च भूतानि वाचैव सम्राट् प्रज्ञायन्ते[1] ;

1. प्रज्ञायते. क.

स चाह **वागेवायतनमाकाशः प्रतिष्ठा प्रज्ञेत्येनदुपासीत** । वागधिष्ठाऱ्यां देवतायामध्यस्यमानस्य ब्रह्मणो वागेव **आयतनं** शरीरम् । अव्याकृताकाशः प्रतिष्ठा; **आकाशः** परमं व्योम वा **प्रतिष्ठा** कालत्रयेऽप्याश्रयः । **एनत्** ब्रह्म प्रज्ञेत्युपासीतेत्यर्थः । जनकः पृच्छति **का प्रज्ञता याज्ञवल्क्य** । अयमभिप्रायः — यथा प्रतिष्ठांशः वाचो भिन्न:, एवं प्रज्ञाऽपि किं वाचो भिन्ना उत नेति प्रश्नः । प्रतिष्ठावन्न भिन्ना, किन्तु आयतनवत् प्रज्ञाऽपि वाचः अभिन्नेत्युत्तरमाह **वाग्वै सम्राडिति होवाच** । हे सम्राट्! वागेव प्रज्ञा । न तु ततोऽतिरिच्यत इत्यर्थः । तदुपपादयति **वाचा वै सम्राट् बन्धुः प्रज्ञायते** । अयं बन्धुरिति वाचैव हि प्रज्ञायते । तथा **ऋग्वेदो** — **ब्रह्म** । **इतिहासः** रामायणादिः । **पुराणं** विष्णुपुराणादि । **विद्याः** चतुष्षष्टिकलाः । **उपनिषदः** प्रसिद्धाः । **श्लोकाः** मनुस्मृत्यादिरूपाः । **सूत्राणि** ब्रह्मसूत्रादीनि । **अनुव्याख्यानानि** भाष्यव्याख्यानादीनि । **व्याख्यानानि** भाष्यादीनि । **इष्टं** यागनिमित्तं धर्मजातम् । **हुतं** होमनिमित्तं धर्मजातम् । **आशितम्** अन्नदाननिमित्तकम् । **पायितं** पानीयदाननिमित्तकम् । **अयं लोकः** इह लौकिकं (ऐहलौकिकं?) फलम् । **परश्च लोकः** स्वर्गमोक्षादि । **सर्वाणि भूतानि** शत्रुमित्रो-

अब्रवीत्तु ते इत्यत्र काकुस्वरेण प्रश्नार्थलाभः । **का प्रज्ञतेति** । **एकपाद्वा** इत्युक्त्या पादत्रयं शिष्टमिहोक्तमिति ज्ञायते । परन्तु, 'अब्रवीत्तु ते तस्यायतनं प्रतिष्ठाम्' इति द्वयोरेव पृष्टत्वात् तृतीयमिदं प्रज्ञतारूपं किमिति न जाने इति प्रष्टुराशयः । प्रज्ञाशब्देन वाच एव प्रज्ञाहेतुत्वेन रूपेण ग्रहणम् । अस्य चतुर्थपादतया ज्ञातव्यत्वात् सहोक्तिः । आयतनस्यैव आयतनत्वरूपाकारवत् प्रज्ञात्वरूपाकारोऽपि कश्चिदस्ति । अत आयतनमब्रवीत् किमित्यस्य आकारद्वयपूर्वमायतनमब्रवीत् किमित्येवार्थं इत्याशयेन प्रतिवक्ति **वागेवेति** । **वाचः अभिन्नेति** । वाग्वै ब्रह्मेति वाक्छब्दविवक्षितादभिन्नेत्यर्थः । वाक्छब्दः स वागिन्द्रियमुखेन देवतापर इति वागिन्द्रियमपि तत्रोक्तमिति भावः ।

वाग्वै सम्राट् परमं ब्रह्म । नैनं वाग् जहाति, सर्वाण्येनं भूतान्यभिक्षरन्ति, देवो भूत्वा देवान् अप्येति, य एवं विद्वानेतदुपास्ते ।

हस्त्यृषभँ सहस्रं ददामीति होवाच जनको वैदेहः । स होवाच याज्ञवल्क्यः, पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ २ ॥

यदेव ते कश्चिदब्रवीत्, तच्छृणवामेति । अब्रवीन्म उदङ्कः शौल्बायनः, प्राणो वै ब्रह्मेति । यथा मातृमान् पितृमान् आचार्यवान् ब्रूयात्, तथा तच्छौल्बायनोऽब्रवीत् प्राणो वै ब्रह्मेति ; अप्राणतो हि किँ स्यादिति । अब्रवीत्तु ते तस्यायतनं प्रतिष्ठाम् । न मेऽब्रवीदिति । एकपाद्वा एतत् सम्राडिति । स वै नो ब्रूहि याज्ञवल्क्य ।

प्राण एवायतनमाकाशः प्रतिष्ठा प्रियमित्येनदुपासीत । का प्रियता

---

दासीनरूपाणि । एवमेतत् सर्वं, हे सम्राट्! वाचैव प्रज्ञायते । अतः **वाग्वै सम्राट् परमं ब्रह्म** । वाग्देवतायां ब्रह्मोपासनं प्रज्ञानामकत्वेन कर्तव्यमित्यर्थः । तदुपासनायाः फलमाह **नैनं वाग् जहाति—उपास्ते** । **य एवं विद्वान्** उक्तायतनादिज्ञानवान् **एतत्** वाग्रूपं ब्रह्मोपास्ते, **एनं** ब्रह्मविदं वाक्=अधीता ब्रह्मविद्या न जहाति । विद्यायाः विस्मरणं नास्तीति यावत् । यथा वत्साय गावो ऽभिक्षरन्ति, एवं बलिदानादिभिः सर्वाणि भूतानि **अभिक्षरन्ति** स्निह्यन्तीत्यर्थः । **देवो भूत्वा** उपास्यमानवागधिष्ठातृदेवो भूत्वा — तद्देवतासायुज्यं प्राप्येति यावत् — **देवानप्येति** आजानसिद्धदेवतान्तर्गतो भवतीत्यर्थः । **हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः** । हस्तितुल्यः ऋषभः यस्मिन् गोसहस्रे तत् तथा । तादृशर्षभयुक्तं गोसहस्रमुपदिष्टविद्याया दक्षिणात्वेन ददामीति जनक उक्तवानित्यर्थः । **स ह — नाननुशिष्य हरेतेति** । शिष्यं सम्यगननुशिष्य ततः किञ्चिदपि द्रव्यं नाऽऽहरेतेति मे पिता **अमन्यत** । बोधितवानिति यावत् । अतः सम्यगनुशिष्य हरिष्यामि, न ततः प्रागिति याज्ञवल्क्य उवाचेत्यर्थः । एवमुत्तरत्रापि [ नेयम् ] ॥ २ ॥

**यदेव ते — शौल्बायनः** । नामत उदङ्कः । शुल्बस्यापत्यं शौल्बायनः । नडादित्वात् फक् । — **अप्राणतो हि किं स्यात्** — जीवतो हि सर्वपुरुषार्थावाप्तिरिति भावः । **प्रियमित्येनदुपासीत** । प्रियमिति नाम्ना प्राणप्रतीकक ब्रह्मोपा-

---

**नाननुशिष्ये**ति । यथा ते अव्यन्तोपदेशलिप्सा, तथा ममापि, अननुशिष्य पूर्वं हृतमित्यनुतापः अनुशासनेच्छा च पित्रुपदेशादित्याशयः ।

याज्ञवल्क्य । प्राण एव सम्राडिति होवाच ; प्राणस्य वै सम्राट् कामायायाज्यं याजयत्यप्रतिगृह्यस्य प्रतिगृह्णात्यपि तत्र वधाशङ्कं भवति यां दिशमेति प्राणस्यैव सम्राट् कामाय ; प्राणो वै सम्राट् परमं ब्रह्म । नैनं प्राणो जहाति, सर्वाण्येनं भूतान्यभिक्षरन्ति, देवो भूत्वा देवान् अप्येति, य एवं विद्वानेतदुपास्ते ।

हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः । स होवाच याज्ञवल्क्यः, पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ३ ॥

यदेव ते कश्चिदब्रवीत्, तच्छृणवामेति । अब्रवीन्मे [1] बर्कुर्वार्ष्णश्चक्षुर्वै ब्रह्मेति । यथा मातृमान् पितृमान् आचार्यवान् ब्रूयात्, तथा तद्वार्ष्णोऽब्रवीच्चक्षुर्वै ब्रह्मेति ; अपश्यतो हि किँ स्यादिति । अब्रवीत्तु ते तस्यायतनं प्रतिष्ठाम् । न मेऽब्रवीदिति । एकपाद्वा एतत् सम्राडिति । स वै नो ब्रूहि याज्ञवल्क्य ।

चक्षुरेवायतनमाकाशः प्रतिष्ठा सत्यमित्येनदुपासीत । का सत्यता याज्ञवल्क्य । चक्षुरेव सम्राडिति होवाच ; चक्षुषा वै सम्राट् पश्यन्तमा-

---

सीतेत्यर्थः । प्राणस्य प्रियतामेवोपपादयति **प्राणस्य वै — परमं ब्रह्म** । प्राणस्य कामाय प्राणाशया अयाज्यमपि याजयति, अप्रतिगृह्यमपि प्रतिगृह्णाति । **अप्रतिगृह्यस्य प्रतिगृह्णात्यपी**त्यत्र, 'प्रत्यपिभ्यां ग्रहेश्छन्दसी'ति [1] क्यप् । पुरुषो यां दिशं गच्छति, तत्र वधाशङ्कं भवति । वधस्याशङ्का यस्मात्, तत् चोरव्याघ्रादि वधाशङ्कम् । तत् तत्र वर्तते चेदपि, तत्रापि प्राणस्य कामाय याति । ततः प्राणस्य प्रियत्वात् स एव परं ब्रह्मेत्युपास्यमित्यर्थः । **नैनं प्रणो जहाति** । दीर्घायुर्भवतीत्यर्थः ॥ ३ ॥

**यदेव ते — बर्कुर्वार्ष्णः** । नामतो बर्कुः । वृष्णेरपत्यं **वार्ष्णः** ।

1. क्विप्. क. ग्रहेः प्रतियोगादिह क्यप् । अपीति तु उपरितनवाक्येऽन्वितम् । अतो भाष्याभिमतयोजनैवं स्यात् — यां दिशं प्राणस्यैव कामाय याति, तत्र वधाशङ्कमपि भवतीति । 'अजरामरवत् प्राज्ञो विद्यामर्थञ्च साधयेत्' इति न्यायेन स्थैर्यमत्या प्राणप्रीणनायार्जनमिति भावः ।

हुरद्राक्षीरिति, स आहाद्राक्षमिति, तत् सत्यं भवति; चक्षुर्वै सम्राट् परमं ब्रह्म। नैनं चक्षुर्जहाति, सर्वाण्येनं भूतान्यभिक्षरन्ति, देवो भूत्वा देवान् अप्येति, य एवं विद्वानेतदुपास्ते।

हस्त्यृषभँ सहस्रं ददामीति होवाच जनको वैदेहः। स होवाच याज्ञवल्क्यः, पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ४ ॥

यदेव ते कश्चिदब्रवीत्, तच्छृणवामेति। अब्रवीन्मे गर्दभीविपीतो भारद्वाजः श्रोत्रं वै ब्रह्मेति। यथा मातृमान् पितृमान् आचार्यवान् ब्रूयात्, तथा तद्भारद्वाजोऽब्रवीच्छ्रोत्रं वै ब्रह्मेति; अशृण्वतो हि किँ स्यादिति; अब्रवीत्तु ते तस्यायतनं प्रतिष्ठाम्। न मेऽब्रवीदिति। एकपाद्वा एतत् सम्राडिति। स वै नो ब्रूहि याज्ञवल्क्य।

श्रोत्रमेवायतनमाकाशः प्रतिष्ठा अनन्त इत्येनदुपासीत। काऽनन्तता याज्ञवल्क्य। दिश एव सम्राडिति होवाच; तस्माद्वै सम्राडपि यां काञ्च दिशं गच्छति, नैवास्या अन्तं गच्छति। अनन्ता हि दिशः। दिशो वै सम्राट् श्रोत्रम्। श्रोत्रं वै सम्राट् परमं ब्रह्म। नैनँ श्रोत्रं जहाति, सर्वाण्येनं भूतान्यभिक्षरन्ति, देवो भूत्वा देवान् अप्येति, य एवं विद्वानेतदुपास्ते।

हस्त्यृषभँ सहस्रं ददामीति होवाच जनको वैदेहः। स होवाच याज्ञवल्क्यः, पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ५ ॥

1. बट्कुः मा. पा०

---

**तत् सत्यं भवति।** चक्षुषा दृष्टे यथा सत्यत्वाध्यवसायः, तथा मानान्तरावगते न भवतीत्यर्थः। अतः चक्षुषि ब्रह्म सत्यनाम्नोपास्यमित्यर्थः। **नैनं चक्षुर्जहाति।** चक्षुषा दृष्टं न विस्मरतीत्यर्थः। शिष्टं स्पष्टम् ॥ ४ ॥

**यदेव ते — गर्दभीविपीतो भारद्वाजः।** गोत्रतो भारद्वाजः, नाम्ना गर्दभीविपीत इत्यर्थः। **दिशो वै सम्राट्छ्रोत्रम्।** 'दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्' इति श्रुतेः दिक्छ्रोत्रयोरैक्यमित्यर्थः। शिष्टं स्पष्टम् ॥ ५ ॥

यदेव ते कश्चिदब्रवीत्, तच्छृणवामेति । अब्रवीन्मे सत्यकामो जाबालो मनो वै ब्रह्मेति । यथा मातृमान् पितृमान् आचार्यवान् ब्रूयात्, तथा तज्जाबालोऽब्रवीन् मनो वै ब्रह्मेति ; अमनसो हि किँ स्यादिति। अब्रवीत्तु ते तस्यायतनं प्रतिष्ठाम्। न मेऽब्रवीदिति । एकपाद्वा एतत् सम्राडिति। स वै नो ब्रूहि याज्ञवल्क्य ।

मन एवायतनमाकाशः प्रतिष्ठा आनन्द इत्येनदुपासीत । काऽऽनन्दता याज्ञवल्क्य। मन एव सम्राडिति होवाच; मनसा वै समाट् स्त्रियमभिहार्यते; तस्यां प्रतिरूपः पुत्रो जायते; स आनन्दः; मनो वै समाट् परमं ब्रह्म। नैनं मनो जहाति, सर्वाण्येनं भूतान्यभिक्षरन्ति, देवो भूत्वा देवान् अप्येति, य एवं विद्वानेतदुपास्ते ।

हस्त्यृषभँ सहस्रं ददामीति होवाच जनको वैदेहः। स होवाच याज्ञवल्क्यः, पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ६ ॥

यदेव ते कश्चिदब्रवीत्, तच्छृणवामेति। अब्रवीन्मे विदग्धः शाकल्यो हृदयं वै ब्रह्मेति । यथा मातृमान् पितृमान् आचार्यवान् ब्रूयात् तथा तच्छाकल्योऽवीत् हृदयं वै ब्रह्मेति ; अहृदयस्य हि किँ स्यादिति। अब्रवीत्तु ते तस्याऽऽयतनं प्रतिष्ठाम्। न मेऽब्रवीदिति । एकपाद्वा एतत् सम्राडिति । स वै नो ब्रूहि याज्ञवल्क्य ।

हृदयमेवायतनमाकाशः प्रतिष्ठा स्थितिरित्येनदुपासीत। का स्थितता याज्ञवल्क्य। हृदयमेव सम्राडिति होवाच; हृदयं वै सम्राट् सर्वेषां भूतानामायतनँ हृदयं वै सम्राट् सर्वेषां भूतानां प्रतिष्ठा, हृदये ह्येव सम्राट्

---

**यदेव ते — सत्यकामो जाबालः**। जबालाया अपत्यं जाबालः, नाम्ना सत्यकाम इत्यर्थः। **मनसा वै—स आनन्दः**। **स्त्रियमभि** स्त्रियं प्रति **मनसा हार्यते** मनसा नीयते। स्त्रीसंयोगो मनआयत्त इति भावः। **प्रतिरूपः** तुल्य[रूप] इत्यर्थः। आनन्दहेतुत्वात् पुत्रस्यानन्दत्वमिति भावः। शिष्टं स्पष्टम्॥ ६ ॥

**यदेव ते — विदग्धः शाकल्यः —**। शकलस्यापत्यं **शाकल्यः** नाम्ना **विदग्धः**। **हृदयं** बुद्धिः। **आयतनम्** आधारः। **प्रतिष्ठा** स्थितिहेतुः।

सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति; हृदयं वै सम्राट् परमं ब्रह्म। नैनँ हृदयं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवान् अप्येति, य एवं विद्वानेतदुपास्ते।

हस्त्यृषभँ सहस्रं ददामीति होवाच जनको वैदेहः। स होवाच याज्ञवल्क्यः, पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ७ ॥

इति षष्ठाध्याये प्रथमं ब्राह्मणम्।

६—२.

जनको ह वैदेहः कूर्चादुपावसर्पन्नुवाच, नमस्तेऽस्तु याज्ञवल्क्य, अनु मा शाधीति। स होवाच—यथा वै सम्राण्महान्तमध्वानमेष्यन् रथं वा नावं वा समाददीत, एवमेवैताभिरुपनिषद्भिः समाहितात्माऽसि।

---

अतो हृदये सर्वाणि भूतानि प्रतिष्ठितानि बुद्ध्यधीनस्थितिमन्ति भवन्ति। तस्मात् हृदयं वै सम्राट् परमं ब्रह्म। शिष्टं स्पष्टम् ॥ ७ ॥ ६—१.

जनको ह वैदेहः कूर्चादुपावसर्पन्नुवाच। जनकस्तु याज्ञवल्क्यस्य ज्ञानवैशिष्ट्यं (वैशद्यं) दृष्ट्वा कूर्चादासनविशेषादुत्थाय — ल्यब्लोपे पञ्चमी — उपावसर्पन् उपसीदन् आचार्यमुवाचेत्यर्थः। तदेवाह नमस्तेऽस्तु याज्ञवल्क्यानु मा शाधीति। हे याज्ञवल्क्य! तुभ्यं नमोऽस्तु। शिष्यं मामनुशाधीति। व्यवधानं छान्दसम्। स होवाच। अत्र याज्ञवल्क्य आह। किमिति। यथा वै सम्राट् — असि। हे सम्राट्! यथा महान्तं भौमं सामुद्रं वाऽप्यध्वानमेष्यन् गमिष्यन् रथं वा नावं वा समाददीत संगृह्णीयात्, एवं तत्तदाचार्योपदिष्टाभिरेता-

---

अत्र वाक्प्राणचक्षुःश्रोत्रमनांसि बृहदारण्यकोपक्रमोक्तानि यथाप्रसिद्धि इह वर्णितानि। तत्तद्देवतायाः तत्तदिन्द्रियमेवायतनम्। सर्वत्र आकाश एव प्रतिष्ठा। चतुर्थस्तु पादो भिन्नभिन्नः प्रज्ञाप्रियसत्यानन्तानन्दनामनिर्दिष्टः। तत्रतत्र ब्रह्मदृष्टिमतश्च तत्तदुपकरणसमृद्धिः सर्वभूतप्रियत्वम् तत्तद्देवताप्राप्युदयश्च फलम्।

'नाननुशिष्य हरेते' ति पित्रभिप्रायस्य पुनः पुनः कथनात् इतोऽधिकमनुशास्यमस्तीति जनको निश्चिकाय। स्वकीयानामण्वन्तानामन्ते एवमधिगते इतोऽपूर्वमाचार्यकवरणेनैव श्रोतव्यमित्यवधार्य तदुचितमनुतस्थौ स इत्युच्यते जनको ह वैदेह इति। रथं वा नावं वा,

**एवं बृन्दारक आढ्यस्सन्नधीतवेद उक्तोपनिषत्क इतो विमुच्यमानः क्व गमिष्यसीति । नाहं तद्भगवन् वेद यत्र गमिष्यामीति । अथ वै तेऽहं तद् वक्ष्यामि यत्र गमिष्यसीति [1] । ब्रवीतु भगवानिति ॥ १ ॥**

**इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषः । तं वा एतमिन्धँ**

1. यत्र गमिष्यसीति स होवाच । मा.

---

भिरुपनिषद्भिरत्यन्तं **समाहितात्माऽसि** संपन्नपरलोकसाधनोऽसि । **एवं बृन्दारकः — गमिष्यसीति** । **एवं** तथा **बृन्दारकः** राजत्वेन पूज्यमानः, **आढ्यः** धनाढ्यश्च सन्नधीतवेदः गुरुभिः । **उक्तोपनिषत्कः** उपदिष्टब्रह्मविद्यश्चासीत्येवं सर्वपुरुषार्थसंपत्तिमांस्त्वम् **इतः** अस्माच्छरीरात् **विमुच्यमानः** उत्क्रामन् **क्व** कस्मिन् मार्गे गमिष्यसीत्यर्थः । एवं ब्रह्मविदः उत्क्रामतो गतौ याज्ञवल्क्येन पृष्टायाम्, इतर आह **नाहं तद्भगवन् वेद, यत्र गमिष्यामीति** । याज्ञवल्क्य आह[1] **अथ वै — गमिष्यसीति** । यस्मिन् वर्त्मनि गमिष्यसि, तद्वक्ष्यामीत्यर्थः । इतर आह **ब्रवीतु मे भगवानिति** । यद्यनुजिघृक्षाऽस्तीति शेषः । अत्रोपकोसलविद्यावत् गतिप्रश्नो गन्तव्यब्रह्मणोऽप्युपलक्षकः । अत एव तद्वदत्रापि द्वयोरप्युत्तरत्र प्रतिवचनमुपपद्यत इति द्रष्टव्यम् ॥ १ ॥

**इन्धो ह वै नामैव — परोक्षेणैव** । योऽयं दक्षिणाक्षिस्थः पुरुषः स **इन्धो नाम** इन्ध इति प्रसिद्ध इत्यर्थः । एवं तमेतं पुरुषमिन्धं सन्तं इन्द्र इति

---

यथाक्रमं स्थलेन जलेन वेति भाव्यम् । **उक्तोपनिषत्क** इत्यस्य **एताभिरुपनिषद्भि**रित्युक्तजित्वाद्युपदिष्टब्रह्मविद्याविशेष इत्यर्थः । अत्र वाक्येऽधीतवेदत्वोक्तोपनिषत्कत्वे अनूद्येते । बृन्दारकत्वाढ्यत्वे विशेषतया वर्ण्येते । **क्व गमिष्यसीति** प्रश्नुरयं गूढ आशयः । वागादिषु ब्रह्मदृष्ट्या तत्तद्देवतासायुज्यमपि फलं दर्शितम्; तत्तदुपकरणसंपूर्तिरपि । किं तत्र तत्सायुज्यार्था गतिरपेक्ष्यते, आहो उपकरणसंपूर्त्यधीनपरब्रह्मप्राप्त्यर्था गतिः । आद्ये च तेषु सायुज्येषु कतमसायुज्यार्था गतिरिति । जनकस्तु सायुज्यादिफलप्राप्तेरेतदधीनतया इदानीमेतन्मुखादेव ज्ञाततया सपद्येत्र तत्र निर्णयमलभमानः अनिश्चितप्रश्नाशयश्च प्रतिवक्ति **नाहं तदिति** । याज्ञवल्क्यश्च तत्त्वोपदेशप्रवृत्तः श्रियःपतिमेव परतत्त्वं तत्प्राप्ति — तत्तद्देवतासायुज्यप्राप्ति — सांसारिकफलान्तरप्राप्तिनिर्वाहकनानानाडीप्रतिष्ठानभूतहृदयशालिनि शरीरे समवस्थितं भोग्यतममुपवर्ण्य तदर्थगतौ तं त्वरयति **इन्ध** इत्यादिना ।

**सन्तमिन्द्र इत्याचक्षते परोक्षेणैव। परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः॥ २**

**अथैतद्वामेऽक्षि(क्ष)णि [1] पुरुषरूपमेषाऽस्य पत्नी विराट्। तयोरेष सँस्तावो य एषोऽन्तर्हृदय आकाशः। अथैनयोरेतदन्नम्, य एषोऽन्तर्हृदये लोहितपिण्डः। अथैनयोरेतत् प्रावरणम्, यदेतदन्तर्हृदये जालकमिव। अथैनयोरेषा**

1. अक्षणि मा. अक्षिणि. शां

---

परोक्षेण वदन्ति। देवा [1] हि गोपनीयमर्थं पर्यायोक्तेन वदन्ति; न तु स्पष्टतया। **परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः।** इवशब्द एवार्थः। यस्माद्धि देवाः प्रत्यक्षेण ग्रहणे द्विषन्ति; पर्यायोक्तग्रहणे प्रीतिमन्तो भवन्ति, अत [2] इन्द्र इति वदन्तीत्यर्थः। 'य एष एतस्मिन् मण्डले पुरुषो यश्चाऽयं दक्षिणेऽक्षन्' इति दक्षिणाक्षिस्थितस्य आदित्यान्तरवस्थितस्य चैक्यश्रवणात्, आदित्यान्तरवस्थितस्य पुण्डरीकाक्षत्वात्, "अन्तर उपपत्ते" रिति चक्षुषि स्थितत्वेनोपदिष्टस्य परब्रह्मत्वस्थापनात्, 'इन्द्रं निचिक्युः परमे व्योमन्', 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादिषु परमपुरुषस्येन्द्रशब्दवाच्यत्वप्रसिद्धेश्च नारायण एवात्र दक्षिणाक्षिस्थः पुरुष इति द्रष्टव्यम्। ज्योतिरधिकरणे **व्यासार्यै**रस्य नारायणत्वमुपपादितम्॥ २॥

**अथैतद्वामे—विराट्। पुरुषरूपं** मनुष्याकार इत्यर्थः। **अस्य** इन्द्रस्य **पत्नी विराट्** वामाक्षिस्था मनुष्याकारा तत्पत्नी साक्षाल्लक्ष्मीरेव। तैत्तिरीयके 'विराडसि बृहती श्रीरसीन्द्रपत्नी धर्मपत्नी' ति इन्द्रपत्न्याः श्रीशब्दवाच्यत्वावगमात्। अस्याः साक्षाल्लक्ष्मीत्वञ्च **व्यासार्यै**स्तत्रैवोक्तम्। **तयोरेष संस्तावो य एषोऽन्तर्हृदय आकाशः।** तयोर्दम्पत्योरे**षः** वक्ष्यमाणः **संस्तावः** एकान्तसंभोगभूमिः —, अधिकरणे घञ् —, य एष हृदयकमलमध्ये आकाश इत्यर्थः। एतच्च ज्योतिरधिकरण एव **व्यासार्यै**रुक्तम्। **अथैनयोरेतदन्नम्।** एनयोर्दम्पत्यो**रन्नं** भोग्यं प्रासादस्थानीयमेतदेव। किं तत्? **य एषोऽन्तर्हृदये लोहितपिण्डः।** यः **एषः** दृश्यमानः अन्तर्हृदये कमलकर्णिकाकारो मांसपिण्डः। **अथैनयोरेतत् प्रावरणं, यदेतदन्तर्हृदये जालकमिव।** एनयोर्दम्पत्योरेतदेव **प्रावरणं** वस्त्रम्। किं तत्? **यदेतदन्तर्हृदये जालकमिव।** यत् हृदये लूताजालवत् वक्ष्यमाणहित(ता?)नामकनाडीनिचयसंपन्नं जालकम्, तदेव पट्टवस्त्रमनयोरित्यर्थः। **अथैनयो-**

1 हि यस्मात्. क. 2. पदमिदं न क कोशे।

**सृतिस्सञ्चरणी, यैषा हृदयादूर्ध्वा नाड्युच्चरति। यथा केशः सहस्रधा भिन्नः, एवमस्यैता हिता नाम नाड्योऽन्तर्हृदये प्रतिष्ठिता भवन्ति। एताभिर्वा**

---

**रेषा — नाड्युच्चरति ।** एतस्मात् हृदयादूर्ध्ववर्तिनी या नाडी उच्चरति, सैषा सुषुम्नाख्या एवमुपासकस्य ब्रह्मविदो ब्रह्मलोकसौधगतपरमदम्पतिप्राप्तिहेतुभूता **सञ्च-रणी सृतिः** निरवग्रहमार्ग इत्यर्थः । **यथा केशः सहस्रधा भिन्न एवमस्यैता हिता नाम — आस्रवति । अन्तर्हृदये** हृदयान्तः प्रतिष्ठिता भवन्ति याः

---

**लोहितपिण्डः** पुरीतन्नामकः । **एवमस्ये**त्यत्र **अस्ये**तिपदं मांसपिण्डार्थकम् । 'हिता नाम नाड्यः द्वासप्ततिसहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्त'इति बालाकिसंवादगतश्रुत्यनुसारात् पुरीतत्संबन्धिन्य इति यावत् ।

अत्रेदं बोध्यम् — हिता नाम नाड्यः स्वप्नस्थानमिति उपरितनब्राह्मणतो ज्ञायते । कौषीतक्युपनिषदि च बालाक्यजातशत्रुसंवादे, 'हिता नाम हृदयस्य नाड्यः हृदयात् पुरीततमभि प्रतिष्ठन्ति — तासु तदा भवती' ति वाक्यं स्वप्नस्थानपरं व्याख्यातम् । अत्र तु बृहदारण्यके बालाकिसंवादे, 'अथ यदा सुषुप्तो भवती' ति सुषुप्तिमेव प्रक्रम्य हिता नाम नाडीर्निर्दिश्य, 'ताभिः प्रत्यवसृप्य पुरीतति शेते' इत्युक्तम् । अत्र नाडीनां कथमपि सुषुप्तिस्थानतया ग्रहणं स्वरसम् । सुबालोपनिषदि (४) तु, 'अथेमा दश नाड्यो भवन्ति' इति वाक्यं स्वप्नस्थानपरम् । उपरि, 'हरितस्य नीलस्ये, त्यारभ्य, 'यथा केशः सहस्रधा भिन्नः, तथा हिता नाम नाड्यो भवन्ति' इति वाक्यं सुषुप्तिस्थानपरम् । नाडीविशेषाः स्वप्नस्थानभूताः । अन्यास्तु हिता नाम नाड्यः सुषुप्तिस्थानभूताः — इति व्यासार्यैर्विभज्य व्याख्यातम् । एवमपि नाडीनां न साक्षात् सुषुप्तिस्थानत्वम्, 'ताभिः प्रत्यवसृप्ये' त्युक्तेः । किंतु प्रासादखट्वापर्यङ्कायमाणत्वात् नाडीपुरीतत्पर-ब्रह्मणाम्, परम्परयेति, नाडीषु साक्षात् संबन्धे स्वप्नः, परम्परया संबन्धे सुषुप्तिरिति विवेकः कर्तव्यः । इमाश्च नाड्यः किं हृदयान्तर्गताः उत हृदयाद् बहिष्ठा इति विचारे, 'हृदयात् पुरीततमभिप्रतिष्ठन्ते' इति प्रयोगात् न हृदयकुहरनिविष्टत्वमिति वक्तव्यं भवेत् । परन्तु लोहित-पिण्डस्यैव पुरीतत्पदेन ग्रहणात्, तस्य चेह, 'य एषोऽन्तर्हृदये लोहितपिण्ड' इति वाक्यात् 'हृदयस्य मध्ये लोहितं मांसपिण्डम्' इति सौबालवाक्याच्च हृदयान्तर्गतत्वावगमात् हृदय एव कस्माचित् प्रसृत्य हृदयान्तर्गतमांसपिण्डपर्यन्तं नाडीस्थितिरिति नाड्यो हृदयान्तर्गता एव । कौषीतकिवाक्ये च, 'हृदयस्य नाड्यः, 'हृदयात् पुरीतत' मिति षष्ठीपञ्चमीद्वयप्रयोगात् हृदयान्तर्गतत्वं हृदयावधिकत्वमुभयं ज्ञायते । अथापि तासामेव नाडीनां बहिरपि शरीरे यथायथं व्याप्तिरस्ति । तदुच्यत इहापि, 'यैषा हृदयादूर्ध्वा नाडी' इत्यादिना । बहिःष्ठा नाड्यः हृदये तदन्तर्गते पुरीतति च निविष्टा इति ज्ञापनार्थमेव **हृदया**दित्यस्य **हृदयं प्रविश्ये**ति पूर्वं भाष्ये

**एतदास्रवदास्रवति ।**

---

केशसहस्रांशातिसूक्ष्माः हितनामका नाड्यः, ताभिः **एतत्** जीवजातम्, **आस्रवत्** = **आ** समन्तात् * **स्रवत्** संसरद्भूतजातम्, **आस्रवति** संसरतीत्यर्थः । 'तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ती' ति हि श्रुत्यन्तरम् ।

* स्रवति संसरति । एतद्भूतजातमास्रवति संसरति. ख. ग.

---

व्याख्यानम् । हृदयावधिकं प्रस्थानमित्यर्थो व्यासार्याभिमत इव ।

सर्वमिदं हृदयशब्दवाच्यं किमिति शोधनेन निर्णेयम् । हृदयमिति लोके वक्षः-स्थलमप्युच्यते, मनश्च । तैत्तिरीये 'पद्मकोशप्रतीकाशं हृदयञ्चाप्यधोमुखम् । अधो निष्ट्या वितस्त्यां तु नाभ्यामुपरि तिष्ठति । हृदयं तद् विजानीयात्' इति पद्मकोशाकारो ऽवयवो हृदयशब्दार्थो दर्शितः । तस्य परमात्माधारत्वञ्च तत्र स्पष्टमेव । श्रुत्यन्तरञ्च 'य एषोन्तर्हृदय आकाशः' इति । एवं परमात्मनः पुरीततश्च सुषुप्त्याधारत्वात् परमात्मनः पुरीतत्संबन्धोऽवर्जनीय इति पद्मकोशाकारस्य हृदयस्य पुरीततश्च कीदृशः संबन्ध इति जिज्ञासायां सौबालवाक्यानुसारात् हृत्पद्माधारभूतं पुरीतत् इति वक्तव्यम् । अत एव दहरपुण्डरीकवेष्टनरूपत्वात् हृदयवेष्टनमांसं पुरीतदित्युच्यत इति दर्शितं **भावप्रकाशिकायाम्** । मुण्डके चोक्तम्,'अरा इव रथनाभौ संहता यत्र नाड्यः स एषोन्तश्चरते' इति अरतौल्यं नाडीनाम् । 'हृदयस्य मध्ये लोहितं मांसपिण्ड' मित्यत्र हृदयपदेन तु स्वान्तर्वर्तिपुरीतत्कं वक्षोन्तर्गतं किञ्चिदुच्यते; न तत् 'पद्मकोशप्रतीकाश'मित्यत्र ग्राह्यम् । यद्वा पुरीतदाधारभूतं हृदयं पुरीतदाधेयं हृत् सर्वं पुरीतता नाडीभिश्च सह संपिण्डितमेकपद्माकारेणैव वर्तते । तस्य विशिष्टस्य हृदयमिति नाम । अस्य पद्माकारस्य पुरीतत् कर्णिकायते । पुरीतन्निविष्टः साक्षात्परमात्माधारांशोऽपि पृथग्दर्शने पद्माकार एव लक्ष्यत इति तदपि, 'पौण्डरीकं कुमुदमिवानेकधा विकसित' मित्युच्यते । तथाच हृदयशब्दो यथायथमत्र तत्र च वर्तते 'यस्मिंस्तद् दहरं पौण्डरीकं कुमुदमिवानेकधा विकसित' मिति वाक्ये च पौण्डरीकपदं पुण्डरीकसंबन्धीत्यर्थे स्वरसं मांसपिण्डरूपपुरीतन्निविष्टस्य दहरस्य परमात्माधारस्य कुमुदाकारभागस्य पुण्डरीकसंबन्धित्वं बोधयत्, यस्य मध्ये पुरीतत्, तस्य हृदयस्य विशिष्टस्य पुण्डरीकतां गमयति । अतो विशिष्टं हृदयम् । तत्र बाह्यदलभागाः जागरित-स्थानम् । केसरायमाणा नाड्यः स्वप्नस्थानम् । कर्णिकायमानपुरीतदन्तर्गतस्तदंशः सुषुप्तिस्थानम्, यत्र परमात्मा, 'तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठित' मिति, 'य एषोऽन्तर्हृदय आकाश' इति चोक्त इति गम्यते । अत एवात्रोच्यते, **अन्तर्हृदये कमलकर्णिकाकारो मांसपिण्डः** इति । शेषं सुबालोपनिषत्परिष्कारे वक्ष्यते ।

**एताभिर्वा एतदास्रवत् आस्रवतीति ।** एतदुपबृंहणञ्चैवं श्रीमद्रहस्यत्रयसारो-पात्तम् —

**तस्मादेष प्रविविक्ताहारतर इवैव भवत्यस्माच्छारीरादात्मनः । (३)**

---

**तस्मादेष प्रविविक्ताहारतर इवैव भवत्यस्माच्छरीरादात्मनः** । यस्माद्धेतोर्दक्षिणाक्षिस्थः पुरुषो दिव्य[1]विग्रहमङ्गळ (दिव्यमङ्गलविग्रह?) गुणादिभिर्दीप्यमानतया इन्धो भवति, तस्मादेवास्माच्छारीरात् शरीरे स्थितात् सुषुम्नया गच्छतोऽस्माज्जीवात्मनः दक्षिणाक्षिस्थ एष पुरुषः प्रविविक्ताहारतर इवैव भवति। [2]अतिप्रकृष्टामृतवद्भवतीति यावत् । स्वशरीरभूतात् अण्वानन्दरूपाज्जीवात् निरतिशयानन्दरूपोऽयं पुरुषोऽतिभोग्यो भवतीत्यर्थः । अत्र **एषा सृतिः सञ्चरणी**त्युक्त्या गमनमार्गे उक्तो भवति ॥ ३ ॥

1. दिव्येति, मङ्गलेति च ख. कोशादौ न। 2. अतिप्रकृष्टान्नवत् अमृतवदिति यावत् । तद्भोग्यो भवतीत्यर्थः । ख. ग.

---

अनन्ता रश्मयस्तस्य दीपवद्यः स्थितो हृदि ।
सितासिताः कद्रुनीलाः कपिलाः पीतलोहिताः ॥
ऊर्ध्वमेकः स्थितस्तेषां यो भित्वा सूर्यमण्डलम् ।
ब्रह्मलोकमतिक्रम्य तेन यान्ति परां गतिम् ॥
यदस्यान्यद् रश्मिशतमूर्ध्वमेव व्यवस्थितम् ।
तेन देवशरीराणि सधामानि प्रपद्यते ॥
येनैकरूपाश्चाधस्तात् रश्मयोऽस्य मृदुप्रभाः ।
इह कर्मोपभोगाय तैः संसरति सोऽवशः ॥

इति । अत्र दीपवत् प्रकाशमानस्य जीवस्य रश्मिवत् भ्राजमानाः सूर्यरश्मिसंसृष्टाः नीलपीतादिनानारूपरुधिरपूर्णाः ब्रह्मसायुज्यदेवतान्तरसायुज्यार्वाचीनभोगप्रापकगतिभेदकृतो नाड्यः सन्तीति प्रदर्शनात् **अथ वै तेऽहं तद् वक्ष्यामि, यत्र गमिष्यसीति** प्रतिज्ञातरीत्या नानागतिसंभावनं ज्ञापितं भवति। तत्र देवतान्तरसायुज्यादि उपेक्ष्य परब्रह्मैकतानता युक्तेति गमयितुमाह **तस्मादेष प्रविविक्तेति**। **प्रविविक्ताहार** इत्यस्य बहुव्रीहित्वे विविधाभिर्नाडीभिः विभिन्नं भोग्यजातं प्रति आस्रवतो जीवस्य यत् तत्तत्स्थानाप्त्या प्रविविक्ताहारवत्त्वम्, तदपेक्षयाऽतिशयितं तादृशाहारवत्त्वं परस्यात्मनस्तत्रतत्र तदन्तर्यामितया स्थितस्य सपत्नीकस्येन्धस्येत्यर्थो वर्णयितुं शक्यते। तथापि बहुव्रीह्यपेक्षया कर्मधारये लाघवादाह **अतिप्रकृष्टामृतवद् भवतीति**। आह्रियत इत्याहारो भोग्य इत्यर्थः। **आहारतरत्वं** भोग्यतरत्वम्। एवं जीवापेक्षया परमात्मनो भोग्यतातिशयकथनम् आस्रवणरूपसंसरणमैश्वर्यार्थं मा भूदिति विरक्तः कैवल्येऽपि न प्रवर्तितुमर्हति, जीवस्य निरतिशयभोग्यत्वाभावादिति ज्ञापनाय।

तस्य प्राची दिक् प्राञ्चः प्राणाः, दक्षिणा दिग् दक्षिणे[1] प्राणाः, प्रतीची दिक् प्रत्यञ्चः प्राणाः, उदीची दिगुदञ्चः प्राणाः, सर्वा दिशः सर्वे प्राणाः। स एष नेति ने[2]त्यात्मा। अगृह्यो न हि गृह्यते, अशीर्यो न हि शीर्यते, असङ्गो न हि सज्यते, असितो न व्यथते न रिष्यति। अभयं वै जनक! प्राप्तोऽसीति होवाच याज्ञवल्क्यः। स होवाच जनको वैदेहोऽभयं त्वागच्छताद्याज्ञवल्क्य, यो नो भगवन् अभयं वेदयसे।

1. दक्षिणाः मा. 2. नेतिनेतीत्यात्मा. क.

---

अथ पुनरपि दक्षिणाक्षिस्थस्य प्रकृतस्य पुरुषोत्तमस्य प्रकारान्तरेणापि शरीरगतजीववैलक्षण्यमेव द्रढयति **तस्य प्राची दिक् प्राञ्चः प्राणाः—सर्वे प्राणाः।** तस्य शरीरस्थजीवस्य **प्राञ्चः** पूर्वाभिमुखाः प्राणा एव **प्राचीदिक्** प्राचीदिग्गतविषयसाधनानीत्यर्थः। एवमग्रेऽपि। ततश्च जीवाः(वः) सर्वासु दिक्षु प्राणेन्द्रियप्रचुराः(रः) प्राणेन्द्रियोपकरणका(क) इति यावत्। एवं जीवस्वरूपमुक्त्वा इन्धस्य पुरुषस्य तद्वैलक्षण्यमाह **स एष नेति — न रिष्यति। स एषः** दक्षिणाक्षिस्थपुरुषः इन्द्रियाद्यग्राह्यत्वात् विशरणशून्यत्वान् निर्लेपत्वात् शोकमृत्युरहितत्वाच्च, 'नेतिनेती' ति श्रुतिषु प्रकृतैतावत्त्वप्रतिषेधपूर्वकमितरविलक्षणत्वेन निर्दिष्ट आत्मेत्यर्थः। **अभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्यः।** एतादृशमिमं पुरुषमु[1]पास्स्व; **अभयं** परमात्मानं प्राप्त एवासि। वैशब्द एवार्थे। प्राप्तप्राय[2] एवासि; उपासनोपकरणसंपत्तिमत्त्वात्। यद्वा[3], 'प्राप्तोऽसी' ति, 'आशंसायां भूतवच्च' ति कर्तरिक्तप्रत्ययः। इति याज्ञवल्क्यो जनकमुवाचेत्यर्थः। **स होवाच जनको वैदेहः।** किमिति। **अभयं त्वागच्छताद्याज्ञवल्क्य।** हे याज्ञवल्क्य! त्वदुक्तमभयं तु ममागच्छतात्। आशिषि तातङ्। ब्रह्मप्राप्तिर्मे भूयादित्यर्थः। [किंतु] भगवन्! यस्त्वं **नः** अस्माकम् **अभयं वेदयसे** अभयं परमात्मानं लम्भयसे, ईदृशाय

1. उपास्य. क. 2. प्राप्तवानसि. ख. ग. 3. यद्वेति न खादि कोशे।

---

**अभयं वै जनक प्राप्तोऽसीति।** अनेन फलान्तरविरक्तत्वे अभयप्राप्तिर्ध्रुवेत्युक्तं भवति। स्वस्य फलान्तरविरक्तिम्, अभये आशाञ्च दर्शयति जनकः **अभयं त्विति।** अभयं **त्वा** त्वां गच्छतादिति याज्ञवल्क्यं प्रति आशासनमित्यर्थवर्णनं न युक्तम्। आशिषं वदन्तं प्रति आशीःप्रयोगायोगादिति, **तु** इति पदच्छेदः कृतः। तुशब्दः प्रथमब्राह्मणे तत्तदृष्युक्तविषयदर्शितदेवसायुज्यादिफलान्तरव्यवच्छेदार्थः।

**नमस्तेऽस्तु ; इमे विदेहा अयमहमस्मीति**[1] ॥ (४)

इति षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥

---

६—३.

**जनकं ह वैदेहं याज्ञवल्क्यो जगाम । स मेने न वदिष्य इति । अथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समूदाते, तस्मै ह याज्ञवल्क्यो वरं ददौ ।**

1. इतिशब्दो न माध्वशांकरयोः ।

---

परमात्मप्रापकाय तुभ्यं परमोपकारिणे नमोऽस्तु । **इमे विदेहाः** । तुभ्यं दक्षिणात्वेन समर्पिता इति शेषः । **अयमहम्** । तद्देशाधिपतिरहमपि ते दासोऽस्मीत्यर्थः । **इति**शब्द आख्यायिकासमाप्तौ ॥ ४ ॥ ६-२.

**जनकं ह वैदेहं याज्ञवल्क्यो जगाम** । 'योगक्षेमार्थमीश्वरमभिगच्छेत्' इति स्मृत्यनुसारेण कदाचिज्जनकसमीपं याज्ञवल्क्यो गतः । **स मेने न वदिष्य इति** । **सः** याज्ञवल्क्यो मार्गे, गच्छन्, एवं **मेने** चिन्तितवान् । किमिति । किञ्चिदप्यध्यात्मविषये न वक्ष्यामीति । एवं कृतसंकल्पोऽपि याज्ञवल्क्यो जनकेन पृष्टं सर्वमपि प्रवक्तुमुपचक्रमे इत्याख्यायिकामाचष्टे **अथ—समूदाते** । **अथ** तदानीं जनकश्च वैदेहो याज्ञवल्क्यश्च **अग्निहोत्रे समूदाते** अग्निहोत्रविषये संवादं कृतवन्तावित्यर्थः । **तस्मै ह याज्ञवल्क्यो वरं ददौ** । तस्य जनकस्य कर्मविषयकं विज्ञानवैशिष्ट्य-(वैशद्य) मुपलभ्य परितुष्टो याज्ञवल्क्यः तस्मै **वरं ददौ** इष्टं वृणीष्वेत्यवोचदित्यर्थः ।

---

उपदेष्टव्यस्य प्रधानस्योपदिष्टत्वात् पूर्ववत् सहस्रं ददामीत्यनुक्त्वा सर्वं समर्प्य दासो भवति **नमस्त** इति ॥

'नाननुशिष्य हरेते'त्यभिसंधिकृतादुपदेशात् निर्बन्धसमापतित उपदेशः याज्ञवल्क्येन जनकस्य समयान्तरे संपूर्ण आसीदित्यनन्तरब्राह्मणाभ्यां प्रदर्श्यते । तत्राऽऽद्ये ब्राह्मणे जनकप्रश्नाः, जाग्रत्स्वप्नसुषुप्तिमरणदशावर्णनञ्च; अन्त्ये मरणानन्तरं विद्वदविद्वद्गतिभेदः यथावस्थितब्रह्मोपदेशश्च ।

**स ह कामप्रश्नमेव वव्रे। तँ हास्मै ददौ। तँ सम्राडेव [1] पूर्वं(र्वः) पप्रच्छ(१)**

**याज्ञवल्क्य किञ्ज्योतिरयं पुरुष इति। आदित्यज्योतिः सम्राडिति होवाच**

1. पूर्वः. शां.

---

**स ह कामप्रश्नमेव वव्रे। सः** जनकः अपेक्षितांशान् प्रक्ष्यामि तस्यो(त्रो?) त्तरं दातव्यमिति वरं वृतवान्। **तं हास्मै ददौ।** तञ्च वरं याज्ञवल्क्यः तस्मै ददावित्यर्थः। **तं सम्राडेव पूर्वं पप्रच्छ।** तेन वरप्रदानसामर्थ्येन, अनाचिख्यासुमपि याज्ञवल्क्यं तूष्णींस्थितमपि सम्राडेव [1] **पूर्वं(र्वः)** प्रथमं पप्रच्छेत्यर्थः ॥ १ ॥

प्रश्नमेवाह **याज्ञवल्क्य किञ्ज्योतिरयं पुरुष** इति। **किञ्ज्योति**रिति बहुबहुव्रीहिः। अस्य पुरुषस्य आसनगमनकर्म [2] निवृत्त्यादिसाधनभूतं ज्योतिः किमिति प्रश्नार्थः। उत्तरमाह **आदित्यज्योतिः सम्राडिति होवाच।** याज्ञवल्क्य इति शेषः। हे सम्राट् अयं पुरुषः आदित्यज्योतिरिति होवाच याज्ञवल्क्यः।

1. पूर्वः पप्रच्छ। ख. ग.　　2. निर्वृत्त्यादि. क.

---

**कामप्रश्नमेव** वव्रे इति। अत्र (११-६-२) माध्यन्दिनशतपथस्थितमनुसंधेयम्। तद् यथा — जनकः श्वेतकेतु-सोमशुष्म-याज्ञवल्क्यान् कथंकथमग्निहोत्रं जुहुथेति पप्रच्छ। तेषु त्रिषु यथावगतमुक्तवत्सु याज्ञवल्क्येनाग्निहोत्रमीमांसा नेदिष्ठं कृतेति प्रशस्य उत्क्रान्तिगतिप्रतिष्ठादिकं त्वयाऽपि न विदितमिति याज्ञवल्क्यमभिधाय राजा रथमारुह्य जगाम। अथ क्रोधात् श्वेतकेतुप्रभृतिः ब्रह्मोद्यविषये राजानमाह्वयितुमियेष। याज्ञवल्क्यस्तु अस्माकं ब्राह्मणानां तज्जयान्न ख्यातिः, तस्य राजन्यत्वात् अस्माकमपजये तस्य महती ख्यातिरिति [चातुर्येण] तामिच्छां विघटय्य, स्वयं रथेन धावन्तं राजानमनुधाव्य रहस्यं पृष्ट्वा बुबुधे। तस्मै स तदा याज्ञवल्क्यो वरं ददौ। स होवाच, 'कामप्रश्न एव मे त्वयि याज्ञवल्क्यास्तु' इतीति। ननु वरदाने कृते जनकः स्वापेक्षितं यदि पृच्छेत्, वक्तव्यमेव याज्ञवल्क्येन। अतः साक्षात् प्रष्टव्यमेवापृष्ट्वा कामप्रश्नवरणं किमर्थमिति चेत् — तथासति एकप्रश्नसमाधानमात्रेण व्रतपूर्तिः स्यात्। कामप्रश्नवरणं नाम — यावत् पृच्छ्यते, तावद् वक्तव्यमिति वरणम्। अतः सर्वमस्मै वक्तव्यमापतितं याज्ञवल्क्यस्य। तदाह **अपेक्षितांशान् प्रक्ष्यामीति।**

**आदित्यज्योतिरिति।** आत्मा तावत् न सूर्यचन्द्राग्न्यादिप्रकाश्यः। स्वयंधामतया स्वप्रकाशत्वात्। तथाच भगवान् अगासीत् —

न तद् भासयते सूर्यो न शशाङ्को न पावकः।
यद् गत्वा न निवर्तन्ते तद् धाम परमं मम ॥

इति। एतदेव दर्शयितुमयं श्रुतिसंदर्भः प्रवृत्तः। स्मारिता चेयं श्रुतिस्तत्र भाष्ये **भगवता**

आदित्येनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति । एवमेवै- तद्याज्ञवल्क्य । (२)

अस्तमित आदित्ये याज्ञवल्क्य किञ्ज्योतिरेवायं पुरुष इति । चन्द्रमा एवास्य ज्योतिर्भवतीति, चन्द्रमसैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीति । एवमेवैतद्याज्ञवल्क्य । (३)

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते किञ्ज्योतिरेवायं पुरुष इति । अग्निरेवास्य ज्योतिर्भवतीति, अग्निनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति । एवमेवैतद्याज्ञवल्क्य । (४)

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ किं- ज्योतिरेवायं पुरुष इति । वागेवास्य ज्योतिर्भवतीति वाचैवायं ज्योतिषास्ते

---

आदित्यो ज्योतिर्यस्य स तथोक्तः । तदुपपादयति **आदित्येनैव विपल्येतेति** । **आदित्येनैवायं ज्योतिषा आस्ते** उपविशति; **पल्ययते** — 'उपसर्गस्यायतौ ' इति लत्वम् — पर्ययते = इतस्ततो गमनं करोति; लौकिकं वैदिकं वा कर्म कुरुते ; यथायथं **विपल्येति** विपर्येति = प्रतिनिवृत्त्य आगच्छतीति यावत् । उक्तमङ्गीकरोति जनकः **एवमेवैतद्याज्ञवल्क्येति** । (२)

अन्यत् पृच्छति जनकः **अस्तमिते— किञ्ज्योतिरेवायं पुरुष इति** । आदित्येऽस्तमिते अयं पुरुषः किंज्योतिर्भवति । सर्वं पूर्ववत् । (३)

अन्यत् पृच्छति जनकः **अस्तमिते–चन्द्रमस्यस्तमिते किञ्ज्योतिरेवायं पुरुष इति** । स्पष्टम् । उत्तरमाह याज्ञवल्क्यः **अग्निरेवास्य ज्योतिर्भवति**–पूर्ववत् । (४)

अन्यत् पृच्छति जनकः **अस्तमिते — शान्तेऽग्नौ किञ्ज्योतिरेवायं पुरुष इति** । **शान्तेऽग्नौ** अग्नौ च निर्वाणं गते इत्यर्थः । शिष्टं स्पष्टम् । उत्तरम् **वागेवास्य ज्योतिर्भवति** — । अत्र **वागित्यनेन** शब्द उच्यते ।

---

**भाष्यकृता** । एवमप्यमत्र महर्षेर्भाव —

आत्मस्वरूपस्य ज्योतिरन्तराप्रकाश्यत्वेऽपि तदीयव्यापाराणां ज्योतिरधीनतया किंज्योति- रिति प्रश्ने आदित्यादीनि ज्योतींष्येव निर्दिशेम । अन्यथाप्रतिपत्तिपरिहाराय उपपादयेम चास्मद- भिमतमिति । **ज्योतिषाऽऽस्ते** इति । उपवेशगमनकार्यकरणनिवर्तनदेशादिविज्ञानमेतज्ज्योति- रधीनं ह्यहनीति भावः ।

**पल्ययते कर्म कुरुते विपल्येतीति । तस्माद्वै सम्राडपि यत्र स्वः पाणिर्न विनिर्ज्ञायते, अथ यत्र वागुच्चरति, उपैव तत्र न्येतीति । एवमेवैतद्याज्ञ- वल्क्य । (५)**

**अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किञ्ज्योतिरेवायं पुरुष इति । आत्मैवास्य ज्योतिर्भवतीति, आत्मनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति । (६)**

---

वाचो ज्योतिष्ट्वमुपपादयति **तस्माद्वै सम्राडपि यत्र — उपैव तत्र न्येतीति ।** यस्मादादित्यचन्द्राग्निष्वसत्स्वपि वागेव ज्योतिः, तस्मादेव **यत्र** यस्मिन् मेघान्धकारान्तरितायां तमिस्रायामात्मीयोऽपि पाणिर्न **विनिर्ज्ञायते** न निश्चीयते **अथापि** तस्मिन् काले हे सम्राट्! यत्र देवदत्तस्य वा यज्ञदत्तस्य वा, 'अहमत्र तिष्ठामी' ति **वागुच्चरति** शब्दो निर्गच्छति — तत्र तदा, 'अत्रासौ वर्तते' इति ज्ञात्वा **उपन्येत्येव** उप समीपे **नि** नितराम् **एति** गच्छतीत्यर्थः । ततश्च शब्दद्वारा श्रोत्रं प्रकाशकं भवतीत्यर्थः । अङ्गीकारोति **एवमेवैतद् याज्ञवल्क्य । (५)**

पृच्छति — **अस्तमिते — शान्तायां वाचि — पुरुष इति ।** स्वप्ने किमस्य प्रकाशकमिति प्रश्नार्थः । याज्ञवल्क्य उत्तरमाह **आत्मैवास्य ज्योतिर्भवति — ।** स्वप्ने बाह्येन्द्रियाणामुपरतत्वात् प्रसिद्धादित्यादिप्रकाशकाभावाच्चात्मैव स्वधर्मभूतज्ञानेन स्थितिगमनादिहेतुभूतः प्रकाशको भवतीत्यर्थः। शिष्टं स्पष्टम् । (६)

---

**शब्दद्वारा श्रोत्रं प्रकाशकमिति ।** श्रोत्राभावे परकीयवाक्छ्रवणाभावेन कार्यानिर्वृत्तेरिति भावः । तथाच पूर्वमादित्यादिज्योतिर्बलात् चक्षुषः प्रकाशकत्वमभिमतम् । अत्र च श्रोत्रस्य प्रकाशकत्वम् । सर्वत्र मनसश्च प्रकाशकत्वं सिद्धम् ।

एवं बाह्यसहायाधीनत्वं पुरुषव्यापारस्य यदा न भवति, तदा किञ्ज्योतिरयं पुरुष इति प्रश्नः । अस्य **शान्तायां वाचीति** प्रश्नस्य यदा जागरे परकीयवाग्रूपज्योतिरपि न लभ्यते, तदा कथं पुरुषव्यापार इति जागरितविशेषविषयकत्वे उपरि स्वप्ननिरूपणं न संगच्छेत । अत आदित्यादिवाक्पर्यन्तश्रवणेन जागरव्यापारनिर्वाहगमनिकां बुध्वा जनक इन्द्रियाणामुपरतौ व्यापाराणां भावात् तत्र किञ्ज्योतिरिति पृच्छतीति तात्पर्यं वर्णनीयमिति भावेन स्वप्ने **किमस्येत्युक्तम् ।**

**कतम आत्मेति। योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः। स समानस्सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव।**

---

'आत्मैवास्यज्योति' रित्यत्रात्मज्योतिश्शब्दाभ्यां निर्दिश्यमानपुरुषस्वरूपं किमिति पृच्छति जनकः **कतम आत्मेति**। हृत्कमलमध्यगतः प्राणशब्दितेन्द्रियमुख्यप्राणमध्यगः विज्ञानधर्मको ज्योतिश्शब्दितप्रकाशकस्वरूपः पुरुषो जीव इत्युत्तरमाह **योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः**। अत्र **विज्ञानमय** इति प्राचुर्यार्थमयटा आत्मनो धर्मभूतज्ञानव्यतिरेक उक्तः। **प्राणेष्विति** [1]पृथङ्निर्देशादिन्द्रियमुख्यप्राणव्यतिरेकोऽपि सिद्धः। अत्र [2]ज्योतिश्शब्दितात्मनो ज्ञानस्वरूपस्य विज्ञानमयत्वोक्त्या धर्मभूतज्ञानद्वारा भासकत्वम्, आदित्यादीनामिव तेजोरूपाणां प्रभाद्वारा, ज्योतिष्ट्वमिति भावः। **स समानस्सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव**। **सः** जीवः, परायत्तकर्तृत्वोऽपि, 'अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते' इत्युक्तरीत्या **समानस्सन्** मानः = अभिमानः तेन सहितस्सन्, स्वातन्त्र्यलक्षणकर्तृत्वाभिमानयुक्तस्सन् गोपुरधारीव (?) ध्यायतीव लेलायतीव—स्वतन्त्रः कर्तेव—**उभौ लोकावनुसञ्चरति** लोकद्वयेऽपि सञ्चरतीत्यर्थः। [ध्यायतीव स्वतन्त्रकर्तेव [3]] **लेलायतीव** स्वयं चलतीव। **ध्यायतीव लेलायती-**

1. सप्तमीनिर्देशात् **ख. ग.** 2. ज्योतिश्शब्दात्. **ख. ग.** 3. नेदं **ख. ग.** कोशयोः।

---

**कतम आत्मेति**। आदित्यादीनि ज्योतींषीव इदमात्माख्यं ज्योतिरपि किं पुरुषातिरिक्तम्; उत पुरुष एव। पुरुष एव चेत्, तस्य जागरेऽपि सत्त्वात् सर्वदैवात्मज्योतिष्ट्वं स्यादिति प्रश्नाशयः। तत्र प्रथमांशसमाधानं **योऽयमित्यादि**। देहमुख्यामुख्यप्राणधीविलक्षणः पुरुष एवात्मेति विवक्षित इति। द्वितीयांशसमाधानं **स समान**इत्यादिना। **मानः** अहमित्यभिमानः। एक एव पुरुषो जागरदेहे यावत् अहमित्यभिमानवान् भवति, तावत् जागरव्यापारसक्तः आदित्यादिज्योतिरपेक्षते; लोकद्वये यथायथं सञ्चारी भवति च। यदा तु सोऽभिमानोऽपैति, स्वप्नदशामाप्नोति, तदा देहाश्रितनयनगोलकादिस्थानेषु तदिन्द्रियाणामनवस्थितत्वात् नाऽऽदित्याद्यपेक्षासंभव इति जाग्रल्लोकाननुभव एव तस्येति भावः। गोपुरधारीवेति। परैर्प्यविवेकिभिस्तथाकर्तेवगृह्यमाणं इत्यर्थः।

यद्यपि **ध्यायतीव लेलायतीवे**त्यत्रैवं सुवचम्। इवशब्दौ क्रमेण ध्यानतुल्यमानसव्यापार—चलनतुल्यकायिकव्यापाररूप सर्वव्यापारोपलक्षणार्थौ। वाचिकश्च कायिक एवान्तर्भवति,

वेत्याभ्यां जीवस्य कर्तृत्वं परमात्मायत्तमिति, सांसारिककर्तृत्वमौपाधिकमिति च दर्शितम्। अत्र परतन्त्रप्रभौ प्रभुरिवेत्युक्तिवत् परायत्तकर्तृत्वाश्रये ध्यायतीवेति इव-शब्दप्रयोगे नानुपपत्तिरिति द्रष्टव्यम्। ततश्च लोकद्वये देहद्वयेन संचरकथनात् देहद्वयव्यतिरेकोऽप्युक्तो भवति।

न च अत्र ध्यायतीव लेलायतीवेतीवशब्दप्रयोगात् कर्तृत्वमात्मनो नास्ती-त्येवाभ्युपगन्तव्यमिति वाच्यम्—"कर्ता शास्त्रार्थवत्त्वा" दित्यधिकरणे सांख्याभिमतम-कर्तृत्वमात्मनः पूर्वपक्षीकृत्य कर्तृत्वस्य परैरपि सिद्धान्तितत्वात्। वस्तुस्थितौ चिन्त्यमाना-यामचेतनत्वात् कूटस्थत्वाच्च नान्तःकरणस्य वा, चितो वा कर्तृत्वमित्यभ्युपगमस्य, परस्पराविवेकेन परस्परधर्माध्यास इत्यभ्युपगमस्य च परेषां सांख्यानाञ्च साम्येन सांख्यपक्षात् परपक्षे वैषम्याभावेन, "कर्ता शास्त्रार्थवत्त्वात्" इत्यधिकरणविरोधस्य परपक्षे दुर्निरसत्वात्। न च, "यथा च तक्षोभयथे" त्यत्र, 'तत्त्वमसी' त्यादिभि-र्बहुकृत्वः कर्तृत्वाद्यनर्थानाश्रयब्रह्माभेदबोधनात् कर्तृत्वमपरमार्थं इति परैरुक्तमिति वाच्यम्—'यो वै बालाके एतेषां पुरुषाणां कर्ते' त्यादिवाक्यैर्ब्रह्मणः सर्वकर्तृत्वाऽऽवेद-नेन ब्रह्माभेदबोधने सर्वकर्तृत्वापातेनाकर्तृत्वाप्रसक्तेः। 'दृश्यते त्वग्र्यया बुद्ध्या', 'मनसा तु विशुद्धेन', 'ध्यायन्तो मनसैव यम् (तम)' इति करणत्वेन प्रतिपन्नस्य मनसः कर्तृत्वम्, 'यो वेदेदं जिघ्राणीति स आत्मा', 'एष हि द्रष्टा श्रोता मन्ता कर्ता बोद्धा विज्ञानात्मा पुरुषः' इति कर्तृत्वेन प्रतिपन्नस्याकर्तृत्वमित्युक्तेरयुक्तत्वात्। विज्ञानशब्दिताया बुद्धेः कर्तृत्वे करणान्तराभ्युपगमप्रसङ्गात् प्रकृतिविवेक[1] लक्षण-समाधौ प्रकृतेः कर्तृत्वासंभवेन आत्मन एव कर्तृत्वमास्थेयमिति, "शक्तिविपर्ययात्, समाध्यभावाच्चे" ति सूत्रयोः स्वयमेवोक्तत्वाच्च।

1. विलक्षण. क.

---

जिह्वाधरोष्ठपुटादिचलनं विना व्यवहारायोगात्। तथाच मानसकायिकादिसर्वव्यापारशाली भवत्यु-भयोर्लोकयोरिति वाक्यार्थ इति — अथापि **समान** इति देहात्माभिमानस्वतन्त्रात्माभिमानयो-रुक्तत्वात् तन्मूलकतया सर्वेऽस्य व्यापाराः; न तु स्वाभाविका इति श्रुतिरनुपदं तत्त्वं व्युत्पादयतीति स्वरसमिप्राशयेन इवशब्दकृत्यमन्यदाह **जीवस्य कर्तृत्वं परमात्मायत्तमिति, सांसारिक-कर्तृत्वमौपाधिकमिति च दर्शितमि**ति

कर्तृत्वादिबन्धस्यात्मगतत्वाभावे बन्धमोक्षयोर्वैयधिकरण्यप्रसङ्गात् । न च कर्तृत्वाद्यनर्थाश्रयान्तःकरणतादात्म्याध्यासाधिष्ठानभावलक्षणो वा, 'अविद्यास्तमयो मोक्षः सा संसार उदाहृतः' इत्युक्तरीत्या तदाध्यासहेत्वविद्यालक्षणबन्धो वा आत्मगतः संभवतीति वाच्यम् — "तदधीनत्वादर्थवत्" इति सूत्रे, "अविद्यात्मिका हि सा बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुप्तिः; यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवाः । तदेवाऽव्यक्तं क्वचिदाकाशशब्दनिर्दिष्टम्, 'एतस्मिन्नु खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्चे'ति; क्वचिदक्षरशब्दोदितम् 'अक्षरात् परतः पर' इति श्रुतेः; क्वचिन्मायेति निदिष्टम्, 'मायां तु प्रकृतिं विद्यात्' इति मन्त्रवर्णात्" इति **शंकरभाष्ये** परमेश्वराश्रिताया एवाविद्यायाः प्रतिपादनेन तन्मते जीवचैतन्ये संसारासंभवात् ।

न च **वाचस्पतिना परमेश्वराश्रयेत्य**त्र, "परमेश्वरं विषयत्वेनाश्रयतीति परमेश्वराश्रया परमेश्वरविषयेत्यर्थः । विद्यास्वरूपस्य परमात्मनोऽविद्याश्रयत्वासंभवात् । **यस्यां स्वरूपप्रतिबोधरहिताः शेरत** इत्यत्रापि, यस्यामविद्यायां सत्यां शेरते जीवा इत्येवार्थः । अतश्च जीवाश्रया एवाविद्या । न चाविद्योपाधिभेदाधीनो जीवभेदः, जीवभेदाधीनोऽविद्योपाधिभेद इति परस्पराश्रयादुभयासिद्धिरिति वाच्यम् — बीजाङ्कुरन्यायेनानादित्वादुभयसिद्धेः" इति अविद्यानां जीवाश्रितत्वमेव समर्थितमिति वाच्यम् — "न च तस्याः जीवाश्रयत्वम्; जीवशब्दवाच्यस्य कल्पितत्वात् । आविद्यिकत्वाज्जीवशब्दवाच्यस्य । जीवशब्दलक्ष्यस्य तु ब्रह्माव्यतिरेकेण ब्रह्माश्रयत्वपक्षस्यैवाश्रितत्वापातात्' इत्या**नन्दगिरिप्रभृतिभिः** तस्य पक्षस्य दूषिततया,

"आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥

इत्युक्तरीत्या चिन्मात्रस्यैवाविद्याश्रयत्वेन जीवस्य बन्धाश्रयत्वासंभवात् ।

न च बन्धो मोक्षश्च न जीवाश्रितः; अपितु चिन्मात्राश्रित एव । अतः संभवत्येव बन्धमोक्षयोः सामानाधिकरण्यमिति वाच्यम् — अस्मिन् पक्षे

मुमुक्षा नाम चिन्मात्राश्रितान्तःकरणतादात्म्याध्यासाधिष्ठानभावापादकाविद्यानिवृत्ति[1] कामनैव वाच्या। तत्र चाविद्यैक्यपक्षे एकमुक्तौ सर्वमुक्तिप्रसङ्गः। न च कस्यापि मुक्तिर्नास्तीति शक्यं वक्तुम् —

'शुकस्तु मारुताच्छीघ्रां गतिं कृत्वाऽन्तरिक्षगाम्।
दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवत्॥'

'तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे,' 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्' इत्यादिप्रमाणविरोधप्रसङ्गात्। अतोऽविद्यानानात्वेऽभ्युपगन्तव्ये, तत्र च चिन्मात्राश्रितसर्वाविद्यानामेकविद्यानिवर्त्यत्वे एकमुक्तौ सर्वमुक्तिप्रसङ्गदोषतादवस्थ्यात्। एकाविद्यानिवृत्तिमात्राभ्युपगमे च अविद्यान्तराश्रयत्वस्य चिन्मात्रे पूर्वमिव स्थितत्वेनान्तःकरणतादात्म्याध्यासाधिष्ठानभावलक्षणसंसारानिवृत्तेस्तदवस्थत्वात्। अतः सोऽप्यनुपपन्नः।

नन्वहमिति भासमाने अविद्यान्तःकरणोपाधिभेदभिन्ने चिदंशे अविद्यानिवृत्तिरुद्देश्येति चेन्न। अविद्याया अन्तःकरणस्य वा न दर्पणादिवत् प्रतिबिम्बनोपाधित्वं संभवति। दर्पणाद्युपाधिप्रतिहतनायनरश्मिगृह्यमाणस्य बिम्बस्यैव प्रतिबिम्बतया चक्षुषा अगृह्यमाणस्य चिदंशस्य प्रतिबिम्बत्वासंभवेन घटादिवदवच्छेदकतयोपाधित्वे वक्तव्ये, अन्तःकरणस्य सञ्चरत उपाधित्वे अवच्छेद्यचैतन्यप्रदेशस्य भिन्नभिन्नतया कृतहानाकृताभ्यागमप्रसंगेन व्यापिन्या एवाविद्याया अवच्छेदकतयोपाधित्वे वक्तव्ये सर्वस्याप्यविद्यान्तर्गतचित्प्रदेशस्य सर्वाविद्यावृतत्वेन एकस्य ब्रह्मविद्यया एकाविद्याया नाशेऽप्यविद्यान्तरायत्तसंसारतादवस्थ्यात्। अविद्यावच्छिन्नविकारप्रदेशे अनवच्छिन्नस्य ब्रह्मणोऽवस्थानासंभवेन ब्रह्मणो विकारान्तरवस्थानप्रतिपादकान्तर्यामिब्राह्मणानाञ्जस्यप्रसङ्गाच्च। अन्तर्यामिब्रा[illegible]णस्य जीवविषयत्वाभावस्यान्तर्याम्यधिकरणसिद्धत्वात्। न हि घटानवच्छिन्नाक[illegible]य घटान्तरवस्थितिः संभवति। 'अत्र ब्रह्म समश्नुते' इति तन्मते अत्रैव ब्रह्म[illegible]ावेदकश्रुतिव्याकोपश्च स्यात्। अविद्यावच्छिन्नदेशे अनवच्छिन्नब्रह्मभावासंभवात् विकारान्तरवस्थितस्य च गीताचार्यस्य भगवतः कृष्णस्य जीवत्वमेव स्यात्।

1. मुक्तिर्नाम — निवृत्तिरेव — क.

**स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि ॥ ७ ॥**

---

ततश्च चिदाश्रितसर्वाविद्यानिवृत्तिकामनारूपमुमुक्षाया असंभवात् , एकाविद्यानिवृत्तिमात्रेण संसारस्यानपायात् , मुमुक्षा ब्रह्मविचारादिकं वा एतादृशविवेकशालिनां न स्यात् ।

अत एव, 'न प्रतिबिम्बः; नाप्यवच्छेदो जीवः; अपितु कौन्तेयस्यैव राधेयत्ववत् ब्रह्मण एवाविकृतस्याविद्यया जीवभावः' इति पक्षोऽपि व्युदस्तः; तथासति नित्यमुक्तश्रुतेर्निर्विषयत्वप्रसङ्गात् । 'पारमार्थिकशोकाभावाभिप्राया नित्यमुक्तत्वश्रुति'रिति चेत् — मोक्षे शोकाभावश्रुतेरपि पारमार्थिकशोकाभावविषयत्वप्रसङ्गात् । 'तद्यो यो देवानां प्रत्यबुध्यत, स एव तदभवत् ' इत्यादीनां शुकादिमुक्तत्वप्रतिपादकानां ब्रह्मणो जगत्कर्तृत्वसर्वज्ञत्वनिरवद्यत्वावेदकानाञ्च अप्रामाण्यप्रसङ्गात् ।

'विवादगोचरतापन्नप्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वक' मित्यज्ञानस्य ज्ञानसमानाधिकरणत्वस्य **विवरणे** प्रतिपादितत्वात्, ' जडस्याज्ञानाश्रयत्वे च भ्रान्तिसम्यग्ज्ञानयोरपि तदाश्रयत्वप्रसङ्गः ' इति **विवरणकृतो**क्तत्वाच्च ज्ञात्राश्रितत्वे अज्ञानस्य तदधीनं कर्तृत्वादिकमपि तस्यैव ।

ततश्चाज्ञानस्य ज्ञानाश्रयशुद्धजीवाश्रितत्वात् कर्तृत्वादिकमप्यज्ञानाश्रयशुद्धजीवाश्रितमेवेति सिद्धम् । ततश्च **ध्यायतीवे**तीवशब्दप्रयोगः परतन्त्रप्रभौ प्रभुरिवेत्युक्तिवत् । अतः परतन्त्रकर्तृत्वाश्रयत्वाज्जीवस्य इवशब्दप्रयोग उपपद्यत इत्येवास्थेयम् । प्रकृतमनुसरामः ।

शरीरव्यतिरेकमेव स्पष्टयति — **स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि** । **स** हि जीवः **स्वप्नो भूत्वा** स्वप्नावस्थो भूत्वा — स्वप्ने व्याघ्रादिशरीरको भूत्वेत्यर्थः — **इमं लोकं** परिदृश्यमानं जाग्रत्प्रपञ्चं, **मृत्योः** संसारस्य **रूपाणि** — दुःखरूपाणीति यावत् — तादृशानि मानुषादीनि शरीराणि **अतिक्रामति** न पश्यतीति यावत् । ततश्च स्वप्ने जाग्रद्दशावर्तिदेहानुपलम्भात् देहान्तरपरिग्रहदर्शनाच्च जीवस्य देहव्यतिरेकः प्रदर्शितो भवतीति द्रष्टव्यम् ॥ ७ ॥

**स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः पाप्मभिः सँसृज्यते । स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति ॥ ८ ॥**

**तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदञ्च परलोक-स्थानञ्च । सन्ध्यं तृतीयँ स्वप्नस्थानम् । तस्मिन् सन्ध्ये स्थाने तिष्ठन्नेते**

---

एवं देहेन्द्रियमनःप्राणधीव्यतिरिक्तस्याऽऽत्मनः पाप्मसंबन्धोऽप्यौपाधिक एवेत्याह स **वा अयं — संसृज्यते । स** एवायं **पुरुषः** जीवः – [**जायमान** इत्युक्ते] आत्मनो नित्यस्य जायमानत्वाभावादाह **शरीरमभिसंपद्यमान** इति । शरीरमभिसङ्गच्छमान इत्यर्थः । शरीरसंबन्ध एव जननमिति भावः । शरीरमभि-संपद्यमान एव सन् पाप्मभिः संसृज्यत इति, शरीरसंबन्धोपाधिकः पापसंबन्ध इत्युक्तं भवति । तदेव व्यतिरेकमुखेन द्रढयति **स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति** । नित्य[1]स्य म्रियमाणत्वाभावादाह **उत्क्रामन्निति** ॥ अत्रोत्क्रमणञ्च चरमोत्क्रमणं विवक्षितम्; 'पाप्मनो विजहाती' ति सर्वपापविधूननश्रवणादिति द्रष्टव्यम् ॥ ८ ॥

ननु, 'स्वप्नो भूत्वेमं लोकमतिक्रामती'ति स्वप्ने शरीरव्यतिरेकप्रदर्शनमयुक्तम्; एतल्लोकपरलोकयोरेव शरीरपरिग्रहस्थानत्वात्; स्वप्नस्यातथात्वादित्याशङ्क्याह **तस्य वा एतस्य — इदञ्च परलोकस्थानञ्च** । तस्यैतस्य **पुरुषस्य** जीवस्य शरीरपरिग्रहे अयञ्च परश्च लोक इति स्थानद्वयमेव लोके प्रसिद्धमित्यर्थः । **सन्ध्यं तृतीयं स्वप्नस्थानम्** । सन्धौ भवं सन्ध्यम् । स्वप्नरूपस्थानं तु पूर्वोक्तस्थानद्वयानुभवयोग्यत्वात् सन्ध्यं तृतीयस्थानमेव भवतीत्यर्थः । मृतः परलोकं पश्यति; जाग्रत् पुरुषस्त्विममेव लोकं पश्यति; स्वप्नावस्थस्तु कदाचिदिमं लोकं पश्यति, कदाचित् परलोकं

1. अस्य. क.

---

चरमोत्क्रमणं विवक्षितमिति । तथाच चरमोत्क्रमणपर्यन्तमस्य पाप्मसंबन्धोऽवर्ज-नीय इति, तादृश आत्मैव पूर्वं **आत्मनैव ज्योतिषे**त्यत्र आत्मशब्देन विवक्षित इति व्युत्पाद-नाय **स उत्क्राम**न्निति वाक्यं प्रवृत्तमिति भावः ।

**संध्य**मिति । संधिर्नाम लोकद्वयसंधिः लोकद्वयानुभवः । तत्र भवं = तदुत्पादकतया स्थितं संध्यमिति । जीवस्य यत् जागरस्थानम्, यच्च सुषुप्तिस्थानम्, तयोः संधिभूतासु नाडीषु भवत

**उभे स्थाने पश्यतीदञ्च परलोकस्थानञ्च । अथ यथाक्रमोऽयं परलोकस्थाने भवति, तमाक्रममाक्रम्योभयान् पाप्मन आनन्दाँश्च पश्यति। स यत्र प्रस्वपिति अस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं [1] निहत्य स्वयं निर्माय**

1. विहत्य. शां. विह (हृ) त्य. मा.

---

स्वर्गनरकादिकं पश्यति । अतः स्थानद्वयदर्शनयोग्या विलक्षणेयं स्वप्नावस्थेत्यर्थः । अमुमेवार्थं प्रपञ्चयति— **तस्मिन् सन्ध्ये** स्थाने तिष्ठन्नेते **उभे स्थाने पश्यति इदञ्च परलोकस्थानञ्च** । स्पष्टोऽर्थः । नन्वेतद्देहपरित्यागानन्तरभाविनः परलोकस्थान-दर्शनस्य कथं स्वप्नावस्थपुरुषदृश्यत्वं संभवति, [अतः स्वप्ने दृश्यं परलोकस्थान-मन्यदेव] इत्यत्राह **अथ यथाक्रमोऽयं पुरुषः — पश्यति** । आक्रामत्यनेनेत्या-क्रमः आश्रयः (आशयः ?) पुण्यपापरूपः । यादृक्पुण्यपापरूपाक्रमविशिष्टस्सन् परलोके सुखदुःखे अनुभवति, तमेव तादृशमेव पुण्यपापलक्षणमाक्रममाक्रम्य **अथ** तदा स्वप्ने प्रतिकूलान् अनुकूलांश्चोभयविधान् पदार्थान् पश्यति । ततश्च स्वप्ने परिदृश्यमानमेतद्देहातिरिक्तदेहभोग्यं [1]पुण्यपापार्जितं परलोकस्थानमेवेत्यर्थः । ननु स्वप्ने परलोकवत् पुण्यपापादिवशेन पदार्थसृष्टौ स्वयञ्ज्योतिष्ट्वं कुतोऽभ्युपगन्तव्यम् । इन्द्रियाणां प्रकाशकानां सत्त्वादित्याशङ्क्याह **स यत्र प्रस्वपिति — प्रस्वपिति । सः** जीवो **यत्र** यदा **प्रस्वपिति** स्वप्नान् अनुभवति, तदा **सर्वावतः** सर्वतो भोग्य-भोगोपकरणादिसर्वयुक्तस्य **अस्य** जगतः जाग्रत्प्रपञ्चस्य **मा[illegible]** — मीयतेऽनेनेति मात्रा प्रकाशको जाग्रदवस्थेन्द्रियवर्गः—तमुपादाय, स्वयमे[illegible]मेन्द्रियवर्गं **निहत्य** निश्चेष्टतामापाद्य — निर्व्यापारं [illegible]यित्वेति यावत् — अथ स्वाप्निकदेहेन्द्रि-यादिवस्तुजातं स्वयं निर्माय सृष्ट्वा [illegible] अत्रोक्तं जीवस्य स्वाप्नपदार्थनिर्मातृत्वमदृष्ट-

1. तदात्व एवेश्वरसृष्टपुण्यपापफलरू[illegible]मिद[illegible]परलोकस्थानमेवेत्यर्थः क.

---

स्थानमित्यर्थः कश्चित् संभवन्नपि न प्रकृतश्रुत्यर्थः । **मात्राशब्देन** लोकविषयकपूर्वानुभवशून्यवासना ग्रहणे **निहत्य निर्माये**त्यत्र अस्याः कर्मत्वायोगात् अन्यदध्याहार्यं स्यादिति तदन्वयौचित्याय प्रकाशकेन्द्रियवर्गरूपार्थग्रहणम् । अत एवोभयलोककारणीभूतप्रकृतिमहदादिकं मात्राशब्दार्थ इत्यपि नोक्तम् । इन्द्रियवर्गकथनं विषयविधया प्रकाशहेतुभूतस्य पदार्थवर्गस्योपलक्षणम् । **लोकस्य मात्रामिति** तस्यापि सुग्रहत्वात् । **मात्रा** सूक्ष्मांश इति । **उपादाय** अपेक्ष्य । उभयलोकानुभव-जननयोग्यमिन्द्रियवर्गमपेक्ष्य जाग्रदिन्द्रियवर्गं स्वाप्नानुभवासमर्थत्वात् निहत्य अन्यत् तदर्हं

**स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति । अत्रायं पुरुषः स्वयंज्योतिर्भवति ॥ ९ ॥**

---

द्वारेति द्रष्टव्यम् ; अग्रे, 'स हि कर्ते'ति वाक्येन तेषामीश्वरसृष्टत्वस्य वक्ष्यमाणत्वात् ; पैरैरप्यदृष्टद्वारेत्युक्तत्वाच्च । **स्वेन भासेत्यस्यैव** विवरणं **स्वेन ज्योतिषेति । प्रस्वपिति** स्वप्नमनुभवतीत्यर्थः । **अत्र** अस्यां दशायां **पुरुषः** जीवः **स्वयंज्योतिर्भवति ।** प्रकाशकान्तराभावादित्यर्थः । यद्यपि स्वप्नपदार्थभानं स्वाप्निकेन्द्रियद्वारप्रसृमरेण धर्मभूतज्ञानेनैव, नात्मज्योतिषा — तथाप्यादित्यादिप्रकाशकान्तरस्थानाभिषिक्तः आत्मैवेति भावः । यद्यपि स्वप्नेऽप्यादित्यादिज्योतिस्सृष्ट्यभ्युपगमे प्रकाशकान्तरव्यतिरेको न वक्तुं शक्यः — तथाऽपि लोकप्रसिद्धादित्यादिज्योतिरन्तराभावाज्जाग्रदादिवैषम्यमस्तीति अत्रोक्तं स्वयञ्ज्योतिष्ट्वं प्रसिद्धज्योतिरनपेक्षप्रकाशकत्वमेवेति द्रष्टव्यम् ॥ ९ ॥

---

निर्मायेति वाक्यार्थः । किं सुप्तदेहगतैरिन्द्रियैरेव देहान्तरे नीतैः स्वप्नमनुभवति, उतान्यैरिति चेत् —**प्राणेन रक्ष**न्निति श्लोकानुसारात् **तन्नायत**मिति श्लोकभाष्यानुसाराच्च एतैरेवेन्द्रियैः स्वाप्नार्थदर्शनक्षमैः कृतैरिति गम्यते । स्वप्ने अनेकशरीरग्रहणादिना अधिकावश्यकत्वे तु अन्यैरपीति किमनेन । निर्माणादिकर्तृत्वमिदं वस्तुतः परमात्मन एव; अस्य त्वौपचारिकमिहोक्तम् । **स्वय**मिति न परमात्मव्यावृत्तये; किन्तु जागरपरिकरव्यावृत्तय इति प्रागेवोक्तम् ।

अत्र—जाग्रत्प्रपञ्चानुभावकसामग्रीरूपप्रतिबन्धकविरहे आत्मा सर्वदा स्वाप्नानुभावी स्यादित्याशङ्कायाम्, ईदृशव्यापारेषु सर्वत्र न केवलस्यात्मनः करणत्वम्; किंतु पाप्मरूपोपाधिविशिष्टस्यैव [पाप्मा नाम पुण्यं पापञ्च] इति वक्तुं **स वा अयं पुरुष** इत्यादिवाक्यम् । ननु **इमं लोकमतिक्रामती**ति लोकातिक्रमे उक्ते कथं पाप्मसंबन्धः स्वप्ने इति शङ्कायां — न सर्वथा लोकातिक्रमः स्वप्ने; किंतु **इमंलोक**मित्युच्यमानजाग्रत्प्रपञ्चातिक्रममात्रम् । एतल्लोकपरलोकोभयात्मकस्वाप्नलोकस्थत्वात् तस्य । यद्यपि जाग्रत्प्रपञ्चोऽपि ऐहिकामुष्मिकभेदेन स्थानद्वयम्—तथापि एकदैव तदुभयात्मकमेकं तृतीयमिदं स्थानमस्येति वक्तुं **तस्य वा** इत्यादि । ननु **स्वयं निर्माये**ति तत्र वस्तुनिर्माणस्वीकारे सर्वेषां तदनुभवापत्तिः । स्वयं निर्मातृत्वे च अहं सर्वमस्राक्षमित्यनुभवापत्तिः । तत्राह **न तत्र रथा** इत्यादि । तथाच **स्वयंनिर्माये**त्यस्य जाग्रद्दशाभाविपरिजनपरिकरनिरपेक्षं निर्मायेत्यर्थः । न तु परमात्मव्यावृत्तिरभिमता । **निर्माये**ति कर्तृत्ववचनं

**न तत्र रथा नरथयोगा न पन्थानो भवन्ति; अथ रथान् रथयोगान् पथः सृजते। न तत्राऽऽनन्दा मुदः प्रमुदो भवन्ति; अथाऽऽनन्दान् मुदः प्रमुदः सृजते। न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्ति; अथ [1]वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते। स हि कर्ता॥ १०॥**

1. वेशान्तान् पुष्करिणीः स्रवन्तीः शां ?

ननु, 'आत्मनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते' इत्यादि नोपपद्यते; स्वप्ने आसनगमनक्रियाकर्मकरणादीनामसत्त्वादित्याशङ्क्याह **न तत्र रथा न रथयोगा न पन्थानो — पुष्करिण्यः स्रवन्त्यः सृजते**। युज्यन्त इति **योगाः**। **रथयोगाः** अश्वादयः। रथरथाश्वमार्गादयः जाग्रद्दशानुभवयोग्याः तत्र स्वप्ने **न सन्ति** न ज्ञायन्ते। अथ तु तत्तत्पुरुषतत्तत्कालमात्रानुभाव्यान् रथादीन् अर्थान् परमात्मा **सृजते** इत्यर्थः। एवमग्रेऽपि द्रष्टव्यम्। अनुकूलवस्तुदर्शनजा प्रीतिरा**नन्दः**। तस्मिन् स्वकीयत्वबुद्धिजा प्रीतिर्**मुत्**। तद्विनियोगजा प्रीतिः **प्रमुत्**। **वेशान्ताः** वेशन्ताः, पल्वलानि। **वेशान्ता** इति दीर्घश्छान्दसः। **पुष्करिण्यः** वाप्यः। **स्रवन्त्यः** नद्यः। पुष्करिणीः स्रवन्तीः सृजत इत्यर्थः। 'पुष्करिण्यस्स्रवन्त्यस्सृजत' इत्यत्र 'वा छन्दसी'ति वा पूर्वसवर्णदीर्घाभावः। ननु स्वप्नदृक् यस्मिन् देशे यदा रथं पश्यति, तदानीं तत्र स्थितोऽन्यः तं न पश्यति। स्वप्नदृगपि प्रबोधानन्तरं तत्र गतः तं न पश्यति। तत्र तस्यान्यत्र नयनचिह्नानि वा नाशचिह्नानि वा नोपलभ्यन्ते। अतः कथमीदृशी स्वप्नार्थसृष्टिरुपपद्यतामित्यत्राह **स हि कर्ता**। निर्माणौपयिकपुण्यपापकर्तृभूतत्वामिप्रायम्। उक्तमिदं स्वाप्नसत्यत्वादिकं सर्वं प्रमाणसिद्धञ्च; यतः तत्र सन्त्यमी श्लोकाः इत्यप्यसन्मतरीत्या प्रघट्टार्थो भाव्यः।

ननु विषयाणां निर्माणे सर्वैरुपलम्भप्रसङ्गः। अशक्यञ्च जीवेन यत् किमपि तदा निर्मातुम्, किमुत विचित्रं सर्वम्। तत्राह **न तत्रेति**। **न भवन्ति** नेतरपुरुषानुभाव्यतया भवन्तीत्यर्थः श्रीभाष्यस्थितः। ईदृशवस्तुनिर्मातृत्वस्य जीवात्मन्यूरीकारे हि कथन्ता; परमात्मन एव कर्तृत्वात् सर्वं सुस्थमित्याह **अथ रथान्** इति। अत्र भाष्ये स्वप्ने **न सन्ती**त्यस्य स्वप्नविषया न भवन्तीत्यर्थः। **अतो न ज्ञायन्त** इति विवरणलाभः। प्रसिद्धरथादय एव चेदिमे, सर्वानुभाव्यत्वापत्तिर्युक्ता। न चेमे ते इति भावः। तदुक्तं टीकायाम्, "स्वाप्नार्थानां प्रसिद्धरथादिभावप्रतिषेधेन तद्वैजात्यं प्रतिपाद्यते" इति।

सकलप्रपञ्चनाटकसूत्रधारः सर्वेश्वरः खलु तत्र कर्ता । स किं वा कर्तुं न शक्नुयादिति हिशब्दाभिप्रायः । न च स हीत्यनेन, 'स यत्र प्रस्वपिती' ति प्राक्प्रस्तुतो जीव एव परामृश्यतामिति वाच्यम् — सन्ध्याधिकरणे तस्य निरस्तत्वात् ।

तथाहि — "सन्ध्ये सृष्टिराह हि"। 'न तत्र रथा न रथयोगाः' इति वाक्ये सन्ध्ये = स्वप्नस्थाने जीवकर्तृकैव सृष्टिराम्नायते । 'स हि कर्ते' ति स्वप्नदृशं प्राक्प्रस्तुतं जीवमेव स इति शब्देन परामृश्य तस्य कर्तृत्वं श्रुतिराह हि । "निर्मातारञ्चैके पुत्रादयश्च" । एके शाखिनः, 'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' इति कामानां निर्मातारं जीवमामनन्ति । अत्र कामशब्देन काम्यमानाः पुत्रादयो वर्ण्यन्ते । पूर्वं हि, 'सर्वान् कामान् छन्दतः प्रार्थयस्व', 'शतायुषः पुत्रपौत्रान् वृणीष्वे' ति पुत्रादयो हि कामाः प्रकृताः । अतो जीव एवात्र कर्तृत्वेनाभिधीयते । न च जीवस्य कथमीदृशं सृष्टिसामर्थ्यमिति वाच्यम् — प्रजापतिवाक्ये जीवस्यापि सत्यसंकल्पत्वादेराम्नानात् । न च तत् संसारदशायां तिरोहितमिति वाच्यम् — मुक्ताविव स्वप्नदशायामाविर्भावसंभ[1]वादिति द्वाभ्यां सूत्राभ्यां पूर्वपक्षे प्राप्ते उच्यते —

"मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" । तुशब्दः पक्षं व्यावर्तयति। मायाशब्दो ह्याश्चर्यत्वं प्रवृत्तिनिमित्तीकृत्य भगवत्संकल्पवाची । 'माया वयुनं ज्ञान' मिति निघण्टुपाठाच्च मायाशब्दो ज्ञानरूपसंकल्पवचनः । मायामात्रम्= भगवत्संकल्पमात्रसृष्टम्; न तु जीवसृष्टमित्यर्थः । तत्र हेतुः कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति । जीवस्य सत्यसङ्कल्पत्वादिब्राह्मरूपस्य प्रजापतिवाक्योदितस्य संसारदशायां सर्वात्मनाऽनभिव्यक्तत्वात् न तस्य कर्तृत्वसंभावनाऽपि; 'स हि कर्ते' ति हिशब्देन प्रसिद्धस्यैव कर्तृतया निर्देशात् । स्वप्नदृश एव कर्तृत्वे स्वाहितचोरव्याघ्रादेः सृष्टिर्नोपपद्येत । इमान् स्वाप्नान् पदार्थानस्राक्षमिति प्रतिसन्धानप्रसङ्गाच्च । 'कामं कामं पुरुषो निर्मिमाणः' इत्यत्र, 'तदेव शुक्रं तद्ब्रह्मे' त्युक्त्या तस्य वचनस्य ब्रह्मविषयत्वाच्च न जीवस्य स्रष्टृत्वम् ।

1. आविर्भावादिति. क.

**तदेते श्लोका भवन्ति—**

---

ननु स्वाभाविकस्यापहतपाप्मत्वादेः सत्यसंकल्पत्वपर्यन्तस्यानभिव्यक्तिः किन्नि-बन्धनेत्यत्राह "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ"। पराभि-ध्यानात् = परमात्मसंकल्पात् तत् तिरोहितं भवति । तत्संकल्पादेव हि अस्य जीवस्य बन्धो मोक्षश्च । 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति ; यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति ।' 'एष ह्येवानन्दयाती'ति श्रवणात् ।

"देहयोगाद्वा सोऽपि"। सोऽपि = तिरोभावः सृष्टिकाले देहयोगद्वारेण वा भवति, प्रळयकाले सूक्ष्माचिच्छक्तियोगद्वारेण वा भवतीत्यर्थः ।

"सूचकश्च हि श्रुतेराचक्षते च तद्विदः"। स्वाप्नार्थो हि शुभाशुभसूचकः ।

'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।
समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने ॥',

'स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति, स एनं हन्ति'

इति श्रुतेः । आचक्षते च स्वप्नाध्यायविदस्तथा । ततश्च यदि इयं स्वप्नसृष्टिर्जीव-कर्तृका, तर्हि शुभसूचकानेव सृष्ट्वा पश्येत्; नाशुभसूचकान् । अतः न जीवकर्तृकेयं सृष्टिरित्युभयलिङ्गपादे स्थितम् ।

यदत्र परैरुच्यते — स्वप्नसृष्टेः सत्यत्वे रथादिसृष्टिवत् आदित्यादेरपि सृष्ट्यभ्युपगमे जाग्रद्दशावत् स्वप्नेऽपि ज्योतिरन्तरव्यतिकरसत्त्वात् स्वप्रकाशत्वस्य दुर्विवेचता स्यात् । अतः स्वप्नदृष्टानां सत्यत्वं प्रकरणविरुद्धमिति — तदसत् । परमतेऽपि मनसः प्रकाशकस्य सत्त्वेन स्वप्ने स्वयंज्योतिष्ट्वसाधनमसङ्गतमेव हि स्यात् । तस्माल्लोकप्रसिद्धादित्याद्यभावेऽपि स्वकीयज्ञानेन भासकत्वात् स्वयञ्ज्योतिष्ट्वमस्तीत्यत्रैवास्याः श्रुतेस्तात्पर्यमिति सिद्धम् । प्रकृतमनुसरामः ॥ १० ॥

**तदेते श्लोका भवन्ति ।** तत् सुप्तमधिकृत्य एते वक्ष्यमाणश्लोकाः प्रवृत्ताः

**स्वप्नेन शारीरमभिप्रहत्य असुप्तः सुप्तानभिचाकशीति ।**
**शुक्रमादाय पुनरेति स्थानँ हिरण्मयः पुरुष एकहँसः ॥ ११ ॥**
**प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा ।**
**स ईयतेऽमृतो यत्र कामँ हिरण्मयः पुरुष एकहँसः ॥ १२ ॥**
**स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि ।**

---

इत्यर्थः । **स्वप्नेन शारीरमभिप्रहत्य असुप्तस्सुप्तानभिचाकशीति । स्वप्नेने**-तीत्थंभावे तृतीया । **पुरुषः** जीवः स्वप्नेनोपलक्षितस्सन् **शारीरं** शरीरमभिप्रहत्य निश्चेष्टतामापाद्य **असुप्तः** अलुप्तप्रकाश एव सन् **सुप्तान्** लुप्तप्रकाशान् प्राणान् अभितः चाकशीति । कश गतिशासनयो[1]रित्यस्मात् यङ्लुगन्तादिदं रूपम् । पर्यटती-त्यर्थः । **शुक्रं** ज्योतिष्मत् प्रकाशकं मनआदिकमिन्द्रियवर्गमादाय स्वप्नान्ते पुनः **स्वस्थानमेति** जाग्रद्दशां प्रतिपद्यत इत्यर्थः । **हिरण्मयः** प्रकाशमयः । **एक हंसः** एक एव हन्ति = गच्छतीति एकहंसः ॥ ११ ॥

**प्राणेन रक्षन्नवरं कुलायं — एकहंसः** । **सः** जीवः स्वप्ने **अवरं** निकृष्टं **कुलायं** स्थूलं शरीरं **प्राणेन** पञ्चवृत्तिप्राणेन रक्षन् — प्राणस्यापि स्वप्ने जीवेन सह निर्गमे सद्यो मरणमेव स्यात् । अतः प्राणेन शरीरं रक्षन् — अत एव अमृत एव सन् **कुलायात्** जाग्रच्छरीराद्बहिर्निर्गम्य **यत्र कामं** — काम्यत इति कामम् — यत्र भोग्यम्, तत्र सर्वत्र चरित्वा **अमृतः** अमरणधर्मा हिर-ण्मयः एकहंसः पुरुषः पुनरपि स्वस्थान**मीयते** गच्छतीत्यर्थः । यद्वा, कुलाया-द्बहिः चरित्वा यत्र कामं तत्र **ईयते** गच्छतीत्यर्थः ॥ १२ ॥

**स्वप्नान्त उच्चावचम् — बहूनि । स्वप्नान्ते** स्वप्नमध्य इत्यर्थः । **अन्तशब्दो** मध्यवचनः । **उच्चावचं** पुण्यपापलक्षणमुत्कृष्टापकृष्ट**मीयमानः** संग-च्छमानो **देवः** जीव इत्यर्थः । **बहूनि** देवादीनि रूपाणि **कुरुते** भजत इत्यर्थः ।

1. कशगतिशब्दयोः क.

---

**स्वप्नेनेति** प्रथमश्लोकः प्रकृतदेहावच्छेदेनैव स्वाप्नानुभवप्रतिपादकः । **प्राणेनेति** श्लोकः बहिस्तदनुभवप्रतिपादकः । **स्वप्नान्त** इति श्लोकः बहिरनुभवे उत्कृष्टनिकृष्टानुकूलप्रतिकूल-भेददर्शकः । अतः **सुप्तानभिचाकशीती**त्यस्य निर्व्यापारान् परिकरान् अभितः स्थित एव नाडीविशेषनिलीनः स्वप्नमनुभवतीत्यर्थः । **शुक्रमि**त्यादेश्च लीनमिन्द्रियवर्गं लयस्थानात् विभाज्य आदाय जागरस्थानं हृदयदेशं प्रत्यायातीत्यर्थः । ईयते । ईङ् गताविति धातोः कर्तरि रूपम् ।

**उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन् ॥ १३ ॥**
**आराममस्य पश्यन्ति न तं पश्यति कश्चन । इति ।**
**तन्नायतं बोधयेदित्याहुः । दुर्भिषज्यँ हास्मै भवति, यमेष न प्रतिपद्यते ।**

---

उतेव — पश्यन् । उत अपिच । उतशब्दः अप्यर्थः । स्त्रीभिस्सह मोदमान इव क्वचिद्रूपेषु भवति ; कचिच्च **जक्षदिव** — जक्षणं भक्षणं हसनं [1]वा । जक्ष भक्षणहसनयोरिति हि धातुः — **उत** अपि च **भयानि** बिभेत्येभ्य इति **भयानि** व्याघ्रादीनि पश्यन्निवापि भवतीत्यर्थः । स्वाप्नार्थानां तत्कालमात्रावसानत्वात् तदेकानुभाव्यत्वाच्चात्र इवशब्दः ॥ १३ ॥

**आराममस्य पश्यन्ति न तं पश्यति कश्चन** । अस्य जीवस्याऽऽरामं भोगोपकरणभूतमुद्यानादिकं देहेन्द्रियादिकञ्च सर्वेऽपि पश्यन्ति । **तं** देहेन्द्रियादिविविक्तमन्तर्बहिस्सञ्चरन्तमपि जीवं कश्चन न पश्यतीति लोकं प्रत्यनुक्रोशं दर्शयति श्रुतिः । इतिर्मन्त्रसमाप्तौ ।

लोकप्रसिद्धिरपि तथेत्याह **तन्नायतं बोधयेदित्याहुर्दुर्भिषज्यं हास्मै भवति यमेष न प्रतिपद्यते** । यत एव स्वप्ने इन्द्रियाण्युपसंहृत्य जीवो बहिर्निर्गच्छति, **तत्** अत एव **आयतं** गाढसुप्तं —- यम उपरमे । निष्ठा । 'अनुदात्तोपदेशे' त्यनुनासिकलोपः । तं —- सहसा न बोधयेदित्याहुश्चिकित्सकाः । ते हि तत्र दोषं पश्यन्ति । कोऽयं दोषः ? **एषः** सहसा प्रबोधितो जाग्रच्छरीरे प्रविशन् बहिर्निर्गत आत्मा यं कञ्चिदिन्द्रियदेशं न प्रतिपद्यते यदि कदाचित्,

1. हसनं – हसनयो = क.

---

**अनुक्रोशं दर्शयति श्रुतिरिति । श्लोका भवन्तीत्यारभ्य** वक्तव्याः श्लोकास्तावत् त्रयः । ते उक्ताः । **आराममिति** श्रौतं मन्त्रान्तरं याज्ञवल्क्येनानूद्यते । अतः **कश्चनेति** इतिशब्दानन्तरं श्रुतिरिति शेषपूरणं कार्यमिति भावः । अनुक्रोशप्रकारश्चैवम् — आराममात्रदर्शिनो लोके देहादिरेव आत्मेति भ्राम्यन्ति । न तत्त्वं पश्यन्ति । एकस्यैव देहद्वयसञ्चारे दृष्टे सुगमो हि देहादिव्यतिरेक आत्मनः । अनुभूयते च जागरदेहं विहाय स्वाप्नदेहं विचित्रमनेकमनुप्रविश्य कर्मफलं जीवेन । एवमप्यात्मा देहातिरिक्त इति न प्रतिपद्यन्त इत्याश्चर्यमिति । **निष्ठेति** । क्तप्रत्यय इत्यर्थः । **दुर्भिषज्यमिति** । भिषगिवाचरति भिषज्यति । **भिषज्या** भिषक्कर्म । तस्याः व्यृद्धिः = संपत्त्यभावो **दुर्भिषज्यम्** । 'अव्ययं विभक्तिसमीपसमृद्धिव्यृद्धी' त्यनेन अव्ययीभावः । **अस्मै** इत्यस्य **यमेष** इति वक्ष्यमाणयच्छब्दप्रतिसंबन्धित्वाभिप्रायप्रदेशार्थ-

**अथो खल्वाहुर्जागरितदेश एवास्यैष इति। यानि ह्येव जाग्रत् पश्यति, तानि सुप्त इति। अत्रायं पुरुषः स्वयञ्ज्योतिर्भवति।**

---

तर्हि व्यत्यासेनेन्द्रियाणीन्द्रियान्तरदेशे प्रवेशयेत्। तत्राऽऽन्ध्यबाधिर्यादिदोषप्राप्तौ **दुर्भिषज्यं** दुःखेन भिषक्कर्मास्मै दोषाय भवति। अयं दोषो दुर्विचि(दुश्चि?)कित्स एव स्यादित्यर्थः।

**अथो खल्वाहुर्जागरितदेश एवास्यैष इति। यानि ह्येव जाग्रत् पश्यति तानि सुप्त इति। अथो** इति वाक्यान्तरोपक्रमे। **खलु** प्रसिद्धं अन्ये आहुः। किमिति। जागरितदेशो जाग्रत्स्थान एवास्य जीवस्य **एषः** स्वप्न इति; न स्थानान्तर इति। तत्र च हेतुमाहुः, यान्येव हस्त्यादीनि जाग्रन् पश्यति, तानि सुप्तोऽपि पश्यतीति। अत्र मतान्तरत्वेनोपन्यासस्यायं भावः — उपरतेष्वेवेन्द्रियेषु हि स्वप्नान् पश्यति। अतो न तत्र जागरितदेशस्यावकाशोऽस्ति। अतः तृतीयस्थानमेव स्वप्नस्थानमिति। केचित्तु अथो खल्वाहुरित्यादिग्रन्थोऽपि पूर्वोक्तार्थोपपादक एव; न मतान्तरम्। तथाहि — जागरितशब्दादीषदसमाप्तौ देश्यप्रत्यये छान्दसो यलोपः। जागरितादीषन्न्यूनमेवास्य जीवस्य स्वप्नस्थानमित्यर्थः। दिनान्तरानुभवायोग्यत्वमीषन्न्यूनत्वम्। उक्त एवार्थ उपपत्त्या समर्थ्यते, '**यानि ह्येव जाग्रत् पश्यति, तानि सुप्त**' इति। यानि स्रक्चन्दनवनितान्नपानादीनि जाग्रद्दशायां पश्यति, तादृशान्येवार्थक्रियाकारीणि तानि स्वप्ने पश्यति। अतः स्वप्नार्थाः सृष्टा एव भगवता। तस्मादिह परलोकव्यतिरिक्तस्थानान्तरमेव स्वप्नस्थानमित्यर्थ इत्याहुः।

उक्तं स्वयञ्ज्योतिष्ट्वमुपसंहरति **अत्रायं पुरुषः स्वयंज्योतिर्भवति**। पूर्व-

---

कत्वञ्च युक्तम्। अतो भाष्योक्त तात्पर्यार्थतया भाव्यम्। अथो स्वल्वित्यादिना इदमुक्तं भवति— जाग्रत्स्वप्नसुषुप्तिभेदेन त्रेधा विभागवत् प्रबोधसुषुप्तिभेदेन द्वेधा विभागोऽपि क्रियते, स्वप्नस्य जागरविशेषत्वात्। एवमपि स्थानत्रयं तद्वैलक्षण्यञ्च नापलप्यमिति सिद्धं स्वप्ने आदित्यादिबाह्यज्योतिरनपेक्षताप्रयुक्तं स्वयञ्ज्योतिष्ट्वमिति। **अथो खल्वाहुरिति** प्रयोगरीतिः उक्तार्थस्य प्रकारान्तरेण वैशद्यविवक्षायामपि भवति। यथा अनन्तरब्राह्मणे ५. वाक्ये।

**सोऽहं भगवते सहस्रं ददामि; अत ऊर्ध्वं विमोक्षाय ब्रूहीति ॥ १४ ॥**

---

वदर्थः । जनक आह **सोऽहं भगवते सहस्रं ददामि** । प्राप्तस्वयंज्योतिष्ट्वविद्यानिष्क्रयत्वेन सहस्रं गवां दक्षिणात्वेन ददामि । **अत ऊर्ध्वं विमोक्षायैव ब्रूहीति** । अतः परं संसारविमोक्षायैव साधनं ब्रूहि । नान्यत् किञ्चिदपेक्षितमिति भावः ॥ १४ ॥

---

**किञ्ज्योतिरिति** प्रश्नसमाधान एव सर्वं तत्त्वमवगतं भविष्यतीति मत्वा जनकः किञ्ज्योतिरिति पप्रच्छ । याज्ञवल्क्यस्तु विलक्षणया वैखर्या प्रश्नं समादधे। तदसौ जनक उपशान्तः पूर्वरीतिं विहाय **विमोक्षाय ब्रूहीति** प्रार्थयते । **सोहमि**त्याद्येव जनकवाक्यमित्युक्तं व्याख्यासु ; अत्रायं पुरुषः स्वयंज्योतिर्भवतीत्यस्य याज्ञवल्क्यप्रयुक्तनिगमनवाक्यवद्भावस्य स्वरसतः प्रतीतेः । यदि तु **भवतीत्येतदनन्तरमितिश**ब्दाश्रवणात् **सुप्त इती**त्यन्तेन याज्ञवल्क्यवचनसमाप्तिरिष्यते, तर्हि **अत्राय**मिति वाक्यमपि जनकेन प्रयुक्तम्, किञ्ज्योतिरिति प्रश्नसमाधानसमाप्तिसूचनाय, उक्तार्थे संमतिसूचनाय चेति भाव्यम् । एवमग्रेऽपि सर्वत्र इतिशब्ददर्शनेऽपि देहवियोगनिरूपकयाज्ञवल्क्यवाक्यान्ते इतिशब्दो न दृश्यत इव । तत्र निर्वाहप्रकारश्च तत्रैव द्रष्टव्यः । **सोहमि**त्यस्य एवं बोधितोऽहमित्यर्थः । **स** इति हेतुगर्भविशेषणम् ।

अथैवमिह ब्राह्मणे निरूपणगमनिका — एवं जनकेन विमोक्षार्थोपदेशप्रार्थनायां कृतायाम्, विमोक्षो नाम पूर्वोक्तावस्थातो मोक्ष इति कृत्वा स्वप्नान्मोक्षो जागर इति वक्ष्यन् याज्ञवल्क्यः, किमयं प्रागस्मदुक्तमङ्गीकरोति, उत नेति निर्धारणार्थमुक्तार्थमनुवदति प्रथमवाक्येन । जनकश्च अङ्गीकृत्यैव सहस्रदानं प्रतिज्ञातमिति वदन् अपेक्षितं पुनः प्रार्थयते **एवमेवैत**दित्यादिना । स्वप्नान्तान्मोक्षश्च जागर इति याज्ञवल्क्य आह ततः **स वा एष** इत्यादिना । सर्वव्यापारवर्गान्मोक्षरूपो विमोक्षो जिज्ञास्यत इति पुनर्जनकवाक्यादवगम्य सुषुप्तिं तादृशीं वक्ष्यन् जागरात् सुषुप्तिं प्रति स्वप्ननाडीद्वारैव गन्तव्यत्वात् स्वप्नान्तं पुनः प्रस्तुवन्नेव सुषुप्तिमाह पुनः **स वा एष** इत्यादिना । महता प्रपञ्चेन सुषुप्तौ निरूपितायां पुनः प्रक्ष्यति जनकः, 'विमोक्षाय ब्रूही' ति । सुषुप्तावपि जीवस्य स्थूलदेहसंबन्धविशेषः जागरस्वप्नयोरिवाविशिष्ट इति देहादुत्क्रमरूपो विमोक्षो वक्तव्य इति कृत्वा प्रायणं प्रस्तोष्यति याज्ञवल्क्यः । तदा च प्रयतां सकामनिष्कामभेदेन प्राप्यस्थानभेदं प्रदर्शयन् परमात्मानं यथावदुपदेक्ष्यति । येन सहस्रं सहस्रं पूर्वं दत्तवान् जनकः सर्वान् विदेहान् आत्मानञ्च आचार्यसात्करिष्यतीति ।

**स वा एष एतस्मिन् संप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नायैव । स यत् तत्र किञ्चित् पश्यति, अनन्वागतस्तेन भवति; असङ्गो ह्ययं पुरुष इति ।**

---

याज्ञवल्क्य आह **स वा एष — स्वप्नायैव** ॥ संप्रसीदत्यस्मिन्निति **संप्रसादः** । जागरिते देहेन्द्रियादिव्यापारशतसन्निपातजन्यं कालुष्यमस्ति । स्वप्ने तु तेभ्यो विप्रमुक्त ईषत् प्रसीदति । अतः संप्रसादशब्देन स्वप्नस्थानमुच्यते । यद्यपि संप्रसादशब्दः सुषुप्तौ मुख्यः — अथापि स्वप्नस्य प्राक्प्रस्तुतत्वात् तस्यैव **एतस्मिन् संप्रसाद** इति एतच्छब्दसमानाधिकरणसंप्रसादशब्देन परामर्शो युक्तः । तस्मिन्, जिगमिषिते सतीति शेषः । **रत्वा** । रमेरनिदित्वात्, 'अनुदात्तोपदेशे' त्यनुनासिकलोपः । स एष जीवः जागरिते **रत्वा** क्रीडित्वा **चरित्वा** भक्षयित्वा, विहृत्य वा — 'चर गतिभक्षणयो' रिति हि धातुः — **दृष्ट्वैव पुण्यञ्च पापञ्च** पुण्यपापफलमनुभूय ततः पुनः **संप्रसादे**—स्वप्नस्थाने जिगमिषिते सति **प्रतिन्यायं** यथान्यायं — यथानिर्गतमित्यर्थः । अयनं आयः । [ न्यायः ? ] निर्गमनमित्यर्थः । पूर्वं स्वप्नस्थानात् यथा निर्गतः तथैवेति यावत् — **प्रतियोनि** — योनिशब्दः स्थानवाची — स्थानं प्रति स्वप्नस्थानं प्रति **आद्रवति** आगच्छति **स्वप्नाय** स्वप्नानुभवायेत्यर्थः । **स यत् तत्र किंचित् पश्यत्यनन्वागतस्तेन भवति** । तत्र जाग्रद्दशायां सः जीवः **यत्किञ्चित्** मनुष्यव्याघ्रशरीरादिकमात्मीयत्वेन पश्यति, **तेनानन्वागतो भवति** तेनाननुसृतो भवति । तत्संबन्धरहितो भवतीत्यर्थः । तत्र हेतुमाह **असङ्गो ह्ययं पुरुष इति** । कर्माविद्योपाधिकेन शरीरेन्द्रियसंघातादिना असङ्गस्वभावत्वादित्यर्थः । यदि हि केनचित् सङ्गः स्वभावसिद्धस्स्यात्, तदैव हि तस्य सर्वदा तदनुवृत्तिः स्यात् । अतोऽ-

---

रमणचरणयोः जागरितकालिकयोरेव वक्तव्यत्वात् संप्रसादशब्दस्यान्यत्र सुषुप्तिरूपार्थप्रसिद्धौ सत्यामपि, संप्रसीदति अत्र = सम्यग् भोगान् अनुभवन् प्रबुद्धोऽस्तीति संप्रसादशब्दः कथञ्चित् जागरितपर एव वर्ण्यते चेत्, उपरि 'स्वप्नान्ते रत्वा चरित्वा', 'बुद्धान्ते रत्वा चरित्वा' इति वक्ष्यमाणानुरूप्यं स्यात् । कुशलिनि प्रसन्नशब्दप्रयोगस्य लोके दर्शनात् ।

एवमेवैतद्याज्ञवल्क्य। सोऽहं भगवते सहस्रं ददामि; अत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १५ ॥

स वा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव। स यत् तत्र किञ्चित् पश्यति, अनन्वागतस्तेन भवति; असङ्गो ह्ययं पुरुष इति।

एवमेवैतद्याज्ञवल्क्य। सोऽहं भगवते सहस्रं ददामि; अत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १६ ॥

स वा एष एतस्मिन् बुद्धान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नान्तायैव ॥ १७ ॥

तद्यथा महामत्स्य उभे कूले अनुसञ्चरति पूर्वं चापरञ्च, एवमेवायं पुरुष एतावुभावन्तावनुसञ्चरति स्वप्नान्तञ्च बुद्धान्तञ्च ॥ १८ ॥

---

सङ्गस्वभावत्वाज्जाग्रद्दशादृष्टपदार्थाननुवृत्तिर्युज्यत इति भावः। उक्तमङ्गीकरोति जनकः **एवमेवैतद्याज्ञवल्क्य। सोऽहं — ब्रूहीति।** पूर्ववदर्थः ॥ १५ ॥

**स वा एष एतस्मिन् स्वप्नान्ते — ब्रूहीति। स्वप्नान्ते** स्वप्नस्थान इत्यर्थः। अन्तशब्दः स्थानवचनः। 'अन्तः समाप्तौ स्थाने च निर्णयेऽभ्यन्तरेऽपि चे' ति हि नैघण्टुकाः। **बुद्धान्तायैव।** बुद्धं बोधः। भावे निष्ठा। **अन्त**-शब्दः स्थानवचनः। स्थिरबोधस्थानाय। जाग्रत्स्थानायेति यावत्। **स यत् तत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवति।** जाग्रद्दशायां स्वप्नदृष्टवस्तुसंबन्धरहितो भवतीत्यर्थः। शिष्टं स्पष्टम् ॥ १६ ॥

**स वा एष एतस्मिन् बुद्धान्ते — स्वप्नान्तायैव।** सर्वं पूर्ववत् ॥ १७ ॥

एवं त्रिभिः खण्डैर्जागरितात् स्वप्नान्तं स्वमान्ताद्बुद्धान्तं बुद्धान्तात् स्वप्नान्तं यातीत्यारोहावरोहसञ्चारप्रदर्शनेन संसारचक्रप्रवृत्तिर्दर्शिता। अथैक (त) स्यैव पुरुषस्य उभयत्र सञ्चारे दृष्टान्तमाह **तद्यथा महामत्स्य—बुद्धान्तञ्च।** स्पष्टोऽर्थः ॥ १८ ॥

---

**अनन्वागतस्तेन भवतीति।** जागरितानुभवस्य स्वप्नानुभवस्य च पृथग्विषयत्वात् परस्परानुगमाभावादेवम्।

**तद्यथाऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः सँहत्य पक्षौ सल्लयायैव ध्रियते, एवमेवायं पुरुष एतस्मा अन्ताय धावति, यत्र सुप्तो न कञ्चन कामं कामयते, न कञ्चन स्वप्नं पश्यति ॥ १९ ॥**

**ता वा अस्यैता हिता नाम नाड्यः, यथा केशः सहस्रधा भिन्नः, तावताऽणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णाः । अथ यत्रैनं घ्नन्तीव, जिनन्तीव, हस्तीव विच्छाययति, गर्तमिव**

---

एवं स्थानद्वयसंचारं प्रदर्श्य सुषुप्तिदशां प्रकाशयति **तद्यथाऽस्मिन्नाकाशे श्येनो वा — पश्यति** । यथा आकाशे श्येनो वा गरुडो वा **विपरिपत्य** विशेषेण परितः पतनं कृत्वा श्रान्तस्सन् पक्षौ संहृत्य **सल्लयाय** — लीयतेऽस्मिन् पक्षीति लयः नीडम् — समीचीननीडायैव **ध्रियते** अवतिष्ठते, — 'धृङ् अवस्थाने' इति हि धातुः । क्षेमङ्करं नीडमभिधावतीत्यर्थः — एवमेवायं **पुरुषः** जीवः बुद्धान्तस्वप्नान्तसंचरणश्रान्तः, यत्र स्थाने [1] सुप्तोऽयं कामाद्यनुपहतः स्वाप्नांश्चानुकूलप्रतिकूलपदार्थान् न पश्यति, तादृशाय पूर्वोक्तस्थानद्वयकालुष्यविरहिताय सुषुप्तिस्थानाय धावतीत्यर्थः ॥ १९ ॥

ननु क्वचित् स्वप्नादिदर्शनम्, क्वचित् तदभाव इत्यत्र किं विनिगमकमिति शङ्कायां स्थानवैषम्यकृतमित्याह **ता वा अस्यैता हिता नाम — मन्यते** । यत्र स्थाने स्थितमेनं जीवं केचन घ्नन्तीव, केचन **जिनन्तीव** जयन्तीव, **हस्ती विच्छाययतीव** गजो विद्रावयतीव, **गर्तमिव पतति** पतननिमित्तं भाति, **ताः** अस्य पुरुषस्य तादृशस्थानभूताः । स्वप्नदर्शनस्थानभूता इत्यर्थः । केशसहस्रांशो यावता अणिम्ना सौक्ष्म्येण तिष्ठति, तावदतिसूक्ष्माः शुक्लनीलपिङ्गळहरितलोहितादिनानारूपान्नरसपूर्णाः हितानामिका नाड्यो भवन्तीत्यर्थः । **यदेव जाग्रद्भयं पश्यति**

1. सुषुप्तोऽयं न कामाद्युपहतः, स्वाप्नानन्यान् पदार्थांश्च न पश्यति. ख. ग.

---

**एतस्मा अन्तायेति** । एतच्छब्दो **यत्रेति** वक्ष्यमाणयच्छब्दप्रतिसंबन्धी । स्वप्नादर्शनं साक्षान्नाडीसंबन्धाभावादिति गमयितुं स्वप्नवहा नाड्य इति दर्शयति **ता वा** इति । **शुक्लस्ये**-त्यादेर्विशेष्यं रुधिरस्येति सुबालोपनिषत्तोऽवसेयम् ।

**पतति, यदेव जाग्रद् भयं पश्यति तदत्राविद्यया मन्यते। अथ यत्र देव इव राजेव, 'अहमेवेदं सर्वोऽस्मी'ति मन्यते, सोऽस्य परमो लोकः ॥ २० ॥**

---

**तदत्राविद्यया मन्यते।** यद्यत् जाग्रद्दशायां भयसाधनं पश्यति, तत् सर्वमत्र आसु नाडीषु **अविद्यया** कर्मवशात् **मन्यते** प्रत्येति। हित(ता?)नामकस्वप्नवह-नाडीस्थितस्य कर्मबन्धसत्त्वात् भीषणस्वाप्नपदार्थप्रतिभानं संभवतीति भावः।

**अथ यत्र देव इव राजेवाहमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः।** 'स यथा कुमारो वा महाराजो वा महाब्राह्मणो वा अतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेते' इति बालाकिब्राह्मणोक्तरीत्या यत्र स्थाने स्थितस्य देववत् राजवच्चाऽऽनन्दानुभवः, किञ्च यत्र स्थितः, अहमेव सर्वोऽस्मीति मन्यते — स्वव्यतिरिक्तानुकूलप्रतिकूलवस्तु नोपलभते — सोऽस्य जीवस्य **परमो लोकः** मुख्याश्रयः परमात्मेति यावत्। अतस्तत्र सुषुप्तिस्थाने स्थितस्य न स्वप्ना-द्युपलम्भ इति भावः ॥ २० ॥

---

**अथ यत्र देव इवेति।** ननु सुषुप्तौ चैतन्यप्रसराभावात् 'अहमेवेदं सर्वोऽस्मीति मन्यते' इति कथमिति विमृश्य तस्य वाक्यस्य, 'स्वातिरिक्तं किमपि न मन्यते' इत्यर्थं इत्याह **स्वव्यतिरिक्तेति।** तथाच सुषुप्तौ जीवः देवो वा राजा वा भूत्वा, अहमेवेदं सर्वोऽस्मीति मन्यत इव। तथा मन्यमानस्य देवस्येव राज्ञ इवानन्दाविर्भावो भवतीत्युक्तं भवति। शाङ्करे तु इदमपि स्वाप्नानुभवपरं व्याख्यातम्। पूर्ववाक्ये दुःखानुभव उक्तः, इह सुखानुभव इति भेदः। तदनुसारे **सोऽस्य परमो लोक** इत्यस्य अयं स्वाप्नो **लोकः** अनुभवः परमः अत्युत्कृष्ट इत्यर्थो युक्तः। एवञ्च 'न कञ्चन स्वप्नं पश्यती'ति प्रागुक्तत्वात् तमेव स्वप्ने संभावितमवान्तरभेदं नाडीरूपस्थानप्रदर्शनपूर्वं प्रपञ्च्य, ततः **तद्वा अस्ये**त्यादिना पूर्वप्रकृतसुषुप्तरूपोपन्यास इति उपरितनग्रन्थसंगतिरवसेया। अत्र तु भाष्ये **अथ यत्रे**ति अथशब्दस्वारस्यम्, उपरि **परमो लोक** इत्यादिस्वारस्यञ्चानुसृत्य, बालक्यजातशत्रुसंवादगतस्य, 'स यथा कुमारो वा महाराजो वा महाब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीत' इति वाक्यस्यैवास्यापि सुषुप्ति विषयकतया व्याख्यानम्। वक्ष्यते च (३२) 'एषोऽस्य परमो लोक' इति परमात्मा।

**तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माभयँ रूपम् । तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेद, नान्तरम् — एवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् । तद्वा अस्यैतदाप्तकाममात्मकाममकामँ रूपँ शोकान्तरम् ॥ २१ ॥**

---

**तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माभयं रूपम्** । तदेतत् स्थानमेवास्य **अतिच्छन्दाः** — छन्दशब्द इच्छावाची । अतिच्छन्दा इति छान्दसम् — अतिच्छन्दम् अभिलाषातिगम् । **अपहतपाप्म** पापप्रतिभटम् **अभयं** प्रियं प्राप्यं रूपम् । परमात्मैवेत्यर्थः । ततः किमित्यत आह **तद्यथा प्रियया — नान्तरम्** । यथा प्रियतमया स्त्रिया संपरिष्वक्तस्य पुरुषस्याऽऽन्तरदुःखादिपदार्थज्ञानं वा बाह्यपदार्थज्ञानं वा नास्ति, एवं परमप्रियेण **प्राज्ञेनात्मना** सर्वज्ञेन परमात्मना संपरिष्वक्तस्यास्य पुरुषस्य जीवस्य बाह्याभ्यन्तरस्वेतरसर्ववस्तुज्ञानाभाव उपपद्यते इत्यर्थः । अत्र च संपरिष्वङ्गो नाम तत्र लय एव । स्वाप्ययसूत्रे, 'स्वमपीतो भवती' ति वाक्यसमानार्थकतया भगवता भाष्यकृतैतद्वाक्यस्योदाहृतत्वात् । अथवा जाग्रत्स्वप्नभोगप्रदकर्मसंबन्धविरोधी परिष्वङ्गः संबन्धविशेषः सुषुप्तिमात्रकालवर्तीति द्रष्टव्यम् । **तद्वा — शोकान्तरम्** । **तदेव** जीवसुषुप्तिस्थानभूतं प्राज्ञात्मलक्षणं **स्वरूपम्** **आप्तकामम्** अवाप्तसमस्तकामम् **आत्मकामम्** आत्मानन्दतृप्तम् **अकामम्** आत्मव्यतिरिक्तकामनाशून्यम् **शोकान्तरं** शोकबाह्यम् — **अन्तरशब्दो** बहिर्योगवचनः — शोकमन्तरा वर्तमानम् = शोकशून्यं प्राप्यं रूपमित्यर्थः ॥ २१ ॥

---

**तद्वा अस्येति** वाक्ये **तदिति** परमलोकपरामर्शि यथाभाष्यम् । परमलोकपदस्य स्वप्नभोग्यपरत्वे **तु तदिति** पदं 'एतस्मा अन्ताय धावती' ति प्रागुक्तान्तशब्दार्थपरामर्शि । अतिच्छन्दत्वापहतपाप्मत्वादेः अत्यन्तस्वारस्याहानये रूपशब्देन परमात्मरूपं गृहीतम् । न तु जीवात्मरूपम् । एवमग्रेऽपि । **यथा प्रियये**ति । दृष्टान्तोऽयं बाह्यमानससंवेदनाभावमात्रे इति वाक्य एव स्पष्टम् । न तु परिष्वङ्गानुभवादिकं सुषुप्तावस्ति ।

**अत्र पिताऽपिता भवति, माताऽमाता, लोका अलोकाः, देवा अदेवाः, वेदा अवेदाः। अत्र स्तेनोऽस्तेनो भवति, भ्रूणहाऽभ्रूणहा, चाण्डालोऽचाण्डालः, पौल्कसोऽपौल्कसः, श्रमणोऽश्रमणः, तापसोऽतापसः। अनन्वागतं पुण्येन अनन्वागतं पापेन। तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति॥ २२॥**

---

**अत्र पिताऽपिता भवति माताऽमाता।** अत्र परमात्मनि सुषुप्तिस्थाने लीनस्य जीवस्य पित्रादयो न सन्ति। तद्रूपस्य शरीरसंबन्धघटककर्मसंबन्धशून्यतया अशरीरस्य जनकाभावेन पित्रादेरभावादिति भावः। **लोका अलोकाः।** तस्याश्रयशून्यत्वादिति भावः। **देवा अदेवाः।** अनुग्राहकशून्यत्वादिति भावः। **वेदा अवेदाः।** अननुशासनीयस्वरूपत्वादिति भावः। **अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा।** परिशुद्धात्मस्वरूपे स्तैन्यादिकर्तृत्वा[द्य]संभवादिति भावः। **चाण्डालोऽचाण्डालः — अतापसः।** चन्डालपुल्कसश्रमणतापसादिदेहसंबन्धाभावादेवेति भावः। अत्र हेतुमाह **अनन्वागतं पुण्येनानन्वागतं पापेन।** शरीरसंबन्धघटकपुण्यपापसंस्पर्शाभावादिति भावः। ननु चरमदेहवियोगानन्तरभावित्वात् सर्वकर्मप्रहाणस्य कथं सुषुप्तौ कर्मसंबन्धाभाव इत्याशङ्क्याह **तीर्णो हि — भवति।** सुषुप्तः पुरुषो हि यस्मात् हृदयस्य सर्वान् शोकान् तीर्णो भवति, ततो मनस्तापरूपफलाभावात् विद्यमानानामपि कर्मणां फलप्रदानाभिमुख्याभावात् कर्मणामसंबन्धप्रायत्वात् तत्कृतशरीरसंबन्धाभावेन तदनुबन्धिमातापित्रादयोऽपि न संबध्यन्ते। अतो न सन्तीत्यर्थः॥ २२॥

---

मुक्तौ प्रातिकूल्याननुभवः, अनुकूलानुभवसमृद्धिश्च। सुषुप्तिदशा पित्राद्यनुभवाभावांशे मुक्तिदशातुल्येति मत्वाऽऽह **अत्र पिते**त्यादि। अत्र पिता न भवतीत्येवमनुक्त्वा पिता अपिता भवतीत्येवमुक्त्या, ‘पिता तावदस्त्येव; तेन संबन्धस्तु तदा ने’ति ज्ञाप्यते। **अत्रस्तेन** इति पुनः **अत्रे**ति प्रयोगः स्वयं जागरे स्तेनादिभूतोऽपीदानीमतथेति स्वगतप्रकारविवक्षया। **अनन्वागत**मिति भावे प्रयोगः।

**यद्वैतन्न पश्यति, पश्यन्वै तन्न पश्यति। न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते। अविनाशित्वात्। न तु तत् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्॥ २३॥**

---

'योऽयं विज्ञानमय' इत्युक्तज्ञातृस्वरूपस्य सुषुप्तस्याऽऽत्मनो बाह्यान्तरज्ञानाभावः किन्निबन्धन इत्याशङ्क्याह **यद् द्वैतं न पश्यति, पश्यन् वै तन्न पश्यति**। **द्वैतं** बाह्यमान्तरं वा स्वातिरिक्तं वस्तु सुषुप्तो जीवो न पश्यतीति यत्, तत् पश्यन् वै न पश्यति। वैशब्द एवार्थः। पश्यतः = दर्शनयोग्यज्ञानवत एव बाह्यान्तरादर्शनमित्यर्थः। नन्वपश्यतः कथं पश्यत्त्वमित्यत्राह **न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात्**। ज्ञातुर्धर्मभूतज्ञानस्य नित्यत्वात् विनाशो नास्तीत्यर्थः। तर्हि सुषुप्तौ कथमदर्शनमिति; तत्राह **न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्**। अयमर्थः — ज्ञानस्वरूपाभावनिबन्धनो बाह्याभ्यन्तरद्वितीयज्ञानाभावो न भवति। अपितु ततो विभक्तस्य = प्राज्ञात्मनः पृथक्सिद्धस्यान्यस्य बाह्याभ्यन्तररूपद्वितीयवस्तुनोऽभावादेवानुकूलप्रतिकूलपदार्थादर्शनमिति। न च पृथक्सिद्धपदार्थाभावस्य जाग्रत्स्वप्नयोरपि समत्वात् तत्रेव सुषुप्तावप्यविद्यमानपृथक्सिद्धपदार्थानुभवोऽस्त्विति शङ्क्यम् — तत्र कर्मरूपदोषवशात् पृथक्सिद्धपदार्थोपलम्भसंभवात्, सुषुप्तौ कर्मरूपदोषस्याकार्यकरत्वेनासंबन्धप्रायत्वस्योपपादितत्वाच्च। न च तर्ह्यपृथक्सिद्धतया ब्रह्मात्मकत्वेनैव सुषुप्तौ विषयाणामुपलम्भोऽस्त्विति शङ्क्यम् — 'सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः' इति छान्दोग्योक्तरीत्या अनृतशब्दितकर्मविशेषेण जीवधर्मभूतज्ञानस्य तिरोहिततया ब्रह्मण उपलम्भासंभवेन ब्रह्मात्मकतयाऽप्युपलम्भासंभवात्। ब्रह्मात्म-

---

ननु विज्ञानमय आत्मेति प्रागुक्तम्। अतः तच्छक्तिसंपन्नः कथं विद्यमानं पित्रादिकं न पश्येत्। अतो विज्ञानशक्तिरपि न स्यादित्यत्राह **यदिति**। यद्वैतन्नेत्यत्र यत् द्वैतं न इति पदच्छेदोऽभिमतः; न तु यत् वै, तत् नेति। **अविनाशित्वा**दिति। धर्मभूतज्ञानस्य द्रव्यतया नित्यत्वात् न सर्वात्मना विनाशः; अवस्थारूपपरिणामास्तु सुषुप्तौ न भवन्ति, सामग्र्यभावादिति। तदेवोपपाद्यते **न तु तदि**त्यादिना।

यत् द्वैतं न जिघ्रति, जिघ्रन्वै तन्न जिघ्रति । न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यते अविनाशित्वात् । न तु तत् द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत् ॥ २४ ॥

यत् द्वैतं न रसयते, रसयन् वै तन्न रसयते । न हि रसयितू रसयतेर्विपरिलोपो विद्यतेऽविनाशित्वात् । न तु तत् द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत् ॥ २५ ॥

यत् द्वैतं न वदति, वदन् वै तन्न वदति । न हि वक्तुर्वक्तेर्विपरिलोपो

---

क्त्वाब्रह्मात्मकत्वोभयबहिर्भूत[1]पदार्थे प्रत्यक्षाभावादिति भावः। अत्र न तु तद् द्वितीयमिति तुशब्देन धर्मभूतज्ञानप्रसरद्वारभूतमनःपर्यन्तसर्वेन्द्रियोपसंहारात् ज्ञानस्य विषयसंबन्धाभावान्न सुषुप्तौ बाह्याभ्यन्तरविषयज्ञानमित्यपि हेत्वन्तरमभिप्रेतं द्रष्टव्यम् ॥ २३

यद् द्वैतं न जिघ्रति — । पूर्ववत् ॥

वदन् वै तन्न वदति । वदनक्रियाहेतुतायोग्यज्ञानःत एवावदनमित्यर्थः ।

1. बहिर्भूतस्य पदार्थस्याभावात्. ख. ग.

---

**यत् पश्येदित्यस्य** यत् पित्रादिकं विषयभूतं पश्येत् इत्यर्थे एवं वर्णिते ज्ञानप्रसरहेतुभूतेन्द्रियव्यापाराभावो नोक्तो भवतीत्यालोच्य तस्य तुशब्दलभ्यत्वमाह **अत्रे**त्यादिना । अत्रेदं बोध्यम् — **यदि**ति द्वितीयान्तं विषयपरं व्याख्यातं शाङ्करेऽपि । विषयस्य सर्वस्य दष्टरि सुषुप्ते एकीभूतत्वात् आत्मापेक्षयाऽन्यत्वेन रूपेण विभक्ततयाऽभावाददर्शनमिति तत्रत्यो वाक्यार्थः । वक्ष्यते चैकीभावोऽत्रैव **सलिल एको द्रष्टे**ति । विषयाणामविभागश्चायमन्यत्रापि श्रूयते, यथा कौषीतक्युपनिषदि, 'वाक् सर्वैर्नामभिः सहाप्येति, चक्षुः सर्वैरूपैः सहाप्येती'त्येवम् । वस्तुतो विषयाणां बहिर्वर्तमानत्वात् बौद्धवत् विषयापलापायोगात् नामरूपादीनामप्ययो नाम नामरूपादिविषयकरणां वाक्चक्षुरादिव्यापाराणामप्यय एवेति तत्र स्थितम् । तथाचात्रापि यद् विषयजातं पश्येत्, तत् आत्मापेक्षया विभक्ततया = विभक्तमनश्चक्षुरादिसंनिकर्षार्हतया नास्तीत्यर्थः तद्रीत्या वर्ण्यते चेत्, इन्द्रियोपसंहारोऽपि लभ्यत एवेति । एवमत्र **यत् पश्येदि**त्यत्र यदित्यव्ययम् । **यत्** यस्मात् कारणात् पश्येत्, तत् मनश्चक्षूरूपं करणं ततो विभक्तं नास्ति; तथा यत् जीवात्मस्वरूपं कर्तृतया स्थित्वा पश्येत्, तत् परमात्मनो विभक्तं नास्ति । सकरणग्रामस्य जीवस्य पुरीतति ब्रह्मण्येकीभावात् । अतो न पश्यतीत्यर्थवर्णनमपि भवत्येव । एवमग्रे सर्वत्र ।

**न हि वक्तुर्वक्तेर्विपरिलोप** इति । **वक्ति**र्वचनकरणम्, वर्णोत्पादानुकूलकृतिः प्रयत्नरूपा । सिद्धान्ते ज्ञानस्यैव इच्छाकृत्यादेरपि धर्मभूतज्ञानावस्थारूपत्वात् पूर्ववत् धर्मभूतज्ञानरूपद्रव्यनित्यत्वाभिप्रायेणैव एवमुक्तिरिति ध्येयम् ।

विद्यतेऽविनाशित्वात्। न तु तत् द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्वदेत्॥ २६

यत् द्वैतं न शृणोति, शृण्वन् वै तन्न शृणोति। न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तत् द्वितीयमस्ति ततोऽन्यद्विभक्तं यच्छृणुयात्॥ २७॥

यत् द्वैतं न मनुते, मन्वानो वै तन्न मनुते। न हि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तत् द्वितीयमस्ति ततोऽन्यद्विभक्तं यन्मन्वीत॥ २८॥

यत् द्वैतं न स्पृशति, स्पृशन्वै तन्न स्पृशति। न हि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तत् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् स्पृशेत्॥ २९॥

यत् द्वैतं न विजानाति, विजानन् वै तन्न विजानाति। न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तत् द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात्॥ ३०॥

यत्र वा अन्यदिव स्यात्, तत्रान्योऽन्यत् पश्येत्, अन्योऽन्यज्जिघ्रेत्, अन्योऽन्यद्रसयेत्, अन्योऽन्यद्वदेत्, अन्योऽन्यच्छृणुयात्, अन्योऽन्यन्मन्वीत, अन्योऽन्यद्विजानीयात्॥ ३१॥

---

इदं सर्वकर्मेन्द्रियव्यापारोपलक्षणम्। मनुते इति मनोवृत्तिकथनम्॥ विजानातीति बुद्धिवृत्तिकथनम्। अन्यत् सर्वं पूर्ववत्॥ २४ – ३०॥

अथ स्वप्नस्थानादौ नैवमित्याह **यत्र वा अन्यदिव स्यात् तत्रान्योऽन्यत् पश्येत् — विजानीयात्**। अन्योऽन्यदित्यत्र अन्येनेति शेषः। तथा च यत्र स्थाने स्वप्नादौ स्थितस्याल्पमपि पृथक्सिद्धं स्यात्, इन्द्रियादिकञ्च करणं स्यात्, तदानीं किञ्चिद् दृश्यादिकं केनचित् करणेन कश्चित् पश्येदपि। इह तु पृथक्सिद्धपदार्थाभावात्, कर्मसंबन्धोपरमेन करणभूतेन्द्रियसंबन्धाभावाच्च नान्यवस्तुदर्शनमिति भावः॥ ३१॥

---

अन्यदिवेति। इवशब्द, 'अन्यशब्दस्य नात्र मुख्यमन्यत्वमर्थः, अपि तु विभक्तत्व' मिति ज्ञापनाय। तथाच यदा दर्शनादेः कर्ता करणं विषयश्चेति सर्वं परमात्मनो विभक्तं स्यात, न तु प्रलय इव सर्वस्यैकीभावः, सुषुप्ताविव वा कर्त्रादेः, तदा विभक्तः कर्ता विभक्तेन करणेन विभक्तं विषयं पश्येन्नाम। सुषुप्तौ च सर्वस्यापेक्षितः पृथग्भावो नेति कथं धर्मभूतज्ञानवतोऽपि

**सलिल एको द्रष्टाऽद्वैतो भवति । एष ब्रह्मलोकः सम्राडिति हैनमनुशशास याज्ञवल्क्यः । एषाऽस्य परमा गतिः ; एषाऽस्य परमा संपत् ; एषोऽस्य परमो लोकः ; एषोऽस्य परम आनन्दः । एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ॥ ३२ ॥**

---

**सलिल एको द्रष्टाऽद्वैतो भवत्येष ब्रह्मलोकः**— । यथा जलं जले प्रक्षिप्तमेकं भवति, एवं सलिले सलिलवत् स्वच्छस्वभावे परमात्मनि लीनोऽयं द्रष्टा जीवः प्राज्ञात्मपरिष्वङ्गवशेनैकीभूतस्सन् **अद्वैतो भवति** देवादिलक्षणभेदकाकारशून्यो भवतीत्येष सुषुप्त्याधार एव छान्दोग्ये, 'ब्रह्मलोकं न विन्दन्ती' त्यत्र ब्रह्मलोकशब्दितः परमात्मा, हे सम्राडिति याज्ञवल्क्यो जनकमनुशिष्टवानित्यर्थः । ननु कथं सुषुप्त्याधारस्य ब्रह्मलोकत्वम् । ब्रह्मलोको हि परमगतित्वादिना श्रूयत इत्यत्राह **एषाऽस्य परमा गतिः** । जीवस्यास्यार्चिरादिगत्या प्राप्यतया श्रुता परमगतिरेषैव । **एषाऽस्य परमा सम्पत्** । तत्त्वज्ञानादिना प्राप्याऽपि संपदेषैव । **एषोऽस्य परमो लोकः** । शाश्वतं भोगस्थानमप्येष एव । **एषोऽस्य परम आनन्दः** । निरतिशयानुकूलोऽप्यस्यायमेवेत्यर्थः । ननु स्वर्गादिषु भोगेष्वनुकूलेषु जाग्रत्सु कथमेतस्य परमानन्दत्वमित्यत्राह **एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति** । **अन्यानि भूतानि** ब्रह्मानुभवितुरन्ये स्वर्गादिवैषयिकसुखानुभवितारः सर्वेऽप्येतदानन्दसहस्रांशानुभवितार इत्यर्थः ॥ ३२ ॥

---

ज्ञानावस्थासंभव इति । तदिदं प्राधान्येन सुषुप्तौ कर्तृलयं प्रदर्श्य व्यनक्ति **सलिल** इत्यादिना । सलिलशब्दात् अर्शआद्यचि सलिलः सलिलस्वभाववान् सलिलतुल्य इत्यर्थः । भेदकाकारशून्यत्वं भेदकाकाराभिमानराहित्यरूपं तथाविधाभिमानवहकरणविभागरूपसामग्रीशून्यत्वपर्यवसितम् । **मात्रामिति** । अत्र मात्रापदं न ब्रह्मानन्दस्यैकदेशमेव साक्षादाह ; किंतु तत्तुल्यजीवानन्दे तदुपचारः । तदिदमिहैव, 'अथ ये शतं मनुष्याणामानन्दाः स एकः पितॄणामानन्द इत्यभेदोपचारतः स्पष्टम् ।

**स यो मनुष्याणां राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्यै-([1]ष्यकै) र्भोगैः संपन्नतमः, स मनुष्याणां परम आनन्दः । अथ * ये शतं मनुष्याणामानन्दाः स एकः पितृणां[2] जितलोकानामानन्दः । अथ ये शतं पितृणां जितलोकानामानन्दाः, स एको गन्धर्वलोक आनन्दः । अथ ये शतं गन्धर्वलोक आनन्दाः, स एकः कर्मदेवानामानन्दः; ये कर्मणा देवत्वमभिसंपद्यन्ते । अथ ये शतं कर्मदेवानामानन्दाः, स एक**

1. मानुष्यकैः मा. शां 2. पितृणां. मा.

---

तस्य परमानन्दत्वमेव मनुष्यानन्दादितारतम्यनिरूपणेन प्रपञ्चयति **स यो मनुष्याणां—परम आनन्दः । राद्धः** – – ' राध साध संसिद्धा ' विति हि धातुः – – सिद्धः । उपायैः सिद्धः, युवत्वादिगुणैः समृद्धः, अन्येषाञ्च मनुष्याणामधिपतिः, सर्वमानुषभोगैर्निरतिशयं सम्पन्नश्च कश्चिद्भवति यदि, **सः** उक्तलक्षण-आनन्दः मनुष्याणां मध्ये श्रेष्ठ आनन्द इत्यर्थः । अत्र समृद्धत्वादिगुणानां अनुकूलतया वेदनीयत्वादानन्दत्वमस्तीति द्रष्टव्यम् । **अथ ते ये शतं मनुष्याणाम् — पितृणां जितलोकानामानन्दः** —। शतगुणिता मनुष्याणां पूर्वोक्ताः परमानन्दाः, श्राद्धादिकर्मभिः पितॄंस्तोषयित्वा जितपितृलोका ये पितरः तेषामेक आनन्दो भवतीत्यर्थः । एवमग्रेऽपि । **स एकः कर्मदेवानामानन्द** इत्यत्र **कर्मदेवाना**मित्यस्यार्थमाह **ये कर्मणा देवत्वमभिसंपद्यन्ते** । देवत्वं हि द्विविधं कर्मसिद्धमाजानसिद्धञ्च । कल्पादावेव यत् सिद्धम्, तत् आजानसिद्धम् । तदितरत् कर्मसिद्धम् । यद्वा उपासनसिद्धमाजानसिद्धम्, । तदितरत् कर्मसिद्धम् । यद्वा त्रयस्त्रिंशद्देवतासायुज्यं कर्मदेवत्वम् । त्रयस्त्रिंशद्देवतात्मत्वमाजानसिद्धत्वमिति विवेको द्रष्टव्यः । **अथ [ते] ये शतं कर्मदेवानामानन्दाः—यश्च श्रोत्रियोऽवृजिनोऽ-**

* अत्र पर्यायेषु **ते ये शत**मिति तच्छब्दः क्वचित् कोशे दृश्यते, अन्यत्र न । परन्तु उपरि, ' ते ये शतं — स एक इति निर्देशात् ' इति तच्छब्दानुवादो भाष्ये लक्ष्यते । स तैत्तिरीयानुसारेणापि स्यात् ।

सेयं शतगुणितानन्दगणनधोरणी **तैत्तिरीये** विशदा । दर्शितञ्चात्रत्यं **तत्रैव परिष्कारे** इति नेह तन्यते । **स मनुष्याणां परम आनन्द** इत्यत्र पूर्वनिर्दिष्टयच्छब्दप्रतिसंबन्धि तस्येतिपदमध्याहार्यम् । मनुष्याणां मध्ये तस्य स आनन्दः परम इत्यर्थः ।

**आजानदेवानामानन्दः; यश्च श्रोत्रियोऽवृजिनोऽकामहतः । अथ ये शतमाजानदेवानामानन्दाः, स एकः प्रजापतिलोक आनन्दः; यश्च श्रोत्रियोऽवृजिनोऽकामहतः । अथ ये शतं प्रजापतिलोक आनन्दाः, स एको ब्रह्मलोक आनन्दः; यश्च श्रोत्रियोऽवृजिनोऽकामहतः ।**

---

**कामहतः** । **श्रोत्रियः** श्रुतवेदान्तः, अत एव **अवृजिनः** अपापः, अत एव **अकामहतः** उपासननिवृत्तसमस्तक्लेशकाम इत्यर्थः । मुक्त इति यावत् । शतगुणिताः कर्मदेवानन्दाः आजानदेवानन्द एको भवति । तथा उक्तगुणविशिष्टमुक्तानन्दोऽप्येको भवतीत्यर्थः । यद्यपि मुक्तानन्दाजानदेवानन्दयोर्मेरुसर्षपवत् तारतम्यमस्ति, तथाप्यन्यूनत्वे तात्पर्यं द्रष्टव्यम् । **अथ [ते] ये शतं प्रजापतिलोक आनन्दाः, स एको ब्रह्मलोक आनन्दः; यश्च श्रोत्रियोऽवृजिनोऽकामहतः** । अत्र प्रजापतिशब्दश्चतुर्मुखपरः; तैत्तिरीयके समानप्रकरणे, 'प्रजापतेरानन्दः'—इत्येकवचनान्तप्रजापतिशब्दश्रवणात् दक्षादिप्रजापतिपरत्वे बहुवचनान्तताप्रसङ्गेन तत्रत्यप्रजापतिशब्दस्य चतुर्मुखपरतया तदैकार्थ्येनात्रत्यप्रजापतिशब्दस्यापि तत्परत्वात् । ततश्च तुर्मुखानन्दः शतगुणितो ब्रह्मलोकलक्षण आनन्दो भवति; तथा मुक्तानन्दोऽपि भवतीत्यर्थः । न च, 'ते ये शतं—स एक' इति निर्देशात् ब्रह्मानन्दस्य परिच्छिन्नत्वं शङ्कनीयम्—आधिक्यमात्रे वाक्यतात्पर्यात् । यथा, 'क्षिप्तेषुरिव सर्पती' ति वाक्यं सूर्यस्य गतिमान्द्यनिवृत्तिपरम्, न त्विषुसाम्यपरम्; सूर्यस्य निमेषमात्रे बहुयोजनातिलङ्घित्वस्य प्रमाणसिद्धत्वात् । एवमस्यापि वाक्यस्य चतुर्मुखानन्दापेक्षया आधिक्यमात्रे तात्पर्यमवगम्यते; ब्रह्मानन्दापरिच्छिन्नत्वस्य श्रुतिसिद्धत्वात् । यद्वा,

'रोमकूपेष्वनन्तानि ब्रह्माण्डानि भ्रमन्ति ते ।
अण्डानां तु सहस्राणां सहस्राण्ययुतानि च ॥
ईदृशानां तथा तत्र कोटिकोटिशतानि च ।'
'गङ्गायां सिकता धारा यथा वर्षति वासवे ।
शक्या गणयितुं लोके न व्यतीताः पितामहाः ॥'

इत्यादिभिः ब्रह्माण्डानां तत्रत्यचतुर्मुखानाञ्चासंख्येयत्वावगमात् नियाम्यचित्रन्तुः

**अथैष एव परम आनन्द एष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः। सोऽहं भगवते सहस्रं ददामि; अत ऊर्ध्वं विमोक्षायैव ब्रूहीति। अत्र ह याज्ञवल्क्यो बिभयाञ्चकार, मेधावी राजा सर्वेभ्यो माऽन्तेभ्य उदरौत्सीदिति ॥ ३३ ॥**

**स वा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव ॥ ३४ ॥**

**तद्यथाऽनः सुसमाहितमुत्सर्जद्यायात्, एवमेवायँ शारीर आत्मा**

---

शतगुणितानन्दत्वे कथिते चतुर्मुखेभ्योऽप्यसंख्याकेभ्यः शतगुणानन्दतयाऽवगतस्य भगवतोऽपरिच्छिन्नानन्दत्वमर्थसिद्धं [1]द्रष्टव्यम्। आनन्दमयाधिकरणादावेवमेव व्यासार्यैर्वर्णितम्। **अथैष एव — ब्रूहीति**। पूर्ववदर्थः। **अत्र ह याज्ञवल्क्यो बिभयाञ्चकार — उदरौत्सीदिति**। अयं राजा अतीव मेधावी **मा** मां सर्वेभ्यः **अन्तेभ्यः** — अन्तः=निश्चयः — निश्चयहेतुभ्यः प्रश्नेभ्यः **उदरौत्सीत्** अव (उप) रोधं कृतवान्। सर्वान् प्रश्नान् मामसौ प्रष्टुमुपाक्रमतेत्यर्थः। अत इतःपरं न त्यक्ष्यतीति अत्र राजप्रश्नपरम्परायां विषये याज्ञवल्क्यो **बिभयाञ्चकार** बिभेति स्मेत्यर्थः ॥ ३३ ॥

अथ याज्ञवल्क्यो जाग्रद्देशादुत्क्रमणं विवक्षुः स्वप्नान्तेऽवस्थापितस्य जीवस्य बुद्धान्तसञ्चरणं दर्शयति **स वा एष एतस्मिन् स्वप्नान्ते —**। पूर्ववदर्थः ॥ ३४ ॥

अथोत्क्रान्तिमाह **तद् यथाऽनः सुसमाहितम् — उत्सर्जन् याति**। यथा **अनः** शकटं सुतरां **समाहितं** यात्रोपकरणसंभाराक्रान्तं सत् पूर्वं देशमुत्सृज्य

[1]. अयं **ख. ग.** पाठः टीकानुवादरूपः। **क.** कोशे तु 'कोटिशतानिन्वेति ब्रह्माण्डानन्त्यावगमेन तत्रत्यचतुर्मुखानाञ्चासंख्येयत्वावगमात् नियाम्यानन्दादनन्तान्नियन्तुः शतगुणितानन्दत्वकथने 'नयन्त्रानन्दस्यापरिच्छिन्नत्वमर्थसिद्धं' इति।

---

एवं सुषुप्तावात्मस्थितिं प्रपञ्चितामाकर्ण्य, ब्रह्मण. सर्वोत्कृष्टानन्दभरितत्वस्य वस्तुतः सत्त्वेऽपि सुषुप्तस्य तदनुभवाभावात्, देहाद्यभिमानाभावेऽपि देहादियोगस्यानपेतत्वाच्च नायं विमोक्ष इति पुनः **विमोक्षाय ब्रूही**ति प्रष्टुमारभते जनकः **सोऽहमि**त्यादिना।

तत्र देहवियोगरूपं मोक्षं वक्ष्यन् सकामनिष्कामविभागेन चरमदेहवियोग एव विमोक्षो वास्तव इति ज्ञापयिष्यन् सुषुप्तस्य जागरितप्राप्तिद्वारैव तत्प्राप्तिरित्याशयेन पुनर्बुद्धान्तसमागममादावनुवदति **स वा एष** इत्यादिना।

**प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन् याति, यत्रैतदूर्ध्वोच्छ्वासि[1] भवति ( ३५ ), स यत्रायमणिमानं न्येति जरया वोपतपता वाऽणिमानं निगच्छति[2]। तद्यथाऽऽम्रं वोदुम्बरं वा पिप्पलं वा बन्धनात् प्रमुच्यते, एवमेवायं पुरुष एभ्योऽङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैव ॥ ३६ ॥**

1. ऊर्ध्वोच्छ्वासी. शां. मा.

---

याति, एवमेव शकटस्थानीयोऽयं शारीर आत्मा जीवः **प्राज्ञेन** सर्वज्ञेन **आत्मना** परमात्मना सारथिस्थानीयेन **अन्वारूढः** संबन्धविशेषं प्राप्तः शरीरमुत्सृज्य यातीत्यर्थः। कदेत्यत्राह **यत्रैतदूर्ध्वोच्छ्वासि भवति**। **यत्र** यदा **एतत्** शरीरमूर्ध्वश्वासि भवति, तदोत्सृज्य यातीत्यर्थः ॥ ३५ ॥

ऊर्ध्वश्वासी (सि?) भावकालमाह **स यत्रायमणिमानं न्येति, जरया वोपतपता वाऽणिमानं निगच्छति**। सोऽयं [1]प्राकृतः शिरःपाण्यादिमान् पिण्डः **यत्र** यदा **अणिमानं** कार्श्यं **न्येति** निर्ग(ग?)च्छति[2]। तत्र हेतुमाह **जरया वा उपतपता वा**–। स्वयमेव कालपक्कफलवत् जरया वा कार्श्यं गच्छति, अथवा, उपतपतीत्युपतपन् ज्वरादिरोगः, तेन वा उपतप्यमानः अग्निमान्द्येन भुक्तस्याजरणे अन्नरसेनानुपचीयमानस्सन् पिण्डः कार्श्यमापद्यते; तदोर्ध्वश्वासी भवतीत्यर्थः। **तद्यथाऽऽम्रं वोदुम्बरं वा — प्राणायैव**। यथा आम्रफलं वा उदुम्बरफलं वा पिप्पलफलं वा — अत्र, 'फले लुक्' इति विकारप्रत्ययस्य लुक् — वृन्तबन्धनात् कालवशजीर्णात् प्रमुच्यते, एवमेवायं पुरुषः सप्राणकरणग्रामः **एभ्यः** पाण्यादिभ्योऽङ्गेभ्यः **संप्रमुच्य** मोक्षं प्राप्य पुनः **प्रतिन्यायं** यथा पूर्वमागतः तथैव ब्राह्मणादिप्रारब्धकर्मानुगुणयोनिं प्रति आद्रवति **प्राणायैव** जीवनायेत्यर्थः ॥ ३६ ॥

1. प्रकृत शरीरः पाण्यादिमान. क. 2. न्येति गच्छति. क.

---

**सयत्रेति**वाक्यं पूर्वशेषं कृतं **भाष्ये**। उत्तरान्वय्यपि भवति; **तद्यथे**त्यत्र तच्छब्दस्य तदेत्यर्थात्। **हेतुमाहे**ति। **हेतूक्तिपूर्वकं** विवृणोतीत्यर्थः। **प्रतिन्यायमितीदं** लप्स्यमानदेहतुल्यप्राप्तिरनादौ संसारेऽस्य असकृदासीदेवेति **सूचयितुम्**।

**तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैराव-सथैः प्रतिकल्पन्ते, 'अयमायाति; अयमागच्छती' ति, एवँ हैवंविदँ सर्वाणि भूतानि प्रतिकल्पन्त इदं ब्रह्मायाति; इदमागच्छतीति ॥ ३७ ॥**

**तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभिसमा-यान्ति — एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायान्ति, यत्रैतदू-**

---

**तद्यथा राजानम्—आगच्छतीति** । तत् तत्र प्रपित्सितयोन्यन्तरे। यथा अभिषिक्तं राजानमायान्तं श्रुत्वा राष्ट्रवर्तिनः सर्वेऽपि **उग्राः** जातिविशेषाः क्रूर-कर्माणो वा, **प्रत्येनसः** पापकर्मणि तस्करादिदण्डनादौ नियुक्ताः, **सूताः** वर्ण-सङ्करविशेषाः, ग्रामनेतारो **ग्रामण्यः** — सूताश्च ग्रामण्यश्च सूतग्रामण्यः — **अन्नैः** विविधैर्भोज्यैः **पानैः** पेयविशेषैः **आवसथैः** प्रासादादिभिश्च, **अयं** राजा आयाति, अयमागच्छतीति ससंभ्रमं वदन्तः **प्रतिकल्पन्ते** प्रतीक्षन्ते — एवमेव ह **एवं-विदं** कर्मफलयुक्तं — संसरन्तमिति यावत् । कर्मफलं हि प्रस्तुतम् । तत् **एवं-**शब्देन परामृश्यते । विच्छब्दस्तल्लब्धृ[1]परः — **सर्वाणि भूतानि** एतद्भोगोप-करणभूतशरीरसाधनानि सर्वाणि भूतानि तत्तत्कर्मप्रयुक्तानि सन्ति कर्मफलोपभोग-साधनैः सह, **इदं ब्रह्म** जीवः आयाति, इदमागच्छतीति ससंभ्रमं **प्रतिकल्पन्ते** प्रतीक्षन्ते इत्यर्थः । एतच्छरीरत्यागसमन्तरमेव शरीरान्तरतद्भोग्यभोगस्थानभोगोपकर-णानि परमात्मसंकल्पवशेन प्रतिपुरुषं समग्राणि भवन्तीत्यर्थः । यद्वा उक्तसंसरण-प्रकाराभिज्ञस्य सर्वभूतोपजीव्यत्वं फलमुक्तमिति द्रष्टव्यम् ॥ ३७ ॥

**तद्यथा राजानं — भवति** । यथा **प्रयियासन्तं** जिगमिषुं **राजानं** तदुपजीविन उग्रप्रत्येनःप्रभृतयः पूर्वव्याख्याताः **सर्वे** तदाज्ञामन्तरेणापि **अभि-समायान्ति** आभिमुख्येनायान्ति—**एवमेवेममात्मानं** = भोक्तारम्, **यत्र** यदा **एतत्**

1. ऊब्धिपरः. क.

---

**इदं ब्रह्मायातीति** । प्रतीक्ष्यमाणाज्जीवात् प्राप्स्यमानान् उपकारान् परिशील्य तदुप-धानसामर्थ्यविवक्षया ब्रह्मत्वेन स्तुतिरियम् । उग्रादीनामभिसमायानं नाम राज्ञो गमनं बुद्ध्वा गम-नात् प्रागेवाभिमुखमागम्य संभाव्य गमनकाले यथाशक्ति यथापेक्षमनुगमनम् । उग्रादयः किञ्चिद्-दूरमनुगम्य निवर्तन्ते ; प्राणास्त्वभिमानाधिक्यात् सर्वं विसृज्यैनमनुवर्तन्त एवेति विशेषः ।

र्ध्वोच्छ्वासि[1] भवति ॥ ३८ ॥

इति षष्ठाध्याये तृतीयं ब्राह्मणम् ॥

६—४.

**स यत्रायमात्माऽऽबल्यंन्येत्य संमोहमिव न्येति, अथैनमेते प्राणा अभिसमायान्ति। स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति।**

1. ऊर्ध्वोच्छ्वासी. शां. मा.

---

शरीरमूर्ध्वश्वासि भवति, **तदा** अन्तकाले सर्वे प्राणा आयान्तीत्यर्थः ॥ ३८ ॥ ६—३.

अथ, 'एभ्योऽङ्गेभ्यस्संप्रमुच्ये' त्युक्तं संप्रमोक्षं विस्तरेण वर्णयितुमारभते **स यत्रायमात्माऽऽबल्यं न्येत्य सम्मोहमिव न्येति**। सोऽयमात्मा **यत्र** यस्मिन् काले **आबल्यं** अबलस्य भावः आबल्यं बलराहित्यं **न्येत्य** नितरामेत्य प्राप्य **संमोहमिव न्येति** प्रतिपद्यते। करणक्षोभात् संमोहं प्रतिपद्यते । इवशब्दोऽल्पार्थे। मोहोपक्रमदशायामित्यर्थः —

मोहो नाम मरणायार्धसंपत्तिः। तथाहि — उभयलिङ्गपादे जाग्रत्स्वप्नसुषुप्तिमरणानामन्यतमो मोह इति पूर्वपक्षे प्राप्ते उच्यते—"मुग्धेऽर्धसंपत्तिः परिशेषात्"। न तावत् मुग्धो जागरितावस्थो भवितुमर्हति, इन्द्रियैर्विषयानिरीक्षणात्। नापि स्वप्नान् पश्यति, निस्संज्ञत्वात्। नापि मृतः, [1]प्राणोष्मणोर्भावात्। न च सुषुप्तः, तद्वैलक्षण्यात्। सुप्तो हि प्रसन्नवदनो निमीलितनेत्रश्च। तस्मान्मोहो नाम मृतेरर्धसंपत्तिः। अर्धमृतिरिति यावत्। मरणं हि सर्वप्राणवियोगः। सर्वप्राणवियोगोपक्रमकतिपयप्राणसंपत्तिर्मूर्च्छा। तत्रौषधादिवशात्, कर्मशेषे च सति वाङ्मनसे प्रत्यागच्छतः। असति तस्मिन् प्राणोष्माणावप्यपच्छतः। तस्मादर्धमृतिर्मूर्छेति स्थितम्—

**अथैनमेते प्राणा अभिसमायन्ति**। **अथ** तदानीं वागादयः प्राणाः **एनमभिसमायन्ति** आत्मनः समीपमायान्तीत्यर्थः। **स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति**। **सः** आत्मा — तेजोमय्यो मात्राः **तेजो-**

1. तस्य प्राणोष्मणोरभावात्. क.

---

पूर्वं **ऊर्ध्वोच्छ्वासि भवती**त्येतदनन्तरं पुनरिह **ऊर्ध्वोच्छ्वासि भवती**त्यन्तं वाक्यजातं नात्यन्तमपेक्षितम्। अथापि जीवस्य जननमरणप्रवाहसद्भावज्ञापनाय प्रवृत्तम्।

**स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्तते, अथारूपज्ञो भवति ॥ १ ॥**

**एकीभवति, न पश्यतीत्याहुः ; एकीभवति, न जिघ्रतीत्याहुः ; एकीभवति, न रसयत इत्याहुः ; एकीभवति, न वदतीत्याहुः ; एकीभवति, न शृणोतीत्याहुः ; एकीभवति, न मनुत इत्याहुः ; एकीभवति, न स्पृशतीत्याहुः ; एकीभवति, न विजानातीत्याहुः ।**

**तस्य हैतस्य हृदयस्याग्रं प्रद्योतते । तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः ।**

---

**मात्राः** । प्रकाशकांशा इत्यर्थः । इन्द्रियाणीति यावत् — ता एताः समभ्याद- दानः — समिति स्वप्नापेक्षया वैषम्यमुच्यते । अस्त्येव[1] स्वप्नेऽप्यभ्यादानम्; न तु सम्यक्=सवासनमभ्यादानम् । इह तु सवासनमभ्यादायेत्यर्थः — हृदयमेव पुण्डरीकाकार**मन्ववक्रामति** अन्वागच्छतीत्यर्थः । **स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्तते** । चक्षुषि सन्निहितः **चाक्षुषः** । **चाक्षुषः पुरुषः** इति म्रियमाणो जीव उच्यते । स **यत्र** यदा **पराङ्** रूपादिविषयपराङ्मुखस्सन् हृदयदेशे पर्यावर्तत इत्यर्थः । **अथारूपज्ञो भवति** । **अथ** तदुत्तरकाले अयं मुमूर्षुः **अरूपज्ञो भवति** रूपादिविषयान्न जानातीत्यर्थः ॥ १ ॥

**एकीभवति न पश्यतीत्याहुः** । अयं मुमूर्षुः **एकीभवति** स्वापकाल इवेन्द्रियैः सहैकीभवति[2]; अतो न रूपादीन् पश्यतीति **पार्श्वस्था** आहुरित्यर्थः । **एकीभवति न जिघ्रति** — । पूर्ववदर्थः । **तस्य हैतस्य हृदयस्याग्रं — शरीरदेशेभ्यः** । **तस्य हैतस्य** म्रियमाणस्य संबन्धि यत् हृदयम्, तस्याग्रं नाडीमुखं[3] निर्गमनद्वारं **प्रद्योतते** उपसंहृतकरणतेजःप्रज्वलितं सत् प्रदीप्तं भवति । तत्प्रकाशितद्वारस्सन्नेष आत्मा निष्क्रामति चक्षुरादिद्वारेभ्य इत्यर्थः ।

1. अस्यैव क. 2. सहितो भवति. क. 3. मुखान्निर्गमन. क.

---

सुषुप्तिवदत्राप्येकीभावादेवादर्शनम्, न तु धर्मभूतज्ञानवैकल्यादित्याह **एकीभवती**त्यादिना । **चक्षुषो वे**त्यादि । यन्नाडीद्वारा निष्क्रामति, सा नाडी शरीरे यत्र देशे संतिष्ठते, ततो देशादित्यर्थः ।

**तमुत्क्रामन्तं प्राणोऽनूत्क्रामति; प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति; सविज्ञानो भवति; सविज्ञानमेवान्ववक्रामति। तं विद्याकर्मणी समन्वारभेते; पूर्वप्रज्ञा च ॥ २ ॥**

---

**तमुत्क्रामन्तं प्राणोऽनूत्क्रामति। प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति।** एवमुत्क्रामन्तं **तम**ध्यक्षं जीवं मुख्यप्राणो**ऽनु** पश्चात् उत्क्रामति। तं मुख्यप्राणं जीवमनूत्क्रामन्तं तदधीना इतरे प्राणा अनूत्क्रामन्तीत्यर्थः। **सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति**। तस्यां दशायामुत्क्रामन् जीवः, 'यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कळेबरम्। तं तमेवैती' त्युक्तन्यायेन प्राप्तव्ययोनि-विषयकस्मृतिमान् भवतीत्यर्थः। तच्च ज्ञानं कर्माधीनम्; न तु पुरुषयत्नसाध्यम्। 'यं योगिनः प्राणवियोगकाले यत्नेन चित्ते विनिवेशयन्ति' इति स्मृत्युक्तरीत्या योगि-नामेव हि चरमं ज्ञानं यत्नसाध्यम्। एवं सविज्ञानं प्राप्तव्ययोनिचिन्तनवन्तमेव पुरुषं प्राणवर्गोऽन्ववक्रामति अनुगच्छतीत्यर्थः। **तं विद्याकर्मणी समन्वारभेते; पूर्वप्रज्ञा च**। **तं** तादृशञ्च पुरुषं **विद्याकर्मणी** तदनुष्ठितज्ञानकर्मणी **पूर्वप्रज्ञा** पूर्ववासना च तिस्र इमा अनुवर्तन्ते। तत्र ज्ञानकर्मणी भोग्यविषयोपस्थापनाद्यर्थम्; पूर्ववासना तु कर्तृत्वभोक्तृत्वार्थञ्चानुवर्तते। न हि पूर्ववासनां विना कश्चित् कर्तुं भोक्तुं वा प्रभवति। न ह्यनभ्यस्ते विषये कौशलमिन्द्रियाणां भवति। पूर्वानुभव-वासनया प्रवृत्तानामिन्द्रियाणामिह जन्मन्यभ्यासमन्तरेणैव कासु चित् क्रियासु चित्र-कर्मादिलक्षणासु कौशलं दृश्यते; केषाञ्चिचात्यन्तसौकर्ययुक्तास्वपि क्रियासु अकौशलं दृश्यते। तदेतत् सर्वं पूर्ववासनोद्भवानुद्भवनिमित्तकम्। तस्माद्विद्याकर्मपूर्ववासना-लक्षणमेतत्त्रितयं शाकटिकसंभारस्थानीयं परलोकपाथेयमित्यर्थः ॥ २ ॥

---

**सविज्ञानमेवान्ववक्रामती**ति। प्रस्थानात् प्राक् सविज्ञानता प्रागुक्ता। प्रस्थितस्य मध्येमार्गमपि धर्मभूतज्ञानप्रसरवत्ताऽत्रोच्यते इति वा स्यात्। तदा च सविज्ञानमिति क्रिया-विशेषणम्। अन्ववक्रमणकर्ता पूर्ववत् जीव एव; अन्यस्यानिर्देशादिति। **पूर्वप्रज्ञे**ति। यादृशं शरीरं प्रतिपत्स्यते देवतिर्यङ्मनुष्येषु, तत्राहारव्याहारादिनिर्वाहौपयिकी तत्तुल्यप्राग्देहार्जित-वासनेत्यर्थः।

**तद्यथा तृणजलायुका[1] तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्यात्मानमुपसँहरति, एवमेवायमात्मेदं शरीरं निहत्य, अविद्यां गमयित्वाऽन्यमाक्रममाक्रम्यात्मानमुपसंहरति ॥ ३ ॥**

**तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणतरँ रूपं तनुते, एवमेवायमात्मेदँ शरीरं निहत्य अविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरँ रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानाम् ॥ ४ ॥**

1. तृणजलूका. मा.

---

**तद्यथा तृणजलायुका — आत्मानमुपसंहरति** । यथा [तृण] जलूका तृणस्यान्तं अग्रभागं गत्वा **अन्यं** तृणान्तरलक्षणमा**क्रमम्** — आक्रम्यते इत्याक्रमः आश्रय इति यावत् । तम् — **आक्रम्य** आश्रित्य **आत्मानम्** आत्मनोऽपरावयव**मुपसंहरति** पूर्वतृणवियुक्तं करोति, एवमेवायं संसरन् जीवः **इदं** प्राक्तनं शरीरं निहत्य — तस्यैव विवरणम् **अविद्यां गमयित्वेति** — निस्संबोधतामापाद्येत्यर्थः — **अन्यम्** अन्यशरीरलक्षण**माक्रमं** आश्रयमाक्रम्य स्वात्मानं पूर्वस्माच्छरीरा**दुपसंहरति** पूर्वशरीरं त्यजतीत्यर्थः ॥ ३ ॥

ननु देहान्तरारम्भे प्रागुपात्तमेवोपादानं स्वीकृत्य तदेवोपमृद्य स्वर्णकारवत् देहान्तरं करोति, आहोस्विदपूर्वमेवोपादानद्रव्यं स्वीकृत्य करोति । तत्राह **तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणतरं रूपं तनुते — अन्येषां वा भूतानाम्** । **पेशः** सुवर्णम् । तत् करोतीति **पेशस्कारी** सुवर्णकारः **पेशसः** पूर्वोपात्तसुवर्णस्य **मात्राम्** एकदेशमुपादाय यथा अन्यत् कल्याणतरं नवतरञ्च रूपं **तनुते** कुरुते—यद्वा **पेशस्कारी** कोशकारक्रिमिः । स यथा **पेशसः** पट्टतन्तोः **मात्राम्** अंशमुपादाय नवतरं कल्याणतरञ्च रूपं जालात्मकं कुरुते — एवमेवायमात्मा इदं शरीरं निहत्यान्यत् रूपं कल्याणतरं नवतरं कुरुते । **अविद्यां गमयित्वेति** पूर्ववत् । तदेव रूपं विशिनष्टि **पित्र्यं वा** — । **पित्र्यं** पितृभ्यो हितम्, पितृलोकोपभोगयोग्यमित्यर्थः । तथा **गान्धर्वं दैवं प्राजापत्यं ब्राह्मं** गन्धर्वादिलोकोपभोग्यमित्यर्थः । **अन्येषां वा भूतानाम्** । अन्यभूतसंबन्धि वा शरीरं करोतीत्यर्थः । कर्तृत्वञ्चास्य कर्मद्वारकं द्रष्टव्यम् ॥ ४ ॥

स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मय-श्श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्ममयोऽधर्ममयः सर्वमयः, तत् यदेतदिदम्मयोऽदोमय इति। यथाकारी यथाचारी, तथा भवति;

---

**स वा अयमात्मा ब्रह्म — अदोमय इति**। वैशब्दोऽवधारणे। सोऽयं **विज्ञानमयः** ज्ञानरूपो ज्ञानगुणक आत्मा **ब्रह्मैव** सन् अपहतपाप्मत्वादिब्राह्मरूप-युक्तोऽपि सन् **मनोमयः** उपकरणोपकरणित्वलक्षणसंबन्धेन मनःप्रचुरः। मनउप-करणक इति यावत्। एवं **प्राणमय** इत्यादावपि द्रष्टव्यम्। **अतेजोमयः** तेजो-व्यतिरिक्तपूर्वोक्तातिरिक्तमहदहङ्कारादिमयः। तदुपकरणक इत्यर्थः। चतुर्विंशति-तत्त्वमयत्वाच्छरीरस्येतरदनुक्तं सर्वञ्च **अतेजोमय**शब्दसङ्गृहीतमिति द्रष्टव्यम्। **अकाममयः** कामव्यतिरिक्तसंकल्पश्रद्धादिमय इत्यर्थः। **अक्रोधमयः** प्रीतिमय इत्यर्थः। **तद्यदेतदिति** ब्रह्मापेक्षया नपुंसकलिङ्गनिर्देशः। **इदम्मयोऽदोमयः** एतल्लोकपरलोकमय इत्यर्थः। **यथाकारी यथाचारी तथा भवति**। यथा [आ] चरितुं शीलमस्य, सोऽयं यथाकारो यथाचारी। अग्निहोत्रादिकं तु कर्म। तद्यो-ग्यतापादकं सन्ध्यावन्दनादिकं त्वाचरणम्। एतत्, "चरणादिति चेन्न तदुप-लक्षणार्थेति कार्ष्णाजिनिः" इति सूत्रभाष्ये स्पष्टम्। **तथा भवति**। तत्फलयुक्तो

---

**तेजोव्यतिरिक्तेति**। तेजोव्यतिरिक्तम्, तथा तदन्यत् यत् पूर्वोक्तम् तद्व्यतिरिक्तञ्च यत् तन्मय इत्यर्थः। तच्च महदादि। **तद्यदेतदिदम्मयोऽदोमय** इत्यस्य, पूर्वं **पित्र्यं वा गान्धर्वं** वेत्यादिना इदम्मयः अदोमय इति यदेतदुक्तम्, तद्रूपं भवति उक्तविधसर्वमय-त्वविशिष्टजीवात्मरूपं सत् ब्रह्मेत्यर्थ इति भावेनाह **ब्रह्मापेक्षया नपुंसकेति**। शाङ्करे तु, 'किं बहुना तदेतत् सिद्धम्, यत् अयमपरोक्षमयः परोक्षमयश्चेति व्याख्यातम्। **यथाकारी यथाचारी**त्यत्र करणं विधिप्रतिषेधादिमयी नियता क्रिया, आचरणं नाम अनियतमिति शाङ्करम्। स्वयं तु सूत्रदर्शितरीतिमनुरुध्य स्पष्टमाह **अग्निहोत्रादिक**मित्यादि। पूर्वजन्मकृत-कर्माचारानुरूपफलात्मकदेहसंपन्नो भवतीति **तथाभवती**त्यस्यार्थः। **यथे**त्यस्य यत्प्रकारकेत्यर्थ-

**साधुकारी साधुर्भवति; पापकारी पापो भवति; पुण्यः पुण्येन कर्मणा भवति, पापः पापेन। अथो खल्वाहुः काममय एवायं पुरुष इति। स यथाकामो भवति, तत्क्रतुर्भवति; यत्क्रतुर्भवति, तत् कर्म कुरुते; यत् कर्म कुरुते, तदभिसंपद्यते ॥ ५ ॥**

**तदेष श्लोको भवति —**

---

भवतीत्यर्थः। तदेव प्रपञ्चयति **साधुकारी साधुर्भवति पापकारी पापो भवति।** सत्कर्मकारी ब्राह्मणादिरमणीयशरीरयुक्तो भवति, पापकारी श्वचण्डालादिकुत्सित-शरीरयुक्तो भवतीत्यर्थः। एते साधुकारित्वपापकारित्वे अपि प्राक्तनपुण्यपापप्रयुक्ते इत्याह **पुण्यः पुण्येन कर्मणा भवति; पापः पापेन।**

**अथो खल्वाहुः काममय एवायं पुरुष इति।** **अथो**शब्दः पक्षान्तर-परिग्रहे। केचिद्बन्धमोक्षकुशलाः **खल्वाहुः** प्रसिद्धमित्थमाहुः — यद्यपि पुण्या-पुण्ये शरीरग्रहणकारणम्, तथापि कामप्रयुक्त एव हि पुरुषः पुण्यपापे कर्मणी उपचिनोति। तथाच **अयं पुरुषः काममय एव।** काम एवास्य संसारस्य मूलमित्यर्थः। तथाचोक्तमाथर्वणे, 'कामान् यः कामयते मन्यमानः स कामभिर्जा-यते य(त)त्रतत्रे' ति। तस्मात् काममय एवायं पुरुषः। तदेवोपपादयति **स यथा-कामो भवति, तत्क्रतुर्भवति।** पुरुषस्य येन प्रकारेण कामना उदेति, तेन प्रकारेण क्रतुशब्दितोऽध्यवसाय उदेति। **यत्क्रतुर्भवति, तत् कर्म कुरुते।** तदनन्तरमध्यवसितं कर्म कुरुते। **यत्कर्म कुरुते, तदभिसंपद्यते।** तस्य फलञ्च प्राप्नोतीत्यर्थः ॥ ५ ॥

**तदेष श्लोको भवति।** एतस्मिन्नर्थे अयं श्लोकखण्डो भवतीत्यर्थः। तमे-

---

कस्यापि फलरूपप्रकारे तात्पर्यम्। **साधुकारीत्यादिना** इदम्मयत्वप्रपञ्चनम्, **अथोखल्वाहुरि**ति च अदोमयत्वप्रपञ्चनं स्यात्। **काममयः।** **कामः** फलेच्छा। **क्रतुमयः।** **क्रतुः** उपाया-नुष्ठानसंकल्पः।

ननु बहुषु कर्मसु आमुष्मिकफलार्थेषु कृतेषु देहावसाने कतमस्य फलं प्रथममश्नुते इति जिज्ञासायां श्लोकखण्डेन प्रत्युच्यते **तदेष** इत्युपक्रम्य। **तदेवसक्त इतीदम्** अदोमयत्वोप-

'तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य ।'

प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् ।
तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे ॥

इति नु[1] कामयमानः ।

1. इति तु. क.

---

वाह तदेव सक्तः — निषक्तमस्य । लिङ्ग्यतेऽनेनेति लिङ्गं गमकम् । तादृशमस्य जीवस्य मनः यत्र फले निषक्तं निविष्टं भवति, तदेव तत् फलमेव तत्फलारम्भककर्मणा सह देहवियोगकालेऽपि सक्तस्सन् एति प्राप्नोतीत्यर्थः । इत्येष श्लोको भवतीत्यन्वयः ।

प्रकृतमनुसरति प्राप्यान्तं — कर्मणे । अयं संसारी इह लोके फलमुद्दिश्य यत् किञ्चित् कर्म करोति, तस्य कर्मणोऽन्तं भोगेनावसानं प्राप्य — कृत्स्नफलं भुक्त्वेति यावत् — तस्मात् अमुष्माल्लोकादस्मै लोकाय पुनरेति । किमर्थमित्यत्वाह कर्मणे । कर्म कर्तुमित्यर्थः । इति नु[1] कामयमानः । एवं कामयमानः संसरतीत्यर्थः ।

1. तु इति पाठोऽपि दृश्यते ।

---

पादकम् । उत्तरश्लोक इदम्मयत्वोपपादकः । लिङ्गं मन इति । भविष्यज्जन्मानुरूपभावनया तत्सूचकं भवतीत्यर्थः । मनसो लिङ्गत्वम्—अयमात्मा तत्फलं प्राप्स्यति, तद्भावभावनया अन्ते तद्विषयभावनाशालिमनस्कत्वादित्यनुमानतो ग्राह्यम् । निषिक्तमस्येत्यन्तः श्लोकखण्डः । अस्योत्तरार्धं कामान् यः कामयते इति पूर्वोदाहृताथर्वणश्लोकोत्तरार्धतुल्यं स्यात् । तद्धि, 'पर्याप्तकामस्य कृतात्मनश्च इहैव सर्वे प्रविलीयन्ति कामाः' इति । यद्वा अथाकामयमान इत्येतदनन्तरे योऽकाम इति वाक्ये कथञ्चित् खण्डश एतदुत्तरार्धानुवादः स्यात् । तदा च, 'योऽकामो निष्काम आप्तकामो ब्रह्मैव सन् ब्रह्माप्येति स आत्मकामः' इति रीत्या उत्तरार्धं स्यात् । अत एव निष्कामविषयकत्वादत्र कामयमानप्रस्तावे श्रुत्या नान्ववादि । उत्तरश्लोकस्तु पूर्णः कामयमानविषयकः । प्रकृतमनुसरतीति । 'साधुकारी साधुर्भवती' ति प्रागुक्तमिदम्मयत्वमधिकृत्य श्लोकमाहेत्यर्थः ।

एवं तावत् कामयमानस्य कामगोचरफलानुभवः कालान्तरे देहान्तरपरिग्रहेणेत्युक्तम् ।

**अथाकामयमानः — योऽकामो निष्काम आप्तकाम आत्मकामः,**

---

एवमविद्वद्विषयं संसारं सप्रपञ्चमुपवर्ण्योपसंहृत्याथ विदुषः तद्वैलक्षण्यं दर्शयति **अथाकामयमानः — ब्रह्माप्येति**। अथशब्दोऽर्थान्तरपरिग्रहे । **अकामयमानः** वीतरागः । अत्रोच्यत इति शेषः । **योऽकामो निष्काम आप्तकाम आत्मकामः** । यः **अकामः** कामशून्यः। कथं कामशून्यतेत्यत्राह **निष्काम** इति । निर्गताः कामाः यस्मात् स तथोक्तः । पूर्वस्थितानां कामानां निर्गतत्वादकामत्वमुपपद्यत इति भावः । उत्तरकामानां सत्त्वे निवृत्त. पूर्वकामस्यापि कथमकामत्वमित्यत आह **आप्तकाम** इति । आप्ताः कामाः येन स तथोक्तः । अतोऽनुत्पन्नोत्तरकाम इत्यर्थः । कथमाप्तकामत्वमित्यत्राह **आत्मकाम** इति । आत्मैव कामो यस्य स तथोक्तः । आत्मव्यतिरिक्तस्य काम्यस्य वस्तुनोऽभावात्, आत्मरूपकाम्यस्य नित्यसिद्धत्वात् आप्तकामत्वम्,

---

अकामयमानस्य तु आमुष्मिकं फलं प्राप्स्यतः ततः प्रागेवात्रैव देहे तत्फलानुभवप्रादुर्भाव इति विशेषमाह **अथाकामयमान इति** ।

**अकामो निष्काम** इति क्रमेणैश्वर्यकैवल्यकामनाविरहविवक्षा स्यात् । इमे ऐश्वर्यकैवल्ये यस्य मुमुक्ष्वपेक्षितस्य मुक्तिरूपस्य महानन्दसमुद्रस्य द्रप्सबिन्दुभूते, तस्य प्राप्तौ एनयोरप्याप्ततया कथमत्र कामनेति दर्शयति **आप्तकाम** इति । एतद्विषयकामनया यत् प्राप्यम्, तत् काम्यं प्राप्तमेव ह्यनेन मुखान्तरेणेत्यर्थः । तत्र हेतुरुच्यते **आत्मकाम** इति । चिदचित्प्रपञ्चात्मभूतवस्तुकामनया प्राप्ये फले हि चिदचिदनुभवोऽप्यवश्यमन्तर्भवतीति भावः ।

**योऽकाम** इत्यादिवाक्यमविद्वदपेक्षया विदुषि वैलक्षण्यप्रदर्शनार्थमिति निर्विवादम् । अतएवास्य वाक्यस्य योजना, य आत्मकामः तस्य प्राणा नोत्क्रामन्तीति प्राणानुत्क्रमणविधानप्रधाना न भवति । अशक्यश्च तथोद्देश्यविधेयवचनम्-अविद्वद्विशेषात् । किंतु य आत्मकामः, स ब्रह्मैव सन् ब्रह्माप्येतीत्येवंरूपैवेतीदमपि भाष्ये व्याख्यानशैल्यैवावगम्यते । एवञ्च, 'न तस्य प्राणा उत्क्रामन्ती' त्यवान्तरवाक्यं शङ्काविशेषशमनार्थं प्रवृत्तमिति **श्रीभाष्यादितः** सुबोधमेव ।

अत्रेत्थमप्यर्थवर्णनं संभवति । 'न तस्य प्राणा उत्क्रामन्ती' ति वाक्यं प्राणोत्क्रमणात् प्रागेवेत्येतदर्थपरतया उत्तरवाक्यशेषतया अवान्तरवाक्यरूपेण प्रवृत्तम् । तथाच य आत्मकामः,

**न तस्य प्राणा उत्क्रामन्ति, ब्रह्मैव सन् ब्रह्माप्येति ॥ ६ ॥**

---

अत एवाकामत्वञ्चेत्यर्थः। एतादृशस्तु **ब्रह्मैव सन् ब्रह्माप्येती**ति योजना। **ब्रह्मैव सन्** आविर्भूतगुणाष्टकरूपब्राह्मरूपस्सन् **ब्रह्माप्येति** परब्रह्मणि लीनो भवतीत्यर्थः। अपिपूर्वस्य एतेर्लयार्थकत्वात्। लयो नाम तद्विविक्ततया दर्शनाभावः। अपहतपाप्मत्वादिब्राह्मरूपसाधर्म्येण परब्रह्मविविक्ततया दर्शनायोग्यो भवतीत्यर्थः। नन्वेतन्न संभवति। ब्राह्मरूपाविर्भावो हि परं ब्रह्मोपसन्नस्यैव भवति, 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रवणात्। परब्रह्मोपसंपत्तिर्नाम देशविशेषविशिष्टब्रह्मप्राप्तिरेव। सा च देशविशेषे अर्चिरादिमार्गगतिमन्तरेण न संभवति। तद्गतिश्च भूतसूक्ष्मयुक्तप्राणादिरूपलिङ्गशरीरयुक्तस्यैव भवति। तद्योगश्च कर्माधीनः। विधूतकर्मणश्चोत्क्रान्तप्राणतया देहेन्द्रियप्राणयोगासंभवेनार्चिरादिगत्या देशविशेषविशिष्टब्रह्मप्राप्त्यसंभवात् ब्राह्मरूपाविर्भावाभावेन, 'ब्रह्मैव सन् ब्रह्माप्येती' ति नोपपद्यत इत्याशङ्क्याह **न तस्य प्राणा उत्क्रामन्ती**ति। तस्मात्=अकामत्वाद्युक्तगुणाज्जीवात् प्राणा नोत्क्रामन्तीत्यर्थः। 'नटस्य शृणोती' तिवत् अपादानलक्षणसंबन्धे षष्ठी। अत एव समानप्रकरणे माध्यन्दिनशाखायाम्, 'न तस्मात् प्राणा उत्क्रामन्ती' त्यतिस्पष्टं पञ्चमी श्रूयते।

इदञ्च वाक्यमुत्क्रान्तिपादे चिन्तितम्। तत्र हि — 'अत्र ब्रह्म समश्नुते' इति अत्रैव विदुषो ब्रह्मभावश्रवणात् नोत्क्रान्तिरिति प्राप्ते उच्यते, "समाना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य"। आसृत्युपक्रमात् = आगत्युपक्रमात् नाडीप्रवेशात् प्राक् उत्क्रान्तिर्विद्वदविदुषोः समाना। 'शतञ्चैका च हृदयस्य नाड्यस्तासां

---

स प्राणोत्क्रमणात् प्रागेव ब्रह्म भवतीति विशिष्टवाक्यार्थः। एवञ्च **न तस्य प्राणा** इत्यस्य मुमुक्षुसंबन्धिप्राणाः देहात् यावन्नोत्क्रामन्ति, तावदित्यर्थपरत्वात्, सर्वथा तस्य, देहात् प्राणोत्क्रमणं कदापि न भवतीत्यर्थे तात्पर्याभावात् शरीरस्योत्क्रमणापादानत्वेऽपि न दोषः। **ब्रह्मैवसन्निति** एवकारघटितांशोक्तः एतद्देशावच्छेदेन ब्रह्मभावः ब्रह्मानुभवरूप एव वाक्ये विधेयांशः। वाक्यस्य एवकारसत्त्वे तत्समभिव्याहृतार्थनिर्भरत्वं हि संप्रतिपन्नम्। पश्चाद् ब्रह्मण्यप्ययस्तु अर्थप्राप्तोऽनूद्यते, तदपलापो मा भूदिति। एवञ्च वाक्यमिदं, "अमृतत्वञ्चानुपोष्य" इति सूत्रोक्तार्थप्रधानम्। अत एवोपरितनः साक्षिभूतः श्लोकः तावन्मात्रविषयक आञ्जस्येनान्वेतीति।

नूनमीदृश एव कश्चिद् वाक्यार्थो व्यासार्यैरासृत्युपक्रमाधिकरणे यादवप्रकाशाभिमत-

मूर्धानमभिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेती ' ति विदुषोऽपि नाडीविशेषेणोत्क्रमण-श्रवणादुत्क्रान्तिरवर्जनीयैव । ' अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ' इति विदुषोऽत्रैव श्रूयमाणं यदमृतत्वम्, तत् अनुपोष्य = शरीरेन्द्रियसंबन्धमदग्ध्वैव उत्तरपूर्वाघाश्लेषविनाशरूपममृतत्वमुच्यते । ' अत्र ब्रह्म समश्नुते ' इति चोपासन-कालब्रह्मानुभवाभिप्रायम् ।

" तदापीतेः संसारव्यपदेशात् " । अवश्यञ्च तत् अमृतत्वमदग्धदेहसंबन्ध-स्यैव वक्तव्यम् । कुतः ? आपीतेः संसारव्यपदेशात् । अपीतिः = अप्ययः । आब्रह्माप्ययं संसारो हि व्यपदिश्यते ; ' तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ संपत्स्ये इति ', अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि ' इति व्यपदेशात् ।

" सूक्ष्मं प्रमाणतश्च तथोपलब्धेः " । देवयानेन पथा गच्छतोऽपि विदुषः, ' तं प्रतिब्रूयात् सत्यं ब्रूया ' दिति चन्द्रमस्संवादस्य प्रमाणप्रतिपन्नत्वाच्च सूक्ष्मं शरीरमा-मोक्षमनुवर्तत इति अभ्युपगन्तव्यम् । न ह्यशरीरस्य चन्द्रमसा संवादः संभवति ।

" नोपमर्देनातः " । अतः ' अथ मर्त्योऽमृतो भवती ' ति श्रूयमाणममृतत्वं शरीरेन्द्रियसंबन्धानुपमर्देनैवोत्तरपूर्वाघाश्लेषविनाशरूपमङ्गीकर्तव्यम् ।

" अस्यैव चोपपत्तेरूष्मा " । अस्य = सूक्ष्मशरीरस्य क्वचिदुपसंहृतत्वादेव विदुषोऽपि म्रियमाणस्य क्वाचित्क ऊष्मोपलभ्यते ।

" प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम् " । ननु, ' योऽकामो

---

तयाऽनूदितः, " तदविरुद्धम् " इत्युक्तिपूर्वं गृहीतश्च ; परन्तु उपर्यनादृतः । तदेवम् – यादव-प्रकाशैर्ह्युक्तम्, शारीरादुत्क्रान्तिरत्र न प्रतिषिध्यते, येनाप्रसक्तप्रतिषेधः स्यात्। किंतु शारीरा-दनुत्क्रान्तिं स्थितामेवानूद्य तस्मिन् प्राणानुत्क्रान्तिकाले जीवद्दशायामेव ब्रह्मानुभव उच्यत इति । अत्र खण्डनमेवम् – यथा शारीरादनुत्क्रान्तिमनूद्य ब्रह्मानुभवविधानम्, तथा शरीरादनुत्क्रान्ति-मनूद्यापि तद्विधानसंभवात् शरीरस्यापादानत्वमनङ्गीकृत्य शारीरस्यापादानत्वं " शारीरात् " इति दर्शयन् शारीरककृत् अर्थविशेषं मनसि निदधाति । स क इति चेत् – तच्छब्दस्य शारीरपरत्वे वाक्यस्यानुवादरूपत्वत्यागेन प्रतिषेधपरत्वसिद्धिः । तेन ब्रह्मविदं मरणकाले प्राणा जहतीति भ्रमव्युदास इति । अत एव श्रीभाष्यादिषु एतदनुगुणा वर्णनसरणिरिति अत्रापि भाष्ये सैव

निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ती' ति विदुषो देहादुत्क्रान्तिः प्रतिषिद्धा । न चेदं शारीरापादानकोत्क्रमणनिषेधपरमिति वाच्यम् — 'यत्रायं पुरुषो म्रियते उदस्मात् प्राणाः क्रामन्त्याहो ने' त्यार्तभागप्रश्ने, 'नेति होवाच याज्ञवल्क्यः । स उच्छ्वयत्याध्मायत्याध्मातो मृतश्शेते' इति उच्छूनत्वादीनां शरीरधर्माणां प्रतिपादनेन शरीरापादानकोत्क्रमणप्रतिषेधस्यैव युक्तत्वात् । न हि शारीरस्योच्छूनत्वमाध्मातत्वं शयितृ(यान)त्वं वा युज्यते । अतः शरीरापादानकोत्क्रमणनिषेधात् नोत्क्रान्तिर्विदुष इति चेन्न—शारीरादेवोत्क्रमणं प्रतिषिध्यते । एकेषां= माध्यन्दिनानामाम्नाये विस्पष्टम्, 'योऽकामो निष्काम आत्मकाम आप्तकामो — न तस्मात् प्राणा उत्क्रामन्ती' ति शारीरापादानकोत्क्रमणप्रतिषेधात् । काण्वशाखायां तु 'न तस्य प्राणा' इति षष्ठी, 'नटस्य शृणोती' तिवत् अपादानत्वलक्षणसंबन्धपरा । 'उदस्मात् प्राणाः क्रामन्त्याहो ने' त्यार्तभागप्रश्ने तु विदुषोऽप्रस्तुतत्वेनाविद्वद्विषयत्वावश्यम्भावेन अविदुषश्च शरीरादुत्क्रान्तेः प्रतिषेद्धुमशक्यतया तत्रापि शारीरापादानकोत्क्रमणप्रतिषेधपरत्वस्यैव युक्तत्वात् । न च तत्र वाक्यशेषश्रुतानामुच्छूनत्वादीनामात्मन्यनुपपत्तिः; [1]देहात्मनोरभेदोपचारेण देहधर्माणामुच्छूनत्वादीनामात्मन्यभिधानोपपत्तेः । शरीरापादनकोत्क्रान्तिप्रतिषेधवादिनापि, 'आत्मकामः—न तस्मात् प्राणा उत्क्रामन्ती' ति माध्यन्दिनशाखावाक्ये अभेदोपचारस्यावश्याश्रयणीयत्वात् । न च प्राणानां शारीरादुत्क्रान्तेरप्रसक्ततया प्रतिषेधो न युक्त इति वाच्यम् — वृक्षादुड्डीयमानविहङ्गमसंघवत् यथायथं गमनसंभवात्; 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इति देहवियोगानन्तरब्रह्मसंपत्तिवचनेन तदानीमेव शारीरात् प्राणोत्क्रमणस्य प्रसक्तत्वाच्च । तथाच सूक्ष्मशरीरसाध्यार्चिरादिगत्यभावे ब्रह्मसंपत्तेः तत्साध्याया अनुपपत्तिरिति शङ्कापरिहाराय, 'न तस्य प्राणा उत्क्रामन्ती' त्युच्यत इति निरवद्यम् । अतो विद्वदविदुषोरुत्क्रान्तिः समानेति स्थितम् । प्रकृतमनुसरामः ॥ ६

1. हेतुवाक्यमिदं ख. ग. कोशस्थम् ।

रीतिरिति । तथाचात्राकामयमानप्रकरणे ऐहिकब्रह्मानुभवः श्लोकेन कथयिष्यते । कामयमानवैलक्षण्यप्रतिपादनं तत्रैव वाक्ये सेत्स्यति । ततः प्राक् तु कामयमानस्य फलान्तरमिव देहवियोगात् पश्चाद् भवन् अकामयमानस्य ब्रह्मानुभवः, तत्संपत्त्यर्थः प्रायणकाले प्राणाद्यनपायश्च ऐहिकानुभवेन सह न तस्य प्राणा उत्क्रामन्तीत्यादिनोच्यत इति निष्कर्षः ।

**तदेष श्लोको भवति —**

**यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।**
**अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ इति ।**

**तद्यथाऽहिनिर्ल्वयनी[1] वल्मीके मृता प्रत्यस्ता शयीत, एवमेवेदँ शरीरँ शेते । अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव ।**

1. अहिनिल्वयनी. मा.

---

**तदेष श्लोको भवति ।** **तत्** तत्र ब्रह्मविदि विषये एष श्लोकः प्रवृत्तो भवतीत्यर्थः । श्लोकमेवाह **यदा सर्वे — समश्नुत इति ।** **कामाः** दुर्विषयगोचरमनोरथाः **अस्य** जीवस्य **हृदि श्रिताः** हृद्गताः सर्वे यदा शान्ता भवन्ति, **अथ** तदनन्तरमेवोपासको मर्त्यः सन् **अमृतो भवति** विनष्टाश्लिष्टपूर्वोत्तराघो भवति । **अत्र ब्रह्म समश्नुते** अत्रैवोपासनवेळायां ब्रह्मानुभवनीत्यर्थः । पापसंबन्धराहित्येन, ब्रह्मानुभवेन चेहैव मुक्त इव भवतीति यावत् । **तद्यथाऽहिर्निर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते ।** यथा **अहेर्निल्वयनी** सर्पस्य निर्मोकः सर्पेण वल्मीके **प्रत्यस्ता** विसृष्टा सर्पासंसक्ता अत एव मृता निष्प्राणाऽपि दूरे पश्यतां सर्पवदवभासमाना शयीत, एवमेव ब्रह्मविदः शरीरमहम्बुद्ध्यगोचरतया परित्यक्तमपि, पश्यतां ब्रह्मविच्छरीरमिव भासमानं शेते इत्यर्थः । **अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव । अथ** दर्शनसमानाकारब्रह्मविद्याधिगमोत्तरकालम् **अयं** ब्रह्मवित् **अमृतोपि** मरणरहितोऽपि मरणात् प्रागप्य**शरीरः** अशरीरकल्प एवेत्यर्थः । शरीरस्पर्शिपरिवादादिजनितविषादाद्यभावादिति भावः । **प्राणो ब्रह्मैव ।** प्राणभृत्त्वेऽपि तादात्विकब्रह्मानुभवसत्त्वात् आविर्भूतब्राह्मरूप इवेत्यर्थः । **तेज एव** अज्ञानलक्षणान्धकारप्रतिभट एवेत्यर्थः ।

---

**अशरीरोऽमृत** इत्यादेः स्वयं वक्ष्यमाणोऽर्थः **अथशब्दस्य** उत्क्रमणानन्तरमित्यर्थे न घटते । अतोऽन्यमर्थमाह **दर्शनसमानाकारेति** । **अथशब्दस्य** उत्क्रमणानन्तरमित्यर्थविवक्षायां तु वाक्यार्थ एवं स्यात् — **अशरीरः** त्यक्तस्थूलशरीरः, अत एव नित्यत्वात् **अमृतो** मरणरहितः **प्राणः** अनूत्क्रान्तमुख्यामुख्यप्राणभृत् **ब्रह्मैव** मध्येमार्गमपि ब्रह्मानुभवपर एव **तेज एव** 'प्राणस्तेजसी' त्युक्तरीत्या भूतसूक्ष्मविशिष्ट एव यावत्प्रकृत्यतिलङ्घनमिति । अनेन, 'न तस्य प्राणा उत्क्रामन्ती' ति पूर्वोक्तार्थविशदीकरणम् । एवम्भूतोऽयं येन मार्गेण ब्रह्मानुभवाय याति, स

**सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः ॥ ७ ॥**

**तदेते श्लोका भवन्ति —**

**अणुः पन्था विततः[1] पुराणो माँ स्पृष्टोऽनुवित्तो मयैव ।**

1. वितरः पा०.

---

एवं प्राप्तब्रह्मविद्यो जनक आह [। [1]किमिति] **सोहं भगवते सहस्रं ददामीति** — । स्पष्टोऽर्थः ॥ ७ ॥

**तदेते श्लोका भवन्ति । तत्** तत्र = तस्मिन् विषये, ब्रह्मविद्विषये एते श्लोका भवन्तीत्यर्थः । तानेवाह **अणुः पन्था विततः पुराणो मां स्पृष्टोऽनुवित्तो मयैव । अणुः** दुर्विज्ञानः मानान्तरानधिगम्यः, **विततः** वेदान्तेषु विस्तरेण प्रतिपादितः, **पुराणः** अनादिः, **मां स्पृष्टः** उपासकं मां प्राप्तः — शताधिक-

1. इदं क. कोशे ।

---

वक्ष्यते **अणुः पन्था** इत्यनन्तरश्लोके इति ततः प्रागिह प्रस्थानपरिकरवर्णनमनेन वाक्येनेति । पूर्वं स्वप्नसुषुप्तिरूपविमोक्षौ प्रस्तुत्य पश्चाद् देहवियोगरूपं विमोक्षमुपपादयितुमारेभे याज्ञवल्क्यः । तस्यावसितत्वात् जनकः पुनः प्रार्थयितुमारभते । यदि पूर्ववदिहापि याज्ञवल्क्यवचनावसाने इति-शब्द आवश्यक इति मन्यते, तर्हि **अत्र ब्रह्म समश्नुत इतीति** श्रुत इतिशब्द एव तथाऽस्तु । **तद् यथे**त्यादिकम् उक्तार्थः सम्यक् स्वयं ज्ञात इति व्यक्तये सदृष्टान्तं जनकेनैव कृतमुपपादनमिति भाव्यम् । **तदेते श्लोका** इत्यारभ्य तु पुनर्याज्ञवल्क्यो वक्ष्यति ।

**सहस्रं ददामीतीति** । चरमदेहवियोगरूपस्य 'यावन्न विमोक्ष्ये' इति श्रुत्युक्तस्य मोक्षस्य याज्ञवल्क्येनोक्ततया अनुक्तत्वाभावात्, 'अत ऊर्ध्वं विमोक्षायैव ब्रूही'ति नोक्तमिदानीं जनकेन । एवमपि मुक्तस्य ब्रह्मसंपत्तिप्रकारः, गतिविशेषः, ब्रह्मस्वरूपम्, मुक्त्युपायभूत-वैराग्यकर्मानुष्ठानपरतत्त्ववेदनादि च विशदमुपदेष्टव्यमस्तीति पूर्णोपदेशस्य वृत्तत्वाभावात् विदेहानां स्वात्मनश्च तस्मै संप्रत्यनिवेदनम् । इदानीमेव हि तथा निवेदने याज्ञवल्क्यः, 'उपदेष्टव्यं नावशिष्यत इति धिया जनकेन सर्वसमर्पणं कृतम् । स सर्वं जानाती'ति जातु मन्येत । ततो जोषं स्यादिति जनको ज्ञातव्यशेषसद्भावव्यञ्जनाय सहस्रदानमात्रमाविश्चकारेति ।

**वितत** इत्यत्र **वितर** इति पाठान्तरे शाङ्करदर्शितोऽर्थः 'स्पष्टतरणहेतु'रिति । माध्यन्दिने **वितर** इत्येव पठ्यते । **पुराणः अनादि**रिति ।

नागवीथ्युत्तरं यस्तु सप्तर्षिभ्यश्च दक्षिणम् ।
उत्तरः सवितुः पन्थाः देवयानस्तु स स्मृतः ॥ (वि. पु. २-८-९०)

इत्युक्तरीत्या सप्तर्षिस्थाननक्षत्रवीथिमध्यगतस्य देवयानमार्गस्य तत्राऽऽतिवाहिकानाञ्चानित्यत्वेऽपि प्रवाहानादित्वमक्षतम् । **मां स्पृष्टः** मदीयदेहस्पर्शी । **अनुवित्तो मयैवे**त्यस्य, उत्तरश्लोके

**तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं[1] विमुक्ताः ॥ ८ ॥**
**तस्मिञ्छुक्लमुत नीलमाहुः पिङ्गलँ हरितं लोहितश्च ।**
**एष पन्था ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित् पुण्यकृत् तैजसश्च ॥ ९ ॥**

1. ऊर्ध्वो. मा

नाडीद्वारा स्वदेहस्पर्शीत्यर्थः — **मयैवानुवित्तः** योगदशायां मयैवानुभूतश्च योऽयं पन्थाः अर्चिरादिमार्गः, तेन मार्गेण **धीराः** प्रज्ञाशालिनो ब्रह्मविदः **इतः** अस्मात् देहात् विमुक्तास्सन्तः **ऊर्ध्वं** सर्वेभ्यो लोकेभ्य ऊर्ध्वं **स्वर्गं लोकं** भगवल्लोकम् — अत्र स्वर्गशब्दः प्रकरणाद्भगवल्लोकपरः — **अपियन्ति** प्राप्नुवन्तीत्यर्थः ॥ ८

**तस्मिन् शुक्लमुत — तैजसश्च ।** **तस्मिन्** अर्चिरादिके मार्गे **शुक्लं नीलं पिङ्गलं हरितं लोहितम्**=आदित्यमित्यर्थः । 'असौ वा आदित्यः पिङ्गळ एष शुक्ल एष नील एष पीत एष लोहितः' इति श्रुत्यन्तरात् । एतादृशमादित्यं तस्मिन् मार्गे सन्तमाहुः शास्त्रविदः । **एष पन्थाः** एषोऽर्चिरादिः पन्थाः **ब्रह्मणा हानुवित्तः** परब्रह्मणा सह तत्प्रापकतया ह प्रसिद्धं यथा तथा संबद्धः । ब्रह्मपथ इति श्रुतिप्रसिद्ध इति यावत् । **तेन** उक्तेनार्चिरादिमार्गेण **पुण्यकृत् ब्रह्मवित्** पूर्वं पुण्यं कृत्वा तद्वशेन शुद्धान्तःकरणो ब्रह्मविच्च, **तैजसश्च** तेजस्संबन्धी तेजउपासकः—पञ्चाग्निविद्यानिष्ठश्चेति यावत् — **एति** गच्छतीत्यर्थः । 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इति श्रुत्यन्तरे पञ्चाग्निविदां ब्रह्मविदाञ्चार्चिरादिगतिश्रवणात् । यद्यपि पञ्चाग्निविद्याऽपि ब्रह्मात्मकप्रत्यगात्मविद्यात्वात् ब्रह्मविद्यैव, — अथापि विद्यान्तरवत् ब्रह्मविशेष्यकविद्यात्वाभावात् **ब्रह्मवित् तैजसश्चे**ति पृथगुक्तिरिति द्रष्टव्यम् ॥ ९ ॥

**ब्रह्मणा हानुवित्त** इत्यत्रैवार्थवर्णने तु मत्प्रापकः आविर्भूतब्राह्मरूपयथावस्थितमत्स्वरूपप्रापक इत्यर्थः स्यात् । स क्लिष्टः **पञ्चाग्नी**ति । **तैजस** इति तेजःशब्देनाग्निग्रहणमिति भावः । यद्वा तेजश्शब्दः स्वयम्प्रकाशजीवपर इति । कार्याधिकरणे अन्यमतनिराकरणावसरे **व्यासार्यैः**, 'तेनैति ब्रह्मवित् पुण्यकृत् तैजसश्चेत्यत्र ब्रह्मविद एव पदान्तरविशेष्यत्वसंभवात् तदपि नाब्रह्मविदां देवयानगतौ प्रमाणम्' इत्युक्तम् । तत्र तैजस इत्यस्य पञ्चाग्निविद्यानिष्ठ इत्यर्थः अन्योक्तः । ब्रह्मविद एव पुण्यकृत्त्वमिव तैजसत्वमप्येकं विशेषणम् । चकारो विशेषणसमुच्चये इति स्वयं व्यासार्याशयावगमात् **पुण्यकृत्तैजसपदे** कर्मयोगज्ञानयोगानुष्ठातृपरे अभिमते स्याताम् । अत्र भाष्ये दर्शितमपि स्वरसमेव । पुण्यकृत्त्वं ब्रह्मवित्तैजसोभयविशेषणमिदानीम् । 'तैजसः पुण्यकृच्चे'ति माध्यन्दिनपाठो विशेषणसमुच्चये स्वरसः ।

**अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायाँ रताः ॥ १० ॥
अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः ।
ताँस्ते प्रेत्याभिगच्छन्त्यविद्वांसोऽबुधो जनाः ॥ ११ ॥**

---

ब्रह्मवित्पुण्यकृदित्युक्तं कर्माङ्गकज्ञानस्य ब्रह्मप्राप्तिहेतुत्वं स्पष्टयति **अन्धं तमः — विद्यायां रताः । ये अविद्यामुपासते** — अत्र अविद्याशब्दः कर्मवाची । 'अविद्या कर्मसंज्ञाऽन्ये' ति, 'ततुँ मृत्युमविद्यये' ति च वचनात् — ये केवलं स्वर्गादिफलोद्देशेन कर्मानुतिष्ठन्ति, न तु ब्रह्मज्ञानार्थितया, ते **अन्धं तमः प्रविशन्ति** दुस्तरं संसारलक्षणमन्धकारं प्रतिपद्यन्त इत्यर्थः । **य उ विद्यायां रताः**— उशब्दोऽवधारणे — नित्यनैमित्तिकं कर्म परित्यज्य विद्यायामेव यतन्ते ये, तेऽपि, [[1]ततः] 'मोहात् तस्य परित्यागस्तामसः परिकीर्तितः' इत्युक्तरीत्या [[1] तस्मात्] तामसत्यागवशात् [**ततो**?] **भूय इव तमः** — इवशब्द एवार्थः । प्रविशन्तीत्यनुषङ्गः — पूर्वस्मादधिकं संसारमेव प्रविशन्तीत्यर्थः । उक्ततामसत्यागप्रयुक्तमनोमालिन्येन ज्ञानानिष्पत्त्या फललेशमप्यलब्ध्वा पतिता भवन्तीत्यर्थः । नानेन वचनेन ज्ञानकर्मणोः समुच्चय इति मन्तव्यम्; ज्ञानव्यतिरिक्तोपायनिषेधकवचनैः ज्ञानस्य मोक्षोपायत्वप्रतिपादकवचनैः, कर्मणां ज्ञानाङ्गत्वप्रतिपादकवचनैश्च, 'नान्यः पन्था अयनाय विद्यते', 'ब्रह्मविदाप्नोति परम्', 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेने' त्यादिभिर्भूयोभिर्विरोधप्रसङ्गात् ॥ १० ॥

अन्धतमसप्रवेशे किं भवतीत्यत्राह **अनन्दा नाम — जनाः । अनन्दाः** सुखलेशशून्याः अन्धतमसावृताः केचन लोकाः सन्ति । तान् लोकान् मृत्वा गच्छन्ति ते । के? ये **अविद्वांसः** ब्रह्मज्ञानहीनाः (शून्याः); **अबुधः** ये प्रत्यगात्मविद्याशून्याः । पञ्चाग्निविद्याशून्या इति यावत् । पूर्वं तयोरेव प्रस्तुतत्वादिति द्रष्टव्यम् । बुध इति बुध्यतेः क्विबन्तस्य प्रथमाबहुवचनान्तस्य रूपम् ॥ ११ ॥

1. तत इति, तस्मादिति तद्विवरणञ्च क. कोशमात्रस्थम् । पूर्वस्मादित्यस्य तत इत्येतदर्थत्वे तु **ततो भूय इव तम** इति प्रतीकधारणं स्यात् ।

---

ज्ञानकर्मसमुच्चयस्थापनार्थावुपरितनौ मन्त्रौ प्राक् संहितायामीशावास्यानुवाके पठितावनूद्येते **अन्धमिति** । समसमुच्चयपक्षं खण्डयति **नानेन वचनेनेति** । विवृतमिदमपि ईशावास्ये

**आत्मानञ्चेद्विजानीयादयस्मीति पूरुषः।**
**किमिच्छन् कस्य कामाय शरीरमनु संज्वरेत् ॥ १२ ॥**
**यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन् सन्देहे[1] गहने प्रविष्टः।**

1. संदेह्ये शां. संदोहे ( संदोघे ) मा. सदेहे. पा०.

---

**आत्मानश्चेद्विजानीयात् — संज्वरेत्।** यदि **अयं पूरुषः** जीवः स्वात्मानम्, **अयमस्मि** एतादृशोऽहमस्मि = देहेन्द्रियमनःप्राणधीविलक्षणो ब्रह्मात्मकोऽहमस्मीति विजानीयात्, तदा देहेन्द्रियोपभोग्येषु लोकादिषु स्पृहाया अभावात्, देहाद्यभिमानकाले स्वबन्धुभूततयाऽभिमतभार्यापुत्रादेरप्यभावाच्च **किमिच्छन्** स्वस्य किं वा फलमिच्छन् **कस्य कामाय** स्वानुबन्धिनो वा कस्य दारपुत्रादिकस्याभीष्टाय **शरीरमनु संज्वरेत्** शरीरानुबन्धिफलमनुस्मृत्य कुतस्तप्येदि(ते)त्यर्थः। अतोऽसौ कृतकृत्य एवेत्यर्थः ॥ १२ ॥

पुनरपि स्तौति **यस्यानुवित्तः — प्रविष्टः। गहने** विषमे **अस्मिन्** अनर्थशतसंकटे देहे प्रविष्टस्सन् **यस्य** जीवस्य **आत्मा** स्वरूपं प्रकृतिविविक्तत्वब्रह्मात्मकत्वश्रवणमननाभ्यासेन**अनुवित्तः** अवगतः **प्रतिबुद्धः** ध्यातश्च भवतीत्यर्थः।

---

" विद्याश्चाविद्याश्चे 'ति मन्त्रान्तरेण। कर्मनिषेधवचनानि काम्यविषयाणीति दर्शयितुम् **आत्मानञ्चे**ति मन्त्रः। **किमिच्छन्नि**ति। आत्मनि विज्ञाते तस्याऽऽनन्दरूपस्य आकर्षकत्वात् अन्यत्रेच्छा न प्रवर्तेत इति भावः। उत्तरमन्त्रस्य परमात्मविषयत्वे अयमप्यात्मा परमात्मा काममस्तु। **अभावाच्चे**ति। आत्मस्वरूपानुबन्धित्वाभावाच्चेत्यर्थः।

अन्यकामना न भवतीत्युक्तम्। 'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि' इत्युक्तरीत्या तस्य परमं काम्यं दर्शयति **यस्ये**ति मन्त्रेण। **सन्देह** इत्यत्र 'सन् देहे' इति च्छेदो भाष्यसंमतः। **समि**ति निपात इव शाङ्करे। सन्देह्ये इति च पाठः। दिह उपचये। अनेकानर्थसंकटोपचये इति तत्राभिमतोऽर्थः। अत्र भाष्ये जीवपरतयैवायं मन्त्रो व्याख्यातः। **सहीत्यादे**रेवं योजना – स हि लोकः सर्वस्य कर्ता, तस्य स उ लोक एवेति। **स हि** इत्यस्य यः स इत्यर्थः। **श्रीभाष्ये** ( २-३-२२ ) तु " अत्र आत्मेति परः प्रतिपाद्यते " इति भाषितम्। व्याख्यातञ्च व्यासार्यैः, "यस्य जीवस्य **अनुवित्तः** – विद ज्ञाने – उपास्य इत्यर्थः। यद्वा विदिर्लाभे। प्राप्यः। **प्रतिबुद्ध आत्मा** प्राज्ञ आत्मा " इति। एवञ्च पूर्णो मन्त्र एवं व्याख्येयो भवति – **यस्ये**त्यस्य **अस्मिन्नि**ति पदं प्रतिसंबन्धि। उक्तरीत्या सर्वविषयविरक्तस्य यस्य

**स विश्वकृत् स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव ॥ १३ ॥**

**इहैव सन्तोऽथ विद्मस्तद् वयं न चेदवेदि [1] र्महती विनष्टिः ।**

**य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति ॥ १४ ॥**

1. अवेदीः. मा.

---

**स विश्वकृत्** स एव लोककृत् । ईश्वरवत् जगद्वन्द्य इति यावत् । तत्र हेतुमाह — **स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव** । **लोकः** आश्रयभूतः उ (हि?) सर्वश्रुतिप्रसिद्धः सर्वस्य कर्ता य ईश्वरः, तस्यापि स [तु] पूर्वोक्तब्रह्मवित् [तु] **लोक एव** आधार एव । 'ज्ञानी त्वात्मैव मे मत' मिति भगवतैव गीतत्वात् भगवतो ज्ञानिनं विना आत्मसत्ताया अभावादिति भावः । उशब्दः प्रसिद्धौ ॥ १३ ॥

**इहैव — अवेदिर्महती विनष्टिः** । **इहैव सन्तः** अस्मिन्नेव जन्मनि वर्तमाना वयं **तत्** ब्रह्म **विद्मः** जानीमः । न चेज्जानीमः, तर्हि **अवेदिः** । वेदनं वेदिः । 'सर्वधातुभ्यः इन्' इति इन्प्रत्ययः । नः(स) स्वरार्थः । **अवेदिः** अज्ञानं भवति । तदिदञ्च **महती विनष्टिः** महाहानिरित्यर्थः । तेन ज्ञानस्यास्मिन्नेव जन्मनि प्राप्तस्य महालाभरूपत्वमार्थिकम् । इदं ज्ञानाज्ञानयोरेव महालाभहानित्वं दर्शयति **य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति** । **एतत्** परं ब्रह्म । **अमृताः** मुक्ताः । **इतरे** एतद्वेदनहीनाः । **दुःखं** संसारम् । शिष्टः स्पष्टार्थः । (स्पष्टः शिष्टार्थः?) ॥ १४ ॥

---

जीवस्योपास्यः प्राप्यश्च भवति प्राज्ञ आत्मा, **अस्मिन्**, अनर्थसंकटे देहे हृदयगुहागते देहेन्द्रियमनः—प्राणधीरूपतया संदिह्यमाने दुर्ग्रहे जीवात्मनि प्रविष्टस्सन् स प्राज्ञ आत्मैव **विश्वकृत्** मुमुक्षुसंबन्धिसर्वयोगक्षेमकृत् । स हि प्राज्ञ आत्मा व्यष्टिसमष्टिरूपस्य जागरस्वप्नरूपस्य च सर्वस्य कर्ता । तच्छेषभूतमिदं जगत् । तस्यैव विशिष्टवेषेण जगद्रूपेण जननात् जगदपि स एव । एवम्भूतोऽयमन्तर्यामी उपासकहृदये स्थित्वा योगक्षेमं वहति, बुद्धियोगं ददाति, उद्धरति चेति ।

नन्वत्रैव जीवे निविष्टश्चेत्, तर्हि अनपायात् कालान्तरे तं वेदिष्यामः । सम्प्रति प्राप्तं प्रपञ्चं भुञ्जीमहीति मन्यमानं प्रत्याह इहैवेति । दुर्लभं मानुषं जन्म प्राप्य एतद्वेदनमुपेक्ष्यते चेत्, तर्हि क्रिमिकीट — काकगृध्र — श्वखर — वृक्षगुल्म प्रायेषु भाविषु जन्मसु का तल्लाभप्रसक्तेति भावः ।

यदैतमनुपश्यत्यात्मानं देवमञ्जसा ।
ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥ १५ ॥
यस्मादर्वाक् संवत्सरोऽहोभिः परिवर्तते ।
तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ॥ १६ ॥

---

तज्ज्ञानस्य महाफलत्वमेवाह **यदैतम् — न ततो विजुगुप्सते** । यदा एतं भूतभव्यादेरीशितारं **देवं** द्योतमानं सर्वभूतानामा**त्मानम्** अन्तर्यामिणं द्राक् **अनुपश्यति** सम्यक् पश्यति, **ततः** तदा सर्वस्याप्येकात्मकत्वज्ञानात् **न विजुगुप्सते** । सर्ववस्तुषु निन्दा न प्रवर्तत इत्यर्थः ॥ १५ ॥

**यस्मात् — परिवर्तते । यस्मात्** भूतभव्येशानात् परमात्मनः **अर्वाक्**— तदन्यविषय एवेति यावत् — कालात्मा संवत्सरः स्वावयवैरहोभिः **परिवर्तते** परिच्छेदकत्वेन वर्तते । य आत्मा संवत्सरमासादिलक्षणकालपरिच्छेदातीत इत्यर्थः । **तं देवाः — अमृतम् । ज्योतिषां ज्योतिः** प्रकाशकानां प्रकाशकम्, **अमृतं** कालापरिच्छिन्नम्, **आयुः** सर्वप्राणिप्राणनहेतुभूतं **तं ह देवा उपासते** । देवोपास्यत्वं तु तस्यैवेत्यर्थः । उक्तञ्च व्यासार्यैः, "ज्योतिषि भावाच्च" इति सूत्रे,

---

परमात्मानुभाविनां प्रपञ्चानुभवोऽपि सर्वप्रकारभव्यः समस्तीति दर्शयन् तत्र त्वरयति **यदैत**मिति । **अनुपश्यती**त्यस्य निरन्तरं पश्यति, दर्शनसमानाकारज्ञानविषयीकरोतीत्यर्थः । **यदे**त्यस्य तच्छब्दसापेक्षत्वात् **तत** इत्यस्य तदेत्यर्थं उक्त । जुगुप्साविषयपदार्थास्तु **सर्ववस्तुषु** इति दर्शिताः । **अङ्गुष्ठमात्र** इति मन्त्रे तु कठाधीते **तत** इत्यस्यार्थान्तराभावात् जुगुप्साविषयपरत्वम् ।

परमात्मानं प्राप्तानाममृतत्वं कथमित्यत्र तस्यामृतत्वात् तदित्युपपादयति **यस्मादिति** । 'कालं स पचते तत्र न कालस्तत्र वै प्रभुः' इति हि स्मरन्ति । **ज्योतिरेवोपासत** इति । उच्यते चौपरिष्ठादिह (७-३-२.) 'ते देवाः सत्यमेवोपासते' इति । मनुष्येषु केचित् देवानपि परदेवताबुद्ध्योपासीरन्; देवास्तु न तथेति भावः । उपासनं कथं निष्पद्यत इत्यत्र मुख्यप्राणस्येन्द्रियाणाञ्च वशीकरणात् निष्पद्यत इति सर्वोपनिषत्संमतमर्थं दर्शयितुं **ज्योतिषां ज्योतिरायु**रित्युक्तम् । **आयु**श्शब्दसाहचर्यादेव **ज्योतिषा**मिति इन्द्रियपरं सिद्धम् ।

**यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।**
**तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम् ॥ १७ ॥**

---

'देवा एव ज्योतिरुपासते इति वा, देवा ज्योतिरेवोपासते इति वा वाक्यभङ्गी स्यात् । तत्र न प्रथमः कल्पो युज्यते; मनुष्याणामनधिकारप्रसङ्गात् । तस्मात् ज्योतिरेवोपासत इत्यर्थः' इति ॥ १६ ॥

**यस्मिन् — प्रतिष्ठितः ।** पञ्चजनसंज्ञाः पञ्च[1], आकाशश्च यत्र प्रतिष्ठित इत्यर्थः । **अत्राकाशशब्दो** भूतान्तरस्याप्युपलक्षकः । पूर्वस्मिन् मन्त्रे, 'ज्योतिषां ज्योति' रिति षष्ठ्यन्तज्योतिश्शब्दस्यार्थनिर्णायकसापेक्षत्वात्, अत्र पञ्चजनशब्दस्याप्यर्थनिर्णायकान्तरसापेक्षत्वाच्च, पञ्चत्वसंख्यान्वययोग्यानि ज्योतींषीन्द्रियाण्येवेत्यवसीयन्ते । उक्तञ्च **व्यासार्यैः** — 'श्रुत्यैव पञ्चसंख्यया विशेषितत्वात् पञ्चसंख्यज्योतिरन्तरप्रसिद्ध्यभावाच्च परिशेषेणेन्द्रियत्वावगम' इति । **तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम् ।** तादृशमात्मानम् अमृतं ब्रह्मेत्येवं विद्वान् **अन्यः** पूर्वमन्त्रे उपासकत्वेनोक्तदेवेभ्योऽन्यो मनुष्योऽप्यमृतो भवतीत्यर्थः ॥ १७ ॥

---

**पञ्च पञ्चजना इति ।** **पञ्चजना** इत्यत्र प्रतिष्ठिता इति विपरिणमय्यापकर्षः । अत्र शाङ्करे, गन्धर्वा. पितरो देवा असुरा रक्षांसि पञ्चजना उक्ताः । निषादपञ्चमा वा चत्वारो वर्णाः पञ्चजना इति च । **सोऽयं निरुक्ते संदिह्य प्रदर्शितोर्थः** । एवं चत्वारो वर्णाः संकरजातिश्चेति पञ्च नराः पञ्चजनाः स्युः; 'स्युः पुमांसः पञ्चजनाः' इति पञ्चजनपदस्य मनुष्ये रूढत्वात् ।

शारीरके तु **पञ्चपञ्चजना** इति सांख्यसंमतपञ्चविंशतितत्त्वग्रहणं पूर्वपक्षीकृत्य इन्द्रियग्रहणमुत्तरमन्त्रानुसारात् सिद्धान्तितं संख्योपसंग्रहाधिकरणे । अत एव **ज्योतिषा**मिति पूर्वमन्त्रे, अत्र पञ्चेति च न सूर्यनक्षत्रचन्द्रविद्युदग्निरूपाणाम्, 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः' इत्याद्युक्तानां पञ्चानां ज्योतिषां ग्रहणम् । कथं पुनरेषामेवार्थानां सूत्रेऽनुक्तिरिति चेत् – एतत्सर्वनिराकरणेन पञ्चविंशतितत्त्वपरतया पूर्वपक्षः प्रवृत्त इति मन्यताम् । 'क्लृप्तेन विनिगमनाविरहे कल्प्यमन्यत् प्रसिद्ध्यती' ति न्यायात् पञ्चविंशतितत्त्वग्रहणम्; सर्वप्रतिष्ठात्वरूपमङ्गार्थलाभाच्च तथेति पूर्वः पक्षः । कल्प्यार्थस्वीकारे पूर्वोत्तरमन्त्रसंगतार्थ-

परत्वकल्पनं ज्याय इति इन्द्रियपरत्वं स्वीक्रियताम्। सांख्यमतस्वीकारे, 'आकाशश्च प्रतिष्ठित' इति पृथगुक्त्यायोगात्। अथ तर्हि, 'पञ्च पञ्च जना' इति पञ्चविंशतितत्त्वरूपप्रपञ्चमुखेन भोगप्रदर्शनम्। आकाश इति मोक्षस्य। तदुभयं यस्मिन् जीवात्मनि प्रतिष्ठितमिति सांख्यार्थोऽस्त्विति चेत् — तदप्यनुपपन्नमेव; जीवस्य पञ्चपञ्चजनान्तर्गततया तदन्यस्यैव प्रतिष्ठास्थानत्वौचित्यात् आकाश इति परमव्योमग्रहणेन परमात्मनि उभयविभूतिप्रतिष्ठात्वस्यैव मन्त्रार्थताकल्पनस्य ततोऽपि ज्यायस्त्वात्। अतः पूर्वोत्तरानुगुणस्वीकार एव युक्त इति सिद्धान्त इति।

ननु सप्तर्ष्यादिपदवत् पञ्चजनपदं संज्ञा, 'दिक्संख्ये संज्ञाया' मिति सूत्रादिति कथम्। सप्तर्षिपदस्येव, पञ्चजनपदस्य इन्द्रियरूपार्थे कुत्रापि प्रयोगाभावात्। अनादिव्यवहारं विना संज्ञात्वकल्पनस्यायुक्तत्वात्। तदपेक्षया पञ्चजनपदेन प्रसिद्धमनुष्यरूपरूढ्यर्थग्रहणस्यौचितत्वात्। इन्द्रियविवक्षाया आवश्यकत्वे च जनसंबन्धितया लक्षणया तद्ग्रहणस्यैव युक्तत्वात्। अस्तु वा पचि विस्तारे इति धातोः पञ्चशब्दो विस्तृतपरस्सन् जनशब्दविवक्षितेन्द्रियविशेषणमिति चेत् —

उच्यते। पञ्चजनशब्दो मनुष्ये रूढः। अत एव तत्रावयवार्थानपेक्षणान्न समासः। इह तु पञ्चजनशब्दः अन्तोदात्तान्यानुदात्तश्रवणात् समासरूपः। तत्र पञ्चशब्दस्य पचि विस्तार इत्यर्थापेक्षया संख्यारूपार्थ एव प्रसिद्धिः, अन्वयौचित्यञ्चेति संख्यावाचकेन समासो युक्तः। एवञ्च, 'दिक्संख्ये संज्ञायाम्' इति संज्ञात्वं सिद्धम्। न चाप्रयोगः, 'पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामी' ति श्रवणात्। तदत्रार्थविशेषजिज्ञासायां यववराहाधिकरणनयेन इहत्यपूर्वोत्तरमन्त्ररूपवाक्यशेषवशादिन्द्रियरूपार्थावधारणमिति न कस्यचिदर्थान्तरस्य प्रसक्तिः।

तेषां माध्यन्दिनोक्तरीत्या पञ्चत्वम्। जनत्वञ्च जायमानतया, जनशब्दशक्यार्थमनुष्यसंबन्धित्वाल्लक्षणया वा। इन्द्रियेषु जनवाचिपुरुषपदप्रयोगः, 'ते वा एते पञ्च ब्रह्मपुरुषा' इति छान्दोग्योदाहरणेन शाङ्करभाष्ये दर्शितः। अत एव द्रमिडसूरयोऽपि इन्द्रियाणि पुरुषत्वेन गृहीत्वा श्रुतिमुपबृंहयन्ति, 'आवि तिहैक्क ऐवर् कुमैक्कुम्' इत्यादितः। शांकरे गन्धर्वादिः पार्थान्तरवर्णनञ्च पूर्वव्याख्यानुरोधात्। स्वमतं तु सूत्रानुरोधेन पञ्चजनशब्दस्येन्द्रियपरत्वमेवेति शांकरसूत्रभाष्ये व्यक्तम्। परंतु तत्र माध्यन्दिनशाखायामुत्तरमन्त्रोक्तविधया इन्द्रियपञ्चकं पञ्चजनशब्दार्थः। काण्वशाखायामुत्तरमन्त्रोक्तं प्राणादिचतुष्कं पूर्वमन्त्रोक्तं ज्योतिश्चेति पञ्चकं तदर्थ इति तद्गतिः। ज्योतिश्चेदम्, 'ज्योतिषां ज्योतिः'इत्यत्र षष्ठ्यन्तज्योतिःपदविवक्षितं सूर्यादिज्योतिरिति कल्पतरुः। श्रीभाष्ये तु, 'न शाखाभेदेनार्थभेदः, ज्योतिषामिति षष्ठ्यन्तस्येन्द्रियरूपज्योतिःपरतया माध्यन्दिनसमानार्थत्वसंभवात्। तथाच काण्वे प्राणरूपत्वगिन्द्रियं चक्षुः श्रोत्रं मनः तदितरज्योतिश्चेति पञ्च पञ्चजनाः' इति विवक्षितम्। आयुश्शब्दसमभिव्याहाराच्च ज्योतिषामिति इन्द्रियग्रहणमित्यवोचाम।

प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं
मनसो ये मनो विदुः, ते निचिक्युर्ब्रह्म पुराणमग्र्यम् ॥ १८ ॥

पञ्चजनशब्दनिर्दिष्टानि ज्योतींषि कानीत्यपेक्षायामाह **प्राणस्य — पुराणमग्र्यम्** । अत्र प्राणशब्देन स्पार्शनेन्द्रियं गृह्यते; वाय्वाप्यायितत्वात् स्पार्शनेन्द्रियस्य । मुख्यप्राणस्य ज्योतिश्शब्देन प्रदर्शनायोगात् । **चक्षुष** इति चक्षुरिन्द्रियं गृह्यते । **श्रोत्रस्येति** श्रोत्रेन्द्रियम् । **मनस** इति मनो गृह्यते । समानप्रकरणे माध्यन्दिनशाखायाम्, 'अन्नस्यान्न' मिति पाठात्, 'अनुक्तमन्यतो ग्राह्य' मिति न्यायेन तदपि गृह्यते । सूत्रितञ्च, 'ज्योतिषैकेषामसत्यन्ने' इति । अन्नशब्देन चान्नसंबन्धिनोः घ्राणरसनयोः तन्त्रेण ग्रहणम् । अन्नेन घ्राणस्याऽऽप्यायितत्वलक्षणसंबन्धः, रसनस्यान्नभक्षकतयाऽन्नसंबन्ध इति द्वयोरपि ग्रहणम् । एतत् सर्वं **भाष्यश्रुतप्रकाशिकयोः** स्पष्टम् । एवं प्रकाशकत्वेन ज्योतिश्शब्दितत्वक्चक्षुरादीन्द्रियाणामपि [**ज्योतिः** ?] त्वक्चक्षुरादिवत् प्रकाशकम् — तेषां तत्तद्विषयग्रहणशक्त्याधायकमित्यर्थः — एतादृशं ये जानन्ति, **ते पुराणं** पूर्वस्थितम् **अग्र्यम्** अग्रे = ऊर्ध्वमपि स्थितं **ब्रह्म** परं ब्रह्म **निचिक्युः** निश्चितवन्त इत्यर्थः ।

इदञ्च चिन्तितं समन्वयाध्याये चतुर्थे पादे । तत्र हि — 'यस्मिन् पञ्चपञ्चजना आकाशश्च प्रतिष्ठितः' इति वाक्ये पञ्चत्वविशेषितया पञ्चसंख्यया पञ्चविंशतिसंख्याप्रतीतेः सांख्यस्मृतिसिद्धाब्रह्मात्मकपञ्चविंशतितत्त्वप्रतिपाद-

---

एवमिह **ज्योतिषा**मित्युक्तस्य, पञ्चजना इत्यस्य चैक्यस्य संभवतो ऽपरित्यागार्थमेव माध्यन्दिनशाखायां **प्राणस्य प्राण**मित्युक्तं पञ्चकमन्यादृशं नेष्यते । अन्यथा हि अनेकश्रुतिसुप्रसिद्धं मुख्यप्राणमनोवाक्चक्षुःश्रोत्ररूपोपकरणपञ्चकमेव तत्र सुवचं स्यात् । **अन्न**मिति अन्नसंबन्धिजिह्वास्थवागिन्द्रियग्रहणसंभवात् । अतो वागिन्द्रियस्य ज्ञानहेतुशब्दहेतुत्वेऽपि साक्षात् ज्योतिष्ट्वाभावात् अन्नपदेन ज्योतिषोः घ्राणरसनयोर्विनिगमकाभावात् तन्त्रेण ग्रहणम् । अत एव **प्राणपद**स्य मुख्यप्राणरूपार्थत्यागेन त्वक्परत्वम् । स्थलान्तरेषु प्राणपदेन घ्राणग्रहणेऽपि इहान्नपदेन त्वचो ग्रहणायोगात् घ्राणस्य ग्राह्यत्वात् त्वक्परत्वस्वीकारः । तत् सिद्धं कल्प्यार्थस्वीकारे पूर्वोत्तरवाक्यशाखान्तरानुगुणं कल्प्य एवार्थः स्वीकर्तुमुचित इति ।

**पुराणमग्र्य**मिति । **पुराण**मिति सर्वपूर्वकालसंबन्धः, **अग्र्य**मिति सर्वोर्ध्वकालसंबन्धश्चोक्त इति अनाद्यनन्तत्वसिद्धिः ।

कमेवेदं वाक्यमिति पूर्वपक्षे प्राप्ते उच्यते — "न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च"। पञ्चविंशतिसंख्याप्रतीतिवशादपि न सांख्याभिमततत्त्वस्वीकारः; नानाभावात् = नानात्वात्। भिन्नत्वादिति यावत्। सांख्याभिमताब्रह्मात्मकपञ्चविंशतितत्त्वेभ्यः, 'यस्मिन् पञ्च पञ्चजनाः' इति ब्रह्माधारकतया ब्रह्मात्मकत्वेन प्रतिपाद्यमानानां तत्त्वानां भिन्नत्वादित्यर्थः। अतिरेकाच्च। 'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः' इति वाक्ये यस्मिन्नित्याधारतया निर्दिष्टस्यात्मनश्च, 'आकाशश्च प्रतिष्ठित' इत्याकाशस्य च प्रतिपादनेन सप्तविंशतितत्त्वप्रतीतेश्च न सांख्यमतप्रत्यभिज्ञानम्। 'न संख्योपसंग्रहादपी' त्यपिशब्दात्, वस्तुतः संख्योपसंग्रहोऽपि नास्ति; पञ्चभिरारब्धसमूहपञ्चकासंभवात्। न हि तन्त्रप्रसिद्धेषु तत्त्वेषु पञ्चसु पञ्चत्वसंख्यानिवेशनिमित्तं जात्यादिक[1]मस्ति। न च पञ्च कर्मेन्द्रियाणि, पञ्च ज्ञानेन्द्रियाणि, पञ्च महाभूतानि, पञ्च तन्मात्राणि, अवशिष्टानि पञ्चेत्यवान्तरसंख्यानिवेशनिमित्तमस्त्येवेति वाच्यम् — आकाशस्य पृथङ्निर्देशेन पञ्चभिरारब्धमहाभूतसमूहासिद्धेः। अतः पञ्चजना इत्ययं समासो न समाहारविषयः। अपि तु, 'दिक्संख्ये संज्ञाया' मिति संज्ञाविषयः।[2] अन्यथा पञ्च पञ्चपूल्य इतिवत् पञ्च पञ्चजन्य इति स्यात्। ततश्च, 'सप्त सप्तर्षयोऽमलाः[3]' इतिवत् 'पञ्च पञ्चजना' इति निर्देश उपपद्यते।

के पुनस्ते पञ्चजना इत्यत्राह, "प्राणादयो वाक्यशेषात्"। 'प्राणस्य प्राण' मिति वाक्यशेषश्रुताः प्राणचक्षुश्श्रोत्रान्नमनोरूपाः पञ्चार्था अवसीयन्ते।

नन्वेवं काण्वानामन्नपाठाभावात् कथं पञ्चपञ्चजनप्रतीतिरित्यत्राह "ज्योतिषैकेषामसत्यन्ने"। एकेषां = काण्वानां पाठे असति अन्ने, 'तं देवा ज्योतिषां ज्योति' रिति प्रक्रमश्रुतषष्ठ्यन्तज्योतिश्शब्दादेव पञ्चजनशब्दितानि इन्द्रियाणीत्यवसीयन्ते। ज्योतिश्शब्दस्याप्यर्थनिर्णायकसापेक्षत्वात्, पञ्चजनशब्दस्याप्यर्थनिर्णायकसापेक्षत्वात् परस्पराकांक्षावशेन पञ्चत्वसंख्यायुक्तानि प्रकाशकतया ज्योतिश्शब्दितानीन्द्रियाण्येव पञ्चजना इति स्थितम्। प्रकृतमनुसरामः॥ १८॥

1. निमित्तमित्यादिकं. क. 2. अन्यथा पञ्च पञ्चजनी इति स्यात्. क. 3. सप्तर्षयो मताः ख. ग.

---

**अपिशब्दादिति**। अस्य, 'इति गम्यते' इति शेषपूरणेनान्वयः। **अवसीयन्ते इति**। पञ्चजनाः प्राणादयोऽवसीयन्त इत्यर्थः।

**मनसैवानु द्रष्टव्यं नेह नानास्ति किञ्चन ।**
**मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १९ ॥**

---

तज्ज्ञाने साधनमाह — **मनसैवानु द्रष्टव्यम्** । **अनु** पश्चात् । श्रवणमननानन्तरमित्यर्थः । **मनसैव द्रष्टव्यम्** । दर्शनसमानाकारस्मृतिसन्ततिरूपध्यानं विशुद्धेन मनसा संपाद्यमित्यर्थः । नन्वेकस्यात्मनः पञ्चजन — भूताकाशाद्याधारत्वं न संभवतीति मन्यमानं प्रत्याह **नेह नानास्ति किञ्चन** । **इह** द्रष्टव्ये ब्रह्मणि । **नाना**शब्दो भावप्रधानः । नानात्वमित्यर्थः । 'यस्मिन् पञ्च पञ्चजना' इति मन्त्रनिर्दिष्टे आत्मनि किञ्चन नानात्वं नास्ति; भेदलेशोऽपि नास्तीत्यर्थः । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति । **इव**शब्दः अल्पार्थः । इह निखिलप्रपञ्चाधारभूते आत्मनि अल्पमपि नानात्वं यः पश्यति, स **मृत्योर्मृत्युमाप्नोति** संसारात् संसारमाप्नोति । अत्यन्तं संसारमाप्नोतीत्यर्थः ।

---

एवं तावत् ब्रह्मण सर्वस्रष्टृत्व–सर्वाधारत्व–सर्वनियन्तृत्व–सर्वकालसंबन्धत्वानि उक्तानि । एवमनङ्गीकृत्य कतिपयांशमात्रसंबन्धित्वस्वीकारेण नानाब्रह्माश्रयणे दोषमाह **मनसे**ति । एवकारः दर्शनत्वादिदं चाक्षुषमिति मतिव्युदासार्थः । **किञ्चने**ति पदम् उक्तेषु स्रष्टृत्वादिरूपेषु धर्मेषु न कञ्चिदपि धर्मं गृहीत्वा एकस्मिन् ब्रह्मणि सर्वसंबन्धाभाव उत्प्रेक्ष्य इति ज्ञापनार्थम् । उत्तरार्धे **इव**शब्दोऽप्येतदाशयः' अयं मन्त्रः **कठवल्ल्या**मपि । तत्र, 'मनसैवेदमाप्तव्यमिति भेदः । तत्र कठवल्ल्यां पूर्वमन्त्रे, 'इहामुत्र च स्थितं ब्रह्मैकमेव (इह जन्मनि जन्मान्तरे च, इहलोके स्वर्गादिलोके च ब्रह्मैकमेव) इति विबोध्य सर्वप्रकारेण ब्रह्मण ऐक्यम् , अनेकत्वाभावोऽनेन मन्त्रेण प्रत्यपादि । मन्त्रोऽयमनन्तरमन्त्रश्च **परमार्थप्रकाशिका**यामप्यस्माभिर्व्याख्यातः । एवमप्यर्थः संभवति – **इह** जगति **किञ्चन** किमपि वस्तु **नाना** ब्रह्म विना नास्ति । सर्वं ब्रह्मापृथग्भूतमित्यर्थः । **नाने**ति विनार्थेऽव्ययमिति, 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्' इति सूत्रतोऽपि ज्ञेयम् । **एकधैवानुद्रष्टव्यम्** = जगत् सर्वं ब्रह्मरूपैकवस्तुरूपेणैव तदपृथग्भूततयैव द्रष्टव्यमिति । एवं सर्वापृथग्भूताधारत्वौपयिकान् ब्रह्मगतान् विशेषानाह **एतदप्रमेय**मित्यादिनेति । संगृहीतश्चैतन्मन्त्रार्थोऽस्माभिः **श्रीवेङ्कटेशकल्याणचरिते** —

'इहास्ति यद् ब्रह्म विना न किञ्चन प्रवाहतो यन्न पृथङ् न कार्यतः ।
तदन्तजन्मस्थितिहेतुरव्ययं मयीश्वरेऽन्यत्र च सत् परं भवान् ॥ (३. २१) ।

ब्रह्माव्याप्तं किमपि नास्ति, कल्पभेदेन सृष्ट्यादिकार्यभेदेन वा ब्रह्म अनेकं न भवतीति, '**नेह नानास्ति किञ्चने**' ति श्रुत्यर्थः अत्र पूर्वार्धेन वेदितः ।

अस्य वाक्यस्य परैरप्येवमेव व्याख्यातत्वान्नात्र वाक्ये प्रपञ्चमिथ्यात्वप्रतिपादनप्रत्याशा कार्या । विज्ञानमात्रास्तित्वनिरासिभिः, "नाभाव उपलब्धेः", "वैधर्म्याच्च न स्वप्नादिवत्", "न भावोऽनुपलब्धेः" इति सूत्रैः, सर्वशून्यत्वनिरासिना, "सर्वथाऽनुपपत्तेश्चे" ति सूत्रेण च प्रपञ्चमिथ्यात्ववादस्य निरस्तत्वाच्च ।

तत्र हि — विज्ञानमेव तत्त्वम्; नान्यत् परमाणुसमुदायरूपं तदार[1]ब्धावयविरूपं वा किञ्चिदस्ति; परमाणूनामप्रामाणिकत्वात् । तेषां क्षणिकानां समुदायभावासंभवात् । निरवयवेषु परमाणुषु संयोगस्य व्याप्यवृत्तित्वाव्याप्यवृत्तित्वविकल्पदुःस्थत्वेन अवयवेष्ववयविनः कृत्स्नैकदेशविकल्पदुःस्थत्वेन च परस्परसंयुक्तावयवतदाश्रितावयव्यसंभवाच्च । [2]बाह्यार्थानामान्तरविज्ञानसंबन्धानिरूपणेन तद्विषयत्वासंभवाच्च; संबन्धं विना विषयत्वे सर्वविषयाणामेकस्मिन्नेव विज्ञानेऽवभासप्रसङ्गात् । न च बाह्यार्थाभावे नीलपीतादिज्ञानानां निरालम्बनत्वापातः; ज्ञानानामेव नीलपीताद्याकारत्वात् । नीलादिकं ज्ञानाभिन्नं ज्ञानोपलम्भव्याप्योपलम्भविषयत्वात् ज्ञानवत् । व्याप्यत्वस्याभेदेऽपि संभवेन न दृष्टान्तासिद्धिः । न च नीलतज्ज्ञानयोरभेदे, अहमिदं जानामीति क्रियाकर्मकर्तृभावेन[3] भेदावभासविरोध इति वाच्यम्— तस्य द्विचन्द्रज्ञानवत् भ्रान्तत्वात् । तथाऽऽहुः —

[4]'सहोपलम्भनियमादभेदो नीलतद्धियोः ।
भेदस्तु भ्रान्तिविज्ञानैर्दृश्यश्चन्द्र इवाद्वये ॥'

'अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥'

इति । ननु सर्वस्याप्यान्तरत्वे बाह्यत्वावभासः कथमिति चेत् — न - उपरि स्थितानां नक्षत्रादीनामुद्यतां भूमिष्ठत्वावभासवत् बाह्यत्वावभासस्यापि भ्रमत्वात् । अपिच स्तम्भज्ञानं कुड्यज्ञानमित्येवंरूपज्ञानपक्षपातस्य ज्ञानगतं विशेषमन्तरेणानुपपत्तेः अवश्यं विषयसारूप्यं ज्ञानस्याभ्युपगन्तव्यम् । तत्रश्चाङ्गीकृते ज्ञानगताकारे आकार-

1. तल्लब्ध. क. 2. बाह्यार्थानामित्यारभ्य अवभासप्रसंगादित्यन्तस्य स्थाने, 'बाह्यार्थानामनवभासप्रसंगात्' इत्येतावदेव. क. कोशे । 3. अहं जानामीति क्रियाकर्तृभावेन. क. 4. क. कोशे नायं श्लोकः ।

द्वयानुपलम्भादपार्थिका बहिरर्थकल्पना। स्वप्नादिवच्चेदं द्रष्टव्यम्। यथा हि स्वप्न-मायामरीच्युदकगन्धर्वनगरादिप्रत्ययाः विनैव बाह्यार्थेन ग्राह्यग्राहकाकारा भवन्ति — एवं जागरितप्रत्यया अपि। प्रत्ययत्वाविशेषात्। कथं पुनः असति बाह्येऽर्थे प्रत्यय-वैचित्र्यमुपपद्यत इति चेन्न — वासनावैचित्र्यस्यैव नियामकत्वात्। अनादौ हि संसारे बीजाङ्कुरवत् ज्ञानानां वासनानाञ्चान्योन्यनिमित्तत्वेन वैचित्र्यात्। तस्मा-दभावो बाह्यार्थस्येत्येवं प्रत्यवस्थिते योगाचारे पठत्याचार्यः —

" नाभाव उपलब्धेः "। न खल्वभावो बाह्यार्थस्य युक्तः। कस्मात्?[1] उप-लब्धेः। उपलभ्यते हि प्रतिप्रत्ययं बाह्योऽर्थः स्तम्भकुड्यादिः। न चोपलभ्य-मानस्यैवाभावो युक्तः। यथा हि कश्चिद्भुञ्जान एव भुजिसिद्धां तृप्तिञ्चानुभवन् ब्रूयात् ' नाहं भुञ्जे; न च तृप्यामी ' ति, तद्वत् इन्द्रियसन्निकर्षेण स्वयमुपलभमान एव बाह्यमर्थम्, 'नाहमुपलभे; न च सोऽस्ती ' ति ब्रुवन् कथमुपादेयवचनस्स्यात्। ननु नाहमेवं ब्रवीमि, ' नैवार्थमुपलभे ' इति; किन्तु ' उपलब्धिव्यतिरिक्तं नोपलभे ' इति ब्रवीमि। बाढमेवं ब्रवीषि, [ निरङ्कुशत्वात् ते तुण्डस्य। न तु युक्त्युपेतं ब्रवीषि। यत उपलब्धिव्यतिरेकोऽपि बलादर्थस्योपगन्तव्यः[2] ] उपलब्धेरेव। न हि कश्चिदुपलब्धिमेव स्तम्भः कुड्यं वेत्युपलभते। उपलब्धिविषयत्वेनैव स्तम्भ-कुड्यादीन् सर्वे लौकिका उपलभन्ते।

ननु बाह्यस्यार्थस्यासंभव उक्तः। न। प्रमाणप्रवृत्त्यप्रवृत्तिपूर्वकौ हि संभवा-संभवौ; न तु संभवासंभवपूर्विके प्रमाणप्रवृत्त्यप्रवृत्ती। यत्र यद्धि प्रत्यक्षादीना-मन्यतमेनापि प्रमाणेनोपलभ्यते, तत् संभवति। यत्तु न केनचिदप्युपलभ्यते, तन्न संभवति। इह तु यथास्वं सर्वैरेव प्रमाणै र्बाह्योऽर्थ उपलभ्यमानः कथम्, न संभव-तीत्युच्यते।

यदुक्तम् — स्वप्नादिप्रत्ययवत् जागरितप्रत्यया अपि विनैव बाह्यार्थेन भवेयुः, प्रत्ययत्वाविशेषादिति, तत्राह, " वैधर्म्याच्च न स्वप्नादिवत् "। न स्वप्नादिवत्[3] जागरितप्रत्यया भवितुमर्हन्ति। कस्मात्? वैधर्म्यात्। किं पुन-

1. बाह्यार्थानामभावो न वक्तुं शक्यते। कुतः? क. 2. कुण्डलितस्थाने ' तदपि विरुद्धम् ' इत्येतावदेव क. कोशे। 3. जाग्रत्प्रत्यया . क.

वैधर्म्यम्? बाधाबाधौ। बाध्यते हि स्वप्नोपलब्धं वस्तु प्रबुद्धस्य — 'मिथ्यैव मयोपलब्धो महाजनसमागमः। न ह्यस्ति महाजनसमागमः। निद्रादू(ग्ला)नं तु मे मनो बभूव। तेनैषा भ्रान्तिरुद्बभूवे' ति। एवं मायादिष्वपि भवति यथायथं बाधः. नैवं जागरितोपलब्धं स्तम्भादि कस्याञ्चिदप्यवस्थायां बाध्यते। तत्रैवं सति न शक्यते वक्तुम्, 'मिथ्या जागरितोपलब्धिः, उपलब्धित्वात् स्वप्नोपलब्धिवत्' इति, उभयोरन्तरं स्वयमनुभवता। न च स्वानुभवापलापः प्राज्ञमानिभिर्युक्तः कर्तुम्। तस्मात विज्ञानव्यतिरिक्तो बाह्यार्थोऽबाधितोऽभ्युपगन्तव्य[1] इति।

एवमेव सूत्रं व्याकुर्वतां परेषां प्रपञ्चमिथ्यात्ववादः कथं संगच्छते। विरोधात्। ननु न विरोधः। ज्ञानार्थयोरभेदो योगाचाराभिमतः। वयं तु भेदमङ्गीकृत्यार्थमिथ्यात्वं ब्रूम इति चेन्न — अर्थमिथ्यात्वस्यैव योगाचाराभिमतत्वात्। अन्यथा ज्ञानमिथ्यात्वार्थसत्यत्वयोरन्यतरप्रसङ्गात्। ननु अर्थतुच्छत्वं तदभिमतम्; वयं तु तन्निरासेनानिर्वाच्यत्वं ब्रूम इति चेत् — तुच्छत्वमिति किमप्रतीतत्वं विवक्षितम्; उत प्रतीतत्वेऽपि बाधार्हत्वम्? न तावदप्रतीतत्वं योगाचाराभिमतम्; सहोपलंभनियमस्य तैरुच्यमानत्वात्। द्वितीये तु शब्दवैषम्यमेव तेषां युष्माकञ्च। प्रतीतत्वे सति बाधार्हत्वस्योभयाभिमतत्वात्। अस्तु वा किञ्चिद्वैषम्यं भवतां ग्रन्थेष्वन्यग्रन्थात्, तदानीमपि सूत्रं विरुद्धम्; कारणदोषबाधकप्रत्यययोरनिर्वाच्यपक्षेऽप्युपाधित्वोपपत्तेरविशिष्टत्वात्। न हि अनिर्वाच्यपक्षास्पर्शी कश्चिदुपाधिः सूत्रितः, व्याख्यातश्च। अत एतत्सूत्रे स्वव्याख्यानविरोधोऽपि परेषां दुस्तरः।

अथ — 'एतत् स्वप्नस्य कारणदोषबाधकप्रत्ययाभ्यां वैधर्म्यमन्वारुह्योक्तम्। न च स्वप्नज्ञानानां निर्विषयत्वम्; प्रत्ययसामान्यस्य निर्विषयत्वासंभवात्। अतो ज्ञानत्वहेतुर्विरुद्धश्च' इत्याहाचार्यः — "न भावोऽनुपलब्धेः"। केवलस्यार्थशून्यस्य ज्ञानस्य न भावः संभवति। कुतः? क्वचिदप्यनुपलब्धेः। न ह्यकर्तृकस्याकर्मकस्य वा ज्ञानस्य क्वचिदप्युपलब्धिः। स्वप्नज्ञानादिष्वपीश्वरसृष्टपदार्थानां सत्त्वात् नार्थशून्यत्वमिति ख्यातिनिरूपणभाष्ये प्रतिपादितम्। किञ्च सर्वेषां ज्ञानानामर्थशून्यत्वे, भवद्भिः साध्योऽप्यर्थो न सिद्ध्यति; निरालम्बनानुमानज्ञानस्याप्यर्थ-

1. अवगन्तव्यः. क.

शून्यत्वात् । तस्यार्थवत्त्वे ज्ञानत्वस्य तत्रानैकान्तिकत्वात् सुतरामर्थशून्यत्वासिद्धिरेवेति स्थितम् ।

एवमस्मिन्नधिकरणे ज्ञानातिरिक्तविषयासत्त्वनिरासेन विषयाश्रयशून्यज्ञाननिरासेन च प्रपञ्चमिथ्यात्वं निरस्तम् । अथ सर्वशून्यवादनिरासेनापि प्रपञ्चमिथ्यात्वं निरस्यत्याचार्यः —

अत्र सर्वशून्यवादी माध्यमिकः प्रत्यवतिष्ठते — शून्यवाद एव हि सुगतमतकाष्ठा । शिष्यबुद्धियोग्यतानुगुण्येनार्थाभ्युपगमादिना क्षणिकत्वादय उक्ताः । 'विज्ञानं बाह्यार्थाश्च न सन्ति । शून्यमेव तत्त्वम् । अभावापत्तिरेव च मोक्षः' इत्येव बुद्धस्याभिप्रायः । तदेव हि युक्तम् । शून्यस्य अहेतुसाध्यतया स्वतस्सिद्धेः । सत एव हि हेतुरन्वेषणीयः । तच्च सत् भावादभावाच्च नोत्पद्यते । तत्र भावात् तावत् न कस्यचिदप्युत्पत्तिर्दृष्टा । न हि घटादिरनुपमृदिते पिण्डादिके जायते । नाप्यभावादुत्पत्तिः संभवति । नष्टे पिण्डादिके ह्यभावादुत्पद्यमानं घटादिकमभावात्मकमेव स्यात् । तथा स्वतः परतश्चोत्पत्तिर्न संभवति । स्वतः स्वोत्पत्तावात्माश्रयदोषप्रसङ्गात् । प्रयोजनाभावाच्च । परतः परोत्पत्तौ परत्वाविशेषात् सर्वेषां सर्वेभ्य उत्पत्तिप्रसङ्गः । जन्माभावादेव विनाशस्याप्यभावः । अतः शून्यमेव तत्त्वम् । अतो जन्मविनाशसदसदादयो भ्रान्तिमात्रम् । न च निरधिष्ठानभ्रमासंभवात् भ्रमाधिष्ठानं किञ्चित् पारमार्थिकं तत्त्वमाश्रयितव्यम् — दोषदोषाश्रयत्वज्ञातृत्वाद्यपारमार्थ्येऽपि भ्रमोपपत्तिवत् अधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेः । अतः शून्यमेव तत्त्वम् —

इति प्राप्ते उच्यते — "सर्वथाऽनुपपत्तेश्च" । सर्वथाऽनुपपत्तेः सर्वशून्यत्वञ्च भवदभिप्रेतं न संभवति । किं भवान्, सर्वं सदिति प्रतिजानीते, असदिति वा, अन्यथा वा ? सर्वथाऽपि तवाभिप्रेतं तुच्छत्वं न संभवति । लोके भावाभावशब्दयोः तत्प्रतीत्योश्च विद्यमानस्यैव वस्तुनोऽवस्थाविशेषगोचरत्वस्य लाघवन्यायसिद्धत्वात् । अतः, 'सर्वं शून्य'मिति प्रतिजानता, सर्वं सदिति प्रतिजानतेव, सर्वस्य विद्यमानस्यावस्थाविशेषयोगितैव प्रतिज्ञाता भवतीति भवदभिमता तुच्छता न कुतश्चि-

---

प्रतिजानतेति । स्मरतेत्यर्थः । अन्यथा प्रतिजानानेनेति पाठः स्यात् ।

दपि संभवति। किञ्च कुतश्चित् प्रमाणात् शून्यत्वमुपलभ्य शून्यत्वं सिषाधयिषता तस्य प्रमाणस्य सत्त्वमभ्युपेत्यम्; तस्यासत्त्वे तु सर्वं सत्यं स्यादिति सर्वथा सर्वशून्यत्वञ्चानुपपन्नमिति हि स्थितम्।

नन्वत्र निरस्तं तुच्छत्वमेव; न मिथ्यात्वमिति चेन्न। प्रपञ्चमिथ्यात्वरूपविषयस्य तत्साधकप्रमाणस्य च सत्यत्वमिथ्यात्वविकल्पेषु सर्वथा प्रपञ्चमिथ्यात्वासिद्ध्या प्रमाणप्रमेयदौःस्थ्यरूपसर्वथानुपपत्तिन्यायसाम्यात्। निरूपितञ्चैतज्ज्यासार्यैर्जिज्ञासाधिकरणे प्रपञ्चमिथ्यात्वानुमाननिरासभाष्यव्याख्यानावसरे। तुच्छव्यावृत्तमिथ्यात्वस्य दुर्निरूपत्वाच्च।

तथाहि — न तावत् भवदभिमतं मिथ्यात्वं प्रतीतत्वे सति बाध्यत्वम्; शशशृङ्गादेरपि प्रतीत्यादेरविशेषात्। 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति हि योगसूत्रम्। यदि शशशृङ्गादिर्न प्रतीयते, तर्हि त्वयैतदनुयुक्तेन वक्तव्यम् — तदप्रतीतम्, 'ख्यातेर्नासत्' इति व्यतिरेकदृष्टान्तभूमितया त्वया कथं निर्दिष्टमिति। अथ यदि प्रत्यक्षप्रतीतत्वं विवक्षितम्, तर्ह्यनुमानादिप्रतीतस्यामिथ्यात्वप्रसङ्गः। यदि तु प्रमाणप्रतीतत्वं विवक्षितम्, तर्हि बाध्यत्वव्याघातः। अत एव न प्रतिपन्नोपाधौ बाध्यत्वं मिथ्यात्वम्; शृङ्गादिप्रतिपत्त्युपाधौ शशादावेव शृङ्गाभावसत्त्वात्। न च स्वसमानाधिकरणाभावप्रतियोगित्वं मिथ्यात्वम्; घटाद्यधिकरणदेशकालयोः तदभावस्य व्याघातात्। यत्तु घटाद्यधिकरणे स्वापसमाध्योस्तदप्रतीत्या तत्र तदभावसिद्धिरिति —, तदप्याशामात्रम्। तदानीं सत्स्वपि घटादिषु ज्ञानप्रसरद्वाराणामिन्द्रियाणामुपसंहारेण ज्ञानस्य विषयसंबन्धाभावादेव तदप्रतीत्युपपत्त्या ततस्तदभावासिद्धेः। अत एव सदसदनिर्वचनीयत्वं मिथ्यात्वमित्यपि प्रत्युक्तम्। असत्त्वेनैव निर्वचनीयस्य मिथ्यार्थस्य सदसदनिर्वचनीयत्वायोगात्। एतेन सत्तात्रयभेदकल्पनाऽपि सुदूरनिरस्ता। पारमार्थिकसत्त्वासत्त्वाभ्यामेव सर्वव्यवहारोपपत्तौ व्यावहारिकप्रातिभासिकसत्तयोः कल्पनागौरवहतत्वात्। अप्रामाणिकत्वाच्च।

यदप्यधिष्ठानपारमार्थ्याङ्गीकारात् शून्यवादवैलक्षण्यं मृषावादस्येति, — तदपि मृषावाद एव। सर्वजगदध्यासाधिष्ठानभूतस्याविद्याशबळस्य तैः पारमार्थ्या-

नङ्गीकारात् । तैः परमार्थतयाऽङ्गीकृतस्य तु कस्यचिच्छुद्धस्य जगदध्यासानधिष्ठानत्वात् । सर्वप्रमाणाविषयस्य तस्य शशविषाणादिसमानयोगक्षेमत्वाच्च । ननु न तस्य शशविषाणसमानयोगक्षेमत्वम्; 'द्वे वाव ब्रह्मणो रूपे मूर्तञ्चामूर्तञ्चे' त्यारभ्योपन्यस्तस्य मूर्तामूर्तादिरूपस्य, सर्वस्य च, 'नेति नेती' ति निषेधेन सर्वनिषेधाधिकरणत्वेन श्रुत्यैव परिशेषितत्वादिति चेन्न — तस्याः श्रुतेः, "प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः" इति सूत्रोक्तन्यायेन ब्रह्मणः परिच्छेदनिषेधार्थकत्वस्य प्रागेवोपपादितत्वात् । प्रमाणान्तराप्राप्तस्य ब्रह्मरूपतया स्वेनैवोक्तस्य सर्वस्य स्व(?)श्रुत्या स्वयमेव निषेधायोगाच्च । न च निर्विशेषस्य मिथ्यात्वे निरधिकरणनिषेधायोगः, मिथ्याभूतस्यैव तस्य निषेधाधिकरणत्वस्य शशविषाणादेरिव परमते सूपपादत्वात् । असतोऽपि हि व्यतिरेकोदाहरणत्वं तेषामिष्टम् ।

न च निर्विशेषस्य मिथ्यात्वापादकनिषेधशास्त्रमृग्यता । 'सर्वं शून्य' मिति बुद्धागमवचनस्यैव निर्विशेषनिषेधकस्य सुलभत्वात् । न च बुद्धागमस्याप्रामाण्यं शङ्क्यं सर्वमिथ्यात्ववादिना ; आविद्यिकानां वेदानाञ्चाप्रामाण्यस्यैव तदिष्टत्वेन तन्मते प्रमाणभूतवचनस्यैव मृग्यत्वात् । यद्वा, 'द्वे वाव ब्रह्मणो रूपे' इति प्रकृतब्रह्मरूपनिषेधकतया तदभिमतं 'नेति नेति' इत्यादिवचनमेव प्रकृतत्वाविशेषात् ब्रह्मापि निषेधतु ; 'नेह नाने' त्यादि वा ।

न च तन्निषेधाधिकरणदौर्घट्यम् । माध्यमिकाभिमतस्य शून्यतत्त्वस्यैव तदध्यासाधिष्ठानत्वनिषेधाधिकरणत्वयोः संभवात् । तस्मात् मानान्तराप्राप्तजगत्कारणत्वादिब्रह्मधर्मप्रतिषेधे ब्रह्म कुतो न प्रतिषिध्येत । ब्रह्मव्यतिरिक्तस्य सर्वस्य स्वरूपतो निषेधे अखण्डार्थवेदान्तवाक्यगतयोग्यताया अप्यसत्त्वेन तत्समसत्ताकस्य वाक्या(वाक्यस्या)र्थभूतब्रह्मणोऽप्यसत्त्वापातात् ।

प्रपञ्चस्य शशशृङ्गादिवन्निस्स्वरूपत्वापाताच्च । न च — न स्वरूपेण निषेधं ब्रूमः; किन्तु पारमार्थिकत्वाकारेणेति वाच्यम् — स्वरूपस्यानिषेधे अबाध्यत्वलक्षणपारमार्थिकत्वस्यापि सत्त्वेन तस्यापि निषेधानर्हत्वात् । ननु सत्त्वनिषेध एव स्वरूपनिषेधः । अतः 'नेह नानास्ती' ति सत्त्वनिषेधात् स्वरूपमपि निषिद्धमेव । न च तस्य निस्स्वरूपत्वे शून्यवादाविशेष इति वाच्यम् — ब्रह्मव्यतिरिक्तविषये

एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम् ।

शून्यवादाविशेषस्येष्टत्वादिति चेन्न — तर्हि, "नाभाव उपलब्धे" रित्यधिकरण-विरोधस्य दुर्निरसत्वात् ।

किञ्च चैत्यवन्दनवाक्यार्थस्येव, 'ज्योतिष्टोमेन यजेत स्वर्गकामः' इत्यादि-वेदवाक्यार्थस्यापि, 'नेह नाने' ति स्वरूपतो निषेधे बौद्धशास्त्रस्येव वेदानामप्य-प्रामाण्यं तन्मते दुर्वारम् । [1]न च उभयोरसदर्थत्वाविशेषेऽपि, 'ज्योतिष्टोमेने' ति वाक्यार्थस्य बौद्धाभिमतसांवृतिकसत्यत्वस्यानभिषिक्तव्यावहारिकसत्यत्वस्याभ्युपगत-त्वात् चैत्यवन्दनवाक्ये तस्याप्यभावाद्वैषम्यमिति वाच्यम् — व्यावहारिकत्वस्य आपात-प्रतिपन्नत्वे सति यौक्तिकनिरूपणासहत्वरूपतया तादृशसत्त्वस्य यथावस्थितार्थ-रूपत्वासंभवेन तद्विशिष्टार्थप्रतिपादकवेदानामप्रामाण्यस्य अकामेनाप्यङ्गीकरणीयत्वात् ।

अपि च, 'नेह नानास्ती' ति प्रपञ्चसत्तानिषेधपक्षे व्यवहारसिद्धाया एव तस्याः निषेध्यत्वेन तथाविधव्यावहारिकप्रातिभासिकसत्तानिषेधपरत्वमेवास्याः श्रुते-र्वक्तव्यम् । ततश्च परैः प्रपञ्चे पारमार्थिकसत्ताया अनङ्गीकारे सत्तात्रयशून्यस्य तस्य तुच्छत्वमेवापततीति परेषां बौद्धवैषम्यं दुर्वचम् । न च, 'नेह घटोऽस्ती' ति वाक्येन पारमार्थिकसत्तैव निषिध्यतामिति वाच्यम्, 'नेह घटोऽस्ती' ति वाक्येऽपि लोकप्रसिद्धसत्त्वस्यैव निषेद्धुं युक्ततया सत्त्वान्तरनिषेधस्यासंभवात् । इतरथा 'नेह नानास्ती' त्यस्याः श्रुतेरप्रसक्तप्रतिषेधतापातात् । उक्तञ्चाभियुक्तैः —

'वेदोऽनृतो बुद्धकृतागमोऽनृतः प्रामाण्यमेतस्य च तस्य चानृतम् ।
बोद्धाऽनृतो बुद्धिफले तथाऽनृते यूयञ्च बौद्धाश्च समानसंसदः ॥'

इति । इत्यलं प्रसक्तानुप्रसक्त्या । प्रकृतमनुसरामः ॥ १९ ॥

**एकधैवानु द्रष्टव्यमेतदप्रमेयं ध्रुवम्** । **अप्रमेयम्** अपरिच्छेद्यं **ध्रुवं** निश्चलं **एतत्** सर्वभूतात्मभूतं ब्रह्म **एकधैव** एकत्वेनैव **अनु** श्रवणादेः पश्चात् द्रष्टव्यमित्यर्थः । व्यासार्यैस्तु, "**एकधैवानुद्रष्टव्यम्** । केषाञ्चित् स्वनिष्ठत्वं ब्रह्मान्यपरतन्त्रत्वं वा न मन्तव्यम्; अपि तु परमात्मप्रकार(परतन्त्र)तया एकरूपमेव

1. न च चैत्यं वन्देतेति वाक्यार्थात् ज्योति. क.

**विरजः पर आकाशादज आत्मा महान् ध्रुवः ॥ २० ॥**

**तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।**

**नानुध्याया[1] द्बहूञ्छब्दान् वाचो विग्लापनँ हि तत् ॥ इति । २१**

1. नानुध्यायेत्. मा.

---

द्रष्टव्यमित्यर्थ इत्युक्तम् । 'नेह नानास्ति किञ्चन' त्यत्रापि, 'अब्रह्मात्मकनानात्वं निषिध्यत' इत्यप्युक्तम् । [1]तदपि युक्तमेव; मदुक्तमपि ; एकार्थपर्यवसायित्वात् द्वयोरपीति द्रष्टव्यम् । **विरजः पर आकाशादज आत्मा महान् ध्रुवः ।** **विरजः** रागादिदोषरहितः **आकाशात्** अव्याकृताकाशादपि **परः** । तस्यापि कारणभूत इत्यर्थः । **ध्रुवः** स्थिरः । अनाशीत्यर्थः । **अजः** उत्पत्तिरहितः । एवम्भूतो महानात्मा ॥ २० ॥

**तमेव — ब्राह्मणः** । तादृशमात्मानं **धीरः** प्रज्ञाशाली **विज्ञाय** श्रवणमननाभ्यां ज्ञात्वा **प्रज्ञां** निदिध्यासनं कुर्वीतेत्यर्थः । अत्र ब्राह्मणग्रहणं द्विजातेरुपलक्षणम् । यद्वा, ब्रह्माधीत इति **ब्राह्मणः** अधीतवेद इत्यर्थः । **नानुध्यायाद्बहून् शब्दान्** । बहून् शब्दान् ब्रह्मगुणानुवर्णनरहितान् **नानुध्यायात्** न चिन्तयेदित्यर्थः । तत्र प्रयोजनं ब्रह्मविदो नास्तीति हेतुमाह — **वाचो विग्लापनं हि तत्** । **तत्** [2]अब्रह्मगुणवर्णनादिकशब्दानुध्यानादिकं हि वाचो **विग्लापनं** विग्लानिसाधनम्; श्रमैकफलकमित्यर्थः । इतिर्मन्त्रसमाप्तौ ॥ २१ ॥

1. तदप्यविरुद्धम्. ख. ग. 2. तत् वागनुध्यानादिकं. ख. ग.

---

**तदपीति** । तत्पक्षे **इहेति** जगत्परम् । एकधैवानुद्रष्टव्यमित्यत्र इदमिति प्रकृतजगद्वाचि विशेष्यमध्याहार्यम् । स्वपक्षे **इहेति** प्रकृतपरम् । उत्तरश्लोके चानध्याहारेणोत्तरेणैवाक्यता । श्रीभाष्यं तूभयानुकूलम् । अनुपेक्ष्यश्चास्मदनुकूलं परव्याख्यानम् ।

उक्तमनुदर्शनं **विज्ञाय प्रज्ञां कुर्वीतेति** विवृण्वन् प्रकृतब्रह्मातिरिक्तविषयवैराग्यविधानेन पारमैकान्त्यं शिक्षयति **तमेवेति** । **नानुध्यायेद् बहून् शब्दानिति** । परमात्मानुभवानुपयोगिकाव्यालाप — कर्कशतर्क — काल्पनिकव्याकरणादिपरिश्रमः कामान्तरसाधकवैदिकलौकिकव्यापारवत् परिहार्य इति भावः । तथाच मुण्डकम्, 'तमेवैकं जानथान्यो वाचो विमुञ्चथे' ति ।

**स वा एष महानज आत्मा, योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते,**

---

**स वा एष — शेते।** **स एषः** प्राङ्निर्दिष्टः **अज आत्मा** 'अज आत्मा महान् ध्रुव' इति योऽयं निर्दिष्ट आत्मा, [1]अयम्, 'कतम आत्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योति' रिति पूर्वनिर्दिष्टो यः तस्मिन् जीवात्मनि शेते। तदन्तर्यामितया वर्तत इत्यर्थः। अत एवोत्तरत्र, 'आत्मन्येवात्मानं पश्यती' ति वक्ष्यति। अत्र हृद्यन्तरित्यस्य व्याख्यानं **य एषोऽन्तर्हृदय** इति। **ज्योतिरित्यस्य** व्याख्यानम् **आकाश** इति; **ज्योतिराकाशशब्दयोः** प्रकाशकत्वार्थकत्वेनैकार्थकत्वात्। अतोऽत्राकाशशब्दो जीवपर एव।

ननु "कामादीतरत्र तत्र चायतनादिभ्यः" इत्यधिकरणे, "वाजसनेयके तु आकाशे शयानस्य वशित्वादिश्रवणात् तस्य शयानस्य परमात्मत्वे सति तदाधाराभिधायिन आकाशशब्दस्य, 'तस्यान्ते सुषिरं सूक्ष्म'मिति हृदयान्तर्गतस्य सुषिरशब्दवाच्यस्याकाशस्याभिधायकत्वमवगम्यते" इति **भाष्ये** श्रुतप्रकाशिकायाञ्चात्राकाशशब्दस्य भूताकाशपरत्वं **समर्थितमिति(मिव)** प्रतीयते। अतः तद्विरुद्धमिदमिति चेत्—मैवम्। 'दहरोऽस्मिन्नन्तर आकाशः' इति छान्दोग्यगताकाशशब्दस्येव अत्रत्याकाशशब्दस्य परमात्मपरत्वं नास्तीत्यत्रैव भाष्यादितात्पर्यात्।

1. अयं परमात्मा, 'विज्ञानमयः प्राणेषु — क.

---

**स वा एष महानज इति।** एतद्ब्राह्मणान्तश्रूयमाणवाक्यद्वयवत् वाक्यमिदं विज्ञानमयस्य जीवस्य महदभेदबोधकं प्रतीयत इति जीवो नाणुः, किंतु महानित्याशङ्क्य अत्र परमात्मैवोच्यते, न जीव इत्युक्तं सूत्रे, "नाणुरतच्छ्रुतेरितिचेन्नेतराधिकारात्" इति। वाक्यञ्चेदं महतः परमात्मनः (आकाशशयानत्व) सर्ववशित्वाद्यर्थं विधायकम्। **योऽयं** विज्ञानमय इत्यादिकस्तु सिद्धानुवादो न विधायकः। तत्र यथा विज्ञानमयाभेदोऽत्र सर्वथा न प्रतीयते, तथा स्वयं भाष्ये योजना कृता। योजनान्तरेऽपि प्रमाणान्तरतो जीवब्रह्मणोर्भेदस्य संप्रतिपन्नत्वात्, **योऽयं विज्ञानमयः प्राणे**ष्विति मुख्यामुख्यसर्वप्राणातिरिक्तविज्ञानमयजीवरूपो यः स महानात्मेति विज्ञानमयान्तर्यामिताप्रयुक्तं विज्ञानमयैक्यमेव प्राप्तमनूद्यते। न केवलं श्रुत्यन्तरम्, श्रौतस्यास्य जनकयाज्ञवल्क्यसंवादस्योपबृंहणभूतं महाभारते जनकयाज्ञवल्क्यसंवादमनुसृत्याप्येवम्। यथा —

'अन्यश्च शाश्वतोऽव्यक्तस्तथाऽन्यः पञ्चविंशकः।
तत्स्थं समनुपश्यन्ति तमेकमिति साधवः॥

**सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः ;**

केचित्तु — 'भाष्यानुरोधात् अन्तर्हृदये यो भूताकाशः, तत्र विज्ञानमयः महानात्मा शेत इत्यर्थः । अस्मिन् प्रकरणे, 'प्राज्ञेनात्मना संपरिष्वक्तः', प्राज्ञेनात्मनाऽन्वारूढः' इति सुषुप्त्युत्क्रान्त्योर्जीवपरमात्मभेदप्रतिपादनेन विज्ञानमयशब्दनिर्दिष्टस्य जीवस्य, महतश्च परमात्मनः अभेदासंभवात् विज्ञानमयशब्देन तच्छरीरकः परमात्मैवाभिधीयते । 'महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यती'ति मैत्रेयीब्राह्मणोक्तरीत्या विज्ञानमयशब्दस्य, "अवस्थितेरिति काशकृत्स्नः" इति सूत्रोक्तन्यायेनात्रान्तर्यामिपरत्वम् — इत्याहुः ।

केचित्तु — योऽयं विज्ञानमय इत्यत्र, 'कतम आत्मा योऽयं विज्ञानमय' इति पूर्वनिर्दिष्टजीवस्य प्रत्यभिज्ञालेशेन ग्रहणं न संभवति ; तस्य, महानज इत्युक्तमहत्त्वाद्यसंभवात । अपितु विज्ञानमय इति साक्षादेव परमात्मनो निर्देशः — इत्याहुः ।

तमेव मुमुक्षूपास्यं विशिनष्टि **सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः** । **सर्वस्य** ब्रह्मरुद्रादेः **वशी** । सर्वो ह्यस्य वशे वर्तते । उक्तं च, 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादि । अतश्च प्रशासनेन धारकत्वलक्षणमात्मत्वमुक्तं भवति । **सर्वस्येशान** इत्यनेन नियन्तृत्वलक्षणमात्मत्वम् । **सर्वस्याधिपति**रिति शेषित्वलक्षणमात्मत्वमुक्तमिति द्रष्टव्यम् । इदञ्च छान्दोग्यदहरविद्यावाक्यप्रतिपन्नसत्यकामत्वादीनामप्युपलक्षणम् । उक्तं च भाष्ये, "वशित्वादयश्च वाजसनेयके श्रुताः छान्दोग्यश्रुतस्य गुणाष्टकान्यतमभूतस्य सत्यसंकल्पत्वस्य विशेषा एवेति सत्यसंकल्पत्वसहचारिणां सत्यकामत्वादीनामपहतपाप्मत्वपर्यन्तानां सद्भावमवगमयन्ती"ति ।

---

तेनैतं नाभिनन्दन्ति पञ्चविंशकमच्युतम् ।' इति ।
'यदा स केवलीभूतः षड्विंशमनुपश्यति ।
अन्यश्च राजन् स परस्तथाऽन्यः पञ्चविंशकः ।
तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः ।' इति च ।

माध्यन्दिनशाखायां **योयमि**त्यादेः शेत इत्यन्तस्याभावात् , 'स वा अयमात्मा सर्वस्य वशी' त्येव पाठात् **आत्मे**त्यन्तस्य तत्रैव वशीत्यनेनैवान्वयः; न तु **शेत** इत्यनेनेति विमृश्य कृतं भाष्यानुरोधि योजनान्तरं दर्शयति **केचित्त्व**िति ।

**सर्वस्य वशी** । **वशः** इच्छा = मदाधेयमस्तु इति संकल्पः । सर्वविषयकतादृशसंक-

**स न साधुना कर्मणा भूयान्; नो एवासाधुना कनीयान्; एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय।**

**स न — कनीयान्।** साध्वसाधुकर्मकृतोत्कर्षापकर्षशून्य इत्यर्थः। **एष सर्वेश्वरः — असंभेदाय। सर्वेश्वरः** सर्वनियन्ता। भूतानां = प्राणिनाम**धिपतिः** शेषी। भूतानां **पालः** रक्षकः। एषां सर्वेषां लोकानाम् **असंभेदाय** असांकर्याय **विधरणः** धारकः सेतुरप्ययमेव। अनेनेश्वरेण सेतुना अविधार्यमाणाश्चेदिमे लोकाः, निर्मर्यादा भवेयुरिति भावः।

अत्र ब्रह्मप्रकरणोपक्रमे, "आत्मैवेदमग्र आसीत् पुरुषविधः' इति देवताविशेषस्य नारायणस्यैव प्रस्तुतत्वादिह तस्यैव सर्वेश्वरत्वादिकथनमिति न देवतान्तराणामवकाश इति द्रष्टव्यम्।

इदञ्च वाक्यं गुणोपसंहारपादे चिन्तितम् — 'य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः' इति आकाशशयानत्ववशित्वादिगुणविशिष्टतयोपास्यः छान्दोग्यदहरविद्याप्रतिपादितापहतपाप्मत्वादिगुणाष्टकविशिष्टाकाशाद्भिन्नः। अतो रूपभेदाद्विद्याभेद इति पूर्वपक्षे प्राप्तेऽभिधीयते — "कामादीतरत्र तत्र चायतनादिभ्यः"। तत्र चेतरत्र च स्थलद्वयेऽपि कामादिविशिष्टं ब्रह्मैवोपास्यम्। हृदयायतनत्वसेतुत्वविधरणत्वादिभिर्विद्यैक्यप्रत्यभिज्ञानात्। वाजसनेयकश्रुतवशित्वादीनां छान्दोग्यश्रुतसत्यसंकल्पत्वविततिरूपतया रूपभेदाभावात्। 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति, 'अभयं वै ब्रह्म भवती'ति चोभयत्रापि ब्रह्मप्राप्तिरूपफलसंयोगाविशेषाच्च। इयांस्तु विशेषः — छान्दोग्ये दहराकाशे पर-

---

ल्पवानित्यर्थः। ननु **सर्वस्येशानः सर्वस्याधिपति**रितीदमेव किमिति पुनरुक्तम् **एष सर्वेश्वर एष भूताधिपति**रितीति चेन्न — पूर्वमनुवादप्रायम्; पश्चात्तनवाक्य एव तद्विधिः। पूर्वं हि, 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स एष महानज आत्मा इत्येकं वाक्यम्। वाक्यभेदे प्रमाणाभावात्। तथा च वशित्वेशानत्वाधिपतित्वनिबन्धनात्मत्ववान् हृदयाकाशवर्तीति वाक्यार्थः। अत एवात्मत्वमुक्तं **भवती**त्यादिना पदत्रयस्यात्मत्वोपपादनपरत्वमिह भाषितम्। एवमनूदितानामीशानत्वस्वामित्वधारकत्वानामैदम्पर्येण विधानेन तत्रादरप्रदर्शनमुपरि **एष सर्वेश्वर** इत्यादिना। दर्शितश्चायमादरः सूत्रे, "आदरादलोपः" इति।

मात्मधर्मसद्भावात् आकाशशब्दितस्य परमात्मत्वम्; न भूताकाशत्वम्। वाजसनेयके तु आकाशे शयाने एव परमात्मलिङ्गसद्भावात् शयानस्यैव परमात्मत्वम्; आकाशस्य तु भूताकाशत्वमिति।

ननु, 'नेह नानास्ति किञ्चन', 'एकधैवानुद्रष्टव्यमेतदप्रमेयम्', 'स एष नेति नेती' त्यादिपूर्वोत्तरवाक्यैः निर्गुणमेवेह ब्रह्म प्रतिपाद्यते। छान्दोग्ये तु सगुणम्। अतो निर्गुणसगुणब्रह्मविद्ययोरैक्यासंभवात् वाजसनेयकश्रुतमोक्षार्थनिर्गुणोपासने गुणानां लोप एवेत्यत्राह, "आदरादलोपः"। वाजसनेयकेऽपि, 'सर्वस्य वशी सर्वस्येशानः', 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः' इति भूयोभूयो गुणोपदेशाद्गुणेष्वादरः प्रतीयते। अतो वाजसनेयकश्रुतदहरविद्याया अपि सगुणत्वादेव न गुणानां लोपः कार्यः। 'नेह नाने' त्यादिनिषेधानामब्रह्मात्मकनिषेधपरत्वेन विहितगुणनिषेधपरत्वाभावात्।

ननु छान्दोग्ये, 'तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवती' ति छान्दोग्य(?)दहरविद्यायाः सर्वलोककामचारलक्षणसांसारिकफलसंबन्धः प्रतीयते। वाजसनेयके तु, 'अभयं वै ब्रह्म भवती' ति मुक्तिफलकत्वम्। अतो नानयोर्विद्ययोरैक्यमित्यत्राह "उपस्थितेऽतस्तद्वचनात्"। उपस्थिते = ब्रह्मोपसंपन्ने प्रत्यगात्मनि अतः = उपसंपत्तेरेव हेतोः सर्वलोककामचारः श्रूयते, 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते। स उत्तमः पुरुषः। स तत्र पर्येति', 'तस्य सर्वेषु लोकेषु कामचारो भवती'ति। सर्वबन्धनविनिर्मुक्तानुभाव्यफलतया हि सर्वलोककामचारः श्रूयते; अतः छान्दोग्यगतदहरविद्याऽपि मुक्तिफलैव। अतो न विद्याभेद इति तत्र स्थितम्।

एतेन वाजसनेयकगतहार्दविद्या निर्गुणविद्येति वदन्तः परे प्रत्युक्ताः। तथा हि सति छान्दोग्यसगुणहार्दविद्यैक्यसमर्थनस्य च परस्परगुणोपसंहारसमर्थनस्य चासङ्गतिप्रसङ्गात्। न च निर्गुणायामपि विद्यायां ब्रह्मस्तुत्यर्थमेव सगुणविद्यासंबन्धिगुणोपसंहारः संभवतीति वच्यम् — निर्गुणस्योत्कृष्टस्य परस्य ब्रह्मणः सगुणस्वरूपापकर्षप्रतिपादनेन निन्दाया एव प्रतीयमानतया स्तुतेरप्रतीतेः। अत एव, "व्यतिहारो विशिंषन्ती" ति सूत्रे

'वस्तुतो निर्गुणस्य ब्रह्मणः सगुणत्वेनोपासनमात्रेण निकर्षो नास्ति; ब्रह्मणो वस्तुतो निर्गुणत्वा'दिति परैरेव सगुणत्वे अपकर्षमङ्गीकृत्य तस्यावास्तवत्वेन परिहारस्य कृतत्वात् । किञ्च लोके हि स्तुतिर्विधेये रुच्युत्पादनेन सप्रयोजना । न चात्र निर्गुणस्य तज्ज्ञानस्य वा विधेयत्वमस्ति । प्रतिपाद्ये च निर्गुणे ब्रह्मणि सगुणत्वप्रतिपादनलक्षणा स्तुतिश्च निर्गुणप्रतिपत्तिलक्षणशेषिविरुद्धा । अतः "कामादीतरत्रे" त्यधिकरणे परेषां विद्यैक्यगुणोपसंहाराभिलपनं दुरुपपादमिति यत्किञ्चिदेतदित्यस्तां तावत् ।

यच्चेदमुच्यते, निर्गुणवाक्यसंनिधिपठितस्य, 'सर्वस्य वशी' त्यादिगुणगणसमर्पकवाक्यस्य निषेध्यानुवादकतयैकवाक्यत्वसंभवे वाक्यभेदेन गुणप्रापकता न युक्तेति, — तन्न[1] — वशीत्वादीनां गुणानामन्यतोऽप्राप्तेः । श्रुतिप्राप्तस्य श्रुत्या निषेधे, अहिंसावाक्यमग्नीषोमीयहिंसायाः, अग्रहणवाक्यञ्च षोडशिग्रहणस्य, 'असद्वे' त्यादिवाक्यञ्च ब्रह्मसत्त्वस्य निषेधकं किं न स्यात् । किञ्च, [2] 'मृडमृदे' त्यादिविधिः, 'नक्त्वा सेट्' इत्यादिनिषेधस्येव सगुणवाक्यमेव निर्गुणत्वनिषेधकं किं न स्यात् । न च जगत्कर्तृत्वाक्षिप्तसार्वज्ञ्यादिगुणाः निषेधायानूद्यन्त इति वक्तुं शक्यम् — तथासति जगदारोपाधिष्ठानत्वेन कुसमयसिद्धं ब्रह्मसत्त्वम्, 'असद्वा इदमग्र आसी' दिति निषेद्धुम्, 'सत्यं ज्ञानमनन्त' मित्यनूद्यते, ज्ञाननिवर्त्यत्वश्रुत्याक्षिप्तं विश्वमिथ्यात्वम्, 'नेह नानास्ती' त्यनूद्यते —'विश्वं सत्यं मघवाना' इति वाक्येन प्रतिषेद्धुमिति किं न स्यात । सत्यत्वं हि मिथ्यात्वप्रतिषेध एव । 'आत्मैवेदं सर्व' मिति वाक्यप्राप्तो जीवब्रह्माभेदः, 'तत्त्वमसी' त्यनूद्यते, 'द्वा सुपर्णे' ति निषेद्धुमिति च किं न स्यात् ।

'नेह नानास्ति किञ्चने' ति वाक्ये किञ्चनेत्यनेनैव निषेध्यसमर्पणस्य सिद्धतया निषेध्यसमर्पणाय, 'एष सर्वेश्वरः' इत्यादीनामनपेक्षितत्वाच्च । न हि, 'न सुरां पिबे' दित्यत्र निषेध्यसमर्पणाय, 'सुरां पिबे' दिति वाक्यान्तरमपेक्षितम् । वशित्वादीनां निषेधार्थमनुवादे, 'स न साधुना कर्मणा भूयान्' इति निषेध्यानां कर्मकृतोत्कर्षादीनामिव ब्रह्मणि तेषां व्यावहारिकसत्यत्वस्याप्यभावप्रसङ्गात् ।

1. तत्र ब्रूमस्तावत् — वशित्व. क.　　2. कुधमृदेत्यादिविधिः नित्या नेत्यादिनिषे. क.

यच्चेदमुच्यते — सगुणनिर्गुणवाक्यविरोधे परत्वेन निर्गुणवाक्येनापच्छेदन्यायेन सगुणवाक्यं बाध्यत इति — तदेतत् सकलजनविदितसामान्यविशेषन्यायानभिज्ञानात् ।

'को हि मीमांसको ब्रूयात् विरोधे शास्त्रयोर्मिथः ।
एकं प्रमाणमितरत्त्वप्रमाणं भवेदिति ॥ '

लोके हि सामान्यं विशेषेण, सावकाशं निरवकाशेन, नित्यं नैमित्तिकेन, नैमित्तिकं काम्येन, अतिदिष्टमुपदिष्टेन बाध्यमानमपि स्वोचितसत्यवस्तुसमर्पणेन संभावनीयं दृष्टम्; न तु मिथ्याभूतवस्तुविषयकतया । ततश्च सगुणवाक्यस्य मिथ्याभूतवस्तुविषयसमर्पणेन संभावनां कुर्वन् कथं नोपहास्यः ।

अतोऽत्रापच्छेदनयानवतारादुत्सर्गापवादनयेन निषेधस्य विशिष्यविहितेतरगुणविषयत्वस्य वक्तव्यत्वात्, उपाध्यनुक्तिपूर्वकमुक्तानां गुणानां निरुपाधिकत्वस्य स्वतःप्राप्तत्वात्, 'स्वाभाविकी ज्ञानबलक्रिया चे' ति स्वाभाविकत्वश्रुतेः, 'नान्यो हेतुर्विद्यत ईशनाये' ति ईश्वरत्वस्याहेतुकत्वश्रवणात्, 'सत्यः सोऽस्य महिमे' ति च, 'सत्यकामा' इति च तेषां गुणानां सत्यत्वस्यापि प्रतिपादनात् तेषां मानान्तराप्राप्तानां निषेधार्थमनुवाद इत्यप्यसंभवात्, क्वचिद्गुणानामुपास्यत्वश्रवणमात्रेणासत्यत्वे,

'उत्तरस्मिंस्तापनीये शैब्यप्रश्नेऽथ काठके ।
माण्डूक्यादौ च सर्वत्र निर्गुणोपास्तिरीरिता ॥ '

इति परैरप्युपास्यत्वेनाभ्युपगतस्य निर्गुणस्याप्यसत्यत्वप्रसङ्गाच्च, 'यः सर्वज्ञः सर्ववित्' इति स्वरूपोपदेशपरवाक्येषूपासनाविध्यश्रवणेऽपि गुणानां श्रवणाच्च, 'तमेवं विद्वानमृत इह भवती' ति सगुणज्ञानस्य मोक्षहेतुत्वश्रवणेन च गुणानां सत्यत्वमवश्याभ्युपगन्तव्यम् ।

गुणनिषेधश्रुतयस्तु अध्यात्मशास्त्रे गुणशब्दवाच्यत्वेन प्रसिद्धसत्त्वादिगुणनिषेधपरा इत्येवाभ्युपगन्तव्यम् ।

'कस्मादुच्यते ब्रह्मेति । बृहन्तो ह्यस्मिन् गुणाः',

'न हि तस्य गुणाः सर्वे सर्वैर्मुनिगणैरपि ।

वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैः ॥'

'नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमीरितः ।'

'तवानन्तगुणस्यापि षडेव प्रथमे गुणाः ॥'

'वर्षायुतैर्यस्य गुणा न शक्या वक्तुं समेतैरपि सर्वलोकैः ।
महात्मनः शङ्खचक्रासिपाणेर्विष्णोर्जिष्णोर्वसुदेवात्मजस्य ॥'

'चतुर्मुखायुर्यदि कोटिवक्त्रो भवेन्नरः क्वापि विशुद्धचेताः ।
स ते गुणानामयुतैकदेशं वदेन्न वा देववर प्रसीद ॥'

'यथा रत्नानि जलधेरसंख्येयानि पुत्रक ।
तथा गुणा ह्यनन्तस्य असंख्येया महात्मनः ॥'

'इषुक्षयान्निवर्तन्ते नान्तरिक्षक्षितिक्षयात् ।
मतिक्षयान्निवर्तन्ते न गोविन्दगुणक्षयात् ॥'

'समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशाद्धृतभूतसर्गः ।
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ।
तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः ।
परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ।'

इत्यादिप्रमाणानामनाञ्जस्यमेव परमते । उक्तञ्च वरदाचार्यैः —

'यद्ब्रह्मणो गुणशरीरविकारभेदकर्मादिगोचरविधिप्रतिषेधवाचः ।
अन्योन्यभिन्नविषया न विरोधगन्धमर्हन्ति तन्न विधयः प्रतिषेधबाध्याः ॥'

इति । अनयैव दिशा अन्तर्यामिब्राह्मणादिषु, 'य आत्मनि तिष्ठन्' इत्यादिवाक्यैर्जीवब्रह्मणोर्नियन्तृनियाम्यभावलक्षणस्य भेदस्य विहितत्वात् निषेधस्य तदितरविषयत्वस्यैव युक्तत्वात्, समस्तहेयरहितस्य ब्रह्मणो हेयाश्रयजीवैक्यस्यायुक्तत्वात्, हेयस्यापारमार्थ्येऽपि तस्य निरसनीयतया हेयत्वस्यावर्जनीयत्वात्, तत्प्रतिभटतयोक्तस्य ब्रह्मणः तत्संबन्धार्ह[1]वस्त्वैक्यासंभवात्, सर्वज्ञस्य ब्रह्मणः स्वसंकल्पेन

1. संबन्धावह. क.

**तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन ।**

स्वगतहेयस्य तद्विषयविभ्रमस्य वोपादानायोगात्, असर्वज्ञत्वे सर्वज्ञश्रुतिविरोधात्, सर्वशक्तेः स्वगतहेयानिवारकत्वायोगात्, [1] अशक्तत्वस्य सर्वशक्तित्वश्रुतिविरोधेनाभ्युपगमानर्हत्वात्, श्रुतिबलादेव विरुद्धयोरप्यविरोधाभ्युपगमे मीमांसानैरर्थक्यप्रसङ्गात्, 'पृथगात्मानं प्रेरितारं च मत्वा' इति पृथक्त्वज्ञानस्य मोक्षहेतुत्वावेदनात्, 'यस्मात् क्षरमतीतोऽहम्' इत्युक्तवैलक्षण्यज्ञानवत एव, 'असंमूढः स मर्त्येषु' इत्यसंमूढत्वप्रतिपादनात्, जीवब्रह्मणोर्नियन्तृनियाम्यभावलक्षणभेदस्य मानान्तराप्राप्तत्वात् विहितस्य निषेधायोगात्, उपासनार्थत्वाश्रयणस्य, 'अथ योऽन्यां देवतामुपास्ते' इति वाक्यप्रतिपन्नैक्येऽपि संभवात्, ऐक्यस्य स्वरूपोपदेशवाक्यप्रतिपन्नत्ववत् स्वरूपोपदेशपरान्तर्यामिब्राह्मणप्रतिपाद्यत्वस्य नियन्तृनियाम्यभावलक्षणभेदेऽपि सत्त्वाच्च भेदनिषेधश्रुतयस्तु पृथक्सिद्धत्वलक्षणाब्रह्मात्मकभेदनिषेधपरा इत्येव स्थितमित्यलं प्रसक्तानुप्रसक्त्या । प्रकृतमनुसरामः ।

**तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन** । तमीदृशं परमात्मानं **वेदानुवचनेन** वेदाध्ययनेन, यज्ञेन, **अनाशकेन** अनशनलक्षणेन तपसा च ब्राह्मणाः ज्ञातुमिच्छन्तीत्यर्थः । आशः अशनम् । भावे घञ् । अनाशः अनशनम् । [अनाशकं (कः ?)] । स्वार्थे कः । तच्चाशनं कामानशनात्मकम्; न तु सर्वात्मनाऽनशनम्, देहपातप्रसङ्गात् । यद्वा, न विद्यते आशा फलेषु यस्य तदनाशम् । स्वार्थे कप्रत्ययः । अनाशकम् । तादृशेन तपसा । फलाभिसंधिरहितेनेति यावत् । अश्वेन जिगमिषति, असिना जिघांसतीत्यादौ अश्वादेः सन्प्रत्ययप्रकृत्यर्थीभूतगमनादिसाधन-

1. एतदादिपञ्चम्यन्तहेतुद्वयं खादिकोशयोः ।

---

'नानुध्यायाद् बहून् शब्दान्' इत्यादि श्रुत्वा सर्वकर्मविरक्तिर्न कार्येति तदावश्यकत्वं दर्शयति **तमेतं वेदानुवचनेनेति** । वेदानुवचनेनेति ब्रह्मचर्यस्य, यज्ञेन दानेनेति गार्हस्थ्यस्य, तपसानाशकेनेति वानप्रस्थस्य च प्रदर्शनात् ब्रह्मविद्यायाः सर्वाश्रमसाधारण्यं सूचितम् । संन्यासाश्रममादरेण पृथग् वक्ष्यति **एतमेव प्रव्राजिन** इति । **वेदानुवचनेन विविदिषन्ती**ति मध्ये क्रियाप्रयोगात् वेदानुवचनं सर्वसाधारणमित्यपि सूच्यते । तैत्तिरीये हि स्वाध्यायप्रवचनसमुच्चयः सर्वत्र कर्मसु दर्शितः, 'ऋतञ्च स्वाध्यायप्रवचने च' इत्यादिना ।

त्वप्रतिपादनदर्शनात् इहापि वेदनसाधनत्वमेव प्रतिपाद्यते ; न तु विविदिषासाधनत्वम्। यद्यपि प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमित्युत्सर्गः — तथाऽपि, 'अश्वेन जिगमिषती' त्यादौ सन्नन्तप्रयोगस्थले प्रकृत्यर्थप्राधान्यस्यैव व्युत्पत्तिसिद्धत्वात् अत्रापि प्रकृत्यर्थीभूतवेदनसाधनत्वमेव वेदानुवचनादीनां तृतीयया प्रतिपाद्यत इति द्रष्टव्यम् ।

इदञ्च तृतीयाध्याये अङ्गपादे चिन्तितम् । तत्र हि (१) ऊर्ध्वरेतसो यज्ञाद्यभावात् तदङ्गिका विद्या न संभवतीति पूर्वपक्षे प्राप्ते, 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति', 'यदिच्छन्तो ब्रह्मचर्यं चरन्ति', 'ये चेमे ऽरण्ये श्रद्धा तप इत्युपासते' इत्यादिवाक्यैरूर्ध्वरेतस्सु ब्रह्मविद्यायाः प्रमाण प्रतिपन्नत्वात् तेषु विद्या अग्न्याधानलक्षणाग्नीन्धनपूर्वकाग्निहोत्राद्यनपेक्षेति, "अत एव चाग्नीन्धनाद्यनपेक्षे" ति सूत्रे स्थितत्वात् (२) गृहस्थेष्वपि ब्रह्मविद्या अग्नीन्धनाद्यनपेक्षैव । न च विविदिषावाक्यात् यज्ञादीनां तादर्थ्यप्रतीतिरिति वाच्यम्— तेन वाक्येन यज्ञादिकर्मणां विविदिषार्थत्वोपलम्भेऽपि विद्यार्थत्वाप्रतीतेरिति पूर्वपक्षे प्राप्ते, उच्यते — "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" । यथा गमनसाधनभूतोऽश्वः परिकरबन्धसापेक्षः, तथा गृहस्थेषु विद्या यज्ञादिसर्वकर्मापेक्षैव ; 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेने' ति श्रुतेः । 'अश्वेन जिगमिषती' त्यादिसन्नन्तप्रयोगे प्रकृत्यर्थभूतगमनसाधनत्वप्रतीतिदर्शनेन, 'यज्ञेन विविदिषन्ति' इत्यत्रापि यज्ञादौ वेदनसाधनत्वस्यैव प्रतीतेरिति स्थितम् ।

(३) तथा तत्रैव पादे, 'यावज्जीवमग्निहोत्रं जुहोती' ति नित्यतया विहितानामग्निहोत्रादीनामनित्यकामनाविषयब्रह्मविद्यार्थत्वे नित्यानित्यसंयोगविरोधात् आश्रमकर्मापेक्षया विद्यार्थानि कर्माणि भिन्नानीति पूर्वपक्षे प्राप्ते — यथैकस्यैव खदिरत्वस्य, 'खादिरो यूपो भवति', 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इति वचनद्वयेन क्रतौ फले च पृथग्विनियोगदर्शनात् क्रत्वर्थतया नित्यस्यापि खदिरत्वस्यानित्यकामनाविषयवीर्यार्थत्वाविरोधः, तद्वत् — 'यावज्जीवमग्निहोत्रं जुहोती' ति नित्यतयाऽग्निहोत्रादीनां विहितत्वादाश्रमकर्मत्वमप्यस्ति ; विविदिषावाक्येन विद्यासहकारितया विहितत्वाद्विद्यार्थत्वमप्यस्तीति स्थापितम्, "विहितत्वाच्चाश्रमकर्मापि", "सहकारित्वेन च" इति सूत्राभ्याम् ।

नन्विह यथा कुण्डपायिनामयने, ‘ मासमग्निहोत्रं जुहोती ’ ति श्रुतं मासाग्निहोत्रं नैयमिकाग्निहोत्राद्भिद्यते, तथा विविदिषावाक्येन विद्यार्थतया विधीयमानं नित्यादग्निहोत्रादेरन्यदेवास्तु । तत्राह — “ सर्वथाऽपि त एवोभयलिङ्गात् ” । विद्यार्थत्वे, आश्रमार्थत्वेऽपि त एव यज्ञादयः प्रतिपत्तव्याः । उभयत्र यज्ञादिशब्दैः प्रत्यभिज्ञाप्यमानत्वरूपलिङ्गात् । ‘ यज्ञेने ’ त्यादिशब्दैः प्रसिद्धयज्ञादिविलक्षणयज्ञादिविधाने तस्य द्रव्यदेवताद्यभावे अरूपत्वप्रसङ्गात् , तत्सद्भावे च देवतोद्देशेन द्रव्यत्यागत्वरूपयज्ञशब्दप्रवृत्तिनिमित्तेन (तत्सत्त्वेन)यज्ञशब्दमुख्यार्थतया, ‘ मासाग्निहोत्रवद्गौण्या वृत्त्या कर्मान्तरं विधीयते ’ इति वक्तुमशक्यत्वात् न तन्न्याय इह प्रवर्तते । अतः, ‘ यज्ञोऽध्ययनं दानमिति प्रथमः ’, ‘ यज्ञानां जपयज्ञोऽस्मि’, ‘भोक्तारं यज्ञतपसाम् ’ इत्यादिष्विव प्रसिद्धयज्ञपरत्वमेव युक्तम् ।

“ अनभिभवञ्च दर्शयति ” । ‘ धर्मेण पापमपनुदती ’ त्यादिश्रुतिश्च तानेव यज्ञादिधर्मान् निर्दिश्य तैर्विद्याया अनभिभवं = पापकर्मभिरुत्पत्तिप्रतिबन्धाभावं दर्शयति ।

ततश्च प्रसिद्धस्यैवाग्निहोत्रादेर्धर्मस्य विद्योत्पत्तिप्रतिबन्धकपापापनोदहेतुत्वात् तस्यैव विद्याङ्गत्वमिति स्थितम् ।

(४) तथा तत्रैव — अनाश्रमिणां विधुरादीनामाश्रमधर्माभावात् तदङ्गिका विद्या न संभवतीति पूर्वपक्षे प्राप्ते, उच्यते — “ अन्तरा चापि तु तद्दृष्टेः ” । तुशब्दः पक्षव्यावर्तकः । चशब्दोऽवधारणे । आश्रमान् अन्तरा वर्तमानानां — अनाश्रमिणामिति यावत् । तेषामपि विद्यायामधिकारोऽस्त्येव । तादृशानामपि भीष्मरैक्वसंवर्तादीनां ब्रह्मविद्यादर्शनात्, ‘यज्ञेन दानेन तपसाऽनाशकेने ’ ति आश्रमानियतदानतपआदिभिरपि विद्यानुग्रहस्य श्रुतत्वात् ।

“ अपि स्मर्यते ” । ‘ जप्येनापि च संसिद्ध्येत् ब्राह्मणो नात्र संशयः ’ इति हि स्मर्यते । संसिध्येत् = जपाद्यनुगृहीतया विद्यया सिद्धो भवतीत्यर्थः ।

“ विशेषानुग्रहश्च ” । ‘ तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्याऽऽदित्यमभिजयन्ते ’ इति आश्रमानियततपआदिधर्मविशेषैरनुग्रहः श्रूयते ।

**एतमेव विदित्वा मुनिर्भवति। एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति।**

---

"अतस्त्वितरज्ज्यायो लिङ्गाच्च" । तुशब्दोऽवधारणे । अतः=अनाश्रमित्वादितरत्=आश्रमित्वमेव ज्यायः। अनाश्रमित्वमापद्विषयम्। शक्तस्य त्वाश्रमित्वमेवोपादेयम्। भूयोधर्मकाल्पधर्मकयोः अतुल्यकारित्वात्। लिङ्गाच्च। लिङ्गं हि स्मृतिः। स्मर्यते हि — 'अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः' इति। असति वैराग्ये दारालाभः आपत्; सति वैराग्ये संन्यासस्वीकारसंभवात्। न च अविरक्तस्य ब्रह्मविद्याधिकारः कथमुच्यत इति शङ्क्यम् — अग्निहोत्राद्यनुतिष्ठासया दारपरिग्रहरागसंभवेऽपि दारादिषु भोग्यतातिशयबुद्धिकृतरागाभावेन ब्रह्मविद्याधिकारसंभवात्। देहान्तरोपभोग्यब्रह्मव्यतिरिक्तफलाशाऽभावेन मुमुक्षौपयिकवैराग्यसंभवाच्च, एवमेव व्यासार्यैरुक्तत्वाच्च न दोषः। इत्थं स्थितम्। प्रकृतमनुसरामः।

**एतमेव विदित्वा मुनिर्भवति।** **एत**मेवात्मानं विदित्वा **मुनिः** मननशीलः योगी भवति; नान्यमित्यर्थः। **एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति।** लोक्यत इति लोकः। **एतमेव लोकं** परमात्मानमिच्छन्तः संन्यासिनः संन्यस्यन्तीत्यर्थः। **एतमेवे**त्यवधारणात् लोकान्तरेप्सूनां पारिव्राज्ये नाधिकार इति गम्यते।

---

**एतमेव विदित्वा मुनिर्भवतीति।** नन्वत्र मननरूपयोगहेतुतया **विदित्वे**ति निर्दिष्टं वेदनं वाक्यार्थज्ञानम्, न तूपासनमिति, **विविदिषन्ती**ति पूर्ववाक्येऽपि वेदनं तदेव युक्तम्; पदैक्यात्। अतो यज्ञादीनां वाक्यार्थज्ञान एवोपयोगः; नोपासने इति चेन्न-**विदित्वा मुनिर्भवती**त्यस्य वेदितुर्मुनिशब्दवाच्यत्वमित्यर्थात् वेदनमुपासनमेव स्यादिति। आलम्बनसंशीलनरूपमननविवक्षा वाऽस्तु। तदा, **विदित्वा मुनिर्भवति** उपास्य योगविच्छेददशायामपि तन्मननपरो भवतीत्यर्थ इति कहोलं प्रति प्रागुक्तं मौनमिदञ्चैकं स्यात्। पुरस्तादुपरिष्टाच्च बहुवचने सति अत्र एकवचननिर्देशः, 'यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः' इतीदृशाधिकारिदौर्लभ्यसूचनाय। **एतमेवे**त्येवकारः आत्मान्तरव्यवच्छेदार्थः; पूर्वं जीवस्यापि प्रस्तुतत्वात्। 'नानुध्यायाद् बहून् शब्दान्' इतिवत् देवतान्तरनिषेधोऽपि सिद्ध्यति। तथा चान्यवेदित्रा मनने क्रियमाणे न तस्य मुख्यमुनित्वमिति भावः।

**एतद्ध स्म वै तत् पूर्वे विद्वांसः प्रजां न कामयन्ते, किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति । ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति । या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणा उभे ह्येते एषणे एव भवतः ।**

**स एष नेति नेत्यात्मा अगृह्यो न हि गृह्यते, अशीर्यो न हि शीर्यते, असङ्गो न हि सज्ज्यते, असितो न व्यथते न रिष्यति ।**

---

न हि गङ्गाद्वारं प्रतिपित्सुः काशीवासी पूर्वाभिमुखो याति । **एतद्ध स्म वै तत् पूर्वे विद्वांसः प्रजां न कामयन्ते** । हस्मवै इति प्रसिद्धौ । **तदेतद्विद्वांसः** एतादृशब्रह्मविदः पूर्वे प्रजां न कामयन्ते । तत्र हेतुं तदभिसन्धिमाह **किं प्रजया— अयं लोक इति** । प्रजासाध्योऽयं लोकोऽपि येषामस्माकं **अयमात्मा** परमात्मैव, एतल्लोकसाध्यस्य सुखानुभवस्य परमात्मानुभवाम्बुधिलवकणिकायमानत्वात्— अतः एतादृशे परमात्मनि लब्धे ते वयमेतल्लोकरूपक्षुद्रफलसाधनभूतया प्रजया किं करिष्याम इति प्रजां पूर्वे ब्रह्मविदो न कामयन्त इत्यर्थः । **ते ह स्म पुत्रैषणायाश्च — एषणे एव भवतः** । इदञ्च कहोलब्राह्मणे व्याख्यातम् ।

**स एष नेति नेत्यात्मा — न रिष्यति** । एतदपि प्राग् व्याकृतम् ।

---

**प्रजां न कामयन्ते** इति । ऐहिकस्यामुष्मिकस्य च प्राकृतस्य फलस्याभिवृद्धेरनाकाङ्क्षितत्वात् तत्साधनप्रजाकामना तेषां नेत्यर्थः ।

**स एष नेति नेती**ति वाक्यं प्रपञ्चविलक्षणत्वात् परमात्मनः प्रपञ्चाद्विरक्तेनैव तदनुभवसंभव इति प्रदर्शनार्थम्; तस्यानित्यत्वहेयत्वरहितत्वात् नित्यभोग्यत्वमिति सूचनार्थञ्च ।

**प्राग् व्याकृत**मिति । विदग्धब्राह्मणान्ते व्याकृतम् । **श्रीभाष्ये** च कामाद्यधिकरणे, "स एष नेति नेत्यात्मेत्यत्र च इतिशब्देन प्रमाणान्तरप्रतिपन्नं प्रपञ्चाकारं परामृश्य, न तथाविधं ब्रह्मेति सर्वात्मभूतस्य ब्रह्मणः प्रपञ्चविलक्षणत्वं प्रतिपाद्यते । तदेव चानन्तरमुपपादयति अग्राह्यो न हि गृह्यते—इति । प्रमाणान्तरग्राह्यविसजातीयत्वात् प्रमाणान्तरेण न गृह्यते, विशरणीयविसजातीयत्वान्न विशीर्यते" इति भाषितम् । अत्र **नेतिनेती**त्येतत्, मूर्तामूर्तब्राह्मणे प्राङ् नेतिनेतीत्येतच्च प्रकरणानुरोधात् त्रिभिन्नार्थमिति च तत्र **व्यासार्यै**रुक्तम् । अस्य साजात्यनिषेधपरत्वात्, तस्य चेयत्ताप्रतिषेधपरत्वादिति । 'स एष नेति नेती'ति वाक्यं प्रकृतपरमात्म-

**एतमु हैवैते न तरत इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे इहै (उहै[1]) वैष एते तरति नैनं कृताकृते तपतः ॥ २२ ॥**

1. उहै. पा०. शां. माध्यन्दिने तु, 'इत्युभे । उभेह्येष' इति ।

---

**एतमु हैवैते—इत्युभे**[1]। **अतः** देहपालादिलक्षणात् प्रकृताद्धेतोः पापमकार्षम्, **कल्याणं** पुण्यमकरवमिति द्वे **एते** चिन्ते **एतम्** उक्तलक्षणब्रह्मविदं **नैव तरतः** न प्राप्नुत इत्यर्थः । तत्र हेतुमाह **इहैवैष एते तरति** । यस्माद्धेतोः **इहैव** अस्मिन्नेव लोके वसन् **एषः** उक्तब्रह्मवित् **एते** पुण्यं च पापं च [[2]उभयम् अति] तीर्णवानित्यर्थः । तत्र हेतुः **नैनं कृताकृते तपतः**। **एनं** हि ब्रह्मविदं **कृताकृते** सुकृतदुष्कृते फलसंबन्धिनं कर्तुं न प्रभवत इत्यर्थः । 'एवमेवंविदि पापं कर्म न श्लिष्यते' इत्यश्लेषश्रवणादिति भावः ॥ (२२) ॥

1. उभे इत्यत्र वाक्यच्छेदः ख. ग. कोशयोः । अत एव भाष्येऽपि द्वे इति प्रतिपदम् । क. कोशे तु उभे इत्यादिकमुपरितनवाक्यम् । तत्र कोशे तद्भाष्ये उभयमिति पदमस्ति । उहेति पाठो भाष्यासंमत इव । 2. इदं क. कोशेऽधिकम् ।

---

विषयम् । **अगृह्यः** ग्राह्यविसजातीयः । यदि ग्राह्यजातीयः स्यात्, गृह्येत । न हि गृह्यते इत्यर्थः । शरीरान्तर्वर्तितया जीववत् परमात्मनि सुखदुःखानुभवशङ्कायां तत्र तन्निषेधः क्रियते **असङ्ग** इत्यादिना । **एतमुहे**ति वाक्यं न परमात्मनोऽपहतपाप्मत्वपरम्; किंतु उपरितनीमृचं तदुपरितनं वाक्यञ्चानुसृत्य ब्रह्मविद्विषयं मन्तव्यम् । अतः **मुनिर्भवती**त्युक्तमुनिपरम् **एत**मिति पदम् । अनादिसञ्चितानन्तपुण्यपापपरवशस्य अद्यतनकाम्यत्यागमात्रेण कथं फलप्राप्तिरिति शङ्कायाम् **एतमुहे**त्यादिकमारब्धम् ।

नन्वत्र इतिशब्दत्रये द्वितीयतृतीयौ चिन्ताकारसमर्पकौ स्याताम् । प्रथमस्तु व्यर्थः । शाङ्करे तु युक्तमिति पूरयित्वा, 'एते न तरत इति युक्त' मिति व्याख्यातम् । **एते** इतिपदेन आकारिनिर्देशपूर्वकं तदाकारसमर्पकवाक्ये **अतः पाप**मित्यादिना वक्ष्यमाणे सति, मध्ये इतिशब्दघटनं स्वरसमपि न भवति । न च—अत इति पदस्थान एव **इत्यत** इति । एवम्भूतात् फलाद्धेतोः इत्यर्थः — इति वाच्यम् — फलविशेषं पूर्वमनिर्दिश्य इतिशब्दस्य तत्प्रकारवाचिनः प्रयोगायोगात् । उच्यते । प्रथम इतिशब्दः लोकेऽनुभूयमानरीतिप्रदर्शकः । यथा अविद्वांसमेते तरतः, इति = एवं दृश्यमानप्रकारेण एते एतमेव न तरतः इत्यर्थः ।

प्रथमस्**तरतिः** प्राप्तिवचनः; द्वितीयोऽतिक्रमवचनः । एवमग्रेऽपि । **नैनं कृताकृते तपतः** इत्यस्य, 'एतं ह वाव न तपति किमहं साधु नाकरवम् किमहं पापमकरव' मिति आनन्दवल्ल्यन्तर्गतवाक्यसमानार्थस्वीकारापेक्षया इहोक्तार्थस्वीकारः श्रेयान्; **'नैनं पाप्मा तपती'**ति वक्ष्यमाणसमानार्थकत्वस्य संप्रति सिद्धेः । तत्र पाप्मशब्दः सुकृतदुष्कृतपरः ।

**तदेतदृचाऽभ्युक्तम् ।**

**एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान् ।**
**तस्यैव स्यात् पदवित् तं विदित्वा न लिप्यते कर्मणा पापकेन ॥**

**इति । तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति (पश्येत्), सर्वमात्मानं पश्यति ।**

---

**तदेतदृचाऽभ्युक्तम् । तदेतत्** पुण्यपापसंतरणमभिमुखीकृत्य ऋचा उक्तमित्यर्थः । तामेवर्चं पठति **एष नित्यो महिमा ब्राह्मणस्य । ब्राह्मणस्य** ब्रह्मविदः य एष महिमा, सः **नित्यः** ब्रह्मज्ञानानन्तरं यावदात्मभावितया अनुवर्तत इत्यर्थः । कोऽसौ महिमेत्यत्राह **न वर्धते कर्मणा नो कनीयान् तस्यैव स्यात् पदवित् । तस्य** ब्रह्मणः **पदवित्** — पद्यत इति पदं स्वरूपम् — ब्रह्मस्वरूपविदेव कर्मणा न वर्धते, कर्मणा कनीयांश्च न स्यात् । पुण्यपापलक्षणकर्मकृतोत्कर्षापकर्षशून्यस्स्यादित्यर्थः । उक्तब्रह्मविन्महिमज्ञानस्य फलमाह **तं विदित्वा न लिप्यते कर्मणा पापकेन । तं** ब्रह्मविन्महिमानं विदित्वा नरः पापकेन कर्मणा न लिप्यत इत्यर्थः ।

**तस्मादेवंवित् — आत्मन्येवात्मानं पश्यति । तस्मात्** ब्रह्मविद एवंविधमहिमशालित्वात् **एवंवित्** शास्त्रजन्यज्ञानवान्, — शमः अन्तरिन्द्रियनियमनरूपः । दमः बहिरिन्द्रियनियमनरूपः । उपरतिः निषिद्धकाम्यादिषु कर्मसूपरतिः । तितिक्षा क्षमा । **समाहितः** समाहितचित्त इत्यर्थः — एवंरूपस्सन् **आत्मनि** जीवात्मनि **आत्मानं** परमात्मानं तदन्तर्यामिणं **पश्यति** पश्येदित्यर्थः । भाष्यादिषु कोशेषु 'आत्मन्येवात्मानं पश्येत्' इति पाठो दृश्यते । अतः पाठद्वैविध्यमत्र द्रष्टव्यम् । किञ्च **सर्वमात्मानं पश्यति । आत्मानं** परमात्मानं **सर्वं** सर्वशरीरकञ्च **पश्यति** पश्येदित्यर्थः ।

---

**एष नित्यो महिमेति ।** कर्माधीनवृद्धिह्रासविरहः, ब्रह्मस्वरूपानुभवैकतानता चेति द्वयमस्य नित्यमित्यर्थः । **तस्य पदवित्** इत्यस्य ब्रह्मस्थानभूतवैकुण्ठभाक्, परब्रह्मपदारविन्दसेवीत्येवमर्थोऽपि घटते । दर्शनपर्यन्तपर्यवसितं वेदनमेव पाप्मतरणहेतुरिति स्पष्टयितुं तत्र शमदमादिपरिकरविधानार्थञ्चाह **तस्मादेवमिति । शान्त** इत्यादिना परिकरविधानम् । तेन, 'पाप्मलेपाभावात् वाक्यार्थविदः यथेच्छचरणं न दोषाये'ति विपरीतमतिर्व्युदस्ता भवति ॥

**नैनं पाप्मा तरति, सर्वं पाप्मानं तरति, नैनं पाप्मा तपति, सर्वं पाप्मानं तपति, विपापो विरजोऽविचिकित्सो ब्राह्मणो भवति। एष ब्रह्मलोकः [1]सम्राडिति होवाच याज्ञवल्क्यः।**

1. सम्राडेनं प्रापितोऽसीति होवाच. शां

इदञ्च वाक्यं तृतीयाध्याये अङ्गपादे चिन्तितम्। तत्र हि गृहस्थस्य बाह्याभ्यन्तरकरणव्यापाररूपकर्मानुष्ठानस्याऽऽवश्यकत्वात्, शमादीनाञ्च तद्विपरीतत्वात् नानुष्ठेयत्वमिति प्राप्ते उच्यते – "शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषाम्[1] वश्यानुष्ठेयत्वात्"। तथाऽपि=गृहस्थस्य कर्मानुष्ठानावश्यकत्वेऽपि गृहस्थः शमदमाद्युपेतस्स्यात्। 'शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यती' ति विद्याङ्गतया शमादीनां विधानात्। अशान्तचित्तस्य चित्तविक्षेपेण विद्यानिष्पत्त्यसंभवेन दृष्टार्थतया अनुष्ठेयत्वाच्च। न च कर्मणां शमादीनाञ्च विरोधः; भिन्नविषयत्वात्, 'विहितेषु [2]करणव्यापारः; इतरेषु तदुपरमरूपशमः' इति। न च करणव्यापाररूपकर्मसु वर्तमानस्य वासनानुवृत्त्या शमादिकं न संभवतीति वाच्यम् — परमपुरुषाराधनरूपकर्मणां वासनोच्छेद एव हेतुत्वादिति स्थितम्। प्रकृतमनुसरामः।

**नैनं पाप्मा तरति; सर्वं पाप्मानं तरति**। **एनं** ब्रह्मविदं **पाप्मा** पुण्यपापलक्षणं कर्म **न तरति** न प्राप्नोति। अयं तु ब्रह्मवित् **सर्वं पाप्मानं तरति** सर्वपापातिगो भवतीत्यर्थः। **नैनं पाप्मा तपति; सर्वं पाप्मानं तपति**। **एनं** ब्रह्मविदं पाप्मा **न तपति** न बाधते। अयमेव सर्वं पाप्मानं ज्ञानाग्निना **तपति** दहतीत्यर्थः। **विपापो विरजोऽविचिकित्सो ब्राह्मणो भवति**। **विपापः** पापशून्यः **विरजः** विरागः **अविचिकित्सः** संशयशून्यः — 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः' इत्युक्तेः —, **ब्राह्मणः** ब्रह्मविद्भवतीत्यर्थः। अत्र **ब्राह्मण** इति पश्चान्निर्दिष्टस्यापि ब्राह्मणशब्दस्यौचित्यादुद्देश्यसमर्पकत्वमेव। ततश्च ब्राह्मणो विपापो विरजोऽविचिकित्सो भवतीत्यर्थः। **एष ब्रह्मलोकः**। [3]'आत्मानं पश्येत्' इति द्रष्टव्यतयोक्तो यः, स ब्रह्मलोकः। ब्रह्मैव लोको **ब्रह्मलोकः**, हे सम्राडिति याज्ञवल्क्य उवाचेत्यर्थः।

1. तेषामप्यवश्येति प्रायः श्रीभाष्यकोशे सूत्रपाठः। 2. क. कोशे करणपदमिह न। 3. वाक्यमिदं क. कोशे न।

**सोऽहं भगवते विदेहान् ददामि, मां चापि सह दास्यायेति ॥ २३ ॥**

**स वा एष महानज आत्माऽन्नादो वसुदानः । विन्दते वसु य एवं वेद ॥ २४ ॥**

---

**सोऽहं भगवते विदेहान् ददामि मां चापि सह दास्यायेति ।** **सो**ऽहमेवमनुशिष्टब्रह्मविद्यः स्वराज्यं सर्वं भगवते तुभ्यं ददामि ; राज्येन सहात्मानमपि कैङ्कर्याय ददामीति जनक उवाचेत्यर्थः ॥ २३ ॥

एवं जनकयाज्ञवल्क्याख्यायिकायां व्याख्यात आत्मा उपासकानामुपासनभेदेन भुक्तिमुक्तिप्रद इति श्रुतिराह **स वा एष — वेद** । **अन्नादः** अन्नदः । **वसुदानः** वसुप्रदः । **य एवं वेद** = अनेनाऽऽकारेण ब्रह्मोपासीनः **विन्दते वसु** अन्नं वसु च लभते इत्यर्थः ।

इदञ्च तृतीयाध्याये उभयलिङ्गपादे चिन्तितम् । तत्र हि ऐहिकामुष्मिकं शास्त्रीयं फलं कर्मण एव स्यात्; तस्य फलसाधनत्वश्रवणादिति पूर्वपक्षे प्राप्तेऽभिधीयते — "फलमत उपपत्तेः" । कर्मभिराराधितादस्मादेव परमपुरुषात् फलम् ; सर्वज्ञस्य सर्वशक्तेः ब्रह्मणः सेवाराधितराजवत् फलप्रदत्वोपपत्तेः । "श्रुतत्वाच्च" । 'स वा एष महानज आत्माऽन्नादो वसुदानः' इति तस्यैव फलप्रदत्वस्य श्रुतत्वात् ।

पूर्वपक्षमाह "धर्मं जैमिनिरत एव" । यागदानाख्यधर्ममेव जैमिनिः फलप्रदं मन्यते ; अत एव = उपपत्तेः शास्त्राच्च । कृष्यादीनां फलसाधनत्ववत् यागदानादीनां विनश्वराणामपि अपूर्वद्वारेण फलसाधनत्वोपपत्तेः ; 'यजेत स्वर्गकामः' इति विधिप्रत्ययेन प्रकृत्यर्थयागस्यैव फलसाधनत्वावगमात्[1] ।

"पूर्वं तु बादरायणो हेतुव्यपदेशात्" । बादरायणस्त्वाचार्यः पूर्वोक्तमेव परमात्मनः फलप्रदत्वं मन्यते, हेतुव्यपदेशात् = 'यज देवपूजाया' मिति प्रीतिहेतुत्ववाचिना पूजाशब्देन यागस्य देवताप्रीतिहेतुत्वव्यपदेशात् ; 'स एवैनं भूतिं गमयती' त्यादिकर्मविधिशेषवाक्येषु कर्माराधितदेवताया एव [ यागादेः ] प्रीति- (भूतिः) (फलः) हेतुत्वावगमात ; 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' ति फलप्रदायित्वलक्षणप्रभुत्वस्य परमात्मन्येव स्मृतत्वात । आशुविनश्यतः कर्मणो विधि-

1. साधनत्वश्रवणात्. क.

**स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म । अभयं वै ब्रह्म । अभयँ हि वै ब्रह्म भवति, य एवं वेद ॥ २५ ॥**

इति षष्ठाध्याये चतुर्थं ब्राह्मणम् ।

---

वाक्यश्रुतकालान्तरभाविफलसाधनत्वनिर्वाहाय द्वारापेक्षायां वाक्यशेषप्रतिपन्नदेवताप्रीतिरूपद्वारपरित्यागेन आत्मसमवेतादृष्टरूपद्वारपरिकल्पनस्यानुचितत्वात् कर्मप्रीतः परमात्मैव फलप्रद इति स्थितम् । प्रकृतमनुसरामः ॥ २४ ॥

**स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म ।** स एष **महानात्मा** परमात्मा [जन्म?] जरामरणशून्यः, **अमृतः** असंसारी, अत एव भयशून्यः । एवम्भूतोऽयमात्मा **ब्रह्म** निरतिशयबृहदि(त्रि?)त्यर्थः । तत्र हेतुमाह **अभयं वै ब्रह्म ।** 'अमृतमभयमेतद्ब्रह्मे' ति निरुपाधिकाभयत्वाश्रयस्य परब्रह्मत्वप्रसिद्धेरिति भावः । तज्ज्ञानस्य फलमाह **अभयं हि वै ब्रह्म भवति य एवं वेद । ब्रह्म भवति** आविर्भूतब्राह्मरूपो भवतीत्यर्थः । शिष्टं स्पष्टम् ॥ २५ ॥ ६–४.

अथ मैत्रेयीब्राह्मणं चतुर्थवदिहापि किञ्चिन्न्यूनातिरिक्तपदविशेषोपेतमारभ्यते । ननु किमर्थोऽस्य पठितस्य मैत्रेयीब्राह्मणस्य पुनः पाठः ? उच्यते । पूर्वं याज्ञवल्क्यः प्रविव्रजिषायां मैत्रेय्यै आत्मतत्त्वमुपदिश्य पारिव्राज्याय प्रवृत्तः स्ववैराग्यमान्द्यं दृष्ट्वा कञ्चित् कालं धनार्जनं कृत्वा गृह एव अनिषिद्धान् कामान् अनुभूय निष्पन्नदृढवैराग्योऽथ प्रविव्रजिषुः पुनर्गृहकृत्यव्यापृतचित्ततया विस्मृतात्मतत्त्वायै मैत्रेय्यै पुनरुपदेष्टुमारभते । अनया चाख्यायिकया वैराग्यमान्द्ये सति संन्यासे

---

ननु याज्ञवल्क्येन अप्रव्रज्यस्थितेन पुनरुपदेशे कृतेऽपि श्रुतौ तदुपदेशस्य द्विर्निबन्धो व्यर्थ इति शङ्कायामाह **अनया चाख्यायिकये**त्यादि । ननु विस्मृतार्थोऽपि मैत्रेयी पूर्वमुपादिष्टोऽर्थो विस्मृत इति ज्ञातवत्येवेति वित्तस्यामृतत्वानुपायतायाः प्रागेव विदितत्वात् पुनरपि, 'यन्नु म इयं भगोः सर्वा पृथिवी' त्यादिप्रश्नादिकम् आञ्जस्येन न घटते । अतः पुनरुपदेशप्रख्यापकवचनभङ्गीविरहात् अकाण्डे तस्याः विस्मरणस्य मुनेर्वैराग्यमान्द्यस्य च कल्पनानुपपत्तेश्च

६—५.

**[अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च। तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव; स्त्रीप्रज्ञैव तर्हि कात्यायनी। अथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन् ॥ १ ॥]**

---

अनधिकार इति प्रदर्शितं भवति। * अत्र विशेषपदानि व्याकुर्मः। यद्वा [1] मैत्रीयीब्राह्मणस्य एतदध्यायेनैकार्थत्वप्रदर्शनाय पुनरप्यारम्भ [2] इति द्रष्टव्यम्।

**अथ ह याज्ञवल्क्यस्य — बभूव**। तयोर्हि मध्ये मैत्रेयी **ब्रह्मवादिनी बभूव** ब्रह्मवदनशीला बभूवेत्यर्थः। **स्त्रीप्रज्ञैव तर्हि कात्यायनी। तर्हि** तस्मिन् काले कात्यायनी **स्त्रीप्रज्ञैव** स्त्रीणां या उचिता गृहव्यापारविषया प्रज्ञा, तादृक्प्रज्ञावत्येव बभूवेत्यर्थः। **अथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन्। अन्यद्वृत्तं** गार्हस्थ्याद्विलक्षणं तुर्याश्रममुपाश्रयिष्यन्नित्यर्थः ॥ १ ॥

* वाक्यमिदं द्रष्टव्यमित्येतदनन्तरं स्यात।

1. मैत्रेयीब्राह्मणेन उक्तस्य ब्राह्मणस्यैकार्थत्व. ख. ग. 2. आरभत. ख. ग.

---

सकृदेव याज्ञवल्क्येन मैत्रेय्यै उपदिष्टम्, प्रव्रजितश्चेति युक्तम्। एवञ्च द्विरस्य निबन्धप्रयोजनमन्यदेव स्यादिति चेन्न – 'यन्नु मे' इत्यादेः प्रथमोपदेशकालिकोक्त्यनुवादत्वमङ्गीकृत्य, द्विरुपदेशज्ञापनार्थमेव पुनः पाठ इति सुवचत्वात्। मैत्रेय्युपदेशनिबन्धानन्तरं जनकाभिगमनादिनिबन्धेन वैराग्यमान्द्यात् प्रव्रयनस्यावकाशलाभात्। 'अन्तं करवाणी' ति प्रवृत्तस्य वित्तापर्याप्तिनिरीक्षणेन राजाभिगमनसंभवात्। 'गोकामा एव वयं स्म' इति ह्ययमाह। सहस्रं ददामीति च जनकः पौनःपुन्येन। 'याज्ञवल्क्यो विजहारे' ति तत्रान्तेऽकथनात् 'उद्यास्यन्' इति तत्र विलम्ब्य गमनविवक्षासंभवाच्च। एतद्द्वितीयोपदेशात् प्रागेव, ब्रह्मवादिनी बभूवेति ब्रह्मवादिनीत्वकथनेनोपदिष्टविद्या विस्मरणवर्णनस्याप्यदुष्टत्वाच्च। अन्यदपि पाठफलमाह यद्वेति। एवं पुनर्निबन्धोऽयं प्रागुक्तं याज्ञवल्क्योपदेशप्रव्रज्यादिकं पञ्चमषष्ठाध्यायोक्तजनकयाज्ञवल्क्यसमागमपश्चाद्भूतमिति ज्ञापनार्थः याज्ञवल्क्यकाण्डे तदीयसर्ववृत्तनिवेशार्थश्चेत्यपि ध्येयम्। नन्विहैवास्तु निबन्धः। पूर्वं मा भूदिति चेत् – चतुर्थाध्यायोक्तं मैत्रीयीब्राह्मणोक्तञ्चैकमिति ज्ञापनायेत्यस्तु। तदर्थं निबध्य पूर्वोक्तार्थवैशद्यमपेक्षितत्वादिह संपादित इति।

मैत्रेयीति होवाच याज्ञवल्क्यः, '[प्रव्रजिष्यन्][1] वा अरेऽहमस्मात् स्थानादस्मि । हन्त तेऽनया कात्यायन्याऽन्तं करवाणी' ति ॥ २ ॥

सा होवाच मैत्रेयी, 'यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्, [स्यां न्वहं तेनामृताऽऽहो ३ ने' ति । ] नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितम्, तथैव ते जीवितँ स्यादमृतत्वस्य तु नाशाऽस्ति वित्तेनेति ॥ ३ ॥

सा होवाच मैत्रेयी, 'येनाहं नामृता स्याम्, किमहं तेन कुर्याम् । यदेव भगवान् वेत्थ तदेव मे ब्रूहीति ॥ ४ ॥

स होवाच याज्ञवल्क्यः, ['प्रिया वै खलु नो भवती सती प्रियमवृधद्धन्त तर्हि भवत्येतद्व्याख्यास्यामि ते । ] व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥ ५ ॥

स होवाच, 'न वा अरे पत्युः कामाय पतिः प्रियो भवति; आत्मनस्तु कामाय पतिः प्रियो भवति । न वा अरे जायायै कामाय जाया प्रिया भवति; आत्मनस्तु कामाय जाया प्रिया भवति । न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्ति; आत्मनस्तु कामाय पुत्राः प्रिया भवन्ति । न वा अरे वित्तस्य कामाय वित्तं प्रियं भवति; आत्म-

1. अत्र ब्राह्मणे[...]एवं कुण्डलितं सर्वं पूर्वमैत्रेयीपाठविलक्षणं वा तत्राविद्यमानमेव वेति यथायथं द्रष्टव्यम् । अत्रत्यप्रथमकण्डिका तत्र सर्वथैव नेत्यपि ध्येयम् ।

---

**प्रिया वै खलु नो भवती[1] सती प्रियमवृधत् — निदिध्यासस्वेति ।** **भवती** त्वं[2] **नः** अस्माकं प्रिया सती प्रियमेवावृधत् वर्धितवतीत्यर्थः । अनुकूलभाषणादिति भावः । द्युतादित्वादङ्[3] । 'द्युद्भ्यो लुङी' ति परस्मैपदम् । अतस्तुष्टोऽहं हे भवति! अमृतत्वसाधनं जिज्ञासमानायै तुभ्यमे**तत्** अमृतत्वसाधनं व्याख्यास्यामि । व्याचक्षाणस्य मे वाक्यं **निदिध्यासस्व** सावधानं शृण्वित्यर्थः ॥ ५ ॥

1. भवति. ख. ग. 2. हे भवति! ख. ग. 3. अङ्. क.

---

**पत्युः कामाये**ति । अचेतनानामपि प्रियत्वं दृश्यते । न खलु तदभीष्टसंपत्त्यर्थं तत्प्रियत्वम् । तद्वत् जीवाभीष्टसंपत्त्यर्थमपि नेति भावः । ६-१-३ प्राणस्य वै सम्राट् कामायेत्यत्र ६-४-१२ किमिच्छन् कस्य कामायेत्यत्र चेदृशः प्रयोगोऽस्ति । **भवती**त्यस्य भवितुमर्हतीत्यर्थविवक्षया, परमात्मविषयककामनया तच्छेषतया पत्यादेः प्रियत्वं युक्तम्, न तु पत्यादिकामनयैवेत्यर्थोऽप्यत्र भवति ।

नस्तु कामाय वित्तं प्रियं भवति । [न वा अरे पशूनां कामाय पशवः प्रिया भवन्ति; आत्मनस्तु कामाय पशवः प्रिया भवन्ति।] न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवति; आत्मनस्तु कामाय ब्रह्म प्रियं भवति। न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवति; आत्मनस्तु कामाय क्षत्रं प्रियं भवति। न वा अरे लोकानां कामाय लोकाः प्रिया भवन्ति; आत्मनस्तु कामाय लोकाः प्रिया भवन्ति । न वा अरे देवानां कामाय देवाः प्रिया भवन्ति; आत्मनस्तु कामाय देवाः प्रिया भवन्ति। [न वा अरे वेदानां कामाय वेदाः प्रिया भवन्ति; आत्मनस्तु कामाय वेदाः प्रिया भवन्ति ।] न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्ति; आत्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति; आत्मनस्तु कामाय सर्वं प्रियं भवति ।

आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः । मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदँ सर्वं विदितम् ॥ ६ ॥

ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद। क्षत्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वेद । लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान् वेद । देवास्तं परादुर्योऽन्यत्रात्मनो देवान् वेद । [वेदास्तं परादुः योऽन्यत्रात्मनो वेदान् वेद ।] भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद । सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद । इदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा [इमे वेदाः] इमानि सर्वाणि भूतानीदँ सर्वं यदयमात्मा ॥ ७ ॥

स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय; दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥ ८ ॥

स यथा [शङ्खस्य ध्मायमानस्य] न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय; शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥ ९ ॥

स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयात् ग्रहणाय; वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ १० ॥

स यथार्द्रैधाग्नेरभ्याहित[स्य] पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसित[1]मेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि [इष्टँ हुतमाशितं पायितमयञ्च लोकः परश्च लोकः सर्वाणि च भूतानि] अस्यैवैतानि सर्वाणि निःश्वसितानि ॥ ११ ॥

स यथा सर्वासामपाँ समुद्र एकायनमेवँ सर्वेषाँ स्पर्शानां त्वगेकायनमेवँ सर्वेषाँ रसानां जिह्वैकायनमेवँ सर्वेषां गन्धानां नासिके[2] एकायनमेवँ सर्वेषाँ रूपाणां चक्षुरेकायनमेवँ सेवषाँ शब्दानाँ श्रोत्रमेकायनमेवँ सर्वेषाँ सङ्कल्पानां मन एकायनमेवँ सर्वासां विद्यानाँ हृदयमेकायनमेवँ सर्वेषां कर्मणाँ हस्तावेकायनमेवँ सर्वेषामानन्दानामुपस्थ एकायनमेवँ सर्वेषां विसर्गाणाँ पायुरेकायनमेवँ सर्वेषामध्वनां पादावेकायनमेवँ सर्वेषां वेदानां वागेकायनम् ॥ १२ ॥

स यथा सैन्धव [घनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव, ] एवं वा

1. निश्वसितमेवैतत् मा. 2. नासिकैकायनं मा. शाङ्करे गन्धानन्तरं रस पाठ

---

स यथार्द्रैधाग्नेरित्यादि । इष्टं हुतं यागहोमादिकर्म । आशितं पायितम् अन्नपानादि । अयं च लोकः परश्च लोकः इहलोकपरलोकौ । भोग्यभोगोपकरणभोगस्थानात्मकः प्रपञ्च इति यावत् ॥ ११ ॥

स यथा सैन्धवघन इत्यादि । सैन्धवघनः लवणखण्डः अनन्तरः अन्तरवयवव्यतिरिक्तः अबाह्यः बाह्यावयवव्यतिरिक्तश्च सर्वोऽप्यवयवः यथा रसघनो भवति । अत्र अन्तरो बाह्यश्च रसघन इति वक्तव्ये अन्तरत्वबाह्यत्वशून्यानां मध्यवर्तिनामपि ग्रहणं यथा स्यादिति अनन्तरोऽबाह्य इति व्यतिरेकमुखेन निर्देशः ।

---

" पूर्वोपदेशे वाचकानां कथनं वाच्यस्याप्युपलक्षकमिति ज्ञाप्यते अत्र इष्टं हुतमाशितमित्यादिना ।

स यथा सैन्धवघन इति । पूर्वोपदेशे उदकस्य लवणमयलवत् परमात्मनः सर्वत्र विज्ञानघनशरीरकत्वमुक्तम् । अतोऽत्र वाक्ये लवणस्य रसप्रचुरत्ववत् जीवात्मनो विज्ञानप्रचुरत्व-

**अरे[ऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन] एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति; न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमि। इति होवाच याज्ञवल्क्यः ॥ १३ ॥**

**सा होवाच मैत्रेय्यत्रैव भगवान् मोहान्तमा[1]पीपत्। न वा अहमिमं विजानामीति।**

1. आपीपिपत् पा॰

---

एवञ्च सति निरवयवात्मसाधारण्यमपि फलितं भवतीति द्रष्टव्यम्। एवमेवायमात्मा सर्वत्र **प्रज्ञानघनः** स्वरूपतो धर्मतश्च विज्ञानघनजीवशरीरक इत्यर्थः। जीवपरयोः स्वरूपेणैक्याभावात् शरीरात्मभावे इदं सामानाधिकरण्यं द्रष्टव्यम्। अत्र वक्तव्यं सर्वं चतुर्थाध्याय एवोक्तम् ॥ १३ ॥

**अत्रैव मा भगवान् मोहान्तमापीपत्**[1]। अत्रैव 'न प्रेत्य संज्ञाऽस्ती' त्यस्मिन्नेवार्थे भगवान् **मा** मां **मोहान्तं** मोहमध्यम् **आपीपत्**[1] प्रापितवान्। आपेर्णौ चङ्। मोहमेव दर्शयति **न वा अहमिमं विजानामीति। इमम्।** अर्थमित्यर्थः।

1. आपीपिपत्. **पा.**

---

मित्येतावन्मात्रस्यापाततः प्रतीतावपि आत्मशब्दः परमात्मपरः। यद्वा आत्मशब्दो जीवात्मशरीरकपरमात्मपरः **प्रज्ञानघन**शब्दः प्रज्ञानप्रचुरत्वेन रूपेण जीवं निर्दिश्य तच्छरीरकपरमात्मबोधकः। तत्र विशेषणभूते जीवे प्रज्ञानप्रचुरत्वमप्युक्तं भवति। एवञ्च, "अवस्थितेरिति काशकृत्स्नः" इति सूत्रं प्रकृतात्मशब्दप्रज्ञानघनशब्दविज्ञानघनशब्दत्रितयविषयकं द्रष्टव्यम्। **अधिकरणसारावल्या**मप्यत एव जीवशब्दमिति सामान्यत उक्तम्। अत्र 'करणग्रामनियमनोपदेशानन्तरं कर्तृजीवस्वरूपमात्रं कण्डिकाद्वयेनोच्यते। ततः प्राक् ऊर्ध्वंश्चैव परमात्मे'त्युच्यते चेत्—तदपि न स्वरसम्। जीववाक्येऽपि परमात्मनो विशेष्यतया ग्रहणसंभवे त्यागायोगात्। 'अयमात्माऽनन्तरोऽबाह्य' इत्येतत्स्थाने माध्यन्दिने 'महद्भूत' मिति परमात्मन एव निर्देशेन तस्यावश्यस्वीकार्यत्वाच्च। **निरवयवात्मे**ति। अन्तरो बाह्य इत्युक्तौ जीवस्य निरवयवत्वात् अन्तर्बहिरवयवोपपादनायोगात् अनन्वय इति अन्तरवयवबहिरवयवव्यतिरिक्तत्वेनैव स निर्देश्य इति तदैकरूप्याय च दृष्टान्तेऽपि तथोक्तिरिति भावः। **स्वरूपत** इति। स्वरूपतो धर्मतश्च विज्ञानघनभूतो यो जीवः, तच्छरीरक इत्यर्थः। **स्वरूपत** इति **आद्याधिकरणभाष्यानुसारेण, धर्मत** इति च रसघनदृष्टान्तस्वारस्यात्मसिद्ध्याद्यनेकग्रन्थानुसाराद्युक्तम्। अत एवात्मशब्दः न शुद्धपरमात्ममात्रपरः। भाष्यादौ जीवात्मवचनत्वस्याप्यवगमादित्यलमत्र।

स होवाच न वा अरेऽहं मोहं ब्रवीमि[अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा] ॥ १४ ॥

यत्र हि द्वैतमिव भवति — तदितर इतरं पश्यति, तदितर इतरं जिघ्रति, [तदितर इतरँ रसयते,] तदितर इतरमभिवदति, तदितर इतरँ शृणोति, तदितर इतरं मनुते, [तदितर इतरँ स्पृशति,] तदितर इतरं विजानाति। यत्र त्वस्य सर्वमात्मैवाभूत् — तत् केन कं पश्येत्, तत् केन कं जिघ्रेत्, [तत् केन कँ रसयेत्,] तत् केन कमभिवदेत्, तत् केन कँ शृणुयात्, तत् केन कं मन्वीत, [तत् केन कँ स्पृशेत्,] तत् केन कं विजानीयात्। येनेदँ सर्वं विजानाति, तं केन विजानीयात्। [स एष नेति नेत्यात्मा। अगृह्यो न हि गृह्यते; अशीर्यो न हि शीर्यते; असङ्गो न हि सज्यते, असितो न व्यथते न रिष्यति।] विज्ञातारमरे केन विजानीयादिति। [उक्तानुशासनाऽसि मैत्रेय्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार] ॥ १५ ॥

इति षष्ठाध्याये पञ्चमं ब्राह्मणम् ॥

---

**अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा**। अयमात्मा स्वयमविनाशी। **अनुच्छित्तिधर्मा**। न विद्यते उच्छित्तिर्यस्य सोऽनुच्छित्तिः अविनाशीति यावत्। अनुच्छित्तिः धर्मो यस्य सोऽनुच्छित्तिधर्मा। एवं बहुव्रीहिगर्भो बहुव्रीहिः। तस्य ज्ञानलक्षणो धर्मोऽप्यविनाशीत्यर्थः। न तु, 'उच्छित्तेरभावोऽनुच्छित्तिः। स धर्मो यस्ये' ति बहुव्रीहिः। अविनाशीत्यनेन पौनरुक्त्यप्रसङ्गादिति द्रष्टव्यम् ॥ १४ ॥

**उक्तानुशासनाऽसि—विजहार**। हे मैत्रेयि! उक्तोपदेष्टव्याऽसि। एतावदेव खल्वमृतत्वार्थिभिर्ज्ञेयमित्यर्थः। **अमृतत्वमिति** कारणे कार्यवाचिशब्द उपचारात् प्रयुक्तः। एवमुक्त्वा याज्ञवल्क्यः **विजहार** यथाभिलषितं प्रव्रज्यां कृतवानित्यर्थः ॥ १५

---

**अनुच्छित्तिधर्मे**ति। अत्र **धर्म**पदेन ज्ञानमेव ग्राह्यमित्येतत् न केवलं प्रकरणात्, अलं वा अरे इदं विज्ञानाय' इति पूर्वोपदेशसमानार्थकत्वानुसारादपि सिद्ध्यति। **पौनरुक्त्ये**ति। न धर्मपदवैयर्थ्यमात्रम्; पूर्णपदवैयर्थ्यमपीति भावः। **स एष नेति नेती**ति वाक्यस्यार्थः पूर्वब्राह्मणेऽपि द्रष्टव्यः।

**विजहारे**ति। नास्य ताभ्यां तया वा सह स्थितौ विहार आसीत्। यतः तदा स्वात्मानमतीव बद्धं मेने। इदानीमेव वास्तवो विहार इति भावः।

६—६.

अथ वंशः [[1] पौतिमाष्यात् ]। पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात् पौतिमाष्यो गौपवनाद्गौपवनः कौशिकात् कौशिकः कौण्डिन्यात् कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च, गौतमः (१)

आग्निवेश्यात्, आग्निवेश्यो गार्ग्याद्गार्ग्यो गार्ग्याद्गार्ग्यो गौतमाद्गौतमस्सैतवात् सैतवः पाराशर्यायणात् पाराशर्यायणो गार्ग्यायणाद्गार्ग्यायण उद्दालकायनादुद्दालकायनो जाबालायनाज्जाबालायनो माध्यन्दिनायनात् माध्यन्दिनायनः सौकरायणात् सौकरायणः काषायणात् काषायणः सायकायनात् सायकायनः कौशिकायनेः, कौशिकायनिः (२)

घृतकौशिकात् घृतकौशिकः पाराशर्यायणात्, पाराशर्यायणः पाराशर्यात् पाराशर्यो जातूकर्ण्यात् जातूकर्ण्य आसुरायणाच्च यास्काच्च आसुरायणस्त्रैवणेः, [2] त्रैवणिरौपजन्धने [3] रौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टे[4] र्माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्या-

1. पौतिमाष्यादिति न माध्वशाङ्करयोः। अत्र खादिकोशेऽपि न। 2. त्रैवर्णेः मा. 3. औपजन्धनेः मा. 4. माण्टेः मा. शा.

---

पूर्ववदेव वंशब्राह्मणम्। आचार्यवंशकीर्तनस्य मङ्गळत्वान्नात्र पौनरुक्त्यं शङ्कनीयम् [। पौतिमाष्यादिति प्रथमं पञ्चम्युक्तिः ततोऽर्वागपि शिष्यपरम्पराऽस्तीति ज्ञापनार्थम् ]॥ ६—६.

इति बृहदारण्यकप्रकाशिकायां षष्ठोऽध्यायः॥

1. कुण्डलितमिदं न खादिकोशे।

---

वंशः पौतिमाष्यादिति। पौतिमाष्यमारभ्य वंश उच्यत इत्यर्थः। ननु पठितस्य पुनः पाठः किमर्थ इति चेत् — चतुर्थषष्ठतया पठितस्य वंशस्य षष्ठषष्ठतयाऽपि पुनः पाठोऽदृष्टार्थः। तेन एवमेव पारायणस्य कर्तव्यत्वं ज्ञाप्यते। वस्तुतस्तु आग्निवेश्यादूर्ध्वमन्यादृशपरम्पराया अत्र दर्शनादयमन्यो वंशः। तदयं मैत्रेयीविद्याशेषभूतः स्यात्।

**द्वात्स्यश्शाण्डिल्याच्छाण्डिल्यः कैशोर्यात् काप्यात् कैशोर्यः काप्यः कुमारहारितात् कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवात् वत्सनपाद्बाभ्रवः पथस्सौभरात् पन्थाः सौभरोऽयास्यादाङ्गिरसात् अयास्य आङ्गिरस [1]आभूतेस्त्वाष्ट्रात् आभूतिस्त्वाष्ट्रो विश्वरूपात् त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणात् दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वँसनात् मृत्युः प्राध्वँसनः प्रध्वँसनात् प्रध्वँसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात् सनातनः सनकात् सनकः परमेष्ठिनः परमेष्ठी ब्रह्मणः । ब्रह्म स्वयम्भु । ब्रह्मणे नमः ॥**

इति षष्ठाध्याये षष्ठं ब्राह्मणम् ॥

इति बृहदारण्यके षष्ठाध्यायः समाप्तः ॥

---

## ७—१.

**ओम् . पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदञ्च्य (च्य) ते ।**

1. आहूतेः (तिः) पा०

---

प्रणवोपासनां विधित्सन् प्रणवं परोक्षरूपेण(?) स्तौति । **पूर्णमदः — पूर्णमेवावशिष्यते** । **अदः** परोक्षरूपः परलोकः **इदम्** अयञ्च लोकः **पूर्णं** वेदेन पूर्णमित्यर्थः । शब्दप्रभवत्वात् सर्वस्य लोकस्य । 'स भूरिति व्याहरत स भूमिमसृजते 'ति लोकानां व्याहृतिप्रभवत्वाम्नानात् । कारणेन च कार्यस्य व्याप्तत्वात् । **पूर्णात् पूर्णमुदञ्च्यते** । **पूर्णात्** पूर्यमाणाल्लोकात् **पूर्णं** पूरणकर्तृ **उदञ्च्यते** उद्गतं भवति । 'अञ्चु गतिपूजनयोः' । कर्मणि प्रत्ययः । उद्गतं भवति = श्रेष्ठं भवतीत्यर्थः । ततश्च पूर्यमाणलोकापेक्षया[1] पूरणकर्तृव्याहृतिरूपः

1. पूर्यमाणलोकात् . **ख. ग.**

---

प्रधानाप्रधानोपासनानि अन्यानि कानिचिदुच्यन्ते सप्तमेऽध्याये । तत्र प्रथमं पठ्यमानोऽयं **पूर्णमि**त्यादिर्मन्त्रः प्रणवप्रकरणात् तद्विषय इत्याह **प्रणवे**ति । उपासने विशेष्यतयाऽन्वितस्य प्रणवस्य स्तुतिरियमिति युक्तमित्याशयेनैवमुक्तम् । प्रणवे अपरिच्छिन्नब्रह्मभावना-

**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ १ ॥**

---

शब्दः उत्कृष्ट इत्यर्थः । **पूर्णस्य पूर्णमादाय** = **पूर्णस्य** व्याहृतिव्याप्तस्य लोकस्य **पूर्णं** पूरणकर्तृव्याहृतिरूपं वस्तु **आदाय** उपसंहृत्य **पूर्णमेवावशिष्यते**। तस्यापि यत् **पूर्णं** पूरयितृ ओङ्कारात्मकं वस्तु, तदेव परिशिष्यत इत्यर्थः । 'ओङ्कारेण सर्वा वाक् संतृण्णा' इति श्रुतेः ओङ्कारस्य सर्वव्यापकत्वेन पूर्णत्वात् तदेव कारणं व्याहृत्यादिषु शब्देषु कार्येषु विनष्टेषु परिशिष्यत इत्यर्थः । 'ओङ्काराद्व्याहृतिर्भवति व्याहृत्या गायत्री भवती'ति सर्वशब्दनिदानत्वात् तदेव परिशिष्यत इत्यर्थः। इदञ्च रुच्युत्पादनाय प्रणवस्तुतिमात्रम् । अन्यथा निमित्तकारणस्य व्याहृत्यादेः कार्यव्यापकत्वासंभवात्, उपादानभूतस्य भूतपञ्चकस्यैव व्यापकत्वसंभवात् असामञ्जस्यं स्यादिति द्रष्टव्यम् ॥ १ ॥

---

विधानात् तदर्थं ब्रह्मणोऽपरिच्छिन्नत्वमेवात्रोपपाद्यत इत्यपि सुवचम् । ब्रह्मोपासनमप्युपरि विधास्यते । वाक्यान्वयाधिकरणटीकायाञ्च यादवप्रकाशपक्षप्रस्तावे **पूर्णमदः पूर्णमिदमि**ति परमात्मपरममिमतम् । अस्मत्पक्षे च, "परमात्मनः पूर्णत्वञ्च अणुमात्रेऽपि वस्तुनि स्थितस्य निरवधिकषाड्गुण्यविशिष्टतया प्रतिपत्तियोग्यत्व" मित्युक्तम् । 'पूर्णः पूरयिते'ति नामसहस्रभाष्ये च **भट्टपराशरपादैः**, 'पूर्णः = स्वतोऽवाप्तसमस्तकामः' इत्यभाषि । पूरी आप्यायने इति धातोः कर्तरि क्ते पूर्ण इति रूपम् । ओ प्यायी वृद्धौ । अतः **पूर्ण** इत्यस्य समृद्ध इत्यर्थः । 'तेनेदं पूर्णं पुरुषेण सर्वं'मित्यत्र पूर्णपदम्, 'वा दान्तशान्तपूर्णे'ति सूत्रनिपातितं पूरीधातोरेव णिजन्तात् निष्ठान्तं पूरितमित्यर्थकम् । व्याप्तमिति फलितार्थः । अत्र तथा स्वीकारे तु, 'अदः परमात्मना पूर्णं'मिति तृतीयान्तमध्याहर्तव्यं भवेदिति कर्तरि क्त एवेष्यते । अस्तु वा **पूर्ण**मित्यस्य षाड्गुण्यपूरितं ब्रह्मेत्यर्थः । सर्वथा सर्वपूर्णतया पूर्णपदवाच्यं ब्रह्म **अदः** परलोकावच्छिन्नम्, **इदम्** एतल्लोकावच्छिन्नम् । अनेन देशापरिच्छेदसिद्धिः, एकैकवस्त्ववच्छेदेनापि पूर्णत्वसिद्धिश्च । **पूर्णात् पूर्णमुदच्यते** । पूर्णमेव कारणावस्थमपि कार्यावस्थमपि । अनेन कालापरिच्छेदादिसिद्धिः । **पूर्णस्य** ब्रह्मणः शेषभूतं कार्यावस्थं **पूर्णम् आदाय** विलाप्य पूर्णमेव कारणावस्थं **शिष्यते** शिष्टं क्रियते । पूर्वार्धे उत्पत्तिरुक्ता; उत्तरार्धे लयः । यद्वा पूर्वार्धे निमित्तकारणमपि पूर्णमित्युक्तम्; अत्र च लयस्थानमुपादानमपि पूर्णमितीत्युक्तं भवति **अञ्चु**धातुमेव **अचु** इति केचित् पठन्ति । ततः **उदच्यत** इति रूपम् ।

**ओ३म् खं ब्रह्म । खं पुराणम् । वायुरं खमिति ह स्माह कौरव्यायणीपुत्रः । वेदोऽयं ब्राह्मणा विदुर्वेदैनेन[1] यद्वेदितव्यम् ॥**

इति सप्तमाध्याये प्रथमं ब्राह्मणम् ।

1. वेदोऽनेनैन यद् वेदितव्यम्. **मा.** (तेन वेदेन ज्ञानरूपेण **एन** निर्दोषत्वादकारवाच्येन यदिदं प्रसिद्धं तत् सर्वं वेदितव्यमिति व्याख्या ।)

---

**ओं खं ब्रह्म।** ओङ्कार एव **खम्** अपरिच्छिन्नं ब्रह्मेत्यर्थः । ततश्च ओङ्कारे अपरिच्छिन्नब्रह्मोपासनं कर्तव्यमित्यर्थः । **खं ब्रह्मे**ति ब्रह्मविशेषणीभूततयोक्तस्य खशब्दस्य स्वाभिमतमर्थमाह **खं पुराणम्** । खमित्यनेन न वायुमान् आकाश उच्यते ; अपितु यत् पुराणं देशकालापरिच्छिन्नं परं ब्रह्म, तदेव खसादृश्यात् खमित्युच्यते । **खम्** अपरिच्छिन्नमित्यर्थः । **वायुरं खमिति ह स्माह कौरव्यायणीपुत्रः** । कौरव्यायणीपुत्रस्तु कश्चन ऋषिः **वायुरमेव** वायुमदम्बरमेव **खं** खशब्देनोच्यते । ततश्चाकाशशरीरकं ब्रह्म प्रणवे अध्यस्योपास्यमित्याहेत्यर्थः । प्रणवे ब्रह्मोपास्यमित्यत्र न विवादः । तत्राध्यस्यमानञ्च ब्रह्म अपरिच्छिन्नत्वेन गुणेनोपास्यम्, उत भूताकाशशरीरकत्वेनैवोपास्यमित्यत्रैव विवाद इति भावः । **वेदोऽयं ब्राह्मणा विदु र्वेदैनेन यद्वेदितव्यम्।** यस्मादसौ वेदिता **एनेन** एतेन ओङ्कारेण **यद्यद्वेदितव्यं** ज्ञातव्यम्, तत्तत् सर्वं **वेद** जानाति, तस्मादयमेव प्रणवो वेदः ; वेदयितृत्वरूपयौगिकार्थस्य पुष्कलत्वात् । इतरेषां तु वेदत्वममुख्यमिति ब्राह्मणा मन्यन्ते इत्यर्थः ॥ २ ॥ ७—१.

---

**ओं खं ब्रह्मे**ति प्रणवप्रस्तावः ; न तु प्रणवार्थब्रह्ममात्रकथनमिति **वेदोऽयमि**त्यर्थवादबलाद् ज्ञायते । एवञ्च **ख**मिति प्रणवस्येतरवेदापेक्षया प्राचीनत्वमुच्यते । 'ओङ्कारप्रभवा वेदाः' इत्युक्तेः । 'यद्वेदादौ स्वरः प्रोक्त' इति तैत्तिरीयपरिष्कारे चेदं प्रादीदृशाम । ब्रह्मशब्दस्य वेद इत्यर्थ इति च **वेदोऽयमि**त्यर्थवादादेव ज्ञायते। (उपरि भूरादिव्याहृतयः प्रस्तोष्यन्ते। तन्मन्त्रकरणके उपासने ततः प्राक् प्रणवोऽपि निविष्ट इत्याशयेन प्रणवप्रस्तावः । मध्ये तु वक्ष्यमाणमुख्योपासनाङ्गभूतहृदयोपासनोक्तिरिति ।) एवं खंब्रह्मपदयोरर्थवर्णनसंभवेऽपि ब्रह्मशब्दस्य मुख्यार्थग्रहणं युक्तमित्यभिप्रेत्य खशब्दार्थस्य च मुख्यब्रह्मविशेषणत्वं स्वीकृत्य अपरिच्छिन्नब्रह्मदृष्टिः प्रणवे भाषिता । **वायुरमि**ति । वायुमदम्बरस्य प्रणवोच्चारणहेतुत्वाद्वा, ब्रह्मणो वायुमदम्बरावच्छिन्नत्वाद्वा खमित्युक्तिरिति कौरव्यायणीपुत्रस्याशयः । **वायुरमि**ति पदं धीरपदवत् निष्पाद्यम् । यद्वा वायुः अत्र रमते, तद् वायुरम्। वक्ष्यति **विरमि**त्यत्र **रशब्दे रमत** इति व्युत्पत्तिम्।

७—२.

**त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या असुराः । उषित्वा ब्रह्मचर्यं देवा ऊचुर्ब्रवीतु नो भवानिति । तेभ्यो हैतदक्षरमुवाच द इति, व्यज्ञासिष्टा ३ इति । व्यज्ञासिष्मेति होचुः, दाम्यतेति न आत्थेति । ओमिति होवाच, व्यज्ञासिष्टेति ॥ १ ॥**

**अथ हैनं मनुष्या ऊचुर्ब्रवीतु नो भवानिति । तेभ्यो हैतदेवाक्षरमुवाच द इति, व्यज्ञासिष्टा ३ इति । व्यज्ञासिष्मेति होचुर्दत्तेति न आत्थेति । ओमिति होवाच, व्यज्ञासिष्टेति ॥ २ ॥**

---

**त्रयाः प्राजापत्याः—ब्रह्मचर्यमूषुः । त्रयाः** त्रिप्रकाराः— ‘ द्वित्रिभ्यां तयस्यायज्वे ’ ति त्रेः परस्य तयस्या(तयपोऽ)यजादेशः — **प्राजापत्याः** प्रजापतिपुत्राः पितरि प्रजापतौ ब्रह्मचर्यम् **ऊषुः** उषितवन्तः । के ते इत्यत्राह **देवा मनुष्या असुराः । उषित्वा ब्रह्मचर्यं देवा ऊचुः ब्रवीतु नो भवानिति । ब्रवीतु** । उपदेष्टव्यमिति शेषः । **तेभ्यो हैतदक्षरमुवाच द इति । व्यज्ञासिष्टा ३ इति ।** तेभ्यो ‘ द ’ इत्येतदक्षरमुक्त्वा प्रजापतिः, **किं** यूयं **व्यज्ञासिष्ट** मदभिप्रायं ज्ञातवन्तः किमिति पप्रच्छेत्यर्थः । **व्यज्ञासिष्मेति होचुः ।** वयं ज्ञातवन्त इति देवाः प्रत्यूचुरित्यर्थः । कथमित्यत्र आहुः **दाम्यतेति न आत्थेति । नः** अस्मान् प्रति **दाम्यत** दान्ता भवतेति खलु **आत्थ** वदसि इत्यूचुरित्यर्थः । दमेः श्यनि शमादित्वाद्दीर्घः । **ओमिति होवाच, व्यज्ञासिष्टेति ।** ‘ **ओं** सत्यम्; व्यज्ञासिष्ट ’ ति प्रजापतिरुवाचेत्यर्थः । ननु कथं ‘ द ’ इत्युच्चारणमात्रेण, ‘ दाम्यतेति न आत्थे ’ ति देवाः प्रत्यपद्यन्त । उच्यते — देवानामैश्वर्यशालितया भोगप्रावण्येन मदान्धत्वात् स्वदोषं जानतां [देवानां] दशब्दोच्चारणमात्रेण तत्प्रतिपत्तिः संभवतीति द्रष्टव्यम् ॥ १ ॥

**अथ हैनं मनुष्या — व्यज्ञासिष्टेति । दत्तेति न आत्थेति । दत्त** दानं कुरुतेत्यर्थः । शिष्टं पूर्ववत् ॥ २ ॥

अथ हैनमसुरा ऊचुर्ब्रवीतु नो भवानिति। तेभ्यो हैतदेवाक्षरमुवाच द इति, व्यज्ञासिष्टा ३ इति। व्यज्ञासिष्मेति होचुर्दयध्वमिति न आत्थेति। ओमिति होवाच, व्यज्ञासिष्टेति।

तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्द द द इति, दाम्यत दत्त दयध्वमिति।

तदेतत् त्रयँ शिक्षेद् दमं दानं दयामिति ॥ ३ ॥

इति सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥

---

अथ हैनमसुराः — व्यज्ञासिष्टेति। दयध्वमिति न आत्थेति। **दयध्वं** प्राणिषु दयां कुरुतेत्यर्थः।

तदेतदेवैषा — दयध्वमिति। **दाम्यत** दान्ता भवत, **दत्त** दानं कुरुत, **दयध्वं** दयां कुरुतेति दमदानदयालक्षणं तदेतत्त्रितयं **स्तनयित्नु**र्मेघः द द द इति दकारत्रयोच्चारणेनानुवदति। सैषा **दैवी वाक्**; न तु स्तनयित्नुशब्दमात्रम्।

**तदेतत् त्रयं शिक्षेद्दमं दानं दयामिति**। तस्मादद्यापि दमदानदयालक्षणं धर्मत्रयं **शिक्षेत्** उपादद्यात् (उपाददीत?)। प्रजापतेरनुशासनमस्माभिः कर्तव्यमित्येवं मतिं कुर्यादित्यर्थः। तथा च स्मृतिः —

'त्रिविधं नरकस्यैतत् द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभः तस्मादेतत्त्रयं त्यजेत्॥'

इति। अस्य विधेः शेषः प्राचीनोऽर्थवादः॥ ३ ॥ ७–२.

एवं सर्वोपासनाङ्गभूतं दमदानदयालक्षणमर्थत्रयमुपदिश्य ब्रह्मोपासनाङ्गभूतं

---

¹दमदानदयागुणाः प्रत्युपासकमपेक्षिताः। तत्र देवान् प्रति विशिष्य दाम्यतेत्युक्तिः, तेषां कामप्रवणानामजितेन्द्रियत्वातिशयात्। मनुष्याणां लोभातिशयात् अदृष्टार्थेषु दानयज्ञादिषु प्रवृत्तिमान्द्यात् दत्तेत्युक्तिः। असुराणां नृशंसत्वाधिक्यात् दयध्वमित्युक्तिः। एवमपि एवमर्थवादपूर्वं **तदेतत् त्रय**मिति विधानं सर्वार्थमेवेति ध्येयम्। **अनुवदती**ति। सर्वान् प्रतीति शेषः।

## ७—३.

एष प्रजापतिर्यद्धृदयमेतद् ब्रह्मैतत् सर्वम्[1]। तदेतत् त्र्यक्षरं हृदयमिति। हृ इत्येकमक्षरम्; अभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद। द इत्येकमक्षरम्; ददत्यस्मै स्वाश्चान्ये च य एवं वेद। यमित्येकमक्षरम्; एति स्वर्गं लोकम्, य एवं वेद ॥ १ ॥

इति सप्तमाध्याये तृतीयं ब्राह्मणम् ॥

1. सत्यं मा.

---

हृदयोपासनमाह **एष प्रजापतिर्यद्धृदयमेतद्ब्रह्मैतत् सर्वम्** । पूर्वं दमाद्यनुशास्तृ (सितृ) त्वेन प्रस्तुतो योऽयं प्रजापतिः, सोऽपि हृदयमेव। तदेतत् **ब्रह्म** बृहत्। **एतत् सर्वम्**। पञ्चमाध्याये शाकल्यब्राह्मणोक्तरीत्या हृदयस्य सर्वत्वं द्रष्टव्यम्। एवं हृदयस्य प्रजापतित्वबृहत्त्वसर्वत्वरूपविशेषणविशिष्टतया हृदयोपासनं विधाय उपास्यं हृदयं हृदयशब्दनिर्वचनेन स्तौति **तदेतत् त्र्यक्षरं हृदयमिति**। तत्र प्रत्येकमक्षरार्थान्, तद्वेदनफलानि चाह **हृ इत्येकमक्षरम् — य एवं वेद**। हृ इति हृञो रूपम्। यस्माद्धृदयाय **स्वाश्च** इन्द्रियाणि च **अन्ये च** विषयाश्च शब्दादयः स्वं स्वं कार्यम**भिहरन्ति** = स्वकार्यं सर्वं तदधीनं कुर्वन्ति। तत्तज्ज्ञानस्य सर्वस्याप्यन्तःकरणाधीनत्वादिति भावः। अतो हृदयनाम्नो हृ इत्येतदक्षरमिति यो वेद, **अस्मै** विदुषे **स्वाश्च** ज्ञातयः **अन्ये** च संबन्धिनो बलिमुपहरन्ति; तत्क्रतुन्यायादिति भावः। **द इति — वेद**। यस्माद्धृदयाय **स्वाः** इन्द्रियाणि **अन्ये च** विषयाः स्वं स्वं वीर्यं ददति, अतः दकारोऽस्मिन्नाम्नि निबद्ध इति यो वेद, तस्यापि स्वीयाः (स्वकीयाः), अन्ये च स्वं स्वं वीर्यं प्रयच्छन्तीत्यर्थः। **यमिति — वेद**। इणो गत्यर्थस्य यमित्येतद्रूपमस्मिन्नाम्नि निबद्धमिति यो वेद, स स्वर्गं लोकमेति।

एवं नामाक्षरनिर्वचनज्ञानादपि ईदृशं विशिष्टं फलं लभ्यते, किमुत तदुपासनयेति हृदयस्य स्तुतिः कृता भवति ॥ ७—३.

---

**दमाद्यनुशास्तृत्वेनेति**। दानादिप्रेरकत्वं प्रजापतौ हृदये च समानधर्म इति प्रजापतिर्हृदयमिति रूपणम्। **शाकल्यब्राह्मणेति**। 'किन्देवतोऽस्यां प्राच्यां दिश्यसी' इत्यादिना प्रतिदिशं देवतां पृथक्पृथक् प्रदर्श्य तत्तत्प्रतिष्ठापरम्परायां हृदयस्य सर्वप्रतिष्ठात्वस्य याज्ञवल्क्येनोक्तेरिति भावः।

## ७—४.

तद्वै[1] तदेतदेव तदास सत्यमेव। स यो हैतन्महद्यक्षं[2] प्रथमजं वेद सत्यं ब्रह्मेति, जयतीमान् लोकान्, जित इन्वसावसत्।

1. तद्वैतदेतदेव. मा. 2. यज्ञ. मा.

---

हृदयस्य प्रजापतित्वेनोपासनामुक्त्वा सत्यत्वेनोपासनामाह **तद्वै तदेतदेव तदास सत्यमेव**। **वै**शब्दोऽवधारणे। **तद्वै** तदेव **तत्** तादृशं हृदयम**एतदेव तदास = एतत्** वक्ष्यमाणं [1] तदासेत्यर्थः। किं तदासेत्यत्राह **सत्यमेवेति**। 'द्वे वाव ब्रह्मणो रूपे' इत्यत्र सत्यच्छब्दितं मूर्तञ्चामूर्तञ्च सत्यम्। अव्याकृतपञ्चभूतात्मकम् [विराड्रूपम्[2]] अभवदित्यर्थः। तदुपासनस्य फलमाह **स यो हैतन्महद्यक्षं --- जित इन्वसावसत्**। यः कश्चिदेतत् हृदयं महत्, अत एव **यक्षं** पूज्यं **प्रथमजं** प्रथमजातं सर्वस्मात् कार्यजातात् प्रथमजं **सत्यम्** अव्याकृतपञ्चभूतात्मकं **ब्रह्म** बृहदिति यः कश्चिदेतद्धृदयम्, **वेद** उपास्ते— स इमाँल्लोकान् जयति। **जितः** वशीकृतः **इन्नु** इत्थम् **असौ** शत्रुरुपासकस्य, [[3] कथम्?] यथा ब्रह्मणा जितः, **असत्** [[4] असत्प्रायो] भवेदित्यर्थः। तस्यै-

1. तत् सदास. क. 2. विराड्रूपमिति क. कोशे। 3, 4. इदमधिकं क. कोशे।

---

**तद्वैतदि**ति। एकः **तच्छब्द**स्तादृशार्थकः; अन्यः **तच्छब्दः** हृदयार्थकः; **एत**च्छब्दो वक्ष्यमाणार्थकः। पुनस्तृतीय**तच्छब्दः** चतुर्थाध्याये, 'अस्यैव सत्यस्य, 'सत्यस्य सत्यम्' इति प्रागुक्तत्वदर्शकः। **भामत्यां तु तदासे**त्यत्र तदेति विभज्य अग्रे इत्यर्थो वर्णितः, "सैव हि सत्यादयः" इति सूत्रे। **अव्याकृतपञ्चभूतात्मक**मिति। पूर्वं 'द्वे वाव ब्रह्मणो रूपे' इति मूर्तामूर्तब्राह्मणे पञ्चानां भूतानां **स**दिति **त्य**मिति च निर्देशादेवं पञ्चभूतात्मकत्वेन ब्रह्मकथनम्। समनन्तरवक्ष्यमाणनिर्वचनानुसारे तु सत्यत्वं चिदचिन्नियन्तृत्वम्। **महत्** इत्यस्यैव **यक्ष**मित्यादि **ब्रह्मे**त्यन्तं विवरणमिति ज्ञापनाय भाष्ये **यः कश्चिदेतद्धृदय**मिति पुनरावर्तितम्। सर्वलोकवशीकारवत् शत्रुजयोऽप्यस्य भवतीत्युच्यते **जित** इत्यादिना **ब्रह्मे**त्यन्तेन। **असा**विति शत्रुपरम्। **यएव**मिति यच्छब्दप्रतिसंबन्धि तस्येतिपदमध्याहर्तव्यम्। तस्य **शत्रुर्जितः सन्** असद्भावं प्राप्नोतीत्यर्थः। अत्र **असदि**त्यस्य भवेदित्यर्थस्वीकारे शत्रुर्जितो भवेदित्यर्थः। **इन्नु**इत्यनेन इत्थमित्युक्तं विव्रियते भाष्ये, **कथम्? यथा ब्रह्मणा जित** इति।

**य एवमेतन्महद्यक्षं[1] प्रथमजं वेद सत्यं ब्रह्मेति। सत्यँ ह्येव ब्रह्म॥ १॥**

**आप एवेदमग्र आसुः। ता आपः सत्यमसृजन्त। सत्यं ब्रह्म; ब्रह्म प्रजापतिम्; प्रजापतिं देवान्। ते देवाः सत्यमेवोपासते। तदेतत् त्र्यक्षरँ सत्यमिति; स इत्येकमक्षरम्, तीत्येकमक्षरम्, यमित्येकमक्षरम्। प्रथमो-**

1. यज्ञं. मा.

---

तत् फलमिति पुनर्निगमयति **य एवमेतत्—सत्यं ह्येव ब्रह्म**। यः एवं महद्यक्षं प्रथमजं सत्यं हृदयमुपास्ते, तच्छत्रोरसत्त्वं युक्तमेव। **हि** यतः एतदुपास्यं सत्यं ब्रह्म, अतोऽयं सत्योपासक इत्यतः तदुपासकस्य सत्त्वम्, तद्विरोधिनश्चासत्त्वं युक्तमेवेति भावः॥ १॥

सत्यस्य ब्रह्मणः स्तुत्यर्थं **महद्यक्षं प्रथमज**मित्युक्तम्, तत् कथं प्रथमजत्वमित्यत्राह **आप एवेदमग्र आसुः**। **इदं** व्याकृतं जगत् **अग्रे** अण्डसृष्टेः प्राक् **आप एवासुः** अव्याकृतपञ्चभूतात्मना अवर्ततेत्यर्थः। **ता आपः सत्यमसृजन्त**। ता आपः अव्याकृतपञ्चभूतानि **सत्यं** पञ्चीकृतपञ्चभूतात्मकं कार्यमण्डमसृजन्तेत्यर्थः। **सत्यं ब्रह्म**। तच्च सत्यं **ब्रह्म** चतुर्मुखमसृजतेत्यर्थः। **ब्रह्मेति** नपुंसकत्वं छान्दसम्। **ब्रह्म प्रजापतिम्**। ब्रह्मा प्रजापतिं दक्षादिप्रजापतिमसृजतेत्यर्थः। जातावेकवचनम्। **प्रजापतिर्देवान्**। असृजतेति शेषः। **ते देवाः — यमित्येकमक्षरम्**। स्पष्टम्। **तीत्येकमक्षरमित्यत्र तीति** इकारानुबन्धो

---

**आसु**रिति बहुवचनम् **आप** इति विधेयानुसारात्। इदमभिन्ना आप इति विशिष्टस्योद्देश्यत्वं तु क्लिष्टम्। **सत्यं ब्रह्मे**ति न सत्यशब्दवाच्यं ब्रह्मेत्यर्थकम्, किन्तु पूर्वापरवाक्यरीत्या **सत्य**मिति प्रथमान्तम्, **ब्रह्मे**ति द्वितीयान्तमित्यभिप्रेत्याह **तच्च सत्य**मिति। **ता आपः सत्यमसृजन्ते**त्यस्य, 'आपो नारा इति प्रोक्ताः आपो वै नरसूनवः। ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः' इत्युक्तनारायणपरत्वमपि भवितुमर्हति। ब्रह्मणः सत्यशब्दार्थत्वस्येह प्रकरणे प्रतीतेः। अतः अद्भ्योऽनिरुद्धः परमात्मा आविर्भूत इति युक्तम्। 'ते देवाः सत्यमेवोपासते' इत्यत्र सत्यपदं परब्रह्मपरं हि वक्तव्यम्, "ज्योतिषि भावाच्च" ति सूत्रानुसारात्। **प्रथमोत्तमे**

**त्तमे अक्षरे सत्यम्; मद्ध्यतोऽनृतम्। तदेतदनृतँ सत्यभूयमेव भवति। नैनं विद्वाँसमनृतँ हिनस्ति ॥ २ ॥**

इति सप्तमाध्याये चतुर्थं ब्राह्मणम् ॥

७—५.

[1]**तद्यत् सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषः। तावेतावन्योन्यस्मिन् प्रतिष्ठितौ। रश्मिभि-**

1. तद्यत्तत्सत्यमसौ. शां. मां.

---

निर्देशार्थः। **प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतम्**। **प्रथमोत्तमे अक्षरे** सकारयकारौ सत्यम्। मृत्युरूपाभावात्। **मध्यतः**[1] तकारस्त्वनृतम्। अनृतं हि मृत्युः; मृत्य्वनृतयोः तकारसामान्यात्। **तदेतदनृतं सत्यभूयमेव भवति।** तदेतदनृतं मृत्युरूपं उभयतः सत्येन सकारयकारलक्षणेन परिगृहीतं संदष्टं **सत्यभूयमेव** सत्यबाहुल्यमेव भवति। **नैनं विद्वांसमनृतं हिनस्ति।** एवं सत्यबाहुळ्यं सर्वस्य, मृत्योरनृतस्याकिञ्चित्करत्वञ्च यो विद्वान्, तमेवं विद्वांसम् अनृतं प्रमादोत्थं कदाचिदपि न हिनस्तीत्यर्थः ॥ २ ॥ ७—४.

एवं सत्यत्वेन [2]हृदयोपासनमुक्त्वा, अक्ष्यादित्यान्तर्वर्तिनो ब्रह्मणो निर्विकारस्वरूपसत्यत्वेन व्याहृतिशरीरकत्वेन चोपासनं दर्शयति **तद्यत्सत्यमसौ — दक्षिणेऽक्षन् पुरुषः।** **तद्यत्** प्रसिद्धं सत्यम्, असौ स आदित्यः। स क इत्यत्राह **य एष एतस्मिन् मण्डले पुरुष** इति। 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते', 'य एषोन्तरक्षिणि पुरुषो दृश्यते' इति श्रुतिप्रसिद्ध इत्यर्थः। **अक्षन्** अक्षणीत्यर्थः। **तावेतावन्योन्यस्मिन् — प्राणैरयममुष्मिन्।** अधिदैवतमध्यात्मञ्चावस्थितावादित्यचाक्षुषपुरुषौ **अन्योन्यस्मिन् प्रतिष्ठितौ** परस्परोपकारकौ भवतः। रश्मिद्वारा आदित्यपुरुषः चाक्षुषपुरुषस्योपकारकः; आदित्यरश्मिसंबन्धा-

1. **मध्यतः** मध्याक्षरस्तकारः क. 2. सत्ये. ख. ग.

---

**अक्षरे सत्यम्, मध्यतोऽनृत**मिति। प्रथमोत्तमाक्षरार्थयोः जीवेश्वरयोः निर्विकारत्वात्, मध्यमाक्षरार्थस्य अचितः सविकारत्वाच्चैवम्। ततश्च श्रुतिरियं छान्दोग्यसमानार्था, यथा दहरप्रकरणे (८.३), तत् यत् सत्, तदमृतम्; अथ यत्, तेनोभौ यच्छतीति।

**रेषोऽस्मिन् प्रतिष्ठितः; प्राणैरयममुष्मिन्। स यदोत्क्रमिष्यन् भवति शुद्धमेवैतन्मण्डलं पश्यति; नैनमेते रश्मयः प्रत्यायन्ति ॥ १ ॥**

**य एष एतस्मिन् मण्डले पुरुषः, तस्य भूरिति शिरः। एकं शिरः; एकमेतदक्षरम्। भुव इति बाहू। द्वौ बाहू; द्वे एते अक्षरे। सुवरिति प्रतिष्ठा। द्वे प्रतिष्ठे; द्वे एते अक्षरे। तस्योपनिषदहरिति; हन्ति पाप्मानं**

---

भावे चाक्षुषपुरुषस्य परमात्मनः स्वकार्यासामर्थ्यात्। चाक्षुषश्च पुरुषः प्राणद्वारा आदित्यपुरुषस्योपकारकः; प्राणनाभावे आदित्यपुरुषस्य परमात्मनः प्रकाशकत्वाभावात्। **स यदोत्क्रमिष्यन् भवति, शुद्धमेवैतन्मण्डलं पश्यति। नैनमेते रश्मयः प्रत्यायन्ति।** एवं विद्वान् उत्क्रान्तिवेळायां द्वारभूतमादित्यमण्डलं **शुद्धं** रश्मि-प्रतिघातरहितं द्रष्टुं शक्नोति। सूर्यस्य रश्मयः एनं **प्रति** प्रतिकूलं नायन्ति [1]। अस्योपासकस्य चक्षुःप्रतिघाताय न [2] प्रभवन्तीत्यर्थः। चक्षुरादित्यमण्डलस्थयोः पुरुषयोः परस्परोपकार्योपकारकभावज्ञानवैभवादिति भावः ॥ १ ॥

**य एष — भूरिति शिरः।** आदित्यमण्डले वर्तमानस्य सत्यपुरुषस्य भूरिति व्याहृतिः शिर इत्यर्थः। तच्छिरस्कत्वेन ध्यानं कर्तव्यमिति भावः। तत्रोपपत्तिमाह **एकं शिरः; एकमेतदक्षरम्।** एकत्वसंख्यासाम्यादिति भावः। तथा भुव इति व्याहृतिर्बाहू ध्यातव्या। तत्रोपपत्तिमाह **द्वौ बाहू द्वे एते अक्षरे।** द्वित्वसंख्यासाम्यादिति भावः। **सुवरिति प्रतिष्ठा। प्रतिष्ठा** पादावित्यर्थः। तत्रोपपत्तिमाह **द्वे प्रतिष्ठे द्वे एते अक्षरे। तस्योपनिषदहरिति।** तस्य आदित्य-मण्डलान्तर्वर्तिनः पुरुषस्य अहरित्युपनिषत् रहस्यनामेत्यर्थः। उक्तञ्च **व्यासार्यैः,** "संबन्धादेवमन्यत्रापी" त्यत्र "उपनिषदौ रहस्यनामनी इत्यर्थ" इति। अह-रित्यस्य हन्तेर्जहातेश्च रूपसंभवमभिप्रेत्य तदनुसारेण फलमाह **हन्ति पाप्मानं**

1. सूर्यस्येत्यादि **नायन्ती**त्यन्तं **क.** कोशमात्रे। **ख**ादि कोशे मूले **प्रत्याद्यन्ती**ति पाठः। 2. न भवन्ति. **ख. ग.**

---

हन्ति पाप्मानं जहाति चेति प्रकृतविद्याफलमुक्तिनिर्देशभङ्गी भ्रमव्युत्पादनार्था।

**जहाति च. य एवं वेद ॥ २ ॥**

**योऽयं दक्षिणेऽक्षन् पुरुषः, तस्य भूरिति शिरः । एकँ शिरः; एकमेतदक्षरम् । भुव इति बाहू । द्वौ बाहू; द्वे एते अक्षरे । सुवरिति प्रतिष्ठा । द्वे प्रतिष्ठे; द्वे एते अक्षरे । तस्योपनिषदहमिति; हन्ति पाप्मानं जहाति च, य एवं वेद ॥ ३ ॥**

इति सप्तमाध्याये पञ्चमं ब्राह्मणम् ॥



---

**जहाति च, य एवं वेद** । य एवं **वेद** उपास्ते, स पाप्मानं हन्ति जहाति चेत्यर्थः ॥ २ ॥

[ एवमुत्तरत्रापि द्रष्टव्यं **योऽयं दक्षिणेऽक्षन् पुरुष** इत्यादौ ।

**तस्योपनिषदहमित्यपि** पूर्ववद्रूपम् । तदनुसारि फलञ्च **हन्ति पाप्मानं जहाति च य एवं वेदेति** ]।

इदञ्च चिन्तितं गुणोपसंहारपादे — 'य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्' इत्यादिना अक्ष्यादित्यवर्तितया व्याहृतिशरीरकतया चोपास्यत्वेनोपदिष्टस्य ब्रह्मणः, 'तस्योपनिषदहरित्यधिदैवतम्', 'तस्योपनिषदहमित्यध्यात्म' मिति ये अहरिति अहमिति च रहस्यनामनी उपदिष्टे, ते किं स्थानविशेषनियते — अ(त)तश्चाहरिति नाम आदित्यमण्डलस्थानविशिष्टस्यैव, अहमिति च नाम अक्षिस्थपुरुषस्यैवेति नियमोऽस्ति —, उत नेति चिन्तायां पूर्वपक्ष उच्यते, "संबन्धादेवमन्यत्रापि" । यथा मनोमयत्वादिविशिष्टस्यैकत्वा-

---

नेदं वाक्यम्, 'उदेति ह वै सर्वेभ्यः पाप्मभ्यः' इति वाक्यमिव नामनिर्वचनज्ञानफलपरम् । किन्तु अपेक्षितत्वात् प्रधानविद्याफलपरमिति "सैव हि सत्यादय" इति सूत्रे श्रीभाष्ये व्यक्तम् । तत्र **जहातीत्यस्य** शरीरमिति कर्माध्याहारः श्रुतप्रकाशिकायाम् (३-३-३७) कृतः । तथा च श्वेताश्वतरीये, 'ते जहुस्तनुम्' इति । अतः, 'अपहत्य पाप्मान' मिति केनोपनिषदीव सर्वपाप्महतिरूपमुक्तिपरत्वमौचित्यादालोच्यते ।

७—६.

**मनोमयोऽयं पुरुषो भाः सत्यः तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा। स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च ॥ १**

इति सप्तमाध्याये षष्ठं ब्राह्मणम् ।

---

दुपास्यैक्येन विद्यैक्यात् शाण्डिल्यविद्यायां गुणोपसंहारः, एवमक्ष्यादित्यसंबन्धिनो ब्रह्मणः सत्यस्य व्याहृतिशरीरकस्यैकत्वेन विद्यैक्यात् तत्संबन्धिनोर्नाम्नोरप्यनियमेन स्थानद्वयेऽप्युपसंहार इति ।

एवं प्राप्ते उच्यते, "न वा विशेषात"। 'य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषः, तावेतावन्योन्यस्मिन् प्रतिष्ठितौ' इति द्वित्वसंख्यया प्रधानोपास्यभेदप्रतीतेः, आदित्याक्षिस्थानभेदेन रूपभेदाच्च विद्याभेदान्न नाम्नोरनियमेन स्थानद्वयेऽप्युपसंहारः ।

"दर्शयति च"। 'तस्यैतस्य तदेव रूपम्, यदमुष्य रूप' मित्यादिश्छान्दोग्यश्रुतिरेव स्थानभेदे परस्परगुणाप्राप्तिं दर्शयति हि चाक्षुषे पुरुषे आदित्यपुरुषरूपाद्यतिदेशेन । यदि हि स्थानभेदेऽपि परस्परगुणप्राप्तिः, तर्ह्यतिदेशानर्थक्यमेव स्यात् । अतः आदित्यस्थानविशिष्टस्यैव अहरिति नाम, अक्षिस्थस्यैव अहमिति नामेति व्यवस्थेति स्थितम् । प्रकृतमनुसरामः ॥ ३ ॥ ७—५.

शाण्डिल्यविद्यामाह **मनोमयोऽयं पुरुषो भाः सत्यः**। **मनोमयः** विशुद्धमनोग्राह्यः । **भाः** भारूपः । समानप्रकरणे छान्दोग्ये, 'मनोमयः प्राणशरीरो भारूपः' इति श्रवणात् । **सत्यः** निर्विकारः । देहादिध्वंसेऽपि निर्विकार इति यावत् । **तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा**। **अन्तर्हृदये** हृदयान्तर्गतः तदवच्छेदनिबन्धनस्वल्पपरिमाणः इत्यर्थः । **स एष—किञ्च** । सर्वस्ये**शानः** नियन्ता । सर्वस्या**धिपतिः** शेषी । सर्वमिदं **प्रशास्ति** यदिदं किञ्च । प्रशासनेन धारक इत्यर्थः ।

---

**परस्परगुणाप्राप्ति**मिति । नात्र छान्दोग्यश्रुतान्तरादित्यविद्यादेः एतदादित्यविद्यादेश्चैक्यमभिप्रेतम् । तत्रोद्गीथे आदित्यपुरुषादिदृष्टेरेव विवक्षितत्वात् । इह तदभावात् । तत्र उदिति नाम, अत्र अहरिति । व्याहृतिशरीरकत्वमप्यत्र विशेषः । फलभेदोऽपि स्पष्टः । तदत्र स्थानभेदे विद्यैक्यं न भवतीति प्रतिबोधनाय विद्यान्तरनिदर्शनाभिप्रायेण छान्दोग्यविद्योक्तिरिति द्रष्टव्यम् ।

अत्र नियन्तृत्वधारकत्वशेषित्वानि त्रीण्यप्युक्तानि । अत्र वशित्वादेर्बृहदारण्यकमाध्यन्दिनशाखागतस्य छान्दोग्यशाण्डिल्यविद्यागतसत्यसङ्कल्पत्वविततिरूपत्वात् वेद्यरूपभेदाभावात् विद्यैक्यमिति द्रष्टव्यम् । गुणोपसंहारपादे — एकस्यामेव वाजसनेयशाखायाम्, अग्निरहस्ये, 'स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपं सत्यसङ्कल्पमाकाशात्मान' मिति श्रुतशाण्डिल्यविद्यातः, 'मनोमयोऽयं पुरुषो भास्सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्चे' ति श्रुता शाण्डिल्यविद्या भिद्यते, सत्यसंकल्पत्ववशित्वरूपगुणभेदादिति पूर्वपक्षे प्राप्ते उच्यते — "समान एवञ्चाभेदात्"। उभयत्रापि मनोमयत्वादिके समाने सति वशित्वादेः सत्यसंकल्पत्वविततिरूपत्वेन वशित्वसत्यसंकल्पत्वयोरभेदात् रूपभेदाभावाद्विद्यैक्यमिति स्थितम् ॥ १ ॥　　　　७–६.

---

**सत्यसंकल्पत्ववशित्वरूपगुणभेदा**दिति । सत्यसंकल्पत्वमग्निरहस्ये श्रुतम्। वशित्वादि इह बृहदारण्यके। काण्वशाखायां वशित्वांशाश्रवणेऽपि माध्यन्दिने तदस्तीति **उभयत्रापी**त्यादि । अयमत्र सूत्रार्थः – **एवम्** = अग्निरहस्य इव बृहदारण्यकेऽपि मनोमयत्वादिके समाने सति वशित्वादेश्च सत्यसंकल्पत्वेनैक्यात् न विद्याभेद इति । चेत्यत्र समुच्चेयस्य वशित्वादेरप्यध्याहारः । वशित्वादिगुणानां सत्यसंकल्पत्वाभेदेऽपि गुणान्तराणां समानत्वाभावे विद्यैक्यं न स्यादिति **समान** इत्युक्तम्। ननु शाखाभेदे गुणानामविशेषात् विद्या न भिद्यत इति युक्तम्। शाखैक्ये तु गुणानामविशेषे अविशेषपुनःश्रवणरूपाभ्यासाद् भेद एव विद्यायाः सिद्ध्येत् । अग्निरहस्यबृहदारण्यकयोरेकवाजसनेयशाखागतत्वादिति कथं सूत्रे अभेदादिति हेतुरिह विद्यैक्यसाधक इति चेत् — न — धारणसौकर्याय समासेन निर्दिष्टमेव विशदग्रहणाय व्यासेन निर्दिश्यत इत्यस्य लोके दृष्टतया तद्रीत्या पुनःश्रवणस्य सार्थक्यसंभवे अविशेषपुनःश्रवणं नास्तीति सूत्रकाराशयात्। इदमेव दर्शयितुम**धिकरणसारावलौ** इहाधिकरणे प्रथमः श्लोकः । तथा च क्वचित् समासेन क्वचिद् व्यासेन च निर्देशात् अविशेषपुनःश्रवणाभावात् नाभ्यासाद् भेद इह पूर्वपक्षीष्टः। अपितु सत्यसंकल्पत्वविततिरूपताया वशित्वादौ दुर्ज्ञानत्वात् गुणभेदाद् विद्याभेद इत्येवेति मन्तव्यम्। तदिहाधिकरणपूर्वपक्षस्तावत् तत्रतत्र श्रुतानां गुणानां विभिन्नत्वेन विरोधाद्विद्याभेद इति । विवरणरूपतया ऐक्याद् विद्यैक्यमिति सिद्धान्तः । वशित्वादेः सत्यसंकल्पत्वविततिरूपत्वञ्चेत्थम्—

**७—७.**

**विद्युद् ब्रह्मेत्याहुः। विदानाद्विद्युत्। विद्यत्येनं पाप्मनो य एवं वेद विद्युद् ब्रह्मेति। विद्युध्येव ब्रह्म ॥ १ ॥**

इति सप्तमाध्याये सप्तमं ब्राह्मणम् ॥

---

---

**विद्युद्ब्रह्मेत्याहुः**। विद्युति ब्रह्मदृष्टिः कर्तव्येति केचिदाहुः । विद्युति ब्रह्माध्यासहेतुभूतं सादृश्यमाह **विदानाद्विद्युत्** । मेघान्तःस्थितान्धकारखण्डनात् विद्युत्; ब्रह्म च अज्ञानलक्षणतमःखण्डकम् इति विद्युत्त्वमस्तीति भावः। **विद्यत्येनं पाप्मनो — ब्रह्म**। यः, 'विद्युत् ब्रह्म' त्येवं वेद, **एनं पाप्मनो विद्यति**। एनं प्रति प्रतिकूलभूता ये पाप्मानः, तान् सर्वान् **विद्यति** विशेषेण द्यति = खण्डयति । 'दो अवखण्डने' इति हि धातुः । तत्रोपपत्तिमाह **विद्युद्ध्येव ब्रह्म**। ब्रह्मणो विद्युद्वत् खण्डकत्वादित्यर्थः ॥ १ ॥ ७—७.

---

सर्वस्य वशी सन् सर्वस्येशानः, सर्वस्याधिपतिः सन् सर्वमिदं प्रशास्तीति श्रुत्यक्षरयोजना। स्वाधीनसर्वकत्वरूपसर्वस्वामित्वविशिष्टस्सन् नियमयतीत्यर्थः । यद्वा **वशी** स्वतन्त्रः; **अधिपतिः** स्वामी। स्वतन्त्रः सर्वस्वामी च सन् नियमयति । तथाच सत्यसंकल्प इत्यस्य स्वातन्त्र्य-स्वामित्वोभयप्रयुक्तं यत् अप्रतिहन्यमानत्वम् । तद्विशिष्टसंकल्परूपनियमनशालीति विवरणं कृतं भवति। एवं संकल्पोऽयं प्रवृत्तिविषये स्थितिविषये चेत्यपि विवरणमित्यलम्। अत्र उपासीतेति विधिवाक्याश्रवणेऽपि विद्याप्रकरणात् पृथग्ब्राह्मणत्वाच्च पृथग्विद्यापरत्वमभिप्रेतम्। तत्राग्निरहस्यविहितविद्यारूपानुवादेन तद्विवरणमात्रत्वात् नात्र विद्याविधिरिति सिद्धान्त इत्यपि भाव्यम्।

**एनमिति**। **विद्यतीत्यत्र** उपासक एव कर्ता अध्याहार्यः। **विद्युद्ध्येव** ब्रह्मेत्येतद्वा विद्युद्रूपब्रह्मेत्यर्थकं सत् कर्तृसमर्पकम्। खण्डनकर्मभूताश्च पाप्मानः। अतः **एनमितीदं** योग्य-पदाध्याहारेण पाप्मन इत्यत्रान्वितं कार्यम्। तदाह **एनं प्रतीति**। अध्याहृत**प्रतिशब्दार्थमाह** प्रतिकूलभूता इति। एतत्प्रतिकूलभूतान् इति यावत्।

### ७—८.

**वाचं धेनुमुपासीत । तस्याश्चत्वारः स्तनाः, स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारः । तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारञ्च वषट्कारञ्च; हन्तकारं मनुष्याः; स्वधाकारं पितरः । तस्याः प्राण ऋषभो मनो वत्सः ॥ १ ॥**

इति सप्तमाध्याये अष्टमं ब्राह्मणम् ॥

---

उपासनान्तरमाह **वाचं धेनुमुपासीत** । त्रयीलक्षणां वाचं धेनुरित्युपासीतेत्यर्थः । **तस्याश्चत्वारः स्तनाः — स्वधाकारः** । स्पष्टम् । **तस्यै द्वौ स्तनौ देवा उपजीवन्ति** । **तस्यै** तस्याः । वाग्धेन्वा इत्यर्थः । **स्वाहाकारञ्च वषट्कारञ्च** । स्वाहाकारेण वा वषट्कारेण वा देवेभ्यो हविःप्रदानादिति भावः । **हन्तकारं मनुष्याः** । 'हन्ते' ति हि मनुष्ययज्ञे मनुष्येभ्योऽन्नं प्रयच्छन्तीति भावः । **स्वधाकारं पितरः** । स्वधाकारेण हि पितृभ्यः स्वधां प्रयच्छन्तीति भावः । **तस्याः प्राण ऋषभः** । प्राणेन हि वाक् प्रसूयते[1] । **मनो वत्सः** । मनसा हि प्रस्नाव्यते । मनसा ह्यालोचिते विषये वाक् प्रवर्तते । तस्मात् मनो वत्सस्थानीयमिति भावः ॥ १ ॥ ७—८.

1. एतदनन्तरं क. कोशे, '**प्रसूयते** स्वकार्योपादिकेत्यर्थः' इत्यधिकम् । तत् भाष्यस्थपदविवरणरूपत्वात् प्रक्षिप्तम् ।

---

द्वाविति । होमे अग्निहोत्रादौ स्वाहाकारः; यागे दर्शादौ वषट्कारः । देवतोद्देशांशद्रव्यत्यागांशयोरिव प्रक्षेपांशस्यापि प्राधान्ये होमत्वम्; प्रक्षेपस्याङ्गत्वे च याग इति भेदः । **मनुष्ययज्ञ** इति । पञ्चमहायज्ञान्तर्गतोऽयम् । **प्रसूयत** इति श्लिष्टनिर्देशः । ऋषभेण धेनुः प्रसूयत इत्यत्र वत्सं जनयतीत्यर्थः । प्राणेन वाक् प्रसूयत इत्यत्र उत्पाद्यत इत्यर्थः । वाक्पदस्य त्रयीलक्षणवाक्परत्वात् । एवमेकशब्दरूषितत्वात् प्रसवस्यैकता । ईदृशप्रसवसंबन्धितया प्राणस्य ऋषभता, वाचो धेनुता च । मनो वत्सः । वत्ससंनिधाने यथा धेनुः प्रस्नुतपयोधरा, तथा मनआलोचनवशात् त्रयी वाक् स्वाहाकारवषट्कारात्मकस्वभागरूपस्तनद्वारा तत्तदुद्देशरूपं क्षीरं प्रादुर्भावयतीति । **वाक् प्रवर्तते** । वाक् कर्मानुष्ठानं निर्वर्तयतीत्यर्थः । अत्र स्वाहाकारादेः शब्दस्य एकदेशरूपत्वौचित्याय वाक्पदेन त्रयीरूपवाग्ग्रहणं कृतम् । वागिन्द्रियस्य प्राणस्य च मिथुनत्वं छान्दोग्योपक्रमे श्राव्यते । अत्रोपनिषदि, ३-५-१२. वाक्ये वाङ्मनसयोर्मिथुनत्वं प्राणस्य पुत्रत्वञ्च दर्शितम् । विवक्षाभेदात् सर्वोपपत्तिः ।

७—९.

**अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे, येनेदमन्नं पच्यते, यदिद-मद्यते । तस्यैष घोषो भवति, यमेतत् कर्णावपिधाय शृणोति । स यदो-त्क्रमिष्यन् भवति, नैनं घोषं शृणोति ॥ १ ॥**

इति सप्तमाध्याये नवमं ब्राह्मणम् ॥

७—१०.

**यदा वै पुरुषोऽस्माल्लोकात्प्रैति, स वायुमागच्छति । तस्मै स तत्र विजिहीते**

---

प्रसङ्गादुत्क्रान्तिं वक्तुं तदुपक्रममाह **अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे** । कोऽसावित्यत्राह **येनेदमन्नं पच्यते यदिदमद्यते** । यदिदमद्यते, तदिदं भुज्य-मानं येनाग्निना पच्यते—स वैश्वानराग्निरित्यर्थः । **तस्यैष घोषो भवति यमेतत् कर्णावपिधाय शृणोति** । **तस्य** वैश्वानराग्नेः जाठरस्यैष घोषो भवति, यं घोषं **एतत्** इदानीं **कर्णावपिधाय** कर्णावङ्गुलिभ्यां पिधाय शृणोति । (?) तादृशवैश्वानराग्नौ ब्रह्मदृष्टिः [1]कार्येत्यर्थसिद्धोऽर्थः । **स यदोत्क्रमिष्यन् भवति, नैनं घोषं शृणोति** । तदानीं जाठराग्नेरभावादिति भावः ॥ १ ॥ ७—९.

उत्क्रान्तिप्रसङ्गात् ब्रह्मविदो गतिमाह **यदा वै — शाश्वतीः समाः** । यदा ब्रह्मवित् पुरुषः अस्माल्लोकात् प्रैति, तदा अर्चिर्दिनपूर्वपक्षषडुदङ्मासाब्द-द्वारा वायुमागच्छति । **तस्मै** आगताय ब्रह्मविदे सः वायुः **विजिहीते** आत्मा-वयवान् विगमयति । छिद्रीकरोत्यात्मानमित्यर्थः । किंपरिमाणं छिद्रमित्यत्राह

1. कर्तव्येत्यर्थः . ख. ग.

---

**अयमग्निरिति** । छान्दोग्य (३-१३.) वाक्य इव इह परज्योतिषः कौक्षेयज्योतिश्शरीरकत्वस्य अश्रवणात् उपासनविध्यश्रवणाच्च नात्र तत्रोक्तोपासनविशेष उच्यते । किन्तु प्रकृतमुमुक्षुबुभुक्षु-साधारणी उत्क्रान्तिः । अस्या उत्क्रान्तेरनन्तरब्राह्मणोक्तब्रह्मविद्गतेश्च नानोपासननिरूपणप्रकरणे मध्ये विशेषसंगत्यभावात् प्रसंग एव संगतिरुक्ता । अत्र वैश्वानराग्नौ ब्रह्मदृष्टिविधानपरं भाष्य-वाक्यं पक्षान्तरेण स्यात् । छान्दोग्येऽपि न ब्रह्मदृष्टिरुक्ता ।

**विजिहीते=आत्मावयवान् विगमयतीति** । अत्र, 'वायुदेवतामागतः तया रथचक्ररन्ध्रसदृक्षेण मार्गेण आदित्यं नीयते; तेन च आडम्बरवाद्यरन्ध्रसदृक्षेण मार्गेण चन्द्र-मसम्; तेन च दुन्दुभिरन्ध्रसदृक्षेण विद्युदभिमानिदेवतामिति **परमपदसोपाने आचार्य-व्याख्यानमनुसंधेयम्** ।

**यथा रथचक्रस्य खम् । तेन स ऊर्ध्व आक्रमते । स आदित्यमागच्छति । तस्मै स तत्र विजिहीते [1] यथाऽऽडम्बरस्य खम् । तेन स ऊर्ध्व आक्रमते । स चन्द्रमसमागच्छति । तस्मै स तत्र विजिहीते यथा दुन्दुभेः खम् । तेन स ऊर्ध्व आक्रमते । स लोकमागच्छत्यशोकमहिमम् । तस्मिन् वसति शाश्वतीः समाः ॥ १ ॥**

इति सप्तमाध्याये दशमं ब्राह्मणम् ।

---

1. यथालम्बरस्य. शां. मा.

---

**यथा रथचक्रस्य खम्** । रथचक्रमध्यवर्ति रन्ध्रं यत्परिमाणम्, तत्परिमाणं छिद्रं करोति । **तेन** च छिद्रेणो[1]र्ध्वं गत्वा **सः** ब्रह्मवित् आदित्यलोकमागच्छतीत्यर्थः । न च, 'देवलोकादादित्य' मिति श्रुत्याऽस्य विरोध इति वाच्यम् — 'योऽयं पवते, एष देवानां गृहाः' इति श्रुतेः वायोरेव तत्र देवलोकशब्दवाच्यत्वात् । सूत्रितञ्च, "वायुमब्दादविशेषविशेषाभ्याम्" इति । वायुम् अब्दात् संवत्सरादूर्ध्वमधिगच्छेत् । अविशेषविशेषाभ्याम् = सामान्यविशेषाभ्याम् । देवलोकशब्दो हि सामान्यशब्दः । वायुशब्दो विशेषः । अतो वायुरेव देवलोक इति स्थितम् । **तस्मै स तत्र विजिहीते यथाऽऽ[2]डम्बरस्य खम्** । आदित्यो ब्रह्मलोकं जिगमिषोर्मार्गनिरोधं कृत्वा स्थितोऽपि **तस्मै** एवंविदे उपासकाय प्राप्ताय आड[3]म्बराख्यवाद्यविशेषस्य खं छिद्रमिव छिद्रं करोति । तेन [4] ऊर्ध्वमाक्रम्य चन्द्रमसमागच्छति । **तस्मै स तत्र विजिहीते यथा दुन्दुभेः खम्** । **सो**ऽपि चन्द्रमाः **तस्मै** ब्रह्मविदे दुन्दुभिरन्ध्रसदृशं रन्ध्रं करोति । [5] तत्प्रमाणेन मार्गेण स ऊर्ध्वमाक्रम्य विद्युद्वरुणेन्द्रधातृलोकान् [6] अतिक्रम्य **अशोकं** शोकशून्यम् **अहिमं** हिमाद्याधिदैविकदुःखशून्यं परब्रह्मलोकं गत्वा **शाश्वतीः समाः** अनन्तान् संवत्सरान् तत्रैव वसति । न पुनरावर्तत इत्यर्थः ॥ १ ॥ ७—१०.

1. ऊर्ध्वः क. 2. यथालम्बरस्य. ख. ग. 3. लम्बराख्य. ख. ग. 4. ऊर्ध्वः क. 5. तद्वत्तेन मार्गेणोर्ध्व उद्गम्य. क. 6. लोकम्.

७—११.

एतद्वै परमं तपो यद्व्याहित[1]स्तप्यते। परमं हैव[2] लोकं जयति य एवं वेद। एतद्वै परमं तपो यं प्रेतमरण्यँ हरन्ति। परमँ हैव[3] लोकं जयति य एवं वेद। एतद्वै परमं तपो यं प्रेतमग्नावभ्यादधति। परमं हैव[3] लोकं जयति य एवं वेद ॥ १ ॥

इति सप्तमाध्याये एकादशं ब्राह्मणम् ॥

७.—१२.

अन्नं ब्रह्मेत्येक आहुः। तन्न तथा; पूयति वा अन्नमृते प्राणात्।

1. व्याधितः. मा. 2. स लोकं जयति. मा.

---

**एतद्वै परमं तपो यद्व्याहितस्तप्यते, परमं हैव लोकं जयति य एवं वेद।** **व्याहितः** व्याधितः। ज्वरादिपरिगृहीतस्सन् यत् तप्यते, तदेव परमं तप इत्येवं चिन्तयेत्। दुःखसामान्यात्। तस्यैवं चिन्तयतो[1] विदुषः [[2]अनिन्दितोऽविहितश्च] कर्मक्षयहेतुः तदेव तपो भवति। स एवं तेन विज्ञानेन तपसा दग्धकिल्बिषः परमं हैव लोकं जयति, य एवं वेद। **एतद्वै परमं तपो यं प्रेतमरण्यं हरन्ति परमं हैव लोकं जयति य एवं वेद।** यं प्रेतं ग्रामादरण्यम् ऋत्विजो हरन्ति तस्मिन् कर्मणि ग्रामादरण्यगमनत्वसामान्यात् परमं तपो[3] भविष्यतीति तत्र परमतपस्त्वबुद्धिं जीवद्दशायां यः करोति, स परमं लोकं जयति। **एतद्वै परमं तपो यं प्रेतमग्नावभ्यादधति परमं हैव लोकं जयति य एवं वेद।** अग्निप्रवेशसामान्यात् भविष्यति प्रेतभूतस्य स्वस्याग्नावभ्याधाने परमतपस्त्वबुद्धिं कुर्वतः परलोकप्राप्तिरित्यर्थः ॥ १ ॥ ७—११.

**अन्नं ब्रह्मेत्येक आहुस्तन्न तथा पूयति वा अन्नमृते प्राणात्।** केचिदन्नं ब्रह्मेत्याहुः [आचार्याः]। तन्न तथा युज्यते। प्राणादृते तदन्नं **पूयति**

1. चिन्तयतोऽपि। 2. अयं ख. पाठः ग. कोशे अविहित इत्यत्र अविषीदत इति।

---

यं प्रेतमिति। यमितिश्रवणात् **एतद्वै** इत्यत्र तस्येति प्रतिसंबन्धि अर्थसिद्धम्। **एतदिति** हरणाभ्याधानरूपकर्मपरम्।

भूतप्रवेशरमणाधिकरणत्वरूपधर्मभाक्त्वात् यथाक्रमं विशब्दरशब्दवाच्यतया विरत्वेन अन्नप्राणोपासनं फलविशेषार्थं विधास्यन् प्रत्येकनिन्दया तदुभयसाहित्यं प्रशंसति **अन्नं ब्रह्मेत्यादिना।**

**प्राणो ब्रह्मेत्येक आहुः। तन्न तथा; शुष्यति वै प्राण ऋतेऽन्नात्। एते [1] ह त्वेव देवते एकधाभूयं भूत्वा परमतां गच्छतः। तद्ध स्माह प्रातृदः पितरम्, किँस्विदेवैवं विदुषे साधु कुर्याम्, किमेवास्मा असाधु कुर्यामिति। स ह स्माह पाणिना मा प्रातृद! कस्त्वेनयोरेकधाभूयं भूत्वा परमतां गच्छतीति।**

1. एते त्वेव. मा.

---

पूतीभावमापद्यते। तस्मात् नान्नं ब्रह्मेति। **प्राणो ब्रह्मेत्येक आहुः। तन्न तथा; शुष्यति वै प्राण ऋतेऽन्नात्।** केचित् प्राणो ब्रह्मेत्याहुः। तदपि न युक्तम्; अन्नाभावे प्राणस्य शोषणदर्शनादित्यर्थः। **एते ह त्वेव देवते एकधाभूयं भूत्वा परमतां गच्छतः।** तस्मादन्नप्राणरूपे **एते** देवते **एकधाभूयं** एकधाभावं **भूत्वा** गत्वा **परमतां** परमत्वं गच्छतः। **तद्ध स्माह प्रातृदः पितरम्।** तदेवमध्यवस्य ह स्म प्रातृदो नाम पुत्रः पितरमाह। किमितीत्यत्राह **किं स्विदेवैवंविदुषे साधु कुर्याम्, किमेवास्मा असाधु कुर्यामिति।** अन्नप्राणावेकीभूतौ ब्रह्मेति विदुषे **अस्मै** मह्यं किं वा साधुकर्म कुर्याम्; किं वा असाधुकर्म कुर्याम्। कृतकृत्यस्य मे साध्वसाधुकर्मभ्यां किं भविष्यतीति भावः। **अस्मा** इति स्वात्मानमेव निर्दिशति देहादिविवेकज्ञापनाय। अथवा **अस्मा** इति कस्यचित् तच्छिष्यस्य तद्विदुषो वा निर्देशः। **स ह स्माह पाणिना -- गच्छतीति।** तमेवंवादिनं पुत्रं हस्तेन निवारयन् स ह पिता आह स्म। किमिति। हे प्रातृद! मैवं वोचः। कस्तु **एनयोः** अन्नप्राणयोरेकधाभूयं **भूत्वा** गत्वा स्थितयोः परमतां विद्वान् परमतां गच्छति। न कश्चिदपि विद्वान् अनेन दर्शनेन

---

**एकधाभूय**मिति न णमुल्। ईदृशप्रयोगानुशासनाभावात्। अतः, 'भुवो भावे' इति क्यबन्तम्। **भूत्वे**ति च भू प्राप्ताविति धातोः, गत्वेत्यर्थकम्। एकधाभावः = मिथः संसृष्टता। एकोपासनविषयत्वमिति यावत्। ब्रह्म विदुषः कृतकृत्यत्वात् तस्य कर्मोपाद्यमानवृद्धिक्षयाभावात् तं प्रति क्रियमाणं कर्म किञ्चित् साध्वपि न भवति, नाप्यसाधु। न हि कृतकृत्ये तस्मिन् वृद्ध्यापादकत्वं वा कनीयस्त्वापादकत्वं वा कस्यचित् कर्मणः। न तथा प्रकृतान्नप्राणोपासके परमत्वम्। किन्तु फलविशेषप्राप्तिमत्त्वरूपं परमत्वम्। तदपि **नैवम्भूतोपासना**दिति प्रातृदं प्रति ब्रुवतः

**तस्मा उ हैतदुवाच, वीति । अन्नं वै वि । अन्ने हीमानि सर्वाणि भूतानि विष्टानि । रमिति । प्राणो वै रम् । प्राणे हीमानि सर्वाणि भूतानि रमन्ते । सर्वाणि ह वा अस्मिन् भूतानि विशन्ति, सर्वाणि भूतानि रमन्ते, य एवं वेद ।। १ ।।**

इति सप्तमाध्याये द्वादशं ब्राह्मणम् ।।

७—१३.

**उक्थम् । प्राणो वा उक्थम्; प्राणो हीदँ सर्वमुत्थापयति ।**

---

परमतां गच्छति । तस्मात् मैवं वक्तुमर्हसि, कृतकृत्योऽसाविति ।

इति पित्रोक्तः पुत्रः, 'यद्येवम्, ब्रवीतु भगवान्, कथं परमतां गच्छती' ति पितरं पप्रच्छ । **तस्मा उ हैतदुवाच** । तस्मै एवं पृष्टवते पुत्राय पिता **एतत्** वक्ष्यमाणमुवाचेत्यर्थः । तदेवाह वीति — **विष्टानि** । अन्ने **हि** यस्मात् इमानि सर्वाणि भूतानि **विष्टानि** आश्रितानि, अतोऽन्नं वीत्युच्यते इत्यर्थः। अतो 'वि' इति अन्नमुपास्यमित्यर्थः । **रमिति** । प्राण उपास्य इति शेषः । तदेवोपपादयति **प्राणो वै रम् । प्राणे हीमानि सर्वाणि भूतानि रमन्ते ।** यस्मादिमानि सर्वाणि भूतानि प्राणे रमन्ते, अतः प्राण एव रमित्यर्थः । विरमिति गुणविशिष्टान्नप्राणोपासनस्य फलमाह **सर्वाणि हवा अस्मिन् भूतानि विशन्ति सर्वाणि भूतानि रमन्ते य एवं वेद** । स्पष्टोऽर्थः ।। १ ।। ७—१२.

प्राणस्यैव ऋग्यजुस्सामत्वेनोपासनमाह **उक्थम्** । 'इति प्राणमुपासीते' ति शेषः । उक्थशब्दः शस्त्रविशेषवचनोऽपि यजुस्सामप्रायपाठात् ऋङ्मात्रपरः । शस्त्रपरत्वेऽपि न दोषः । तत्रोपपत्तिमाह **प्राणो वा उक्थम्** । प्राणस्योक्थत्व- मुपपादयति **प्राणो हीदं सर्वमुत्थापयति** । न ह्यप्राणः कश्चिदुत्तिष्ठतीति भावः ।

---

पितुराशयः । **कथं परमतां गच्छतीति** । कीदृशपरमतां प्राप्नोतीत्यर्थः । **कथम्** कीदृगुपा- सनेनेति वा । वित्वरत्वगुणविशिष्टस्यैवान्नप्राणोभयस्योपासनेन फलविशेषप्राप्तिरूपं परमत्वमिति पिता वक्ष्यति ।

प्राणस्यान्नसा'हित्येनोपासनमुक्तम् । अथ प्रकारान्तरेण प्राणोपासनानि चत्वार्युच्यन्ते **उक्थ**मित्यादिना । **शस्त्रपरत्वेऽपि न दोष** इति । प्राणेन्द्रियमध्ये प्राणस्य प्राधान्यात् महाव्रते च क्रतौ उक्थशस्त्रस्य प्राधान्यात् प्राणे उक्थदृष्टेः ऐतरेयोपनिषदि (१-४.) उपपादितत्वादिति भावः ।

उद्धास्मा[1]दुक्थविद्वी[2]रस्तिष्ठति, उक्थस्य सायुज्यँ सलोकतां जयति, य एवं वेद ॥ १ ॥

यजुः । प्राणो वै यजुः । प्राणे हीमानि सर्वाणि भूतानि युज्यन्ते । युज्यन्ते हास्मै सर्वाणि भूतानि श्रैष्ठ्याय, यजुषस्सायुज्यँ सलोकतां जयति, य एवं वेद ॥ २ ॥

साम । प्राणो वै साम । प्राणे हीमानि सर्वाणि भूतानि सम्यञ्चि । सम्यञ्चि हास्मै सर्वाणि भूतानि श्रैष्ठ्याय कल्पन्ते, साम्नः सायुज्यँ सलोकतां जयति, य एवं वेद ॥ ३ ॥

क्षत्रम् । प्राणो वै क्षत्रम् । प्राणो हि वै क्षत्रम् ।

1. उद्धास्मा उक्थवित्. मा. 2. वीरः शां. मां.

---

उद्धास्मादुक्थविद्वी (द्वी) रास्तिष्ठति । अस्मात् एवंविदः उक्थवित् उक्थप्राणवित् धी(वी)रः पुत्रः उत्तिष्ठतीति व्यवहितेन संबन्धः । एवं दृष्टफलमुक्त्वा अदृष्टं फलमाह उक्थस्य सायुज्यं — वेद । उक्थप्राणेन सायुज्यं सलोकतां प्राप्नोतीति भावः ॥ १ ॥

यजुः । 'इति प्राणमुपासीते' ति शेष इत्यादि पूर्ववत् । प्राणे सति हीमानि सर्वाणि भूतानि युज्यन्ते सन्नह्यन्त उद्युञ्जते[1] । अतः प्राणो यजुः । युज्यन्ते हास्मै -- वेद । अस्माकमसौ श्रेष्ठो भवत्वित्येवंविदः श्रैष्ठ्याय युज्यन्ते सन्नह्यन्ति उद्युञ्जते सर्वाणि भूतानीत्यर्थः । शिष्टं स्पष्टम् ॥ २ ॥

साम । प्राणो वै साम —। पूर्ववत् । सम्यञ्चि संगतानि भवन्तीत्यर्थः । अस्मै श्रैष्ठ्याय सम्यञ्चि कल्पन्ते नः श्रेष्ठो भवत्विति । प्राणविदः श्रैष्ठ्याय संगतानि [2] सन्ति कल्पन्ते इत्यर्थः । शिष्टं स्पष्टम् ॥ ३ ॥

क्षत्रम् । 'इति प्राणमुपासीते' ति शेषः । तत्रोपपत्तिः प्राणो वै क्षत्रम् । तत्र विवदमानं प्रत्याह प्राणो हि वै क्षत्रम् । प्राणस्य क्षत्रत्वप्रसिद्धेरिति भावः ।

1. संनह्यन्ते. क. 2. भवन्ति. ख. ग.

---

संनह्यन्ति इति, सन्ति इति च शत्रन्तम् ।

**त्रायते हैनं प्राणः क्षणितोः। प्र क्षत्रमत्र[1]माप्नोति, क्षत्रस्य सायुज्यं सलोकतां जयति, य एवं वेद ॥ ४ ॥**

इति सप्तमाध्याये त्रयोदशं ब्राह्मणम् ॥

## ७—१४.

**भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराणि। अष्टाक्षरं ह वा एकं गायत्र्यै पदम्।**

1. प्रक्षत्रमक्षत्रं. मा.

---

तदुपपादयति **त्रायते हैनं प्राणः क्षणितोः**। क्षणु हिंसायामित्यस्मात्, 'सर्वधातुभ्यः इन्' इति इन्। **क्षणिः** हिंसा । तस्मात् पञ्चम्यर्थे तोसुन् प्रत्ययः। हिंसातः त्रायते ह्येनं प्राण इत्यर्थः। शस्त्रादिहिंसायामपि प्राणसद्भावे पुनर्मांसेन पूर्णं भवतीत्यर्थः। विद्यायाः फलमाह **प्रक्षत्रमत्रमाप्नोति — य एवं वेद**। न त्रायते अन्येन केनचिदिति **अत्रं** प्राणः। तमत्रं **क्षत्रं** क्षत्रत्वगुणविशिष्टं प्राप्नोतीत्यर्थः। **क्षत्रस्य सायुज्यं सलोकतां जयति**। क्षत्रप्राणस्य सायुज्यसालोक्ये गच्छतीत्यर्थः॥ ४ ॥ ७—१३.

एवं मनो(?)हृदयाद्यनेकविशिष्टस्योपासनमुक्त्वा गायत्र्युपाधिविशिष्टस्य उपासनमाह **भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराणि**। अत्र [1]द्यौरित्यक्षरद्वयं कृत्वा यकारेण सहाष्टत्वं द्रष्टव्यम्। **अष्टाक्षरं ह वा एकं गायत्र्यै पदम्**। गायत्र्या

1. द्ियौरिति यकारेण. ख. ग.

---

**मनोहृदयाद्यनेकविशिष्टस्ये**त्यत्र ब्रह्मणो हृदयाद्यनेकविशिष्टस्येति शाङ्करीया पाठः स्यात्। मनसः पृथगुपाधित्वस्य प्रागनुक्तेः। शाण्डिल्यविद्यायां हृदयमुपाधिः। अक्षिण आदित्ये चोपासनमादिपददर्शितम्।

लोकत्रय – वेदत्रय – प्राणादित्रयरूपेण गायत्रीप्रथमद्वितीयतृतीयपादभावनपूर्वकमादित्यमण्डल पुरुष बुद्धिंपरोरजोरूपतत्तुरीयदर्शतपदे कुर्वतः, सावित्र्याः वस्तुतः स्थितं गायत्रीत्वमनुसंदधानस्य लोकत्रय–वेदत्रय–प्राणिजातान्तर्गतसर्वफलप्राप्तिः, चतुर्थपादवशात् श्रीयशःप्राप्तिश्च। एवम्भूताया गायत्र्याः परोरजसि प्रतिष्ठितत्वम्, परोरजसः सत्याख्ये चक्षुषि, सत्यस्य बलाख्ये प्राणे च प्रतिष्ठितत्वम्, तस्या उपस्थानविशेषम्, अग्निरूपं मुखञ्च विदुषः प्राणत्राणम्, सर्वविरोधिनिवृत्तिः, सर्वदोषनिरहश्च। ईदृशगायत्रीतुरीयपादपरोरजःपदप्रमेयपरमात्मवेदी च शुद्धः पूतोऽजरोऽमृतो भवतीति भवतीयं मोक्षविद्येत्याशयेनाह **गायत्र्युपाधिविशिष्टस्योपासनमाहे**ति। गायत्र्या अपि ईदृशतुरीयपादस्थितिरुपदेशगम्या।

एतदु हैवास्या एतत्। स यावदेषु त्रिषु लोकेषु तावद्ध जयति, योऽस्या एतदेवं पदं वेद ॥ १ ॥

ऋचो यजूंषि सामानीत्यष्टावक्षराणि। अष्टाक्षरं ह वा एकं गायत्र्यै पदम्। एतदु हैवास्या एतत्। स यावतीयं त्रयी विद्या तावद्ध जयति, योऽस्या एतदेवं पदं वेद ॥ २ ॥

प्राणोऽपानो व्यान इत्यष्टावक्षराणि। अष्टाक्षरं ह वा एकं गायत्र्यै पदम्। एतदु हैवास्या एतत्। स यावदिदं प्राणि तावद्ध जयति, योऽस्या एतदेवं पदं वेद। अथास्या एतदेव तुरीयं दर्शतं पदं परोरजाः, य एष तपति।

---

एकं पदमष्टाक्षरम्। एकैकः[1] पादोऽष्टाक्षर इत्यर्थः। **एतदु हैवास्या एतत्।** **एतत्** लोकत्रयात्मकम् **अस्याः** गायत्र्याः **एतत् पदम्** एकं पदमित्यर्थः। लोकत्रये गायत्र्येकपदत्वज्ञानस्य फलमाह **स यावदेषु — वेद**। एवमेतत् पदं यो वेद, स त्रिषु लोकेषु, यावज्जेतव्यम्, तावज्जयतीत्यर्थः। एवमुत्तरत्रापि ॥ १ ॥

**ऋचो यजूंषि सामानीत्यष्टौ —। एतदु हैवास्या एतत्।** एतत् वेदत्रयात्मकम**स्या** गायत्र्याः **एतत्** एकं पदमित्यर्थः। **स यावतीयं — वेद।** इयं त्रयी विद्या **यावती** यावत्फलप्रकाशिका, तत् फलं सर्वं जयतीत्यर्थः। गायत्र्याः वेदत्रयात्मकं पदं जानन् त्रयीप्रतिपाद्यं सर्वं फलमाप्नोतीति यावत् ॥ २ ॥

**प्राणोऽपानो व्यान इत्यष्टौ —।** अत्र [2]वि या **व्यान** इति यकारेण सहाष्टाक्षरत्वम्। **स यावदिदं — वेद।** प्राणात्मकगायत्रीतृतीयपादोपासकः प्राणिजातं सर्वं जयतीत्यर्थः।

**अथास्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति।** **अस्याः** गायत्र्याः एतदेव तुरीयं पदम्। अत्र **तुरीयदर्शत**शब्दौ

1. एकैकशः ख. ग. 2. व् यान. क.

---

**य एष तपतीति।** अस्य यच्छब्दस्य **एत**देवेति पदं प्रतिसंबन्धि। **य एष** मण्डलपुरुषस्तपति एतद्बुद्धिः, गायत्रीतुरीयपादो यः **परोरजा** इति, तत्र कार्या। तस्य तत्पादस्य च वाच्यवाचकभावसंबन्धादिति भावः।

**यद्वै चतुर्थं तत् तुरीयम्। दर्शतं पदमिति। ददृश इव ह्येषः। परोरजा इति। सर्वमु ह्येवैष रज उपर्युपरि तपति। एवँ हैव श्रिया यशसा तपति, योऽस्या एतदेवं पदं वेद ॥ ३ ॥**

**सैषा गायत्र्येतस्मिँस्तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता। तद्वै तत् सत्ये प्रतिष्ठितम्। चक्षुर्वै सत्यम्। [1] चक्षुर्हि वै सत्यम्। तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति, य एव ब्रूयादहमदर्शमिति तस्मादेव [2] श्रद्दध्याम। तद्वै तत् सत्यं बले प्रतिष्ठितम्। प्राणो वै बलम्। तत् प्राणे प्रतिष्ठितम्। तस्मादाहुर्बलँ सत्यादोजीय इति।**

1. चक्षुर्हि· मां. 2. तस्मा एव. शां· मां.

---

स्वयमेव व्याचष्टे — **यद्वै चतुर्थम् तत् तुरीयम्। दर्शतं पदमिति; ददृश इव ह्येषः।** लोके चतुर्थमिति प्रसिद्धमेव तुरीयम्। **एषः** मण्डलान्तर्गतः पुरुषो दृश्यत इव हि भासते। अतः दर्शतं पदमित्यर्थः। **परोरजा** इत्येतद्व्याचष्टे **परोरजा इति; सर्वमु ह्येवैष रज उपर्युपरि तपति। सर्वं रजः** सर्वमपि राजसं लोक**मुपर्युपरि** अत्यन्तमूर्ध्वं स्थित्वा **एषः** मण्डलपुरुषः तपतीत्यर्थः। **एवं हैव श्रिया यशसा — वेद। योऽस्याः** गायत्र्याः एतदेवं पदं तुरीयं वेद, स श्रिया यशसा च **एवमेव** तुरीयपदभूतमण्डलपुरुष इव दीप्यत इत्यर्थः ॥ ३ ॥

**सैषा — प्रतिष्ठिता।** एषा गायत्री तुरीये दर्शते पदे परोरजसि मण्डलपुरुषे प्रतिष्ठितेत्यर्थः। **तद्वै तत् सत्ये प्रतिष्ठितं चक्षुर्वै सत्यम्।** आदित्यश्चक्षुषि सत्ये प्रतिष्ठित इत्यर्थः। चक्षुषस्सत्यत्वे विवदमानं प्रत्याह **चक्षुर्हि वै सत्यम्।** तत्रोपपत्तिमाह **तस्माद्यदिदानीम् — अश्रौषमिति।** अहमदर्शमित्येकः; अहमश्रौषमित्येकः; एवं द्वौ विवदमानावे**याताम्** आगच्छेतांश्चेदित्यर्थः। **य एव — तस्मादेव श्रद्दध्याम।** चक्षुषाऽहं दृष्टवानिति वचनादेव श्रद्धां कुर्वीमहि; न तु तद्विरुद्धार्थादश्रौषमिति वचनात् श्रद्धा जायत इत्यर्थः। **तद्वै तत्सत्यं बले—बलम्।** स्पष्टार्थम्। **तत् प्राणे प्रतिष्ठितम्।** तत् सत्यं बलशब्दाच्ये प्राणे प्रतिष्ठितमित्यर्थः। **बलं सत्यादोजीयः। ओजीयः** ओजस्तरमित्यर्थः। लोके यस्मिन् यत् आश्रितं भवति, तस्मादाश्रितादाश्रयस्य बलवत्त्वमिति भावः।

**एवमे(मुहै)षा गायत्र्यध्यात्मं प्रतिष्ठिता। सा हैषा गयाँस्तत्रे। प्राणा वै गयाः तत्प्राणाँस्तत्रे। तद्यद्गयाँस्तत्रे, तस्माद्गायत्री नाम। स यामेवामूँ सावित्रीमन्वाह, एषैव सा। स यस्मा अन्वाह, तस्य प्राणाँस्त्रायते ॥ ४ ॥**

**ताँ हैतामेके सावित्रीमनुष्टुभमन्वाहुः, वागनुष्टुप्;[1] एतद्वाचमनुब्रूम इति।**

1. अनुष्टुप् तद्वाचं. मां.

---

**एवमेषा गायत्र्यध्यात्मं प्राणे प्रतिष्ठिता। एवम्** उक्तप्रकारेण अध्यात्मं प्राणे गायत्री प्रतिष्ठितेत्यर्थः।

गायत्रीनिर्वचनमाह **सा हैषा गयांस्तत्रे**। तत्रे 'त्रैङ् पालने'। तस्माल्लिटि रूपम्। पालयति स्मेत्यर्थः। गयशब्दं व्याचष्टे **प्राणा वै गयाः तत्प्राणांस्तत्रे**। तत्प्राणान् तान्[1] प्राणानित्यर्थः। **तद्यद्गयांस्तत्रे तस्माद्गायत्री नाम**। स्पष्टम्। **स यामेवामूं सावित्रीमन्वाह, एषैव सा। सः** आचार्यः, 'पच्छोऽर्धर्चशस्सर्वाम्' इति प्रकारेण यां सावित्रीमन्वाह, **सा** सावित्री **एषैव** प्राणान् नरकपतनादिभ्यस्त्रायत इत्यर्थः। **स यस्मा अन्वाह, तस्य प्राणांस्त्रायते। सः** आचार्यो **यस्मै** शिष्यायान्वाह, तस्य प्राणान् नरकपतनादिभ्यस्त्रायते। [[2] अतो गायत्र्येव सावित्री] इत्यर्थः ॥ ४ ॥

**तां हैतामेके — अनुब्रूम इति**। केचन तामेतां सावित्रीमनुष्टुप्छन्दस्कामेवाहुः। तत्र हेतुः **वागनुष्टुप् — इति**। एतां वाचमनुब्रूम इति सावित्र्यनुवचने प्रवर्तमानाः प्रवर्तन्ते; वाक् च अनुष्टुप्छन्दःप्रधानेति अनुष्टुप्छन्दस्कै(सै)व सावित्री उपदेष्टव्या। अतस्तुरीयेणाष्टाक्षरेण पादेन युक्ता सावित्री उपदेष्टव्या। अतश्च द्वात्रिंशदक्षरतया अनुष्टुप्छन्दस्का सावित्री उपपद्यते इत्यर्थः। तद्

1, तद्रूपान्. ख, ग, 2. इदमधिकं क. कोशे।

---

**केचनेति**। एके शाखिन इत्यर्थः। **अष्टाक्षरेण पादेनेति**। ईदृशी सावित्री आनन्दगिरीये दर्शिता, 'तत् सवितुर्वृणीमहे वयं देवस्य भोजनम्। श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि' इति। सवितृदेवताकत्वादियमपि सावित्री। इयञ्च छन्दोग्ये (५-२.) मन्थाख्ये कर्मणि दृष्टा। इह तु तत्रापि (८-३. गायत्र्येव। गायत्र्या इहोक्तस्तुरीयः पादस्तु न नियतः, नाप्यष्टाक्षरः।

**न तथा कुर्यात् । गायत्रीमेव सावित्रीमनुब्रूयात् ।**

**यदिह वा अप्येवंविद्बह्विव प्रतिगृह्णाति, न हैव तद्गायत्र्या एकञ्चन पदं प्रति ॥ ५ ॥ स य इमाँस्त्रीन् लोकान् पूर्णान् प्रतिगृह्णीयात्, सोऽस्या एतत्प्रथमं पदमाप्नुयात् । अथ यावतीयं त्रयी विद्या यस्तावत् प्रतिगृह्णीयात्, सोऽस्या एतद्द्वितीयं पदमाप्नुयात् । अथ यावदिदं प्राणि यस्तावत् प्रतिगृह्णीयात्, सोऽस्या एतत् तृतीयं पदमाप्नुयात् ।**

---

दूषयति **न तथा कुर्यात्** । तथा न कुर्यात्, किन्तु **गायत्रीमेव सावित्रीमनुब्रूयात्** । गायत्रीछन्दस्कामष्टाक्षरैस्त्रिभिः पादैर्युक्तां गायत्रीमेव **सावित्रीमनुब्रूयादि**त्यर्थः ।

**यदि ह वा अप्येवंवित् — पदं प्रति** । एवं प्रजानन् देहयात्रार्थं बहुप्रतिग्रहं करोति यदि, तत् प्रतिग्रहजातं गायत्र्या एकैकस्य पदस्य न पर्याप्तम्; तेन न स्पर्द्धते । एवं पादविदः प्रतिग्रहदोषाः शमं यान्तीत्यर्थः ॥ ५ ॥ **स य इमांस्त्रीन् लोकान् — पदमाप्नुयात्** । य इमान् त्रीन् लोकान् धनपूर्णान् प्रतिगृह्णाति, स गायत्रीप्रथमपादज्ञानफलमाप्तवान् । प्रथमपादज्ञानस्य लोकत्रयभोक्तृत्वं फलमित्यर्थः । यद्वा लोकत्रयप्रतिग्रहप्रायश्चित्तं प्रथमपादाध्ययनमित्यर्थः । एवमुत्तरत्रापि योज्यम् । **अथ यावतीयं — द्वितीयं पदमाप्नुयात्** । त्रयीप्रकाश्य सकलफलानुभवो द्वितीयपादज्ञानस्य फलमित्यर्थः । त्रयीप्रकाश्यसकलफलप्रतिग्रहप्रायश्चित्तं द्वितीयपादज्ञानमिति वाऽर्थः । **अथ यावदिदं प्राणि — तृतीयं पदमाप्नुयात्** । सर्वप्राणिनः प्रति शेषित्वं तृतीयपादज्ञानस्य फलमित्यर्थः । पूर्ववद्वा योज्यम् ।

---

**न हैव तत् गायत्र्या एकञ्चन पदं प्रती**ति पूर्वोक्तस्य विवरणरूपतया अर्थान्तरमाह **यद्वे**ति । यः प्रतिगृह्णीयात्, स प्रथमं पदमाप्नुयादित्यस्य, प्रतिग्रहस्य प्रथमपादेऽन्तर्भाव इत्यर्थलाभात् पूर्वोक्तविवरणरूपता । **पूर्ववद्वा योज्यमि**ति । प्राणिजातान्तर्गतसर्वविषयकप्रतिग्रहोऽपि न दोषायेत्यर्थः । एवं तुरीयपादविषयेऽपि योजना द्रष्टव्या । तुरीयपादवेदिनः तत्क्षपणीयो यावान् दोषः, तावान् सर्वविधप्रतिग्रहेऽपि न भवतीति ।

**अथास्या एतदेव तुरीयं दर्शतं पदं परोरजाः, य एष तपति । नैव केन चनाप्यम्, कुत उ एतावत् प्रतिगृह्णीयात् ॥ ६ ॥**

**तस्या उपस्थानं गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि; न हि पद्यसे । नमस्ते तुरीयाय दर्शताय पदाय परोजसे ।**

---

**अथास्या एतदेव तुरीयं — कुत उ एतावत् प्रतिगृह्णीयात् ।** दर्शतस्य तुरीयपादस्य यत् फलम्, तत् **केन चन** केनापि **नाप्यं** न प्राप्तुं योग्यम् । कुत इत्यत्राह **कुत उ एतावत् प्रतिगृह्णीयात् ।** एतदनुरूपं फलं कुतः स्यादित्यर्थः । तस्मात् तस्याऽऽनन्त(न्त्य)मेव फलम्, नान्यदित्यर्थः ॥ ६ ॥

**तस्या उपस्थानम् । तस्याः** गायत्र्याः **उपस्थानं** उपस्थानमन्त्र उच्यते इत्यर्थः । मन्त्रमेवाह **गायत्र्यस्येकपदी — न हि पद्यसे ।** हे गायत्रि! त्वं भूर्भुवस्सुवर्लक्षणेन एकेन पादेन एकपद्यसि । त्रयीलक्षणेन द्वितीयेन पादेन द्विपदी । प्राणादिना[1] तृतीयेन पादेन त्रिपदी । तुरीयेण पदेन परोरजसा चतुष्पद्यसि । **अपदसी**त्येतदुपपादयति **न हि पद्यसे । पद्यसे** गम्यसे = ज्ञायसे इत्यर्थः । अपरिच्छिन्नमहिमत्वात् परिच्छिन्नतया ज्ञातुं न शक्यस इत्यर्थः ।

तुरीयं पादं नमस्यति **नमस्ते तुरीयाय दर्शताय पदाय ।** स्पष्टम् ।

1. सर्वप्राणिजातरूपेण. क.

---

**एकपदी**त्यादेरेवमप्यर्थः स्यात्—चतुर्विंशत्यक्षरा गायत्री । ततोऽधिकाक्षराणि अनुष्टुबादीनि छन्दांसि । गायत्र्यपेक्षया न्यूनाक्षराः मन्त्रास्तु श्रीमदष्टाक्षरमन्त्रवत् एकपादरूपा वा, पादद्वयादिरूपा वा, तेषामपि गायत्रीच्छन्दस्कत्वेनैव परिगणना । ज्योतिरधिकरणभाष्योक्तरीत्या प्रतिपादं षडक्षरा चतुष्पदा च गायत्र्यस्ति । अत उच्यते **एकपदी द्विपदी त्रिपदी चतुष्पदी**ति । पादन्यूनाक्षरमन्त्राणामपि गायत्रीछन्दोऽन्तर्भावमभिप्रेत्य **अपदसी**त्युच्यते । एवमर्थाङ्गीकारे **न हि पैद्यसे** इत्यस्य पादेन न मीयसे इत्यर्थो वाच्यः । अयञ्चार्थः अस्य गायत्रीसामान्योप-(सामान्यतो गायत्रीदेवतोप) स्थानरूपत्वे स्यात्; न तु सावित्र्युपस्थानमात्रत्वे इति अन्यथैव व्याख्यातम् ।

**'असावदो मा प्राप'दिति, यं द्विष्यात्, 'असावस्मै कामो मा समर्द्धी'ति[1] वा, — न हैवास्मै स काम ऋध्यते, यस्मा एवमुपतिष्ठते — ; 'अहमदः प्राप'मिति वा ॥ ७ ॥**

**एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वतराश्विमुवाच, यन्नु हो [2] त(य)द्गायत्रीविद्ब्रूथाः ; अथ कथँ हस्तीभूतो वहसीति । मुखँ ह्यस्याः सम्राण्ण विदाञ्चकारेति होवाच । तस्या अग्निरेव मुखम् । यदिह वा अपि बह्विवाग्नावभ्यादधाति, सर्वमेव तत् संदहति । एवँ हैवैवंवित्**

1. समृद्धीति. शां. मा. 2. तत्. शां. मां.

---

**असावदो मा — प्रापमिति वा ।** उक्तगायत्रीवित् यं द्विष्यात्, **असौ** शत्रुः **अदः** इदं वाञ्छितं **मा प्रापत्** मैव प्राप्नोतु इति वा, **असौ** कामः **अस्मै** शत्रवे **मा समर्द्धि** समृद्धं (**समृद्धी** समृद्धिः) मा भूत् — व्रीह्यादित्वादिनिः — इति वा, **यस्मै** शत्रवे — यं शत्रुमुद्दिश्येति यावत् — **एवम्** उक्तमन्त्राभ्यां गायत्रीमुपतिष्ठते, तस्मै स कामो **न ऋध्यते** न वृद्धिमाप्नोति। **अहमदः** श्रेयः **प्रापं** प्राप्तवानस्मीति वा मन्त्रेण य उपतिष्ठते गायत्रीम्, तस्य तत् प्राप्नोतीत्यर्थः । एवञ्च एषां त्रयाणां मन्त्राणां विकल्पेन प्रयोग इति द्रष्टव्यम् ॥ ७ ॥

**एतद्ध वै — उवाच।** **एतत्** गायत्रीविज्ञानं प्रस्तुत्य वैदेहो जनकः नाम्ना बुडिलम् अश्वतराश्वस्यापत्यम**आश्वतराश्विमुवा**चेत्यर्थः । उक्तिमेवाह **यन्नु हो — इति।** **हो** अहो तत्, यद् गायत्रीविदस्मीत्य**ब्रूथाः** उक्तवानसि । तस्य वचसोऽननुरूपमिदमित्यर्थः । [1]तत् किमित्यत्राह **अथ कथं हस्तीभूतो वहसीति ।** हस्तीव प्रतिग्रहादिजन्यं पापं वहसि । अथाप्यहं गायत्रीविदिति ब्रूषे । नैतदनुरूपमित्यर्थः । स आह **मुखं ह्यस्याः सम्राण्ण विदाञ्चकारेति होवाच।** हे सम्राट्! अहं गायत्रीं जाने ; अपि तु तस्याः मुखं न ज्ञातवानस्मि । अतः पापं वहामीत्युक्तवान् । इतर आह **तस्या अग्निरेव मुखम् । यदिह — संभवति ।** तस्याः गायत्र्याः अग्निर्मुखम् । यदि बह्वपीन्धनमग्नौ **अभ्यादधाति**

1. तत् कुतः ख. ग.

---

प्राप्नोतीति। भवतीत्यर्थः। अग्निरेव मुखमिति मुखशब्देन तुरीयदर्शपदविवक्षा स्यात्?

**यद्यपि बह्विव पापं कुरुते, सर्वमेव तत् संसाय[1] शुद्धः पूतोऽजरोऽमृतः संभवति ॥ ८ ॥**

इति सप्तमाध्याये चतुर्दशं ब्राह्मणम् ॥

**७—१५.**

**हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।**
**तत् त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥**

**पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह तेजः ।**

1. सप्साय. शां. मां.

---

प्रक्षिपति, तत् सर्वमग्निर्दहति — एवमेवंविद् बह्वपि पापं कुरुते चेत्, तत्कृतं पापं सर्वं **संसाय** — 'षो अन्तकर्मणि ' — दग्ध्वेत्यर्थः — **पूतः** ब्रह्मविद्याप्रतिबन्धकपापरहितः **शुद्धः** संपन्नब्रह्मविद्यः **अजरोऽमृतः संभवति** । जरामरणशून्यो भवतीत्यर्थः ॥ ८ ॥ ७–१४.

अर्चिराद्यातिवाहिकानुप्रविष्टादित्यप्रार्थनामन्त्रः । **हिरण्मयेन — मुखम्** । **सत्यस्य** ब्रह्मणो **मुखं** द्वारम् — ब्रह्मगमनमार्ग इति यावत् — **हिरण्मयेन पात्रेण** तेजिष्ठेन ते (तेजो) मण्डलेन **अपिहितम्** आवृतम् । **तत्** द्वारं त्वं पूषन्! **अपावृणु** अनावृतं कुरु । किमर्थमित्यत्राह **सत्यधर्माय दृष्टये** । सत्यं ब्रह्म **धर्मः** आश्रयः = साधनं यस्य तस्मै ब्रह्मैकनिष्ठाय ब्रह्मदर्शनार्थिने मह्यं **दृष्टये** ब्रह्मदर्शनायेत्यर्थः ।

**पूषन्नेकर्षे यम सूर्य प्राजापत्य** । हे पूषन् । एकश्चासौ ऋषिश्च **एकर्षिः** । ऋषिः द्रष्टा । सवितुर्जगदेकचक्षुष्ट्वादिति भावः । **यम** यमयितः । **सूर्य** । सुष्ठु ईरयति रश्मीनिति सूर्यः । **प्राजापत्य** प्रजापतेः पुत्र! । **व्यूह रश्मीन् समूह तेजः** । तावकान् रश्मीन् **व्यूह** अपगमय । तेजः **समूह**[1]

1. तेजसमूहं. क,

---

**सत्यधर्मायेत्यत्र** बहुव्रीहिस्वीकारे, 'धर्मादनिच् केवलात्' इति सूत्रेण सत्यधर्मणे इति रूपेण भाव्यमिति चेत्—सत्यम् । छान्दसत्वेन शाङ्कर इव नेयम् । एवं संभावितत्वमात्रेणार्थान्तरस्यात्र

**यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि ॥**

**वायुरनिलममृत ( लं मृत(?) )मथेदं भस्मान्तँ शरीरम् ।**

**ओं३ क्रतो स्मर कृतँ स्मर क्रतो स्मर कृतँ स्मर ॥**

**अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।**

---

संक्षिप । किमर्थमित्यत्राह **यत्ते रूपं कल्याणतमं तत्ते पश्यामि** । तेजसां संक्षेपाभावे तव रूपं दुर्दर्शमिति भावः । **योऽसावसौ पुरुषस्सोऽहमस्मि ।** आत्मा यादृग्रूपः, तादृग्रूपोऽहमस्मि ; तादृग्रूपतया वेद्मि । आत्मतत्त्वविदस्मीत्यर्थः ।

**वायुरनिलं(?)मृतमथेदं भस्मान्तं शरीरम् ।** अर्चिरादिना गतस्य मे प्राणवायुर्वायौ लीयताम । मृतञ्चेदं शरीरं भस्मान्तञ्च भवतु । ततश्च देहेन्द्रियादिष्वात्माभिमानी नाहमस्मि । तद्विलक्षणात्मज्ञानवानित्यर्थः । **ओं क्रतो स्मर कृतं स्मर ।** **ओ**मिति प्रणवप्रतिपाद्यत्वादादित्यस्य संबोधनम् । **क्रतोः**— 'अधीगर्थदयेशां कर्मणी' ति कर्मणि षष्ठी — क्रतुम् उपास्तिमनुष्ठितां स्मर । तदङ्गतया **कृतं** कर्मापि स्मर । अहं देहविलक्षणात्मज्ञानी कर्माङ्गकब्रह्मविद्यानिष्ठश्च । अतः त्वत्स्वरूपं प्रदर्शय, मुक्तिमार्गञ्च प्रयच्छेत्यर्थः ।

अर्चिरादिप्रथमपर्वाग्निप्रार्थनामन्त्रः । **अग्ने नय — विद्वान् ।** हे अग्ने ! **सुपथा** शोभनेनार्चिरादिमार्गेण **राये** ऐश्वर्याय स्वाराज्याय — मोक्षायेति यावत् — **अस्मान् नय** प्रापय । हे **देव** द्योतमान ! **विश्वानि वयुनानि** सर्वाणि ज्ञानानि

---

वर्णनेऽपि वस्तुत एषां **हिरण्मयेने**त्यादीनां चतुर्णां मन्त्राणां पूर्व**मीशावास्यानुवाक** एव पठितत्वं स्मरद्भिः तत्र **आचार्यचरण**वर्णित एवार्थो ऽनुसंधेयः । **आचार्यभाष्यतात्पर्यादौ** चास्माभिः तदर्थसामञ्जस्यं दर्शितमेव । न च सूर्यमण्डलरूपार्थे परमिहोक्ते हिरण्मयत्वं पात्रत्वञ्च यथाश्रुतमस्ति । उपरि वायुरनिलमृतमिति पाठश्च न दृश्यते । माध्यन्दिने 'वायुरनिलमृत' मित्यस्ति । तत्र अनिलम् ऋतमिति पदच्छेदः स्यात् । इह तु वायुरनिलममृतमित्येव पठ्यते; न तु मृतमिति । क्रतो इति च संबुद्धिः, न तु क्रतोरिति षष्ठ्यन्तम् । एवंरीत्या बहुत्र विप्रकृष्टत्वमस्ति । अतो मन्त्रचयष्टयव्याख्यानं भ्रष्टम्; अन्यत् प्रक्षिप्तमिति भाव्यते ।

**युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ १ ॥**

इति सप्तमाध्याये पञ्चदशं ब्राह्मणम् ॥

इति बृहदारण्यके सप्तमाध्यायः ॥

८—१.

**यो ह वै ज्येष्ठश्च श्रेष्ठश्च वेद, ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति। प्राणो वै ज्येष्ठश्च श्रेष्ठश्च। ज्येष्ठश्च श्रेष्ठश्च स्वानां भवत्यपिच येषां बुभूषति, य एवं वेद ॥ १ ॥**

**यो ह वै वसिष्ठां वेद, वसिष्ठः स्वानां भवति। वाग् वै वसिष्ठा। वसिष्ठः स्वानां भवत्यपि च येषां बुभूषति, य एवं वेद ॥ २ ॥**

---

विद्वान् भवसि। अतो मदीयमध्यात्मज्ञानं त्वं जानासीत्यर्थः। **युयोध्यस्मज्जुहुराणमेनः।** **युयोधि** अपनय। **अस्मत्** अस्मत्तः। **जुहुराणं** कुटिलम्। 'हुर्च्छा कौटिल्ये' इत्यस्मात् कानचि रूपम्। **एनः** पापं युयोधीत्यन्वयः। **भूयिष्ठां** भूयसीं नमउक्तिं ते करवामेत्यर्थः ॥ १ ॥ ७-१५.

इति बृहदारणकप्रकाशिकायां सप्तमोध्यायः ॥

प्राणविषयकविद्या प्रस्तूयते **यो ह वै ज्येष्ठश्च श्रेष्ठश्च वेद ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति — य एवं वेद**। प्राणो हीन्द्रियाणां मध्ये ज्येष्ठः। प्राणव्यापारानन्तरभावित्वादिन्द्रियान्तरप्रवृत्तेरिति भावः। श्रेष्ठश्च; वक्ष्यमाणरीत्येति भावः। एवं तं प्राणमुपासीनो यः, स **स्वानां** ज्ञातीनां ज्येष्ठः श्रेष्ठश्च भवति। इतरेषाञ्च येषां ज्येष्ठः श्रेष्ठो **बुभूषति** भवितुमिच्छति, तेषामपि ज्येष्ठः श्रेष्ठश्च भवतीत्यर्थः ॥ १ ॥

**यो ह वै वसिष्ठां वेद वसिष्ठः स्वानां — वेद**। अतिशयेन वसुमत्त्वं वसिष्ठत्वम्। **वाग् वै वसिष्ठा**। वाग्मिन एव हि वसुमत्ता भवति। अतो वाचो वसिष्ठत्वं सिद्धम्। शिष्टं पूर्ववत ॥ २ ॥

---

ज्येष्ठश्रेष्ठप्राणविद्याविषये वक्तव्यं छान्दोग्यपरिष्कार एवोक्तम्।

योह वै प्रतिष्ठां वेद, प्रतितिष्ठति समे, प्रतितिष्ठति दुर्गे। चक्षुर्वै प्रतिष्ठा। चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति। प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे, य एवं वेद ॥ ३ ॥

यो ह वै संपदं वेद, सँ हास्मै पद्यते यं कामं कामयते। श्रोत्रं वै संपत्। श्रोत्रे हीमे सर्वे वेदा अभिसंपन्नाः। सँ हास्मै पद्यते यं कामं कामयते, य एवं वेद ॥ ४ ॥

यो ह वा आयतनं वेद, आयतनँ स्वानां भवति। आयतनं जनानाम्। मनो वा आयतनम्। आयतनँ स्वानां भवत्यायतनं जनानाम्, य एवं वेद ॥ ५ ॥

यो ह वै प्रजातिं वेद, प्रजायते ह प्रजया पशुभिः। रेतो वै प्रजातिः। प्रजायते ह प्रजया पशुभिर्य एवं वेद ॥ ६ ॥

---

योह वै प्रतिष्ठां वेद प्रतितिष्ठति -- वेद। चक्षुर्वै प्रतिष्ठा। चक्षुषः प्रतिष्ठात्वं नाम समविषमदेशप्रदर्शनद्वारा पुरुषप्रतिष्ठाहेतुत्वम्। शिष्टं पूर्ववत् ॥ ३ ॥

यो ह वै संपदं वेद सं हास्मै पद्यते — वेद। सं हास्मै पद्यते। अस्मै संपद्यते। श्रोत्रे सत्येव हि सर्वे वेदाः संपन्ना भवन्ति। तस्मात् तत् संपत्त्वगुणकं श्रोत्रं यो वेद, तस्य काम्यमानः कामः सम्पद्यत इत्यर्थः ॥ ४ ॥

यो ह वा आयतनं वेद आयतनं स्वानां — वेद। इन्द्रियाणां मनोधीन[प्र]वृत्तिकत्वादिन्द्रियान्तरापेक्षया मनस आयतनत्वम्। अत एव जनानामप्यायतनत्वम्। शिष्टं स्पष्टम् ॥ ५ ॥

यो ह वै प्रजातिं वेद प्रजायते ह प्रजया — वेद। रेतो वै प्रजातिः। रेतश्शब्देन प्रजननेन्द्रियं लक्ष्यते। तेन हि पुत्रपौत्रादिमत्तया प्रकृष्टतया जायते पुरुष इति तत् प्रजातिः[1]। शिष्टं स्पष्टम् ॥ ६ ॥

1. अत्र प्रजातिशब्दस्थाने प्रजापतिशब्दपाठो माध्यन्दिनादिविरुद्धः, अत्रापि (१४) कण्डिकाविरुपश्च।

ते हेमे प्राणा अहंश्रेयसे विवदमाना ब्रह्म जग्मुः। तद्धोचुः को नो वसिष्ठ इति। तद्धोवाच यस्मिन् व उत्क्रान्त इदँ शरीरं पापीयो मन्यते, स वो वसिष्ठ इति ॥ ७ ॥

वाग्घोच्चक्राम। सा संवत्सरं प्रोष्यागत्योवाच, 'कथमशकत मदृते जीवितुमिति। ते होचुर्यथा कला अवदन्तो वाचा, प्राणन्तः प्राणेन, पश्यन्तश्चक्षुषा, शृण्वन्तश्श्रोत्रेण, विद्वाँसो मनसा, प्रजायमाना रेतसा — एवमजीविष्मेति। प्रविवेश ह वाक् ॥ ८ ॥

चक्षुर्होच्चक्राम। तत् संवत्सरं प्रोष्यागत्योवाच, कथमशकत मदृते जीवितुमिति। ते होचुर्यथा अन्धा अपश्यन्तश्चक्षुषा, प्राणन्तः प्राणेन, वदन्तो वाचा, शृण्वन्तश्श्रोत्रेण, विद्वाँसो मनसा, प्रजायमाना रेतसा — एवमजीविष्मेति। प्रविवेश ह चक्षुः ॥ ९ ॥

---

**ते हेमे प्राणा अहंश्रेयसे विवदमानाः — वसिष्ठ इति। ते हेमे** वागादयः प्राणाः अहमर्थस्यात्मनः श्रेयसे विवदमानाः **ब्रह्म** चतुर्मुखम्—नपुंसकत्वं छान्दसम्—जग्मुः। तं गत्वा **नः** अस्माकं मध्ये कः **वसिष्ठः** श्रेयानिति **तत्** ब्रह्म प्रति ऊचुः। **तच्च** ब्रह्म[1] प्रत्युवाच। किमिति। **वः** युष्माकं मध्ये यस्मिन्नुत्क्रान्ते इदं शरीरं **पापीयः** पापिष्ठतरमिव जनो मन्यते, स वः श्रेष्ठ इति प्रत्युवाचेत्यर्थः ॥ ७ ॥

**वाग्घोच्चक्राम सा संवत्सरं — वाक्।** तत्र प्रथमतः परीक्षार्थं वाक् उत्क्रान्ता सती संवत्सरं प्रवासं कृत्वा पुनरागत्य, 'हे प्राणाः! **मदृते** मां विना जीवितुं **कथमशकत** कथं शक्ता' इत्युवाच। ते ह इतरे प्राणाः प्रत्यूचुः, 'यथा **कलाः**[2] मूकाः वाचा अवदन्तोऽपि सन्तः प्राणेन जीवन्तः, चक्षुरादिना दर्शनादिकं कुर्वन्तः आसते, एवं वयमपि **अजीविष्म** जीवितवन्त' इति होचुः। ततः प्राणेषु स्वस्य श्रेष्ठत्वं नास्तीति मत्वा शरीरे वागिन्द्रियं प्रविवेशेत्यर्थः। एवमुत्तरत्रापि द्रष्टव्यम् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

1. ब्रह्मा. क. 2. अकलाः. ग. कडा इति माध्यन्दिने।

---

**अहमर्थस्यात्मन** इति। स्वस्येत्यर्थः। अहं श्रेष्ठोहं श्रेष्ठ इति स्पर्धाकारसूचनाय अहम्पदप्रयोगः। **पापिष्ठतर**मिति छान्दोग्यस्थशब्दानुवादः। **कडा** इति माध्यन्दिने पाठात् स मूकवाची शब्दः स्यात्। यद्वा डलयोरभेदात् तत्र डकारयोगो बहुलम्। अतः कल अव्यक्ते शब्दे इति धातोः कला अव्यक्तवाच इति अर्थः। छान्दोग्येऽपि द्रष्टव्यम्।

श्रोत्रँ होच्चक्राम । तत् संवत्सरं प्रोष्यागत्योवाच, कथमशकत मदृते जीवितुमिति । ते होचुर्यथा बधिरा अशृण्वन्तश्श्रोत्रेण, प्राणन्तः प्राणेन, वदन्तो वाचा, पश्यन्तश्चक्षुषा, विद्वाँसो मनसा, प्रजायमाना रेतसा — एवमजीविष्मेति । प्रविवेश ह श्रोत्रम् ॥ १० ॥

मनो होच्चक्राम । तत् संवत्सरं प्रोष्यागत्योवाच, कथमशकत मदृते जीवितुमिति । ते होचुर्यथा मुग्धा अविद्वाँसो मनसा, प्राणन्तः प्राणेन, वदन्तो वाचा, पश्यन्तश्चक्षुषा शृण्वन्तश्श्रोत्रेण, प्रजायमाना रेतसा — एवमजीविष्मेति । प्रविवेश ह मनः ॥ ११ ॥

रेतो होच्चक्राम । तत् संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति । ते होचुर्यथा क्लीबा अप्रजायमाना रेतसा, प्राणन्तः प्राणेन, वदन्तो वाचा, पश्यन्तश्चक्षुषा, शृण्वन्तश्श्रोत्रेण, विद्वाँसो मनसा — एवमजीविष्मेति । प्रविवेश ह रेतः ॥ १२ ॥

अथ ह प्राण उत्क्रमिष्यन्, यथा महासुहयः सैन्धवः[1] पड्वीशशङ्कून संवृहेत्, एवँ हैवेमान् प्राणान् संवबर्ह । ते होचुः मा भगव उत्क्रमीर्न वै शक्ष्यामस्त्वदृते जीवितुमिति । तस्यो मे बलिं कुरुतेति । तथेति ॥ १३ ॥

1. पड्वीश. मा.

---

**अथ ह प्राण उत्क्रमिष्यन् यथा महासुहयस्सैन्धवः पड्वीशशङ्कून् — संवबर्ह** । अथ मुख्यप्राणः उत्क्रमिष्यन् सन् यथा लोके महान् **सुहयः** शोभनो हयः **सैन्धवः** सिन्धुदेशप्रभवः परीक्षणायाश्वारोहारूढः **पड्वीशशङ्कून्** — पड्वीशाश्च ते शङ्कवश्च — पादबन्धनशङ्कून् **संवृहेत्** उत्खनेत्, एवमेवेमान् सर्वान् प्राणान् वागादीन् **संवबर्ह** उच्चखान, उत्खातवान् । **ते होचुर्मा भगवः — जीवितुमिति** । ते ह प्राणा आगत्य, हे **भगवन्** पूजार्ह ! मुख्यप्राण ! त्वं **मोत्क्रमीः** उत्क्रमणं मा कार्षीः । त्वां विना वयं जीवितुं न शक्ष्याम इति होचुः । स प्रत्युवाच **तस्यो मे बलिं कुरुतेति** । तस्य मे श्रेष्ठस्य यूयं **बलिं कुरुत** करं प्रयच्छतेति । उशब्दोऽवधारणे । **तथेति** । तथेत्येव तेऽपि प्रत्यूचुरित्यर्थः ॥ १३ ॥

**सा ह वागुवाच, यद्वा अहं वसिष्ठाऽस्मि, त्वं तद्वसिष्ठोऽसीति । यद्वा अहं प्रतिष्ठाऽस्मि, त्वं तत् प्रतिष्ठोऽसीति चक्षुः। यद्वा अहँ संपदस्मि, त्वं तत् संपदसीति श्रोत्रम् । यद्वा अहमायतनमस्मि, त्वं तदायतन-मसीति मनः । यद्वा अहं प्रजातिरस्मि, त्वं तत् प्रजातिरसीति रेतः ।**

**तस्यो मे किमन्नं किं[1] वास इति। यदिदं किञ्चा श्वभ्य आ क्रिमिभ्य आ कीटपतङ्गेभ्यः, तत्तेऽन्नम्; आपो वास इति ।**

**न ह वा अस्यानन्नं जग्धं भवति, नानन्नं [2]प्रतिगृहीतम्, य**

1. किं मे वासः क. 2. परिगृहीतम्. मा.

---

**सा ह वागुवाच यद्वा अहं वसिष्ठाऽस्मि — प्रजातिरसीति रेतः ।** यद्वै येनैव गुणेनाहं वसिष्ठाऽस्मि, तत् तेन गुणेन त्वमेव वसिष्ठोऽसि; मम वसिष्ठत्वं त्वदधीनमिति वागुवाचेत्यर्थः । वैशब्दोऽवधारणे । एवमुत्तरत्रापि । **तस्यो मे किमन्न किं [मे] वासः ।** तस्य एतादृशगुणविशिष्टस्य मे अन्नं किम्, **वासः** वस्त्रं किमिति मुख्यः प्राण इतरान् पप्रच्छेत्यर्थः । ते प्रत्यूचुः **यदिदं किञ्चा श्वभ्य आ क्रिमिभ्य आ कीटपतङ्गेभ्यस्तत्तेऽन्नमापो वास इति ।** श्वक्रिम्यादि-पर्यन्तप्राणिजातस्य यदन्नम्, तत् सर्वं प्राणस्य ते अन्नम् । आपो वासः । सर्व-प्राणिजातान्ने प्राणान्नत्वचिन्तनं कर्तव्यम्; अप्सु वासस्त्वचिन्तनं कर्तव्यमित्यर्थः । न तु, 'सर्वभक्षणं कर्तव्यम्', 'अद्भिराच्छादनं कार्य' मिति वाऽर्थः, तस्यासंभवादिति द्रष्टव्यम् ।

सर्वप्राणिजातान्ने प्राणान्नत्वचिन्तनं स्तौति **न ह वा अस्यानन्नं — वेद ।** य एवमेतत् **अनस्य** प्राणस्यान्नं सर्वं वेद, **अस्य** सर्वप्राण्यन्ने प्राणान्नत्व-चिन्तनं कुर्वतः **अनन्नं न जग्धं भवति** नाभक्ष्यं भक्षितं भवति । अभक्ष्य-भक्षणे न दोष इत्यर्थः । **अनन्नम्** अभक्ष्यं गजाश्वादिकं न प्रतिगृहीतं भवति । गजाश्वप्रतिग्रहादिना न दोष इति यावत् । "सर्वान्नानुमतिश्च प्राणात्यये तद्दर्श-नात्" इति सर्वान्नानुमतेः प्राणात्ययविषयत्वसमर्थनात् अभक्ष्यभक्षणादौ दोषाभाव-

**एवमेतदनस्यान्नं वेद । तद्विद्वाँसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाचामन्ति, एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते[1] ॥ १४ ॥**

इति अष्टमाध्याये प्रथमं ब्राह्मणम् ॥

८—२.

**श्वेतकेतुर्हवा आरुणेयः प(पा)ञ्चालानां परिषदमाजगाम । स आजगाम जैवलिं प्रवाहणं परिचारयमाणम् । तमुदीक्ष्याभ्युवाद, कुमारा३ इति ।**

1. एतदुपरि, 'तस्मादेवं विद्वानशिष्यन् आचामेत् अशित्वा चाचामेत्' इति मा.

---

प्रतिपादनमिदमापद्विषयमेव द्रष्टव्यम् । **तद्विद्वांसश्श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाचामन्ति — मन्यन्ते** । यस्मादपां वासस्त्वमनुसंधातव्यम्, **तत्** तस्माद्धेतोः श्रोत्रियाः विद्वांसः आचमनीयाभिरद्भिर्वासोभि**रेतमनं** प्राणमनग्नं कुर्वन्तो मन्य [ [1]न्ते । **एवमेतदनं** एतं प्राणमनग्नं कुर्वन्तो मन्य ] मानाः अशनात्पूर्वं पश्चाच्चाचामन्तीत्यर्थः । **अनग्नं कुर्वन्तो मन्यन्त** इत्युक्त्या वासस्त्वचिन्तनमर्थसिद्धम्; वासःकार्यत्वादनग्नताया इति द्रष्टव्यम् । **भाष्योदाहृतम्**, 'तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेत्' इत्यादिवाक्यं माध्यन्दिनशाखागतं द्रष्टव्यम् ॥ १४ ॥ ८-१.

प्रकृतिविविक्तजीवयाथात्म्यविषयां पञ्चाग्निविद्यां संसृतिवैराग्याय प्रस्तौति **श्वेतकेतु र्ह वा आरुणेयः [2]पञ्चालानां परिषदमाजगाम** । नाम्ना श्वेतकेतुः आरुणेरपत्य**मारुणेयः**। **स** पञ्चालानां देशानां **परिषदं** समाजं स्ववैदुष्यप्रकटनाय आजगामेत्यर्थः। **स आजगाम जैवलिं प्रवाहणं परिचारयमाणम्**। जीवलस्यापत्यं **जैवलिः** । तं प्रवाहणनामानं स्वभृत्यैरात्मनः परिचारं कारयन्तं राजानमागच्छत् । **तमुदीक्ष्याभ्युवाद कुमारा३ इति**। स राजा तं श्वेतकेतुमुदीक्ष्य कुमारा३ इति

1. इदमधिकं क. कोशे । 2. पाञ्चालानां. पा०.

---

पञ्चाग्निविद्यायामपि वक्तव्यं सर्वं छान्दोग्यपरिष्कार एव द्रष्टव्यम् ।

**स भो३ इति प्रतिशुश्राव। अनुशिष्टो न्वसि पित्रेति। ओमिति होवाच॥१**

**(१) वेत्थ यथेमाः प्रजाः प्रयत्यो विप्रतिपद्यन्ता ३ इति। नेति होवाच।**

**(२) वेत्थो यथेमं लोकं पुनरापद्यन्ता ३ इति। नेति होवाच।**

**(३) वेत्थो यथाऽसौ लोक एवं बहुभिः पुनःपुनः प्रयद्भिर्न संपूर्यता ३ इति। नेति होवाच।**

---

आमन्त्रितवान्। आमन्त्रणे प्लुतिः। **स भो३ इति प्रतिशुश्राव**। **सः** श्वेतकेतुः भो इति **प्रतिशुश्राव** प्रत्युवाच। **अनुशिष्टो न्वसि पित्रेति**। अथ राजा, 'पित्रा त्वं विद्यामनुशिष्टोऽसी' ति श्वेतकेतुं पप्रच्छ। **ओमिति होवाच**। **ओम्** अनुशिष्टोऽस्मीति इतर उवाचेत्यर्थः॥ १॥

अथ तं राजा पृच्छति **वेत्थ यथेमाः प्रजाः प्रयत्यो विप्रतिपद्यन्ता३ इति**। **प्रयत्यः** म्रियमाणाः इमाः प्रजाः **यथा** येन प्रकारेण **विप्रतिपद्यन्ते** विशिष्टदेशं प्रतिपद्यन्त इत्यर्थः। प्रश्ने प्लुतिः। इति इममर्थं **वेत्थ** जानासि किमित्यर्थः। एवं गन्तव्यदेशप्रश्नः। एवं पृष्टः कुमारः, **नेति होवाच** न वेद्मीत्युवाचेत्यर्थः।

अथ पुनः पृच्छति **वेत्थो यथेमं लोकं पुनरापद्यन्ता इति**। उकारः प्रश्ने। इमं लोकं **यथा** येन प्रकारेण पुनरागच्छन्तीति वेत्थेत्यर्थः। **नेति होवाच**। इतर इति शेषः।

पुनः पृच्छति **वेत्थो यथाऽसौ लोक एवं बहुभिः पुनःपुनः प्रयद्भिर्न संपूर्यता३ इति**। **असौ** स्वर्गो लोकः अनवरतं **प्रयद्भिः** गच्छद्भिः पुरुषैः कुतो न संपूर्यत इति वेत्थ किमित्यर्थः। **नेति होवाच**। पूर्ववदर्थः।

---

**प्रतिशुश्रावेति**। मोचनप्रत्यनीकं प्रतिमोचनं यथा धारणम्, तथा श्रवणप्रत्यनीकं प्रतिश्रवणं कथनरूपम्। **वेत्थ यथेति**। प्रश्नवाक्येष्वेषु यच्छब्दप्रतिसंबन्धी तच्छब्दः कर्मवाचकोऽध्याहार्यः। **यथा विप्रतिपद्यन्त** इति विशिष्टप्राप्तिप्रकारप्रश्नस्य प्राप्तव्यदेशप्रकारप्रश्न एव तात्पर्यमिति, 'यदितोऽधि प्रजाः प्रयन्ती' ति छान्दोग्य प्रश्नसमानार्थता।

**(४) वेत्थो यतिथ्यामाहुत्याँ हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्ती ३ इति । नेति हैवोवाच ।**

**(५) वेत्थो देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा, यत् कृत्वा देवयानं वा पन्थानं प्रतिपद्यन्ते पितृयाणं वा ।**

---

पुनः पृच्छति **वेत्थो यतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्तीति** । यावतां पूरणी **यतिथी**[1] । 'तस्य पूरणे डट्' इति डटि, 'वतोरिथुक्' इति इथुगागमः । यावत्संख्याकायामाहुत्यां हुतायामापः— पुरुष इति वाग् यासां ताः **पुरुषवाचः** पुरुषशब्दवाच्याः भूत्वा — पुरुषाकार-परिणता भूत्वा **समुत्थाय वदन्ति** अभिलपनं कुर्वन्त आसते, तद्वेत्थ किमित्यर्थः । नेति **हैवोवाच** । पूर्ववत् ।

पुनः पृच्छति **वेत्थो देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा** । देवयानस्य वा पितृयाणस्य वा पथः प्रतिपदं किं वेत्थ । प्रतिपद्यतेऽनेनेति **प्रतिपत्** प्रथमं पर्व । तदेव स्पष्टयति **यत् कृत्वा देवयानं वा पन्थानं प्रतिपद्यन्ते पितृयाणं वा** । **यत् कृत्वा** यदुपक्रम्येत्यर्थः । शिष्टं स्पष्टम् । देवयानपितृ-याणव्यावर्तकाकारप्रश्नोऽयमिति द्रष्टव्यम् । **भाष्ये** छान्दोग्यपञ्चाग्निविद्याप्रश्नानुक्रमेण,

1. यावतिथी मूलेऽत्र च. ख. ग. यतिथी । तस्य पूरणे इतीतियुगागमः क.

---

**यतिथ्या**मिति पाठ एव प्रसिद्धः । तदापि यावतिथ्यामिति पाठवदेवार्थो ग्राह्यः । **पुरुषवाचो भवन्ती**त्येतावत एव पर्याप्तत्वे, **भूत्वा समुत्थाय वदन्ती**त्यधिककथनं, 'पुरुषस्य वाग् रसः' इत्युक्तरीत्या पुरुषभावस्य विज्ञानार्थवाग्लाभः परमं फलमिति सूचनाय । यथोपरि, 'योषाग्नौ जायन्ते । ते लोकान् प्रत्युत्थायिनः' इति कथनम् । **प्रतिपद**मित्यस्य प्रथमार्थकत्वप्रसिद्धयति-शयात् प्रथमं पर्वेत्यर्थ उक्तः । न तु प्रथमपर्वमात्रविषयकः प्रश्नः । किन्तु मार्गद्वयगतसर्वभेद-काकारविषयकः । उपरि प्रथमपर्ववैलक्षण्यमात्रस्योत्तरसंदर्भे कथनाभावात् । अत्र, **यत् कृत्वा** इति प्रयोगस्वारस्यात् यत् अनुष्ठाय तत्तन्मार्गं प्रतिपद्यन्ते, स उपायः **प्रतिपद**मित्यनेन विवक्षितः स्यात्, यथाशाङ्करम् । परन्तु **यदि**ति नपुंसकप्रयोगात् प्रतिपद्यते अनेनेति **प्रतिपद**मिति अकारान्तम् । एवञ्च देवयानपितृयाणयोर्व्यावर्तकाकारप्रश्ने मार्गप्रापकोपायवैलक्षण्यमप्यभिप्रेतमेव भवेदिह, छान्दोग्ये च ; श्रीभाष्येऽप्येवमभिप्रायवर्णनसंभवादिति ध्येयम् । ननु मार्गद्वये किं

**अपि हि न ऋषेर्वचः श्रुतम् ।**

**द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् ।**
**ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरञ्च ॥ इति ।**

---

"कर्मिणां गन्तव्यदेशं पुनरावृत्तिप्रकारं देवयानपितृयाणपथव्यावर्तने अमुष्य लोकस्याप्राप्तारं च वेत्थेति पृष्ट्वा, 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती' ति पप्रच्छे" ति भाषितत्वादिहापि तावन्मात्रपर्यवसानं युक्तम् । **अपि हि न ऋषेर्वचश्श्रुतम्** । अस्मिन् देवयानपितृयाणविषये **ऋषेः** मन्त्रकृतोऽपि वचः **नः** अस्माकं श्रुतमित्यर्थः । कोऽयं मन्त्र इत्यत्राह **द्वे सृती — मातरञ्च** । **द्वे सृती** गती **अशृणव**महं श्रुतवानस्मि । के ते सृती ? पितॄणां देवानाञ्च द्वे सृती **अहमशृणवम्** अश्रौषमित्यर्थः । गतिद्वयं केषां गन्तॄणामित्यत्राह **मर्त्यानाम्** । मनुष्याणां हि गतिद्वयम् । यद्वा देवपितृमनुष्याणां धूमाद्यर्चिरादिमार्गद्वयमश्रौषमित्यर्थः । **एजत्** गच्छत् प्राणिजातं **विश्वं** समस्तं **ताभ्यां** सृतिभ्यां समेति । किम् ? ब्रह्माण्डान्तर्गतं लोकजातं समेति ; यत् मातरं पितरं **चान्तरा** विना वर्तते, तच्च गच्छति = मातापितृशून्यं भगवल्लोकं च समेतीत्यर्थः । पितृयाणेन पथा अण्डान्तर्वर्तिलोकं समेति । उत्तरेण पथा भगवल्लोकं समेतीत्यर्थः ।

---

प्रमाणम्, यत्र प्रकारभेदो जिज्ञास्यत इत्यत्र प्रमाणं दर्शयितुमाह **अपि हि नः** इति । **देवानामुते**ति । पितॄणामुत देवानां सृती इत्यन्वयः । पितृयाणदेवयानरूपे इत्यर्थः । षष्ठ्यन्तत्रयस्यापि समानरूपेणान्वयविवक्षया पक्षान्तरमाह यद्वेति । देवाः पितरो मनुष्याः सर्वेऽपि अनेनैव मार्गद्वयेन ऐश्वर्यमपवर्गञ्च लभन्त इति भावः । ननु **एज**दिति गन्तृनिर्देशात् **इद**मिति तद्विशेष्यं **समेती**त्यत्र कर्तृ । कर्म तु **यदन्तरे**त्यादि । तेन मुक्तिस्थानमात्रोक्त्या पितृयाणप्राप्यांशाकीर्तनात् न्यूनतेति शङ्कायाम्, कर्म **ब्रह्माण्डान्तर्गतं लोकजात**मित्यध्याहृतम् । यद्वा पितृयाणेन सोमराजभावस्य वक्ष्यमाणत्वात् **यदन्तरा पितरं मातरञ्चे**ति सर्वपरम् । मातापितृभ्यां जन्म हि मनुष्यलोक एव ; न स्वर्गादिलोकेषु ; नापि भगवल्लोके इति पितृलोकप्राप्यमपि, 'यदन्तरा पितरं मातरञ्चे' त्यनेन सुवचम् । मातापित्रादिपञ्चाग्निप्रभवस्य मातापित्रनपेक्षनानाजन्मवचनमिहेति । **पितरं मातरञ्चे**त्यस्य, 'द्यौः पिता पृथिवी माते' त्येतदनुसृत्य द्यावापृथिवीमध्ये यदस्ति, तदित्यर्थवर्णनं न युक्तम् । देवयानस्य तदुपर्यपि स्थितेः । उपरिस्थितस्यैव तत्प्राप्यतायाः प्रामाणिकत्वात् । प्रसिद्धमातापितृपरित्यागस्यानुचितत्वाच्चेति ।

**नाहमत एकञ्चन वेदेति होवाच ॥ २ ॥**

**अथैनं वसत्योपमन्त्रयाञ्चक्रे । अनादृत्य वसतिं कुमारः प्रदुद्राव । स आजगाम पितरम्; तँ होवाच, इति वाव किल नो भवान् पुराऽनुशिष्टानवोचदिति । कथँ सुमेध इति । पञ्च मा प्रश्नान् राजन्यबन्धुरप्राक्षीत्; ततो नैकञ्चन वेदेति । कतमे त इति । इम इति ह प्रतीकान्युदाजहार ॥ ३ ॥**

---

एवं पृष्टं कुमार आह **नाहमत एकञ्चन वेद इति होवाच** । **अतः** एषां मध्ये न कञ्चिदपि प्रश्नं वेद्मीत्युक्तवानित्यर्थः ॥ २ ॥

**अथैनं वसत्योपमन्त्रयाञ्चक्रे** । **अथ** राजा **एनं** श्वेतकेतुं वसत्या हेतुना उपामन्त्रयत् । कुमारस्य वासं प्रार्थितवानित्यर्थः । अनादृत्य तु तां वसतिं कुमारः श्वेतकेतुः **प्रदुद्राव** राजसमीपाच्छीघ्रं निर्जगामेत्यर्थः । अथ स आजगाम पितरम् । आगत्य च तं होवाच । किमिति । **इति वाव किल नो भवान् पुराऽनुशिष्टानवोचत्** । **पुरा** समावर्तनकाले **नः** अस्मान् प्रति भवान् अनुशिष्टसर्वविद्यान् **इति वाव किलावोचत्** एवंरीत्या हि तदुक्तवानिति । एवं सामर्षेण पुत्रेणोक्तः पिता आह **कथं सुमेध इति** । नानुशिष्टोऽसीति शेषः । इतरोऽननुशासनं दर्शयति **पञ्च मा — नैकञ्चन वेदेति** । **राजन्यबन्धुः** राजन्याभासः । राजन्यानां बन्धुः **राजन्यबन्धुः** । स्वयमराजन्य एव सन् राजन्यानां बन्धुरिति [[1] व्यपदिशतीति प्रवाहणो] निन्द्यते । स पञ्च प्रश्नान् मां पृष्टवान् । तत्राहमेकमपि न वेद्मीति श्वेतकेतुराहेत्यर्थः । पिता पृच्छति **कतमे त इति** । प्रश्नाः कीदृशा इत्यर्थः । पुत्रस्तु **इम इति ह प्रतीकान्युदाजहार** । 'इमे' इत्येवं तत्प्रश्नानां **प्रतीकानि** एकदेशान् **उदाजहार** सूचितवानित्यर्थः ॥३॥

1. इदमधिकं क. कोशे ।

---

**इतिवाव किल न इति** । **इतिशब्दः** पूर्वं पित्रुक्तप्रकारानुवादार्थः । **एवं रीत्येति** । राजन्यबन्धुकृतप्रश्नस्यापि प्रत्युत्तरदानप्राभववैकल्यवहरीत्येति हृद्गतम् । **नः इति** बहुवचनं सब्रह्मचारिकोडीकारेण । अत एव स्वात्ममात्रविषये **पञ्च मा प्रश्नान्** इति एकवचननिर्देशः । त्वदुक्तिश्रवणकाले मया सर्वज्ञत्वं मय्यध्यवसितम्; राजप्रश्नकाले चातिनिकृष्टत्वमवधारितमिति ज्ञापनाय क्रमेण **न इति, मा इति** च वचनभेद इति वा ।

**स होवाच, तथा नस्त्वं तात जानीथाः यथा यदहं किञ्चन वेद सर्वमहं तत्तुभ्यमवोचम्। [1]प्रेहि तु तत्र प्रतीत्य ब्रह्मचर्यं वत्स्याव इति। भवानेव गच्छत्विति। स आजगाम गौतमो यत्र प्रवाहणस्य जैवलेरास[2]। तस्मा आसनमाहृत्योदकमाहा[3]रयाञ्चकार। अथ हास्मा अर्घ्यं चकार। तँ होवाच वरं भगवते गौतमाय दद्म इति॥ ४॥**

1. प्रेहि. शां मा. 2. आस तस्मै. शां. आस स तस्मै. मा. 3. आहरयाञ्चकार. मा.

---

**स होवाच** । पिता प्रत्युवाचेत्यर्थः । किमिति । **तथा** नस्त्वं तात जानीथाः — **वत्स्याव इति** । हे तात! **नः** अस्मान् त्वं तथा जानीथाः। [ [1]कथम्?] **यथा** येन प्रकारेण अहं यत् किञ्च वेद, तत् सर्वं तुभ्यमहमवोचमिति। ततश्च, 'मया एते प्रश्ना नावगताः' इति मया नोक्ताः। अतः त्वञ्च **प्रेहि** आगच्छ। आवां तत्र राज्ञः समीपं **प्रतीत्य** गत्वा विद्यार्थं वत्स्याव इति। इतर आह **भवानेव गच्छत्विति**। नाहं तस्य मुखं निरीक्षितुमुत्सहे इति भावः। **स आजगाम गौतमो यत्र प्रवाहणस्य जैवलेरासा**[2] । **आसा** आस्या। आसनमित्यर्थः। **तस्मा आसनमाहृत्योदकमाहारयाञ्चकार**। **तस्मै** गौतमाय राजा आसनं दत्वा पाद्यार्थमुदकं भृत्यैरा[3]नायितवानित्यर्थः। **अथ हास्मा अर्घ्यं चकार**। **अस्मै** गौतमायार्घ्यं कृतवानित्यर्थः। **तं होवाच, वरं** [4]**भगवते गौतमाय दद्म इति**। [4]भगवते गौतमाय गवादिलक्षणं वरं प्रयच्छाम इति गौतममुक्तवानित्यर्थः॥ ४॥

1. इदमधिकं क· कोशे। 2. जैबलेरास। आसनमित्यर्थः. ख. ग. 3. आनीतवान्. ख. ग, 4. भवते. क.

---

**तथानस्त्वमिति**। अत्र **तथा यथेति** पदद्वयात्, अवोचमिति यथा तथा जानीथा इत्यन्वयेन, यदहं वेद, सर्वं तुभ्यमवोचमित्येवम्प्रकारं जानीथा इत्यर्थलाभात् भाष्ये **येन प्रकारेणे**त्यस्य, अवोचमितीदं वाक्यं यत्प्रकारविशिष्टम्=यदभिप्रायकमित्यर्थः स्यात्। **तथा**= तदभिप्रायवत्तया।

**स होवाच — प्रतिज्ञातो म एष वरः। यां तु कुमारस्यान्ते वाचमभाषथाः, तामेव मे ब्रूहीति ॥ ५ ॥**

**स होवाच, दैवेषु वै गौतमो[1] तद् वरेषु ; मानुषाणां ब्रूहीति ॥ ६ ॥**

**स होवाच, विज्ञायते हास्ति हिरण्यस्यापात्तं गोअश्वानां दासीनां प्रवाराणां परिधानस्य। मा नो भवान् बहोरनन्तस्यापर्यन्तस्याभ्यवदान्यो भूदिति ।**

1. गौतम तत्. शां मा.

---

**स होवाच प्रतिज्ञातो म एष वरो — मे ब्रूहीति** । स होवाच गौतमः । वरो दीयत इति त्वया प्रतिज्ञातश्चेत् , यां वाचं मम कुमारस्य **अन्ते** समीपे अभाषथाः, तामेव वाचं मे ब्रूहि । तानेव प्रश्नान् मे ब्रूहीत्यर्थः ॥ ५ ॥

**स होवच दैवेषु वै गौतमो तद्वरेषु मानुषाणां ब्रूहीति** । सः राजोवाच । उरवधारणे । हे गौतम! यत् त्वं प्रार्थयसे, तत् दैवेषु वरेष्वेवान्तर्गतम् । तस्मात् तन्न प्रार्थनीयम् । मानुषाणां वराणां मध्ये किञ्चित् वृणी(णु)ष्वेति ॥ ६

**स होवाच विज्ञायते हास्ति — — दासीनां प्रवाराणां परिधानस्य** । स होवाच गौतमः, तव हिरण्यस्य गोअश्वानां — 'सर्वत्र विभाषा गोः' इति प्रकृतिभावः[1] — दासीनां **प्रवाराणां** प्रच्छदपटानाम् अधोंशुकलक्षणस्य **परिधानस्य चापात्तं** प्राप्तम् — प्राप्तिरिति यावत् — अस्ति हेति मया ज्ञायते हि । तैर्मानुषैर्वित्तैर्मम प्रयोजनं नास्तीत्यर्थः । **मा नो भवान् बहोरनन्तस्यापर्यन्तस्याभ्यवदान्यो भूदिति** । **बहोः** प्रभूतस्य **अनन्तस्य** अनन्तफलस्य **अपर्यन्तस्य** पुत्रपौत्रगामिनः विद्यारूपद्रविणस्य **नः अभि** अस्मान् प्रति भवान् **अवदान्यः** अदाता मा भूत् । सर्वेषां दाता भवानस्माकं कुतो न

1. प्रकृतिवद्भावः क.

---

**विज्ञायते हास्तीति** । 'ममाप्यस्त्येव तत् सर्वं'मिति त्वया ज्ञायत एवेति शाङ्करे उक्तम् । तथा च **अपात्तं** प्राप्तिः । **अपात्तमपादानं** पृथक्करणमित्यर्थे तु भवत्समीपमागतेभ्यो भवान् सर्वं पृथक्कृत्य ददातीति मया ज्ञायत एव । तादृशान्तवत्पदार्थविषये इव अस्मिन्ननन्ते विद्यारूपार्थेऽपि त्वमवदान्यो मा स्म भूरिति वाक्यार्थः । **प्रवाराणामित्यस्य** परिवाराणामिति शाङ्करे उक्तोऽर्थः । पूर्ववदिदं बहुवचनान्तं पूर्वजातीयार्थकम्, **परिधानस्येत्येकवचनान्तं तु** सर्वप्रकार-

**स वै गौतम तीर्थेनेच्छासा[1] इति। उपैम्यहं भवन्तमिति। वाचा ह स्मैव पूर्व उपयन्ति। स होपायनकीर्त्योवास ॥ ७ ॥**

**स होवाच, तथा नस्त्वं गौतम मापराधा[2] स्तव च पितामहा यथा।**

1. इच्छसी. मा. 2. मापराध्यः मा.

---

प्रयच्छतीति भावः। एवमुक्तो राजा आह **स वै गौतम तीर्थेनेच्छासा इति।** हे गौतम! स त्वं **तीर्थेन** न्यायेन शास्त्रविहितेन विद्यां मत्तः **इच्छासै** इच्छस्वे[1]-त्यर्थः। इत्युक्तो गौतमः प्राह **उपैम्यहं भवन्तमिति। उपैमि** उपगच्छामि शिष्यत्वेनाहं भवन्तमिति।

**वाचा ह स्म वै पूर्व उपयन्ति।** वाचा ह स्मैव किल पूर्वे ब्राह्मणा वर्णावरान् उपयन्ति; न तु शिष्यवृत्त्योपगच्छन्ति। **स होपायनकीर्त्योवास।** अतः **सः** गौतमोऽपि **उपायनकीर्त्या** शिष्यत्वेनोपैमीत्युपगमनकीर्तनमात्रेणैव **उवास** उषितवान्। नोपगमनशुश्रूषादिकं कृतवानिति भावः ॥ ७ ॥

**स होवाच तथा नस्त्वं गौतम मापराधास्तव च पितामहा यथा।** **सः** राजोवाच—हे गौतम! तव च पितामहाः यथा नः पूज्याः, तथा त्वमपि पूज्य एव। 'स वै गौतम! तीर्थेनेच्छासै' इति चिरवासाज्ञापनकृतमदीया-

---

पराधमिति तदाशयः। लोट्त्वव्यक्तये इच्छस्वेति छान्दसात्मनेपदादरणम्।

**पूर्वे** इति। **ब्राह्मणा** इत्युपलक्षणम्। ब्राह्मणादिवर्णेषु पूर्वेपूर्ववर्णाः अवरवर्णान् न शुश्रूषन्ते इत्यर्थः। अतः राज्ञा उपगमननिषेधात् गौतमः उपगमनकीर्तनमात्रेण शुश्रूषां विनैव स्थित इति भाव्यम्। **तथा न** इति वाक्ये शाङ्करोक्तं तावत्—यथा तव पितामहाः मम पितामहेषु अपराधं न जगृहुः, तथा त्वमपि मयि मा गृह्णाणेत्यर्थः। **त्वं नो मा पराधाः** अस्मान् प्रति अपराधं मा धार्षीः=अस्मदीयोऽपराधो न ग्रहीतव्य इति। इदञ्च तत्तत्पितामहानां वृत्ते प्रमाणान्तरतोऽवसिते अङ्गीकार्यं स्यादिति स्वयमर्थान्तरमेव वर्णितम्। एवञ्च **अपराधा** इति पदं न क्रियापदत्वेन कल्प्यम्। **मापराधा** इति खण्डवाक्यम्, 'तथा नस्त्वम्, यथा तव पितामहाः' इति वाक्यस्य मध्ये निविष्टम्। **न** इति षष्ठ्यन्तम्। **मापराधा** इत्यस्य अपराधा मा भूवन्निति वा, अपराधा न गणनीया इति वा सुगम एवार्थः। एवञ्च तस्मिन् तत्पितामहेष्विव गौरवं प्रदर्शयतो राज्ञः शुश्रूषानिरपेक्षत्वं स्पष्टम्।

**इयं विद्येतः पूर्वं न कस्मिँश्चन ब्राह्मण उवास । तां त्वहं तुभ्यं वक्ष्यामि । को हि त्वैवं ब्रुवन्तमर्हति प्रत्याख्यातुमिति ॥ ८ ॥**

**असौ वै लोकोऽग्निर्गौतम । तस्याऽऽदित्य एव समित्, रश्मयो धूमोऽहरर्चिर्दिशोऽङ्गाराः, अवान्तरदिशो विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति ।**

---

पराधाः मा गणनीयाः । **इयं विद्येतः पूर्वं न कस्मिंश्चन ब्राह्मण उवास ।** इयञ्च विद्या इतः पूर्वं कस्मिंश्चिदपि ब्राह्मणे **नोवास** न स्थितवती । **तां त्वहं तुभ्यं वक्ष्यामि । तां** तादृशीं=ब्राह्मणैरितःपूर्वमलब्धां विद्यां तुभ्यं वक्ष्यामि । **को हि त्वैवं ब्रुवन्तमर्हति प्रत्याख्यातुमिति ।** को वा निकृष्टं प्रति, 'शिष्योऽहं भवामी'त्येवं वदन्तं त्वां प्रत्याख्यातुमर्हति । अतो दुर्लभामपि विद्यां तुभ्यं वक्ष्यामीत्यर्थः ॥ ८ ॥

तत्र, 'वेत्थो[1] यतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्ती'ति प्रश्नस्य प्रतिवचनमाह **असौ वै लोकोऽग्निः — संभवति** । हे गौतम ! **असौ** द्युलोक एवाग्निः । तस्य **आदित्य एव समित्** । आदित्येन हि द्युलोको दीप्यते । **रश्मयो धूमः** । आदित्यरश्मयो धूमः । आदित्यरूपसमित्प्रभवत्वात् । **अहरर्चिः** । प्रकाशवत्त्वात् । **दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गाः ।** दिशामवान्तरदिशाञ्च अहोरूपार्चिःप्रादुर्भावाधीनाभिव्यक्तिकत्वेन अङ्गारत्वविस्फुलिङ्गत्वे । **तस्मिन्नेतस्मिन्नग्नौ** आदित्यादिलक्षणसमिदाद्युपेते अग्नौ **देवाः** इन्द्रियाणि श्रद्धां जुह्वति । 'श्रद्धा वा आपः' इति **श्रद्धाशब्देन** आप उच्यन्ते । आत्मधर्मभूतायाः श्रद्धायाः होतव्यत्वासंभवात् । एतच्च, "प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः" इति सूत्रभाष्ययोः स्पष्टम् । तत्रापि न जलमात्रम्, किन्तु भूतसूक्ष्माणां सर्वेषामुपलक्षकं श्रद्धापदम् । एतच्च, "त्र्यात्मकत्वात्तु भूयस्त्वात्"

1. यावतिथ्याम् ग.

---

**आदित्य एवेति** । एषां पञ्चानामग्नीनां मध्ये एकैकस्यापि यत् समिद्धूमादिपञ्चकपरिगणनम्, तत् काण्वे माध्यन्दिने च छान्दोग्ये इव क्वचित् क्वचिदन्यथा लक्ष्यते । अतोऽनुसंधाने विकल्पो भाव्यः ।

**तस्या आहुत्यै सोमो राजा संभवति ॥ ९ ॥**

**पर्जन्यो वा अग्निर्गौतम । तस्य संवत्सर एव समित्, अभ्राणि धूमो विद्युदर्चिरशनिरङ्गाराः, ह्रादुनयो विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवाः सोमँ राजानं जुह्वति । तस्या आहुत्यै वृष्टिः संभवति ॥ १० ॥**

**अयं वै लोकोऽग्निर्गौतम । तस्य पृथिव्येव समित्, अग्निर्धूमो रात्रिरर्चिश्चन्द्रमा अङ्गाराः, नक्षत्राणि विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिं जुह्वति । तस्या आहुत्या अन्नँ संभवति ॥ ११ ॥**

---

इति सूत्रभाष्ये स्पष्टम् । न चेन्द्रियाणां द्युलोकाग्नौ भूतसूक्ष्मरूपाहुतिप्रक्षेपे कथं होतृत्वमिति वाच्यम् — इन्द्रियाणामभावे भूतसूक्ष्माणां जीवं परिष्वज्य द्युलोकादिगमनासंभवात्, 'तस्मिन्नेतस्मिन्नग्नौ देवाश्श्रद्धां जुह्वती'ति देवशब्दितानामिन्द्रियाणां होतृत्वोक्तिर्न विरुद्धयत इति द्रष्टव्यम् । **तस्यै आहुत्यै** । तस्या आहुतेरित्यर्थः । विभक्तिव्यत्ययः छान्दसः । **सोमो राजा संभवति** । देवभोग्यदिव्यदेहयुक्तो भवतीत्यर्थः ।

एवमुत्तरत्रापि समिद्धूमार्चिरङ्गारविस्फुलिङ्गत्वकल्पनेषु किञ्चित् साधर्म्यं बुद्धिमद्भिरूह्यम् ॥ ९ ॥

**पर्जन्यो वा अग्निर्गौतम** । वृष्टिप्रवर्तको देवः पर्जन्यः । **तस्य संवत्सर एव समित्** । शरदादिग्रीष्मान्तैः संवत्सरावयवैरेव पर्जन्याग्नेर्दीप्यमानत्वात् । **ह्रादुनयः** स्तनयित्नुशब्दाः । विप्रकीर्णत्वानेकत्वसामान्यात् । **तस्मिन्नेतस्मिन्नग्नौ देवास्सोमं राजानं जुह्वति** । कर्मफलभोगावसाने अमृतमयदिव्यदेहो द्रवीभूतस्सन् देवशब्दवाच्यैरिन्द्रियैस्सह पर्जन्ये पततीत्यर्थः । शिष्टं स्पष्टम् ॥ १० ॥

**अयं वै—समित्** । **अयं** समुद्रपर्वतादियुक्तो लोकः अग्निः । पृथिव्यंशस्तु समित् । **अग्निर्धूमः** । समिदाश्रितत्वात् धूमस्य, अग्नेरपि पृथिवीरूपसमिदाश्रितत्वात् अग्नेर्धूमत्वं युक्तम् । **रात्रिरर्चिः** । अर्चिःप्रकाशस्य रात्र्यधीनत्वात् रात्रिरेवार्चिरित्यर्थः । शिष्टं स्पष्टम् ॥ ११ ॥

**पुरुषो वा अग्निर्गौतम । तस्य व्यात्तमेव समित्, प्राणो धूमो वागर्चिश्चक्षुरङ्गाराः, श्रोत्रं विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति । तस्या आहुत्यै रेतः संभवति ॥ १२ ॥**

**योषा वा अग्निर्गौतम । तस्या उपस्थ एव समित्, लोमानि धूमो योनिरर्चिः, यदन्तः करोति तेऽङ्गाराः, अभिनन्दा विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति । तस्या आहुत्यै पुरुषः संभवति ।**

**स जीवति यावज्जीवति । अथ[1] यदा म्रियते (१३) अथैनमग्नये हरन्ति । तस्याग्निरेवाग्निर्भवति । समित् समित् । धूमो धूमोऽर्चिरर्चिरङ्गारा अङ्गाराः, विस्फुलिङ्गा विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवाः**

1. यावज्जीवति (१३)। अथ यदा. मा.

---

**व्यात्तमेव समित्** । विवृतं मुखमेव समिदित्यर्थः । **वागर्चिः** । प्रकाशकत्वसामान्यात् वागिन्द्रियमर्चिरित्यर्थः । **अस्या आहुत्यै** । अस्या आहुते-रित्यर्थः । शिष्टं स्पष्टम् ॥ १२ ॥

**योषा वा अग्निः** । **योषा** स्त्री । **योनिरर्चिः** । वर्णसाम्यात् योनेरर्चिष्ट्वम् । **यदन्तः करोति, तेऽङ्गाराः** । अन्तःकरणं नाम मिथुनीकरणम् । **अभिनन्दा विस्फुलिङ्गाः** । क्षुद्रत्वसाम्यात् । एवम्, '[1]यतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्ती' ति प्रश्नस्योत्तरमुक्तम् ।

अन्येषामपि प्रश्नानामुत्तरं वक्तुं प्रसङ्गं संपादयति—**स जीवति** । **सः** पुरुषः एवं क्रमेण रेतोरूपायामाहुतौ हुतायां पुरुषाकारो जातस्सन् जीवति । कियन्तं कालमित्यत्राह – **यावज्जीवति** । यावदस्मिन् शरीरे स्थितिनिमित्तं कर्म विद्यते, तावदित्यर्थः । अतः कस्यापि कालस्य न नियतिरिति भावः । **अथ यदा म्रियते** । अथ तत्कर्मक्षये यस्मिन् काले म्रियत इत्यर्थः ॥ १३ ॥ **अथैनमग्नये हरन्ति** अथ मरणानन्तरम् **अग्नये** अग्न्यर्थम् = अग्नौ होमाय **एनं** मृतमृत्विजो हरन्ति । **तस्याग्निरेवाग्निः — विस्फुलिङ्गा विस्फुलिङ्गाः** । अस्याः षष्ठ्या आहुतेरग्नि-समिदादिकं न काल्पनिकम्; अपि तु स्वाभाविकमेव । **तस्मिन्नेतस्मिन्नग्नौ —**

1. यावतिथ्यां ग.

**पुरुषं जुह्वति। तस्या आहुत्यै पुरुषो भास्वरवर्णः संभवति ॥ १४ ॥**

**ते य एवमेतद्विदुर्येचामी अरण्ये श्रद्धां सत्यमुपासते, तेऽर्चिरभिसंभवन्ति; अर्चिषोऽहरह्न आपूर्यमाणपक्षम्, आपूर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति, मासेभ्यो देवलोकम्, देवलोकादादित्यम्,**

---

**भास्वरवर्णस्संभवति** । तस्मिन्नग्नौ ऋत्विग्भिः, 'असौ स्वर्गाय लोकाय स्वाहे' ति यजमाने हुते सति द्युलोके दीप्यमानशरीरो यजमानो निष्पद्यते इत्यर्थः ॥ १४ ॥

इदानीं प्रथमप्रश्ननिर्णयार्थमारभते **ते य एवमेतद्विदुः** =[ये] **एवम्** अनेन प्रकारेण द्युपर्जन्यैतल्लोकपुरुषयोषिद्रूपेषु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोऽनुषक्ततया सञ्चरन्तं प्रत्यगात्मानं ब्रह्मात्मकत्वेन ये **विदुः** उपासते [3]त इति यावत् — **ये च** — **ते** = ये चामी पुरुषाः अरण्ये स्थित्वा श्रद्धां पुरस्कृत्य सत्यशब्दितं परमात्मानं प्रत्यगात्मात्मकमुपासते ते च, एते उभयेऽपि **अर्चिरभिसंभवन्ति** अर्चिराभिमानिनीं देवतां संगता भवन्तीत्यर्थः । **अर्चिषोऽहरि**त्यादौ सर्वत्र **अभिसं**भवन्तीत्यनुषङ्गः । **आपूर्यमाणपक्षात् यान् षण्मासान् उदङ्ङादित्य एति** । तान् मासानिति शेषः । **उदङ्** उदङ्मुख इत्यर्थः; उदग्देशस्थ इति वा । [1]अत्राहः पूर्वपक्षादिशब्दाः तत्तदभिमानिदेवतापराः । **मासेभ्यो देवलोकम्** । अत्र 'मासेभ्यः संवत्सरम्' इति छान्दोग्ये श्रवणादधिककालानां न्यूनकालेभ्य उत्तरोत्तरत्वेन निवेशस्य [2]प्राग्दृष्टत्वात् मासानन्तरं संवत्सरमभिसंभवन्ति । संवत्सरद्वारा देवलोकमित्यर्थः । अत्र देवलोकशब्दो[3] वायुपरः, 'योऽयं पवते एष देवानां गृहाः' इति श्रुतिप्रसिद्धेः[4] । इतरथा, 'देवलोकादादित्य' मिति आदित्यानन्तरपूर्वपर्वतया देवलोकनिदर्शकस्यास्य वाक्यस्य, 'स वायुमागच्छति। तस्मै स तत्र विजीहीते यथा रथचक्रस्य खम्। तेन स ऊर्ध्व आक्रमते तेन स आदित्यमागच्छती' ति वायोरादित्यसमनन्तरपूर्वपर्वत्वप्रति-

1. अत्राहुः—इति क. कोशे अशुद्धम् 2. पृथक्. क. 3. शब्दश्च. क. 4. श्रुतिसिद्धेः क.

**आदित्याद्वैद्युतम्। तान्[1] वैद्युतात् पुरुषो मानस एत्य ब्रह्मलोकान् गमयति।**

1. वैद्युतान् पुरुषो मानसः शां. वैद्युतान् पुरुषो मानवः मा. वैद्युतान् = विद्युल्लोकं प्राप्तान्, मानसः=मनसा सृष्ट इति, मानवः = ज्ञानरूपपरमात्मसंबन्धी इति च तत्र व्याख्या।

---

पादकश्रुतिविरोधप्रसङ्गात्। अतो देवलोकवायुशब्दयोरेकार्थत्वं वक्तव्यम्। एतत् सर्वम्, 'वायुशब्दादविशेषविशेषाभ्याम्' इति सूत्रभाष्ये स्पष्टम्। **आदित्याद्वैद्युतम्**। 'आदित्याच्चन्द्रमसं चन्द्रमसो विद्युत'मिति श्रुत्यन्तरे मध्ये चन्द्रमसः श्रवणात् चन्द्रद्वारा विद्युदभिमानिनीं देवतां प्राप्नुवन्तीत्यर्थः।

**तान् वैद्युतात् पुरुषो मानस एत्य ब्रह्मलोकान् गमयति**। वैद्युतात् वैद्युत इत्यर्थः। वैद्युतः **पुरुषो मानसः** परेण ब्रह्मणा मनसा सृष्टः अमानवशब्दितः पुरुषः स **एत्य** आगत्य तान् ब्रह्मलोकान् गमयतीत्यर्थः। छान्दोग्ये,

---

ननु **वैद्युता**दिति पञ्चम्याः प्रथमार्थवर्णनमयुक्तम्। अध्ययप्रायनयेन विद्युत्पुरुषादनन्तरमन्यः कश्चिन्मानसपुरुषः अतिवोढेति स्वरसार्थत्यागे कारणाभावादित्यत्र श्रुत्यन्तरसूत्रसंप्रदायान् स्वाभिमतसाधकतया दर्शयति **छान्दोग्य** इत्यादिना। **अत्रेदं बोध्यम्** — वैद्युतादित्यत्र वैद्युतानिति माध्वशाङ्करपाठः। **तानि**त्यस्य विशेषणम्। विद्युद्देवतां प्राप्तानिति तदर्थः। एवञ्च पूर्वं वैद्युतपदम्, इदञ्च विभिन्नार्थम्। **शाङ्करसूत्रभाष्ये** तु **वैद्युता**दिति पञ्चम्यन्तपाठो दृश्यते। तत्र च, अस्मदीयानां ग्रन्थेषु च **वैद्युतात्पुरुषोऽमानवः स एत्ये**त्यपि श्रुत्यानुपूर्वी लक्ष्यते। मानसामानवैक्यज्ञापनायायमर्थतोऽनुवादः। **वैद्युता**दित्यस्य विद्युल्लोकादित्यर्थो **रत्नप्रभायामुक्तः**। माध्यन्दिनशाखायां वैद्युतादिति पञ्चम्यन्तमेव श्रूयते। **श्रुतप्रकाशिकायां** यादवप्रकाशमतानुवादः (४-३-५), वैद्युतपदार्थस्य विद्युदभिमानिदेवताया अपादानत्वममानवस्यान्यस्य ब्रह्मगमयितृत्वञ्च श्रूयते इति। न त्वयमंशः खण्डितः। **श्रीभाष्ये**, "विद्युत उपरि वैद्युतेनामानवेने" ति भाषितम्। अमानवस्य वैद्युतत्वम्, 'तत्पुरुषोऽमानवः' इति छान्दोग्यवाक्याद् ग्राह्यम्। परन्तु तत्र शाङ्करे भाष्ये **तदि**त्यस्य तान् इत्यर्थ उक्तः। न तु तत्पुरुषः विद्युत्पुरुष इति। "वैद्युतेनैवे" ति सूत्रे तु विद्युदनन्तरवर्तिना अमानवेनेति वैद्युतपदार्थो भाषितः।

अर्चिरादिपदानामतिवोढृदेवतापरत्वस्य आतिवाहिकाधिकरणसिद्धत्वात्, 'चन्द्रमसो विद्युतम्' इत्यत्र विद्युत्पदम्, "तटितोधी" ति सूत्रे तटित्पदम्, "विद्युत उपरी" ति भाष्ये विद्युत्पदञ्च विद्युद्रूपाचेतनवस्त्वभिमानिदेवतापरमिति, **तत्पुरुष** इत्यस्य विद्युदभिमानिदेवतासंबन्धिपुरुषः कश्चिदमानव इत्यर्थः प्रतीयते। बृहदारण्यके त्विह, विद्युतमित्यस्य स्थाने वैद्युतमित्येव श्रुतेः विद्युदभिमानिदेवताप्राप्तिः चन्द्रमोनन्तरमिति स्पष्टं दृश्यते। एवञ्च **वैद्युता**दिति पञ्चम्या तदन्य एव मानसोऽमानव इति वक्तव्यं भवति यद्यपि — अथाप्यस्ति किञ्चिद् विवेचनीयम् —

सूत्रे वैद्युतेनेति पदेनामानवग्रहणं सर्वेषां निर्विवादम्। न च विद्युदनन्तरवर्तित्वमात्रेण वैद्युतपदप्रयोगः स्वरसः। तथा हि सति आदित्यपदेन चन्द्रोऽपि निर्दिश्येत, आदित्यानन्तरातिवाहिकत्वात्। न च सौत्रमिदं श्रौतपदानुवादः, येन क्लेशः सोढव्यः स्यात्। श्रौतस्य वैद्युतपदस्यामानवव्यतिरिक्तपरताया भवद्भिः स्वीकारात्। अतो वरुणादिसहकारेण गमयितारममानवं वैद्युतपदेन निर्दिशन् सूत्रकारः विद्युतोऽमानवस्य च संबन्धविशेषमध्यवस्यतीति वक्तव्यम्। तत्र अर्चिरादिपदार्थानामचेतनत्वे आतिवाहिकत्वायोगात् अभिमानिदेवतात्वं यथा, तथा विद्युत्पदार्थस्यापि तथात्वे सिद्धे, सा का देवतेत्यपेक्षायाम्, तत्पुरुषोऽमानव इति कस्यचिदधिष्ठातुः श्रुत्यैव निर्देशात् अतिरिक्तकल्पनमनपेक्षितम्। एवञ्चेह बृहदारण्यके, चन्द्रमसो विद्युतमिति विद्युत्पदस्थाने स्थितं वैद्युतपदं तमेवामानवमभिदधातु। एवञ्च श्रौतस्य सौत्रस्य च वैद्युतपदस्य एक एवार्थः। छान्दोग्ये विद्युतमिति अमानवाधिष्ठितदेशं प्रागुक्त्वा तदधिष्ठातुर्नेतृत्वं तत्पुरुष इत्यादिनोक्तमिति भाव्यम्। अस्तु वा कश्चिदर्चिरादीनामिव विद्युतोऽपि बद्धजीवरूपोऽधिकारिपुरुषः तत्र विद्युतमिति पदविवक्षितः। अथापि तन्नियन्ता कश्चित् नित्यसूरिरमानवपदविवक्षितो वैद्युत इति संमन्तव्यम्। सन्ति हि सर्वत्र देवानां नियन्तारो नित्यसूरयोऽपि केचित्, यथा रुद्रस्य आदिशेषः। एतेन विद्युल्लोकमागत इत्यमानवो वैद्युत इति शाङ्करोपेक्षिभामत्याशयोऽपि चिन्त्यः।

मानवमावर्तमतिक्रम्य विरजानदीतरणानन्तरं स्वहस्तस्पर्शनेन मुक्तं पवित्रयन् अन्तः परमपदे ब्रह्मपर्यन्तं नयन् ह्ययं न बद्धो भवितुमर्हतीत्यमानवोऽयम्; मानस इत्यप्युच्यते, भगवता मनसा सृष्टत्वात्। तादृशश्चायम्, 'अर्चिरादिस्थानेषु न सर्वत्र संनिदधाति। नापि वरुणेन्द्रप्रजापतीनामातिवाहिकानां सत्त्वात् किं तत्र गमनेनेत्युपेक्ष्य चतुर्मुखस्थानात् परस्तादेव मुक्तं प्रत्युद्गच्छति। किन्तु विद्युत्स्थान' इति श्रुतिदर्शितमिदं किमभिप्रायं स्यात्? नूनं विद्युतं प्रति स्वस्याधिष्ठातृत्वात्। चतुर्मुखस्थानात् आनयनायावश्यकर्तव्यगमनेन स्वेन स्वाधिष्ठेयस्थलप्रभृति स्थित्वा संमान्य समानयनं साधीय इत्यभिसंधाय स तत्राऽऽगत्य सह नयति। सत्यपि तस्मिन् वरुणेन्द्रादयः स्वस्वस्थानमागतं मुक्तमसत्कृत्य जोषं भवितुमप्रभवोऽनिच्छन्तश्च सबहुमानं स्वयमपि यथास्थानं नयन्तीति। अत एव विद्युदभिमानिदेवतान्तरस्यापि सांनिध्येऽप्यप्राधान्यान्न परिगणनीयता। अत एवममानवस्यास्य चन्द्रमोदेशात् परस्तात् स्वदेशे आदितः संनिहितत्वात् वैद्युतामानवैक्यात् अर्चिरादिपरिगणनावसरे वैद्युतनिर्देशे अमानवं न पृथङ्निर्दिशन्ति (यथा तत्त्वसारादौ)। अमानवनिर्देशे पृथक् वैद्युतं न निर्दिशन्ति (यथा लोकाचार्यकृते अर्चिरादिरहस्ये)। क्वचित् पृथङ्निर्देशः, देशविशेषे तत्करस्पर्शादिरूपविशेषप्रतिपादनार्थः। न तु आतिवाहिकान्तरपरिगणनार्थः। अत एव तत्त्वमुक्ताकलापे (जीव. ६०) विभूतिवाचिना तटित्पदेन विभूनिमतोऽमानवस्याभिधानात् नामानवः पृथक् कीर्त्यत इति ज्ञापयितुं चतुर्थपादः इत्युक्तं सर्वार्थसिद्धौ। एवञ्च श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये (२-८-१०) दर्शिते,

"अर्चिर्घस्रोऽर्धमासः सित उदगयने ये षडर्कस्य मासाः
तेऽब्दो वाय्वर्कचन्द्रास्तटिति च पुरुषः शक्रधात्रोश्च लोकौ।

वोढारो विद्युतोऽर्वाङ् नयति तु पुरुषो वैद्युतस्तेभ्य ऊर्ध्वं
ब्रह्मज्ञान् मानसोऽस्मात्परमिति कथयन्त्युत्तरं मार्गमेतम् ॥"

इति श्लोके वरुणस्याधिकस्योपलक्षणवत् वैद्युतमानसाभेदान्वयेनाप्यर्थवर्णनं कार्यम् । अस्मात् परमित्यस्य अस्मान्मानवावर्तात् परं ब्रह्मपदमित्येवमर्थो वर्णनीय इति । श्रुतप्रकाशिकायाञ्च आतिवाहिकानां द्वादशसंख्यत्वमुक्तमर्चिराद्यधिकरणे । तस्मात मानसस्येव विद्युतोऽपि नामानवातिरिक्ततया परिगणनं युक्तम् ।

एवं तर्हि, 'वैद्युतात् पुरुषोऽमानव' इति पञ्चमी कथमिति प्रश्नोऽवशिष्यते । तन्निर्वाहप्रकारं सूचयितुकामैरिव भगवद्भाष्यकारैर्वेदान्तसारे एवं सूक्तम् —, "चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयती'ति श्रुतेः वैद्युतपुरुषात् परस्तात् स एव ब्रह्म गमयिते" ति ।

अत्र सूक्तौ 'वैद्युतपुरुषात् परस्तात् स एवे' त्यत्र कथं पञ्चमीति विविच्यताम्। तत्पुरुष इति वाक्यग्रहणेन श्रीभाष्ये विद्युत्पुरुष इति भाषितत्वात् तत्पदं समस्तं वाऽस्तु; एवञ्च अत्र श्रुतौ तत्पुरुषोऽमानव इति खण्डवाक्यमर्चिराद्यभिमानिविलक्षणो विद्युदभिमानीति ज्ञापनार्थम् । तदपि ज्ञापनम्, अर्चिरादिदेवतानां साक्षाद्ब्रह्मगमयितृत्वाभावेऽस्य परं कथं तदिति शङ्कानुन्मेषाय । यद्वा राजपुरुष इत्यत्रेवेह विद्युद्भृत्य इत्यर्थायोगात्, नियन्तृपुरुष इत्यर्थे तत्पुरुष इति प्रयोगाप्रसिद्धया च समासमनङ्गीकृत्य, 'वैद्युतात् पुरुषोऽमानव' इति बृहदारण्यक इव, छान्दोग्येऽप्यसमस्तमेव पुरुषपदमामानवस्य परब्रह्मान्तरङ्गभृत्यत्वादिरूपविशेषपरमिति स्वीकार्यम् । एवमपि अमानवः स इति श्रवणात् स इति पूर्वोक्तविद्युत्परामर्शात् विद्युद्रूपः पुरुषोऽयममानव इति स्पष्टं प्रतीत्या 'विद्युत्पुरुष' इति भाष्यमुपपद्यते । तत एवामानवस्य विद्युदभिमानित्वसिद्धिश्च । तदिति तु अव्ययं वाक्यारम्भे श्रुतावत्र स्थलान्तरेष्विव, पूर्ववाक्यसंश्लिष्टार्थकमिदं वाक्यमिति ज्ञापनमात्रार्थं भवितुमर्हति । शाङ्करीत्या तदित्यस्य तान् इत्यर्थो वा । तत इत्यर्थेन विद्युद्रूपापादानपरं वा तत् । तथा च विद्युतो विद्युद्रूपोऽमानव एव गमयतीत्यर्थः । सर्वथा स इति विद्युद्रूपत्वसिद्ध्या न पुरुषभेदः ।

"वैद्युतेनैव ततस्तच्छ्रुतेः" इति सूत्रेऽपि तत इति विद्युत्परं व्याख्यातम्, विद्युत उपरि वैद्युतेन नीयत इति । तच्छब्दस्य तदर्थकत्वं कुतोऽवगम्यते? "तटितोऽधि वरुण" इति सूत्रे तु अधिकरणान्तरस्थं व्यवहितश्चेति न ततः तत इत्यस्य तटिद्ग्राहकत्वं युक्तमिव । अतो वैद्युतेनेति पदोक्तवैद्युतपरामर्शेव तदिति, 'वैद्युतेनैव वैद्युतात् परस्तादपि नीयते' इत्येव सूत्रार्थः स्वरस इत्यभिप्रेत्यैव सारेऽत्र 'वैद्युतपुरुषात् परस्ता' दित्युक्तिः । एवञ्च, 'तत्पुरुष इत्यत्र श्रुतौ तत्पदेन तत इत्यर्थकेन विद्युद्रूपापादानवचनम्' इत्याशय्य श्रीभाष्ये, 'विद्युत उपरी' ति भाषितमिति ग्राह्यम् । अतः सारानुसारात्, विद्युतः परस्तात् सः विद्युद्रूप एवामानवो गमयतीति श्रुत्यर्थ इति निश्चीयते ।

एवञ्चात्र सारे, 'वैद्युतपुरुषात् परस्तात्' इत्यत्र तदधिकृतदेशभिन्नदेशावच्छेदेनापीत्यर्थो विवक्षणीयः। तद्वत् श्रुतावपि, **वैद्युतात्** वैद्युतपुरुषात् = तदधिकृतदेशभिन्नदेशावच्छेदेनेत्यर्थः सुवच एव। यथा अर्चिरादिदेवतानां स्वाधिकृतदेशमात्रे नेतृत्वम्, न तथाऽस्य। किन्तु स्वाधिकृतदेशावच्छेदेनेव, स्वानधिकृतो यो वरुणाद्यधिकृतो देशः यश्च चतुर्मुखलोकात् परस्तात् केनाप्यनधिकृतो देशः प्रकृतिमण्डले तदुपरि च, तत्सर्वावच्छेदेन च स्थित्वा ब्रह्मगमयितृत्वमिति।

इदमेव **वेदान्तसारानुसारेण** श्रुतिनयनं नूनमभिप्रेत्य **परमपदसोपाने आचार्यैः** वैद्युतादित्यादिप्रकृतश्रुतिवाक्यमर्थतोऽनूद्य, 'तदिदम्, "वैद्युतेनैव ततस्तच्छ्रुतेः" इति सूत्रानुगुणं स्थानद्वयकल्पनादितो निरुह्येत' इत्युक्तम्। स्थानद्वयकल्पनं नाम अधिकृतानधिकृतदेशयोर्विभागेन कथनम्। स्थानद्वयकल्पनादीत्यादिपदेन प्रथमवैद्युतपदस्यामानवपरत्वेऽपि **वैद्युता-दिति** पदं परं वैद्युतस्येदं वैद्युतमिति पुनस्तद्धितवृत्त्या अमानवाधिकृतविद्युद्देशपरमपि सुवचमिति ज्ञाप्यते। **एत्येति** श्रौतपदेन, मुक्तस्य वैद्युतपुरुषप्राप्त्यनन्तरं मानसस्य आगमनं न विवक्षितम्। किन्तु, 'नेदं मानसस्य निरन्तरवासस्थानम्; परमपदमेव तु तत्' इति सूचनार्थं तदुक्तिः। एवं विद्युदभिमानिदेवतामाविश्य स्थित्वा तदन्तर्वर्तित्वाकारेण विद्युद्देशे उपचर्य स एवातिवहनाय पृथगप्राकृतमानसामानवरूपविग्रहावच्छिन्नः पश्चादाविर्भूय वरुणस्थानादि नयतीति विवक्षाप्यादिपददर्शिता।

श्रुतौ विद्युतमिति निर्दिश्य, 'तत्पुरुषोऽमानवः' इति पठनवत् स्मृतौ वैद्युतपदनिर्देशानन्तरमपि तत्पुरुषपदं पठ्यते। यथा **अनियमाधिकरणश्रुतप्रकाशिकायाम्,**

> 'क्रमात् ते संभवन्त्यर्चिरहः शुक्लं तथोत्तरम्।
> अयनं देवलोकञ्च सवितारं सवैद्युतम्।
> तत्र तत्पुरुषो दिव्योऽमानवः' इति।

एवंरूपनिर्वाहाभिप्रायेणैव **अधिकरणसारावल्यामपि** वरुणाधिकरणे 'यत्त्वस्यामानवस्ये'ति पूर्वोक्तविद्युद्रूपममानवम्, 'अमानवः स' इति श्रुत्युक्तं प्रस्तुत्य,

> 'यश्चोक्तो मानसाख्यस्तटित उपरि तु ब्रह्मलोकाप्तिहेतुः
> तस्मान्नेता स नान्यो विदुरतिवहनं वैद्युतेनैव तस्मात्॥'

इति तदुक्तार्थे ब्रह्मलोकाप्तिहेतुत्वेन वैद्युतान्नेतृत्वेन च तटित उपर्युक्तः **स** मानसोऽपि न तदन्य इत्युक्तम्। अत्र, 'तस्मान्नान्यः' इत्यनुक्त्वा, **तस्मान्नेतेति** प्रयोगः, नूनं **तस्मादिति** पञ्चम्याः नेतेत्यत्रान्वयविवक्षया। श्रुतौ वैद्युतादिपदवत्। अन्यथा **नेतेत्यस्य** वैयर्थ्यञ्च। **श्रुतौचित्यभूमेत्यस्य,** वैद्युतात् नेतृत्वेन **स** इति विद्युदभिन्नत्वेन चोक्ततया तत्स्थानप्रभृति-

**तेषु ब्रह्मलोकेषु पराः परावन्तो[1] वसन्ति । तेषां न पुनरावृत्तिः ॥ १५ ॥**

1. परावतः शां मा.

'चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयती'ति वैद्युतस्यामानवशब्दितस्यैव ब्रह्मगमयितृत्वश्रवणात्, "वैद्युतेनैव ततस्तच्छ्रुतेः" इति सूत्रितत्वाच्च, "विद्युत उपरि वैद्युतेनामानवेनैवाऽऽतिवाहिकेन विदुषामा ब्रह्मप्राप्तेर्गमनम्" इति भाष्यानुसाराच्च **वैद्युतादिति** पदं प्रथमान्ततया व्याख्येयम् । **ब्रह्मलोकानित्यत्र** निषादस्थपतिन्यायेन ब्रह्मैव लोको ब्रह्मलोक इति । कर्मधारयस्यैव युक्ततया अर्थस्यैकत्वे निश्चिते बहुवचनस्य, 'अदितिः पाशान्' इतिवदुपपत्तेः । षष्ठीतत्पुरुष इति पक्षेऽपि न दोषः । न च भगवल्लोकस्यैकतया बहुवचनानुपपत्तिरिति वाच्यम्— परस्य ब्रह्मणः परिपूर्णस्य सर्वगतस्य सत्यसंकल्पस्य श्रुतिस्मृतीतिहासपुराणप्रामाण्यानुसारेण स्वेच्छापरिकल्पितस्वासाधारणाप्राकृतलोकानन्त्यसंभवे अनुपपत्त्यभावात् । एतत् सर्वम्, "परं जैमिनिर्मुख्यत्वात्" इति सूत्रभाष्ये स्पष्टम् ।

**तेषु ब्रह्मलोकेषु पराः परावन्तो[1] वसन्ति** । तेषु ब्रह्मलोकेषु **पराः** निरतिशयानन्दैश्वर्यशालिनः **परावन्तः**[1] परवन्तः — नाथवन्त इति यावत् — परमात्मना सनाथाः तेनानुगृहीताः तद्दत्तानि भोग्यभोगस्थानभोगोपकरणानि भुञ्जानाः सुखेन तत्रैवासते इत्यर्थः । **तेषां न पुनरावृत्तिः** । तेषां न पुनस्संसारबन्ध इत्यर्थः ॥ १५ ॥

1. परावतः. ग.

नेतृत्वमुचितमित्यर्थः । तथाच सूत्रकारः **वैद्युतेनेति** निर्दिशन् ब्रह्मप्रापकस्यामानवस्यैव वैद्युतत्वं मानसादनन्यत्वञ्च बुबोधयिषतीति ।

तत् सिद्धं वैद्युतामानवयोरैक्यस्य पञ्चमी न बाधिका, निरूढत्वादिति ।

अत्र तूपनिषद्भाष्यकारैः, 'परमपदसोपानसूक्तिगतेन आदिपदेन 'पञ्चमी प्रथमार्थे' इति निर्वाहोऽपि विवक्षितोऽस्तु । छन्दसि व्यत्ययो हि बहुलम्' इत्याकलय्य, **वैद्युतात्=वैद्युत इत्यर्थ** इत्यादि भाषितमित्यलं विस्तरेण ।

सूत्रितत्वाच्चेति चकारः परमतस्थान् प्रति वक्तव्यं हेतुद्वयमेवेत्याशयेन ।

ब्रह्मणो लोकानिति षष्ठीविग्रहेऽपि **अदितिः पाशा**नितिवन्निर्वाहो नासंभवी । अथापि तत्त्वस्थितिमनुसृत्य यथाश्रुतरक्षणेन निर्वाहं दर्शयितुम्, आशङ्क्य परिहरति **न चे**त्यादिना । **पराः परावत** इत्यत्र परावन्त इति पाठमादृत्य, दीर्घश्छान्दस इत्यभिप्रेत्य, परवन्त इति व्याख्यातम् । शाङ्करे **परावत** इति पाठमादृत्य, **परावतः** प्रकृष्टाः समाः संवत्सरानने-

**अथ ये यज्ञेन दानेन तपसा लोकान् जयन्ति, ते धूममभिसंभवन्ति ; धूमाद्रात्रिँ रात्रेरपक्षीयमाणपक्षम् अपक्षीयमाणपक्षात् यान् षण्मासान् दक्षिणा[1] [मा]दित्य एति, मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रम् । ते चन्द्रं प्राप्यान्नं भवन्ति । ताँस्तत्र देवाः, यथा सोमं राजान माप्यायस्वापक्षीयस्वेत्येवमेनाँस्तत्र भक्षयन्ति ।**

1. दक्षिणा आदित्यः. मा.; शा. ?

---

**अथ ये यज्ञेन — धूममभिसंभवन्ति ।** ये प्रत्यगात्मानं ब्रह्मात्मकं वा, प्रत्यगात्मशरीरकं ब्रह्म वा अनुपासीनास्सन्तः यज्ञदानादिकर्मरतास्सन्तो लोकान् गच्छन्ति — ते **धूमं** धूमाभिमानिनीं देवतां गच्छन्तीत्यर्थः । **धूमाद्रात्रिम्** — । अत्रापि रात्र्यादिशब्दाः तत्तदभिमान्यातिवाहिकदेवतापराः । व्याख्या च पूर्ववत् । **ते चन्द्रं प्राप्यान्नं भवन्ति । अन्नं भवन्ति** तत्रत्यानाम् आजानदेवानां भोगोपकरणं भवन्तीत्यर्थः । **तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ति ।** यथा सोमं राजानं यज्ञे ऋत्विजः आप्यायस्व अपक्षीयस्वेति भक्षयन्ति, एवमेनांस्तत्र देवा भक्षयन्तीत्यर्थः । आप्यायस्वापक्षीयस्वेति,

---

कानिति व्याख्यातम्' । 'द्वाविमौ वातौ वात आ सिन्धोरा परावतः' इति तैत्तिरीयारण्यका- (४.४२.१) दौ **परा** इति दूरवर्तिलोकग्रहणेन तादृशलोकयुक्तदेशे इति व्याख्यातमस्ति । तद्रीत्या **पराः** उत्कृष्टाः **परावन्तः** दविष्ठदेशवन्त इति, **परावतः पराः** दूरवर्तिलोकयुक्त- देशादपि दूरवर्तिन इति वा व्याख्यानमपि संभवतीति दिक् ।

**तेषामिह न पुनरावृत्तिरिति** शाखान्तरीयपाठे **इहे**तिपदम्, संसारस्य हेयतां प्रत्यक्षसिद्धां प्रदर्श्य, अतिभोग्यमर्थमुपेक्ष्य अत्यन्तहेयसंसाराधिगतौ न भवतीच्छापीति प्रदर्शनार्थम् । न तु शाङ्करवत् इह कल्पे नाऽऽवृत्तिः, किन्तु कल्पान्तर इति व्यक्तये । श्रुतिस्मृतिसूत्रसर्वविरुद्धत्वात् ।

**आप्यायस्वापक्षीयस्वेति क्रियासमभिहार** इति । अत्र वक्तव्यं **छान्दोग्य- पञ्चाग्निविद्यायां परिष्कारे**ऽस्माभिरुक्तमेव । इहापि मुखान्तरेण किञ्चिदुपपाद्यते । पचति- पचतीति द्विरुक्तस्थले क्रियासमभिहारप्रतीतिरानुभाविकी । अत एव, 'नित्यवीप्सयो'रिति सूत्रे नित्यत्वं नाभीक्ष्ण्यरूपक्रियासमभिहारादन्यदिति निष्कृष्टं **शेखरे** । एवं पापच्यत इति यङन्त- प्रयोगोऽपि क्रियासमभिहारेऽस्त्येव । एवञ्च, 'क्रियासमभिहारे —' इति सूत्रेण नित्यतया लोड्विधानम् 'इति पचती' ति अनुप्रयोगविशिष्टप्रयोगविषयकम् । तत्रानुप्रयोगादेव लकारार्थस्य

सर्वस्य लाभात् धातूपरि लकारानपेक्षायाम्, प्रत्ययं विना प्रयोगस्यासाधुत्वे चालोच्यमाने तिङन्ततां विना विलक्षणलोडन्तसाधुशब्दप्रयोगतो निर्वाहं दर्शयति सूत्रकारः। तथाच 'समुच्चयेऽन्यतरस्या' मिति तदुपरितनं सूत्रमपि असमुच्चितक्रियास्थल इव समुच्चितक्रियास्थलेऽपि अनुप्रयोगविशिष्टप्रयोगे पूर्वसूत्रेण नित्यं लोटः प्राप्तौ तद्बाधेन विकल्पेन लोड्विधायकं स्वरसप्रतीतमिति, सक्तून् पिबति धानाः खादतीत्यभ्यवहरति, सक्तून् पिब धानाः खादेत्यभ्यवहरतीति प्रयोगद्वयसिद्धिः। तथाचानुप्रयोगस्थले तिङनपेक्षायामपि समुच्चयस्थले तिङन्तप्रयोगोऽप्येष्टव्यः। अनुप्रयोगतः सामान्यधर्मावच्छिन्ने तिङर्थकालादिप्रत्यायनम्; पूर्वतिङा तु विशेषधर्मावच्छिन्ने इति स्थितस्य साफल्यं ग्राह्यमिति दर्शितं भवति। यस्तु, पिबति खादतीति समुच्चयाभिप्रायेण प्रयोगः, सः असति बाधके पदद्वयार्थान्वयबलात् केवलसमुच्चयं दर्शयन् न प्रकृतसूत्रे अन्यतरस्यामिति दिदर्शयिषितः। अनुप्रयोगघटितप्रयोगविषयप्रस्तावोऽयमिति च दर्शयन्त्येव सूत्रकारः, 'यथाविध्यनुप्रयोगः पूर्वस्मिन्', 'समुच्चये सामान्यवचनस्ये' ति अनुप्रयोगवैलक्षण्यमुपरि दर्शयन्। इदञ्च, 'पानखादनरूपविभिन्नार्थद्वयं कथमेकेनानुप्रयोगेण दर्श्येते' ति शङ्कापरिहाराय पूर्वस्मादुत्तरत्र वैलक्षण्यं प्रयोगे दर्शयितुम्। अयञ्चानुप्रयोगघटितः समुच्चये प्रयोगः केवलसमुच्चयपरो न स्वरसः। तथासति, इत्यभ्यवहरतीत्यस्य वैयर्थ्यापत्तेः। न च नेष्यत एव प्रयोग इति शक्यमपलपितुम्; लोके दर्शनात्; **काशिकायां** दर्शितत्वाच्च। तर्हि द्विर्वचनं प्राप्नोतीति चेत्—किमन्यस्य क्रियासमभिहारज्ञापकस्याभावात् तदापद्यते, उत तद्विधायकवचनप्रवृत्तेरव्याहतत्वात्। नाद्यः—केवलसमुच्चयपरत्वे, इत्यभ्यवहरतीत्यस्य वैयर्थ्यात् इतीत्यस्यैव क्रियासमभिहारज्ञापकत्वात्। पचपचेति पचतीत्यत्रापि विनिगमनाविरहात् सर्वस्यैव तज्ज्ञापकत्वम्। 'संभेदे नान्यतरवैयर्थ्य' मिति न्यायेन वचनबलात् सर्वं ज्ञापकमुक्तम्। इह त्वन्याभावात् इतिशब्द एव तावत्कार्यकर इति। नान्त्यः, 'क्रियासमभिहारे द्वे वाच्ये' इति वार्तिकस्य क्रियासमभिहारसूत्रमात्रविषयकत्वस्येष्टत्वात्। अन्यथा पापच्यत इति यङन्तेऽपि द्विर्भावः स्यात्। अप्रयोगान्नैवमिति चेत्—इहाप्यप्रयोगादेवासमुच्चितक्रियासमभिहारमात्रविषयकत्वं वार्तिकस्य। तथैव भाष्येष्टचवधारणात्। अत एव **कल्पतरौ**, जायस्व म्रियस्वेत्यत्र पौनःपुन्यबोधो वर्णितो जिज्ञासासूत्रे। विवृतञ्च **परिमले** समुच्चयसूत्रे क्रियासमभिहारपदस्यानुषङ्गमादृत्य। अत एव **मल्लिनाथेन**, 'पुरोमवस्कन्दे' ति नैषधीयश्लोके पौनःपुन्यमपि इतो लभ्यमानं दर्शितम्। यद्यपि व्याकरणग्रन्थे व्याख्यातार एवं न वर्णयन्ति; प्रत्युत खण्डयन्ति—यद्यपि चैभिरपि भाष्यकारैः, "न तृतीये तथोपलब्धेः" इति **सूत्रभावप्रकाशिकायां** वैयाकरणपथेन समुच्चयमात्रपरतयेव तत् सूत्रं योजयद्भिः तदनुरूप एव श्रुत्यर्थोऽदर्शि; असकृदावर्तीनीति पदादेव तत्र पौनःपुन्यलाभात्—अथापि बहुसंमतोऽय-

**तेषां यदा तत् पर्यवैति, अथेममेवाकाशमभिनिष्पद्यन्ते, आकाशाद्वायुम्,**

---

'क्रियासमभिव्याहारे लोट्। लोटो हि स्वौ वा च तध्वमोः' इति स्वादेशः। प्यैङ् वृद्धौ; क्षि क्षये। अपक्षीणान् पुनराप्याययन्ति; आप्यायितानाञ्च भक्षणेन क्षय कुर्वन्ति। एवं देवाः चन्द्रलोकस्थान् उपकरणभूतान् कर्मिणः पुनःपुनर्विश्रामयन्तः स्वस्वभोगोपकरणभूतान् कुर्वन्तीत्यर्थः। तेषां चन्द्रलोकगतानां कर्मिणां भक्षणं नाम स्वस्वभोगोपकरणीकरणमेव। सूत्रितञ्च, "भाक्तं वाऽनात्मवित्त्वात् तथा हि दर्शयती"ति। भगवता **भाष्यकृता**ऽपि, "जीवस्य देवानां भोगोपकरणत्वाभिप्रायमन्नत्वेन भक्ष्यत्ववचनम्। अतः तद् भाक्तम्। तेन तृप्तिरेव च देवानां भक्षणमिति श्रूयते, 'न ह वै देवा अश्नन्ति न पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ती'ति" इति भाषितम्। अतो नृत्तगीतादिप्रदर्शनेन आजानसिद्धदेवोपकरणत्वमेव तद्भक्ष्यत्वमिति भावः।

**तेषां यदा तत् पर्यवैति।** **तेषां** कर्मिणां **तत्** भोगसाधनभूतं कर्म यदा **पर्यवैति** परिगच्छति, परिक्षीयत इत्यर्थः। **अथेममेवाकाशमभिनिष्पद्यन्ते।** **अथ** तदा, यथा सुवर्णपिण्डः अत्यन्तानलसंयोगात् प्रलीयते, एवं कर्मक्षये कर्मिणः प्रलीनास्सन्तः सूक्ष्मा आकाशसदृशा इव भवन्तीत्यर्थः। सूत्रितञ्च, "तत्स्वाभाव्यापत्तिरुपपत्तेः" इति। **भाष्ये** च "तदापत्तिवचनं तत्संसर्गकृततत्सादृश्याभिप्रायम्" इति भाषितम्। **आकाशाद्वायुम्।** **अभिनिष्पद्यन्त** इति शेषः। अत्रापि, अवरोहतां कर्मिणां पूर्वसिद्धवायुभावासंभवात्

---

मपि पन्था नोपेक्ष्यः इत्याशयेनैव छान्दोग्ये इह चैवमर्थो वर्णितः। तदनुरुध्यास्माभिरत्र पक्षे एवमुपपत्तिपरिशीलनं कृतमिति। एवंसत्येवेह आप्यायनादौ पौनःपुन्यलाभः। प्रकारान्तरेणात्र तदलाभात्। अत एवात्र **शाङ्करे**, 'आप्याय्याप्याय्य चमसस्थं भक्षणेनापक्षयं च कृत्वा पुनःपुनर्भक्षयन्ती'ति भाषितमिति।

अत्र भाष्ये **क्रियासमभिहार** इत्यादिकथनं समुच्चयसूत्रे सर्वानुवृत्तिसद्भावप्रदर्शनाय; न पुनः प्रथमसूत्रेण इह लोडिति ज्ञापनायेति ध्येयम्। काममस्तु, यदि कथञ्चित् प्रथमसूत्रेणैव शक्यते निर्वोढुम्।

**अप्यायस्वापक्षीयस्वेत्यत्र** श्रुतौ अनुप्रयोगविचारश्च छान्दोग्यपरिष्कार एव द्रष्टव्यः।

**वायोर्वृष्टिम्, वृष्टेः पृथिवीम्, ते पृथिवीं प्राप्यान्नं भवन्ति। ते पुनः पुरुषाग्नौ हूयन्ते; ततो योषाग्नौ जायन्ते। ते लोकान् प्रत्युत्थायिनः। त एवमेवानुपरिवर्तन्ते।**

**अथ य एतौ पन्थानौ विदुः, ते कीटाः पतङ्गा यदिदं दन्दशूकम् ॥ १६**

॥ इति अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥

---

वायुसादृश्यमेवार्थः । **वायोर्वृष्टिम्** । **अभिनिष्पद्यन्त** इत्यनुषङ्गः । **वृष्टेः पृथिवीम्** । पूर्ववत् । **ते पृथिवीं प्राप्यान्नं भवन्ति** । ओषधिवनस्पति-माषादिभक्ष्यसंसर्गिणो भवन्तीत्यर्थः। **ते — हूयन्ते**। ते **पुनः** पूर्ववदेव पुरुषाग्नौ हूयन्ते इत्यर्थः। **ततो योषाग्नौ** [ [1] **हूयन्ते** इत्यनुषङ्गः । ततः ] **जायन्ते**। ततः परं यौषाग्नौ [ हु[1]ताभिः ] रेतोरूपाभिराहुतिभिः पुरुषरूपा जायन्त इत्यर्थः। **ते लोकान् प्रत्युत्थायिनः** । ते पुरुषाः पुण्यलोकान् प्रति **उत्थायिनः** यात्रा-शीला भवन्तीत्यर्थः। **त एवमेवानुपरिवर्तन्ते** । **ते** एते केवलकर्मिणः इत्थं गतागते कुर्वन्तीत्यर्थः ।

एतावता पञ्चमतृतीय(द्वितीय ?)प्रश्नयोरुत्तरमुक्तं भवति ।

**अथ य एतौ पन्थानौ न विदुः ते कीटाः पतङ्गा यदिदं दन्द-शूकम्** । अथेत्यर्थान्तरोपक्रमे । ये प्राणिनः **एतौ पन्थानौ** देवपितृयाणमार्गद्वयं न जानन्ति, विद्याकर्मभ्रष्टतया मार्गद्वयानधिकारिण इत्यर्थः। **ते** कीटपक्षिदंश-मशकादिरूपेण पुनःपुनर्भवन्ति । अत्रैव लोके परिभ्रमन्तीति यावत् । एतेन, 'वेत्थो यथाऽसौ लोक एवं बहुभिः पुनःपुनः प्रयद्भिर्न संपूर्यते' इति तृतीयप्रश्न-स्योत्तरमुक्तम् । 'पितृलोकाच्चन्द्र' मित्यनेन गन्तव्यदेशविषयकप्रथमप्रश्नस्योत्तरमुक्तं भवति । 'अथेममेवाकाशमभिनिष्पद्यन्ते' इत्यादिना, 'वेत्थो यथेमं लोकं पुनरापद्यन्ते' इति पुनरागमनप्रकारविषयकद्वितीयप्रश्नस्योत्तरमुक्तं भवति । 'वेत्थो देवयानस्य पथः प्रतिपदं पितृयाणस्य वे' ति देवयानपितृयाणव्यावर्तकभेदविष-यकपञ्चमप्रश्नस्य, 'तेऽर्चिरभिसंभवन्ति', 'ते धूममभिसंभवन्ती' ति ग्रन्थसन्दर्भा-भ्यामुत्तरमुक्तं भवति ॥ १६ ॥ ८—२.

1. कुण्डलितं क. कोशे ।

## ८—३.

**स यः कामयेत महत् प्राप्नुयामिति, उदगयन आपूर्यमाणपक्षस्य पुण्याहे द्वादशाहमुपसद्व्रती भूत्वौदुम्बरे कँसे चमसे वा सर्वौषधं फलानीति संभृत्य, परिसमूह्य परिलिप्याग्निमुपसमाधाय परिस्तीर्याऽऽवृताऽऽज्यँ**

---

एवं ज्ञानकर्मणोर्गतिरुक्ता। तत्र कर्मसाधनं वित्तं महत्त्वसाध्यमिति वित्तार्जनोपायभूतमहत्त्वप्राप्तये मन्थाख्यं कर्मारभ्यते **स यः कामयेत महत् प्राप्नुयामिति — जुहोति**। 'अहं महान् स्या' मिति य आत्मनो **महत्** महत्त्वं कामयेत(यते), स उदगयने **आपूर्यमाणपक्षस्य** पूर्वपक्षस्य **पुण्याहे** कस्मिंश्चिद्दिने द्वादशाहम् **उपसद्व्रती** उपसत्सु यत् प्रसिद्धं व्रतं पयोमात्रभक्षणात्मकम्, तद्व्रतवान् भूत्वा, **औदुम्बरे कंसे चमसे वा** उदुम्बरनिर्मिते कंसाकारे चमसाकारे वा पात्रे **सर्वौषधं फलानीति संभृत्य** सर्वौषधिसमूहं फलानि च, अन्यदपि यद्यत् संभरणीयम् तत् सर्वं संभृत्य, **परिसमूह्य परिलिप्याग्निमुपसमाधाय परिस्तीर्य** — परिसमूहनपरिलेपने भूमिसंस्कारः — **अग्निमुपसमाधाय** स्मार्तमग्निं पुरतः संस्थाप्य दर्भैः परिस्तीर्य, **आवृता आज्यं संस्कृत्य**,—**आवृता**

---

मन्थाख्यं कर्म श्रेष्ठप्राणविद्यानन्तरं संक्षिप्योक्तं छान्दोग्ये। इह तत् विस्तरेण वर्ण्यते **स यः काम**येतेत्यादिना। बृहदारण्यकोपक्रमस्याध्यायद्वयस्येव एतद्भागस्यापि ब्रह्मविद्योपयोगित्वातिशयाभावात् एतद्घटकमन्त्रांशार्थविवरणादिकमुपेक्ष्य अविस्तरेणार्थो भाषित इति ध्येयम्।

**मन्थाख्यं कर्मे**ति। इदमपि कर्म प्राणसंबन्ध्येव। अत एव छान्दोग्य इव वाजसनेयकेऽपि माध्यन्दिनशाखायां ज्येष्ठश्रेष्ठप्राणोपासनसमनन्तरमेव मन्थकर्मपाठः; न त्विह काण्व इव पञ्चाग्निविद्याव्यवधानेन। प्राणोपासनात् प्रागेव पञ्चाग्निविद्या माध्यन्दिने पठितेति। एवं प्राणसंबन्धित्वादेव, छान्दोग्ये, ज्येष्ठाय श्रेष्ठाय स्वाहेति समुच्चित्य, अत्र, ज्येष्ठाय स्वाहा, श्रेष्ठाय स्वाहा, प्राणाय स्वाहे' ति पृथक् मन्त्रे प्राणपरपदघटना होमे प्राणस्योद्देश्यतासिद्धये। एवमत्र वागादिभिः प्राणे समर्पितवसिष्ठत्वादिग्रहणेनापि होमो वर्ण्यते। तत्र वसिष्ठात्वप्रतिष्ठात्वादीनां प्राणरूपैकवस्तुनिष्ठत्वज्ञप्तये, 'वाचे स्वाहा, वसिष्ठायै स्वाहे'त्येवमसंमेल्य, 'प्राणाय स्वाहा वसिष्ठायै स्वाहा' 'वाचे स्वाहा प्रतिष्ठायै स्वाहे'त्येवंरीत्या विचित्रघटनेति। छान्दोग्यापेक्षया अत्र होमा अधिका विहिताः। माध्यन्दिने त्वधिकतराः।

सँस्कृत्य, पुंसा नक्षत्रेण मन्थँ संनीय, जुहोति —

यावन्तो देवास्त्वयि जातवेद-
स्तिर्यञ्चो घ्नन्ति पुरुषस्य कामान्।
तेभ्योऽहं भागधेयं जुहोमि
ते मा तृप्तास्सर्वैः कामैस्तर्पयन्तु स्वाहा ;
या तिरश्ची निपद्यतेऽहं विधरणी इति।
तां त्वा घृतस्य धारया यजे सँराधनीमहँ स्वाहा ॥ १ ;

ज्येष्ठाय स्वाहा ; श्रेष्ठाय स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति।

प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति। वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति। चक्षुषे स्वाहा संपदे स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति। श्रोत्राय स्वाहाऽऽयतनाय स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति। मनसे स्वाहा प्रजात्यै स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति।

रेतसे स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति । २ । अग्नये स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति। सोमाय स्वाहेत्यग्नौ

---

स्मृत्युक्तपरिपाट्येत्यर्थः। 'आवृत् परिपाटिरनुक्रमः' इति ह्यमरः — **पुंसा नक्षत्रेण** — नक्षत्रेषु स्त्रीपुन्नपुंसकविभागो ज्योतिश्शास्त्रप्रसिद्धः। तत्र पुन्नक्षत्रं प्रशस्तम्। प्रशस्ते नक्षत्रे इति यावत् — **मन्थं** सर्वौषधरसपिष्टं (विशिष्टं) **संनीय जुहोति** अग्निसमीपं नीत्वा, **यावन्त** इत्यादिवक्ष्यमाणैश्चतुर्भिर्मन्त्रैराज्येन जुहोतीत्यर्थः॥ १॥ **इत्यग्नौ हुत्वा मन्थे संस्रवमवनयति**। अग्नेः पश्चात् स्थिते मन्थे हुतशिष्टं स्रुवावलिप्तमाज्यं निनयेदित्यर्थः। एवमग्रेऽपि।

इतः परं प्राणाय स्वाहेत्यादिमन्त्रैर्द्वाभ्यां द्वाभ्यां द्वे द्वे आहुती हुत्वा संस्रवस्य मन्थे निनयनम्, **प्राणायस्वाहा — प्रजात्यै स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति** ॥ २॥

इतःपरं रेतसे स्वाहेत्यादिभिरेकैकामाहुतिं हुत्वा मन्थे संस्रवनिनयनम् — **रेतसे**

---

**इत्यादिवक्ष्यमाणैरिति**। इत्युपक्रमेण वक्ष्यमाणैरित्यर्थः।

हुत्वा मन्थे सँस्रवमवनयति । भूः स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति । भुवः स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति । [1]स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति । भूर्भुवस्स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति । ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति । क्षत्राय स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति । भूताय स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति । भविष्यते स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति । विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति । सर्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति । प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति ॥ ३ ॥

अथैनमभिमृशति, भ्रमदसि ज्वलदसि पूर्णमसि प्रस्तब्धमस्येकसभ'मसि हिङ्कृतमसि हिंक्रियमाणमस्युद्गीथमसि उद्गीयमानमसि श्रावितमसि प्रत्याश्रावितमस्यार्द्रे संदीप्तमसि विभूरसि प्रभूरस्यन्नमसि ज्योतिरसि निधनमसि संवर्गोऽसीति ॥ ४ ॥

अथैनमुद्यच्छति, आमँस्यामँहितेमहि स हि राजेशानोऽधिपतिः स माँ राजेशानोऽधिपतिं करोत्विति ॥ ५ ॥

1. सुव. क, एवमुपर्यपि ।

---

स्वाहा — प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति ॥ ३ ॥

**अथैनमभिमृशति** । वक्ष्यमाणेन मन्त्रेणेति शेषः । अभिमर्शनमन्त्रमाह — **भ्रमदसीत्यादिना** ॥ ४ ॥

**अथैनमुद्यच्छति** । भक्षणार्थं वक्ष्यमाणमन्त्रेण मन्थं हस्तेनोद्गृह्णातीत्यर्थः । मन्त्रमेवाह **आमंस्यामं हीति** ॥ ५ ॥

---

**उद्यच्छति आममिति** । एवंरूपो मन्त्रविशेष छान्दोग्ये, 'अञ्जलौ मन्थमादाय जपती' ति विहितः । तन्मन्त्रार्थविमर्शश्च तत्रैव द्रष्टव्यः । तत्र, 'अमोनामास्यमा हि ते' इति श्रूयते । माध्यन्दिने, 'आमोसि आमं हि ते मयो' ति । अत्र आमंसीत्यादि । सर्वमिदं समानार्थं स्वीकर्तुं साम्प्रतम्, यदि संभवति । अत्र आमंसि, आमं हि, ते, महि इतिच्छेदः, '**ते तव महि** महत्त्वं **त्वमामंसि** समन्तात् जानासि । वयं तु **आमंहि** ईषदेव जानीमः' इत्येतदर्थश्च माध्वीयेऽप्यानन्दगिरीय इव ! अस्तु यथाकथमपि । सर्वथा प्राणस्तवनमेवेहापि ।

अथैनमाचामति, तत् सवितुर्वरेण्यम्, मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः माध्वीर्नः सन्त्वोषधीर्भूःस्वाहा । भर्गो देवस्य धीमहि, मधुनक्तमुतोषसो मधुमत् पार्थिवँ रजः मधु द्यौरस्तु नः पिता, भुवः स्वाहा । धियो यो नः प्रचोदयात्, मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः माध्वीर्गावो भवन्तु नः, स्वः स्वाहेति ।

सर्वाञ्च सावित्रीमन्वाह सर्वाश्च मधुमतीः [सर्वाश्च व्याहृतीः], अहमेवेदँ सर्वं भूयासम्, भूर्भुवस्स्वः स्वाहेत्यन्तत आचम्य पाणी प्रक्षाल्य जघनेनाग्निं प्राक्छिराः संविशति ।

प्रातरादित्यमुपतिष्ठते, दिशामेकपुण्डरीकमस्यहं मनुष्याणामेकपुण्डरीकं भूयासमिति । यथेतमेत्य जघनेनाग्निमासीनो वँशं जपति ॥ ६

---

**अथैनमाचामति** । गायत्रीप्रथमपादः, प्रथममधुमती, प्रथमव्याहृतिश्चेति स्वाहान्तः प्रथममन्त्रः । द्वितीयैरेतैर्द्वितीयः । तृतीयैः तृतीयः । एवं वक्ष्यमाणैर्मन्त्रैस्त्रिभिस्त्रिर्भक्षयतीत्यर्थः । **सर्वाञ्च सावित्रीमन्वाह — प्रक्षाल्य** । गायत्रीपादत्रयम्, मधुमतीत्रयम्, अहमेवेदं सर्वं भूयासमिति मन्त्रः, व्याहृतित्रयञ्चेति चतुर्थमन्त्रेणावशिष्टं सर्वमाचम्य पाणी प्रक्षाल्येत्यर्थः । **जघनेनाग्निं प्राक्छिराः संविशति** । **जघनेनाग्निम्** अग्नेः पश्चात् प्राक्छिराश्शयीतेत्यर्थः । **प्रातरादित्यमुपतिष्ठते** । प्रातःसन्ध्यामुपास्य वक्ष्यमाणेन, दिशामेकपुण्डरीकमिति मन्त्रेणादित्यमुपस्थाय (उपतिष्ठते) इत्यर्थः । **यथेतमेत्य जघनेनाग्निमासीनो वँशं जपति** । यथागतमागत्य, अग्नेः पश्चादासीनो वंशब्राह्मणं जपेदित्यर्थः ॥ ६ ॥

---

तत् सवितुरिति । छान्दोग्ये मधुमतीमन्त्रादयो न । सावित्रीमन्त्रोऽपि न गायत्रीरूपः; किन्तु अन्यः अनुष्टुप्छन्दस्क एक एवाचमनार्थम् । **संविशतीति** । शयानस्य स्वप्नानुरूपं फलमिति च दर्शितं छान्दोग्ये । उपस्थान—वंशजपादिकमत्राधिकम् । अत्र जपोपयोगि वंशब्राह्मणमेव बृहदारण्यकान्ते प्रदर्श्यत इति स्यात् । एतदुपदेष्टृवंशपरं वा स्यादिदम् ।

तँ हैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वोवाच — अपि य एनँ शुष्के स्थाणौ निषिञ्चेत्, जायेरञ्छाखाः, प्ररोहेयुः पलाशानीति ॥ ७ ॥

एतमु हैव वाजसनेयो याज्ञवल्क्यो मधुकाय पैङ्ग्यायान्तेवासिन उक्त्वोवाच — अपि य एनँ शुष्के स्थाणौ निषिञ्चेत्, जायेरञ्छाखाः, प्ररोहेयुः पलाशानीति ॥ ८ ॥

एतमु हैव मधुकः पैङ्ग्यश्चूलाय भागवित्तयेऽन्तेवासिन उक्त्वोवाच – अपि य एनँ शुष्के स्थाणौ निषिञ्चेत्, जायेरन् शाखाः, प्ररोहेयुः पलाशानीति ॥ ९ ॥

एतमु हैव चूलो भागवित्तिर्जानकय आयस्थूणायान्तेवासिन उक्त्वोवाच — अपि य एनँ शुष्के स्थाणौ निषिञ्चेत्, जायेरन् शाखाः, प्ररोहेयुः पलाशानीति ॥ १० ॥

एतमु हैव जानकिरायस्थूणः सत्यकामाय जाबालायान्तेवासिने उक्त्वोवाच — अपि य एनँ शुष्के स्थाणौ निषिञ्चेत्, जायेरञ्छाखाः, प्ररोहेयुः पलाशानीति ॥ ११ ॥

एतमु हैव सत्यकामो जाबालोऽन्तेवासिभ्य उक्त्वोवाच — अपि य एनँ शुष्के स्थाणौ निषिञ्चेत्, जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ।

---

**तं हैतमुद्दालक — उक्त्वोवाच ।** आरुणिः अरुणपुत्र उद्दालकः स्वशिष्याय वाजसनेयशाखाध्यायिने याज्ञवल्क्याय **तं हैतम्** उक्तं कर्मानुष्ठानप्रकारमुक्त्वा अन्यदप्युवाचेत्यर्थः । किं तदित्यत्राह **य एनं — पलाशानीति । एनं** संस्रवसंस्कृतं मन्थं शुष्के स्थाणौ यदि कश्चिन्निषिञ्चेत्, तस्य माहात्म्यात् शाखाश्च जायेरन्, पत्राणि च प्ररोहेयुरित्युक्तवानित्यर्थः ॥ ७ ॥

**एतमु हैव — पलाशानीति ।** सर्वं पूर्ववत् ।

---

देवरातसुतस्य याज्ञवल्क्यस्य वाजसनेयत्वं कथमित्यत्र तदर्थमाह **वाजसनेयशाखाध्यायिन** इति ।

**अन्तेवासिभ्य** इति । गोश्रुतिर्वैयाघ्रपद्य एकोऽन्तेवासी सत्यकामस्येह प्रकरणे

**तमेतं नापुत्राय वाऽनन्तेवासिने वा ब्रूयात् ॥ १२ ॥**

**चतुरौदुम्बरो भवति, औदुम्बरः स्रुव औदुम्बरश्चमस औदुम्बर इध्म औदुम्बर्यावुपमन्थन्यौ । दश ग्राम्याणि धान्यानि भवन्ति, व्रीहियवास्तिलमाषा अणुप्रियङ्गवो गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्च । तान् पिष्ट्वा दधनि मधुनि घृत उपसिञ्चति । आज्यस्य जुहोति ॥ १३ ॥**

इति अष्टमाध्याये तृतीयं ब्राह्मणम् ॥

---

**तदेतत्** (तमेतं?) **नापुत्राय नानन्तेवासिने वा ब्रूयात्** । एवं शिष्यपरम्परया प्राप्तमेतत् कर्म पुत्रशिष्यव्यतिरिक्ते नोपदिशेदित्यर्थः ॥ १२ ॥

**चतुरौदुम्बरो भवती**त्युक्तम् । तदेवौदुम्बरचातुर्विध्यं दर्शयति **औदुम्बरः स्रुवः** — । दश ग्राम्याणि धान्यानीत्युक्तान्येव गणयति **व्रीहियवाः** — । **खलकुलाः** कुलुत्था इत्यर्थः । **तान् पिष्ट्वा दधनि मधुनि घृते उपसिञ्चत्याज्यस्य जुहोति** । दधिमधुघृतैरुपसिच्य पेषणं कृत्वा, आज्येन जुहोतीत्यर्थः ॥ १३ ॥ ८—३ ॥

---

छान्दोग्यादवगम्यते । उपकोसलविद्यायां तु तत्र उपकोसलोऽपि स कामलायनः । अत्र छान्दोग्ये उद्दालकयाज्ञवल्क्यादयो नोक्ताः; किं तु 'तद्धैतत् सत्यकामो जाबालो गोश्रुतये वैयाघ्रपद्यायोक्त्वोवाच' इति एतदन्तेवासिपरम्परान्तर्निविष्टः सत्यकामः परम् । तत्रापि न मन्थकर्मानुष्ठानं प्रदर्श्य तदुक्तम्; किंतु ततोऽव्यवहितप्राङ्निरूपितप्राणोपासनावसाने । प्राणोपासनमिव मन्थकर्मापि प्राणसंबन्धीति प्रागेवोक्तम् । अतः सर्वविषयमेतत् प्रशंसनम् । प्राणोपासननिष्ठैनैव मन्थकर्माप्यन्तेऽनुष्ठेयमिति वाऽस्तु; स्वरसंसिद्धं पार्थक्यं वा । उभयोपदेशेनाभयसंबन्धिप्रशंसावर्णनं तु भवत्येवेति । अत एवोक्तं प्राणदर्शनसमुच्चयेन शाङ्करे, 'सप्राणदर्शनस्य मन्थविज्ञानस्याधिगमे द्वे तीर्थे अनुज्ञायेते पुत्रश्चान्तेवासी चे'ति । द्वे तीर्थे इत्यस्य, 'नापुत्राय वाऽनन्तेवासिने वे'ति पुत्रान्तेवासिमात्रकीर्तनात् शिष्यः, श्रोत्रियः, मेधावी, धनदायी, प्रियः पुत्रः, विद्यया विद्यादातेति षट्सु तीर्थेषु विद्यासंप्रदानभूतेषु द्वे एवेहानुमते इत्यर्थः । तत्र प्राणविद्यासंदर्भे एतत्प्रशंसावर्णनात्, 'स्थाणवे ब्रूयात्' इत्युक्तम्; इह तु मन्थविषयानुरूपम्, 'स्थाणौ निषिञ्चेत्' इति । अप्राणेऽपि प्राणोद्भव इति प्राणमाहात्म्यमुभयतोऽप्यविशिष्टम् ।

८—४.

एषां भूतानां पृथिवी रसः, पृथिव्या आपोऽपामोषधय ओषधीनां पुष्पाणि, पुष्पाणां फलानि, फलानां पुरुषः, पुरुषस्य रेतः ॥ १ ॥

स ह प्रजापतिरीक्षाञ्चक्रे हन्तास्मै प्रतिष्ठां कल्पयानीति । स स्त्रियँ ससृजे । ताँ सृष्ट्वाऽध उपास्त । तस्मात् स्त्रियमध उपासते । स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत् । तेनैनामभ्यसृजत् ॥ २ ॥

तस्या वेदिरुपस्थो लोमानि बर्हिश्चर्माधिषवणे समिद्धो मद्ध्यतःस्थौ[1]

1. मध्यतस्तौ. शां. मा.

---

आत्मनश्च पितुश्च लोक्यत्वविशिष्टपुत्रोत्पादकं कर्म वक्तुं ब्राह्मणमारभ्यते **एषां वै भूतानां पृथिवी — रेतः** । स्पष्टोऽर्थः ॥ १ ॥

**स ह प्रजापतिरीक्षाञ्चक्रे —** । **अस्मै** रेतसे इत्यर्थः । **अध उपास्त** । मैथुनाख्यमधउपासनं कृतवानित्यर्थः । **तस्मात् स्त्रियमध उपासते** । अद्यापीति शेषः । मिथुनीकरणस्य वाजपेयफलावाप्तये वाजपेयसंपत्तिं दर्शयति **स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत्** । काठिन्यसामान्यात् **ग्रावा** पुलिङ्गमित्यर्थः । आत्मनः पुलिङ्गं स्त्रीव्यञ्जनं प्रति प्रागग्रं **समुदपारयत्** उत्पूरितवान् । **तेनैनामभ्यसृजत्** । तेन लिङ्गेन **एनां** स्त्रियमभि संसर्गं कृतवानित्यर्थः ॥ २ ॥

**तस्या वेदिरुपस्थो लोमानि — मुष्कौ** । चर्म **अधिषवणे** अधिषवणफलके । चर्मण्यधिषवणफलकदृष्टिः कर्तव्येत्यर्थः । **मध्यतःस्थौ** योनि-

---

एवं प्राणविषयेणोपासनेन मन्थकर्मणा च ज्यैष्ठ्यश्रैष्ठ्यादिकं महत्त्वं च स्वस्य स्वप्रयाससंपाद्यमुक्तम् । अथ पितुरल्पायासेन पुत्रस्य भवन्नतिशयो वर्ण्यते चतुर्थब्राह्मणे ।

**आत्मनश्च पितुश्च लोक्यत्वेति** । अत्र गुणातिशयविशिष्टपुत्रोत्पादकव्यापारविशेषाः, जाते कर्तव्याश्च व्यापाराः कथ्यन्ते । तथाविधश्च स पुत्रः स्वात्मनः स्वपितुश्च लोक्यः = उत्कृष्टफलसंपादको भवति । अत उभयं प्रति लोक्यत्वेन विशिष्टस्य पुत्रस्योत्पादकमिदं कर्मेति ।

**स ह प्रजापतिरिति** । एवंभूतरेतस्स्रष्टा प्रजापतिरित्यर्थः । **चर्माधिषवणे समिद्धो**

मुष्कौ । स यावान् ह वै वाजपेयेन यजमानस्य लोको भवति, तावानस्य लोको भवति, य एवं विद्वानधोपहासं चरति; आसाँ [स] स्त्रीणाँ सुकृतं वृङ्क्ते। अथ य इदमविद्वानधोपहासं चरति, अस्य स्त्रियः सुकृतं वृञ्जते ॥ ३ ॥

एतद्ध स्म वै तद् विद्वानुद्दालक आरुणिराह, एतद्ध स्म वै तद् विद्वान्नाको मौद्गल्य आह, एतद्ध स्म वै तद् विद्वान् कुमारहारित आह — 'बहवो मर्या ब्राह्मणायना निरिन्द्रिया विसुकृतोऽस्माल्लोकात् प्रयन्ति, य इदमविद्वाँसोऽधोपहासं चरन्ती' ति ।

---

मध्यस्थौ **मुष्कौ** वृषणौ समिद्धः अग्निः । तयोरग्निदृष्टिरित्यर्थः । शिष्टं स्पष्टम् । **स यावान् ह वै — चरति** । एवं वाजपेयसंपत्तिं विद्वान् **अधोपहासं** मैथुनं **यश्चरति** अनुतिष्ठति, तस्य वाजपेयेन यावान् लोकः, तावान् लोको भवतीत्यर्थः । **आसां — वृङ्क्ते** । सः **आसां** स्त्रीणां सुकृतं **वृङ्क्ते** आवर्जयतीत्यर्थः । **अथ य इदमविद्वान् — वृञ्जते** । वाजपेयप्रकारानभिज्ञस्य सुकृतं स्त्रिय एव प्राप्नुवन्तीत्यर्थः ॥ ३ ॥

**एतद्ध स्म वै — आह** । एतदभिज्ञा उद्दालकादयः त्रयः वक्ष्यमाणप्रकारेण आहुरित्यर्थः । **बहवो मर्याः — चरन्ति** । ये इदमविद्वांसः एतत्प्रकारानभिज्ञाः **अधोपहासं चरन्ति** मिथुनकर्माचरन्ति, ते **मर्याः** मरणधर्माणः **ब्राह्मणायनाः** ब्राह्मणाः अयनं येषां ते — ब्राह्मणजातिमात्रोपजीविन इति यावत् — **निरिन्द्रियाः** निर्वीर्याः ज्ञानकर्मबलहीनाः **विसुकृतः** सुकृतशून्याः **बहवः** बहुविधाः एवम्भूतास्सन्तः अस्माल्लोकात् प्रयन्तीत्यर्थः । इतिआहेति त्रिषु पूर्ववत्तान्वयः ॥

---

**मध्यतःस्थावि**त्यत्र शाङ्करे पाठो व्याख्या चान्यथा । **समिद्ध**पदमग्निपरं १२. कण्डिकायामपि प्रयुज्यते । **अधोपहास**मिति अधःस्थस्येन्द्रियस्यापहसनमित्यर्थकं सत् मैथुनमिति पर्यवस्येत् । १२. कण्डिकायामिव उपहासपदमेव वाऽस्तु । तदा संधिविकारश्छान्दसः । वाजपेयदृष्टिविकलग्राम्यसंगमनिन्दा क्रियते **अथ य इद**मित्यादिना ।

बहु वा इदँ सुप्तस्य वा जाग्रतो वा रेतः स्कन्दति ॥ ४ ॥ तदभिमृशेदनु वा मन्त्रयेत, 'यन्मेऽद्य रेतः पृथिवीमस्कान्त्सीत् यदोषधीरप्यसरत् यदप इदमहं तद्रेत आददे पुनर्मामैत्विन्द्रियं पुनस्तेजः पुनर्भगः पुनरग्निर्धिष्ण्या यथास्थानं कल्पन्ता'मित्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ वा निमृज्या(ञ्ज्या)त् ॥ ५ ॥

अथ यद्युदक आत्मानं परिपश्येत्, तदभिमन्त्रयेत, 'मयि तेज इन्द्रियं यशो द्रविणँ सुकृत'मिति ।

श्रीर्ह वा एषा स्त्रीणाम्, यन्मलोद्वासाः । तस्मान्मलोद्वाससं यशस्विनी-

---

**बहु वा इदं सुप्तस्य वा जाग्रतो वा रेतः स्कन्दति** । वैशब्दोऽवधारणे । एतद्विद्यानिष्ठस्य बहु जाग्रत्स्वप्नयोः रेतः स्कन्देद्यदीत्यर्थः । **तदभिमृशेदनु वा मन्त्रयेत** । तस्य रेतसोऽभिमर्शनं वा अनुमन्त्रणं वा वक्ष्यमाणमन्त्राभ्यां कुर्यादित्यर्थः । **यन्मेऽद्य रेतः पृथिवी**मित्यादिर्मन्त्र एकः । **पुनर्मामैत्वि**त्यादिर्द्वितीयोऽनुमन्त्रणे । **इत्यनामिकाङ्गुष्ठाभ्यामादाय** — । अभिमर्शनपक्षे **आददे** इत्यन्तेन मन्त्रेणानामिकाङ्गुष्ठाभ्यां तद्रेतो गृहीत्वा, **पुनर्मा**मिति मन्त्रेण स्तनमध्ये भ्रूमध्ये वा निर्मृज्यादित्यर्थः ॥ ५ ॥

**अथ यद्युदक आत्मानं** — । यद्ययं विद्वानुदके आत्मप्रतिबिम्बं पश्येत्, तदा **मयि तेज** इति मन्त्रेणाभिमन्त्रयेतेत्यर्थः ।

**श्रीर्ह वा एषा स्त्रीणाम्, यन्मलोद्वासाः** । स्त्रीणां मध्ये या मलोद्वासाः रजस्वला, सा श्रीः उत्कृष्टेत्यर्थः । **तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत** । **यशस्विनीम्** । स्त्रीणामृतुप्राप्तिरेव यशः । तादृशयशोयुक्तां

---

श्रीरिति । **स्त्रीणा**मिति बहुवचनं **मलोद्वासा** इति एकवचनञ्चानुरुध्य एवं व्याख्यातम् । अन्यथा मलोद्वासस्त्वं स्त्रियः संपदित्यपि व्याख्येयं भवेत् ।

**मलोद्वासा** इति । 'मलवद्वाससा न संवदेत' इत्यत्रेव नात्र रजोदर्शनावस्थाविशिष्टत्वविवक्षा । किंतु रजोदर्शनयोग्यस्त्रीमात्रविवक्षा । तदभावे पुत्रोत्पादनप्रसक्त्यभावात् तदुक्तिः । ऋतुमतीमिति यावत् । षोडशदिनानि ऋतुकालः । तत्र त्रिरात्रान्ते आप्लुता इह विवक्षिता । अत एव मलवद्वाससमित्यनुक्त्वा **मलोद्वासस**मिति तत्त उद्गमोक्तिः ।

मभिक्रम्योपमन्त्रयेत ॥ ६ ॥ सा चेदस्मै न दद्यात्, काममेनामव-क्रीणीयात्, सा चेदस्मै नैव दद्यात्, काममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेत्, 'इन्द्रियेण ते यशसा यश आदद' इति; अयशा एव भवति ॥ ७ ॥ सा चेदस्मै दद्यात्,—'इन्द्रियेण ते यशसा यश आदधामी' ति; यशस्विनावेव भवतः ॥ ८ ॥

स यामिच्छेत्, कामयेत मेति,— तस्यामर्थं निष्ठाय मुखेन मुखँ सन्धायोपस्थमस्या अभिमृश्य जपेत्,

'अङ्गादङ्गात् संभवसि हृदयादधि जायसे।

स त्वमङ्गकषायोऽसि दिग्धविद्धामिव मादयेमाममूं मयी'ति ॥ ९ ॥

अथ यामिच्छेत्, 'न गर्भं दधीते'ति, तस्यामर्थं निष्ठाय मुखेन मुखँ सन्धायाभिप्राण्यापान्यात्, 'इन्द्रियेण ते रेतसा रेत आदद' इति; अरेता एव भवति ॥ १० ॥

---

मन्त्रोद्गाससमभिक्रम्य एत्य, आवाभ्यां पुत्र उत्पादयितव्य इत्युपमन्त्रयेतेत्यर्थः ॥ ६ ॥ **सा चेदस्मै न दद्यात्, काममेनामवक्रीणीयात्।** उपमन्त्रिताऽपि सा यदि वाञ्छितं न दद्यात्, तदैनामाभरणादिना वशीकुर्यादित्यर्थः। **सा चेदस्मै नैव दद्यात्—भवति।** आभरणादिनाऽप्यवशीकृतां दण्डेन हस्तेन वा पीडयित्वा, 'इन्द्रियेण ते—' इति मन्त्रेणातिक्रम्य गच्छेत्। सा च तदाप्रभृति अयशाः अरजस्का भवतीत्यर्थः ॥ ७ ॥ **सा चेदस्मै दद्यात्—भवतः। आदद इति (आदधामीति?),** अनेन मन्त्रेण गच्छेदिति शेषः। यशस्विनावेव तौ दंपती संभवत इत्यर्थः ॥ ८ ॥

**स यामिच्छेत्—मयीति। सः** वाजपेयसंपत्तिप्रकारवित् **यां** स्वीयां स्त्रियं **मा** मामियं कामयेतेतीच्छेत्, **तस्यामर्थं निष्ठाय** तस्या योनौ प्रजननेन्द्रियं निक्षिप्येत्यर्थः। **मुखेन मुखं सन्धायेत्यादेः** स्पष्टोऽर्थः ॥ ९ ॥

**अथ यामिच्छेन्न गर्भं—भवति।** 'इयं गर्भिणी मा भू'दिति यामिच्छेदित्यर्थः। **अभिप्राण्यापान्यात्।** श्वासं गृहीत्वा[1] विसृजेदित्यर्थः। शिष्टं स्पष्टम् ॥ १० ॥

1. अपानं विसृजेत्. क. (आपान्यात् विसृजेत्?)

**अथ यामिच्छेत्, दधीतेति, तस्यामर्थं निष्ठाय मुखेन मुखँ सन्धायापान्याभिप्राण्यात्, 'इन्द्रियेण ते रेतसा रेत आदधामी' ति; गर्भिण्येव भवति ॥ ११ ॥**

**अथ यस्य जायायै जारः स्यात् - तञ्चेद् द्विष्यात्, आमपात्रेऽग्नि-मुपसमाधाय प्रतिलोमँ शरबर्हिः स्तीर्त्वा तस्मिन्नेताः शरभृष्टीः प्रतिलोमाः सर्पिषाऽक्ता जुहुयात् — मम समिद्धेऽहौषीः; प्राणापानौ त आददे; असाविति। मम समिद्धेऽहौषीः; पुत्रपशूँस्त आददे; असाविति। मम समिद्धेऽहौषीः; इष्टासुकृते त आददे; असाविति। मम समिद्धेऽहौषीः; आशापराकाशौ त आददे; असाविति। स वा एष निरिन्द्रियो विसुकृ[1]दस्माल्लोकात् प्रैति, यमेवं विद्वान् ब्राह्मणः शपति।**

1. विसुकृतोऽस्मात्. शां. भा.

---

**अथ यामिच्छेत् — गर्भिण्येव भवति। दधीतेति।** गर्भं दधीते-तीत्यर्थः। **तस्यामर्थं निष्ठायेत्यादि** सर्वं पूर्ववत्। अत्र अपाननानन्तरमभिप्राणनमिति विशेषः ॥ ११ ॥

**अथ यस्य जायायै जारः — असाविति।** यस्य जायायै उपपतिः स्यात्, **तञ्चेद् द्विष्यात्** अमुं हनिष्यामीति यदि मन्येत, तदा आमपात्रे अग्निमुपसमाधाय सर्वं कर्म प्रतिलोमं कृत्वा शरमयं बर्हिः **स्तीर्त्वा** आस्तीर्य तस्मिन्नग्नौ आज्येनाक्ताः **शरभृष्टीः** शरेषीकाः प्रतिलोमाः, 'मम समिद्ध' इत्यादि-मन्त्रैश्चतुर्भिर्जुहुयात्। अन्ते, 'असौ' इति शत्रोर्नाम गृह्णीयात्। **स वा एष निरिन्द्रियो विसुकृत् — शपति।** एवंवित् ब्राह्मणो यं शपति, स निरिन्द्रियः, **विसुकृत्** विसुकृतश्च सन् मृतो भवतीत्यर्थः।

**तस्मादेवँविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदुत ह्येवंवित् परो भवति ॥ १२ ॥**

**अथ यस्य जायामार्तवं विन्देत्, त्र्यहं कँसेन पिबेदहतवासाः, नैनां वृषलो न वृषल्युपहन्यात्, त्रिरात्रान्त आप्लुत्य व्रीहीनवघातयेत् ॥ १३ ॥**

---

**तस्मादेवंविच्छ्रोत्रियस्य दारेण — भवति । एवंविच्छ्रोत्रियस्य** एवंविदः श्रोत्रियस्येत्यर्थः । **उत ह्येवंवित् परो भवति ।** एवंवित् तस्मै शत्रुस्सन् अभिचरेदपीति भावः ॥ १२ ॥

**अथ यस्य जायामित्यादिग्रन्थः श्रीर्ह वा एषेत्यतः** पूर्वो द्रष्टव्यः ; सामर्थ्यात् । **वृषलः** शूद्रः । **नोपहन्यात्** न स्पृशेत् । **आप्लुत्य** स्नात्वा । **अहतवासा** इति व्यवहितेन संबन्धः । स्नाताञ्च तां वक्ष्यमाणस्थालीपाकार्थं व्रीह्यवघाते नियुञ्ज्यादित्यर्थः ॥ १३ ॥

---

**एवंविदि**त्यस्य ईदृशस्वमारणोपायज्ञानं श्रोत्रिये संभावितं विदन् इत्यर्थे तु पृथक्पदत्वम् । **पर** इत्यस्य शत्रुरित्यर्थः ।

अत्र क्रमेण प्रजापतिकल्पिता वाजपेयसंपत्तिः, प्रामादिकरेतस्स्कन्दने कर्तव्यम्, प्रतिबिम्बदर्शने कर्तव्यम्, रजस्वलोपमन्त्रणम्, निर्बध्य तद्वशीकरणम्, तन्मादनम्, अगर्भिणीकरणम्, जारनिकारकामकार्यमाभिचारिकञ्च द्वादशभिः कण्डिकाभिरुक्तानि ।

पूर्वं गर्भिणीकरणमात्रमुक्तम् । अथ त्रयोदशकण्डिकामारभ्य विशिष्टपुत्रोत्पिपादयिषायां कर्तव्यमुच्यते । तत्र एकवेदाध्यायिशुक्लपुत्रोत्पत्तये, वेदद्वयाध्यायिकपिलपिङ्गलपुत्रोत्पत्तये, वेदत्रयाध्यायिश्यामलोहिताक्षपुत्रोत्पत्तये, पण्डितदुहित्रुत्पत्तये, सुप्रसिद्धसभागामिश्राव्यव्याहारसर्ववेदाध्यायिपुत्रोत्पत्तये च कर्तव्यमुच्यते ; स्थालीपाकपूर्वकं प्राशनम्, गर्भाधानक्रमः, प्रसवकालकर्तव्यम्, जाते कर्तव्यञ्चेति ।

यस्य जायामित्यत्र यच्छब्दप्रतिसंबन्धी स इति तच्छब्दोऽध्याहार्यः **अवघातये**-

स य इच्छेत्, पुत्रो मे शुक्लो[1] जायेत वेदमनुब्रवीत सर्वमायुरियादिति, क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयाताम्। ईश्वरौ जनयितवै ॥ १४ ॥

अथ य इच्छेत्, पुत्रो मे कपिलः पिङ्गलो जायेत द्वौ वेदावनुब्रवीत सर्वमायुरियादिति, दध्योदनं पाचयित्वा सर्पिष्मन्तमश्नीयाताम् । ईश्वरौ जनयितवै ॥ १५ ॥

अथ य इच्छेत्, पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन् वेदामनुब्रवीत सर्वमायुरियादिति, उदौदनं पाचयित्वा सर्पिष्मन्तमश्नीयाताम् । ईश्वरौ जनयितवै ॥ १६ ॥

अथ य इच्छेत्, दुहिता मे पण्डिता जायेत सर्वमायुरियादिति,

1. शुक्लो गौरो. भा.

---

स य इच्छेत् पुत्रो मे शुक्लो जायेत — । ईश्वरौ जनयितवै । तौ दम्पती जनयितवै जनयितुम् ईश्वरौ समर्थावित्यर्थः । तुमर्थे यि(?) तवैप्रत्ययः ॥ १४ ॥

अथ य इच्छेत् पुत्रो मे कपिलः — । स्पष्टम् ॥ १५ ॥

अथ य इच्छेत् पुत्रो मे श्यामो लोहिताक्षो जायेत —। उदौदनम् उदकौदनम् । शुद्धौदनमित्यर्थः ॥ १६ ॥

अथ य इच्छेद् दुहिता मे पण्डिता जायेत — दुहितुः पाण्डित्यं

---

दित्यत्र कर्तृसमर्पकः । पिबेदित्यस्य जाया कर्त्री । जायामिति द्वितीया प्रथमार्थे । तस्या एव आप्लुत्येत्यत्र कर्तृत्वात् अवघातयेदित्यत्र ल्यबनन्वयात् अहतवासा इत्यनुषज्य, आप्लुत्य सा अहतवासाः स्यादित्यर्थ इष्टः । स्वस्थानेपि अहतवासा इत्यस्य अनिर्णिक्तवासाः अस्नाता स्यादित्यर्थो भवति । उपर्यनन्वये तु आप्लुत्य स्थितां जायां व्रीहीनवघातयेदिति योजनीयम् ।

तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयाताम्। ईश्वरौ जनयितवै ॥ १७ ॥

अथ य इच्छेत् पुत्रो मे पण्डितो विगीतः (विजिगीथः[1]) समितिङ्गमः शुश्रूषितां वाचं भाषिता जायेत सर्वान् वेदाननुब्रवीत सर्वमायुरियादिति, माँसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयाताम्—ईश्वरौ जनयितवै—औक्ष्णेन (औक्षेण) वाऽऽर्षभेण वा ॥ १८ ॥

अथाभिप्रातरेव स्थालीपाकावृताऽऽज्यं [2]चेष्टित्वा स्थालीपाकस्योपघातं जुहोति, अग्नये स्वाहाऽनुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेति। हुत्वोद्धृत्य प्राश्नाति। प्राश्येतरस्याः प्रयच्छति। प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षति, उत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रपूर्व्यां सं जायां पत्या [3]सहेति ॥ १९ ॥

1. विजिगीथः मा. 2. वेष्टित्वा. मा, 3. सजेति. मा.

---

लौकिकविषये; वेदेऽनधिकारादिति द्रष्टव्यम् ॥ १७ ॥

**अथ य इच्छेत् पुत्रो मे पण्डितो [1]विजिगीथः (विगीतः)**—। **विजिगीथः (विगीतः)** प्रसिद्धः। **समितिंगमः** सभांगन्ता। **शुश्रूषितां** रमणीयां [माननीयार्थाम्]। मांसनियमार्थमाह **औक्ष्णेन (क्षेण) वार्षभेण** वेति। **उक्षा** = रेतस्सेचनसमर्थः पुङ्गव इत्यर्थः ॥ १८ ॥

**अथाभिप्रातरेव स्थालीपाकावृताऽऽज्यं** —। अपरेद्युः प्रातःकाले **स्थालीपाकावृता** स्थालीपाकविधिना आज्यं **चेष्टित्वा** संस्कृत्य **स्थालीपाकस्योपघातं** स्थालीपाकमुपहत्य जुहोति। चरोरवदाय, अग्नये स्वाहेत्यादिस्वाहान्तैर्मन्त्रैः जुहोतीत्यर्थः। हुत्वोद्धृत्याथ स्वयं प्राश्नाति। प्राश्य **इतरस्याः** इतरस्यै = पत्न्यै प्रयच्छतीत्यर्थः। **एनां** पत्नीम्, उत्तिष्ठेति मन्त्रेण त्रिः प्रोक्षयेदित्यर्थः। शिष्टं स्पष्टम् ॥ १९ ॥

1. विगीतः क.

---

चक्षेति। ऋषभस्तु ततोऽधिकवयस्कः।

अथैनामभिपद्यते, अमोऽहमस्मि सा त्वँ सा त्वमस्यमोऽँ सामाहमस्मि ऋक् त्वं द्यौरहं पृथिवी त्वम् तावेहि सँरभावहै[1], सह रेतो दधावहै पुँसे पुत्राय वित्तय इति ॥ २० ॥

अथास्या ऊरू विहापयति, विजिहीथां[2] द्यावापृथिवी इति। तस्यामर्थं निष्ठाय मुखेन मुखँ सन्धाय त्रिरेनामनुलोमामनुमार्ष्टि—

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिँशतु।
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते।
गर्भं धेहि सिनीवाली गर्भं धेहि पृथुष्टुके।
गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ २१ ॥

हिरण्मयी अरणी याभ्यां निर्मन्थतामश्विनौ।
तत्ते गर्भं हवामहे दशमे मासि सूतवे।
यथाग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी।
वायुर्दिशां यथा गर्भ एवं गर्भं दधामि ते ॥ असाविति ॥ २२

1. संरम्भावहै. शां. 2. विजिहाथां. मां.

---

**अथैनामभिपद्यते**--। **अमोऽहमस्मीति** मन्त्रेण **एनां** पत्नीं संगच्छेतेत्यर्थः ॥ २० ॥

**अथास्या ऊरू विहापयति**। 'विजिहीथां द्यावापृथिवी' इति मन्त्रेण ऊरू वियोजयतीत्यर्थः। योनिद्वारानुपरोधिनौ कुर्यादिति यावत्। **त्रिरेनामनुलोमामनुमार्ष्टि**। **अनुलोमां** शिर आरभ्य त्रिरामृशतीत्यर्थः। आमर्शनमन्त्रानाह **विष्णुर्योनिं**—। **असाविति**। मन्त्राणामन्ते असाविति [2]पत्नीनाम गृह्णीयादित्यर्थः ॥ २१, २२ ॥

सोष्यन्तीमद्भिरभ्युक्षति —

यथा वायुः पुष्करिणीँ समिङ्गयति[1] सर्वतः ।
एवा ते गर्भ एजतु सहावैतु जरायुणा ।
इन्द्रस्यायं व्रजः कृतः सार्गलः सपरिश्रयः ।
तमिन्द्र निर्जहि गर्भेण सावराँ[2] सहेति ॥ २३ ॥

जातेऽग्निमुपसमाधाय, अङ्क आधाय कँसे पृषदाज्यं संनीय पृषदाज्यस्योपघातं जुहोति —

अस्मिन् सहस्रं पुष्यासमेधमानः स्वे गृहे ।
अस्योपसद्यां माच्छैत्सीत् प्रजया च पशुभिश्च स्वाहा ।
मयि प्राणाँस्त्वयि मनसा जुहोमि स्वाहा ।
यत् कर्मणाऽत्यरीरिचं यद्वा न्यूनमिहाकरम् ।
अग्निष्टत् स्विष्टकृद्विद्वान् स्विष्टँ सुहुतं करोतु नः स्वाहेति ॥ २४

अथास्य दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिरथ दधि मधु घृतँ

1. समिङ्गयति. मा. 2. सावरँ. माध्य.

---

**सोष्यन्तीमद्भिरभ्युक्षति** — । **सोष्यन्तीं** प्रसवाभिमुखीं पत्नीम् , 'यथा वायुः पुष्करिणी' मित्यादिमन्त्रेण प्रोक्षयेदित्यर्थः ॥ २३ ॥

**जातेऽग्निमुपसमाधाय** — । जाते पुत्रे तमङ्के पुत्रमाधाय **पृषदाज्यं** सदधि आज्यं कंसे **सन्नीय** संयोज्येत्यर्थः । होममन्त्रानाह **अस्मिन् सहस्रं पुष्यास**मित्यादिना ॥ २४ ॥

**अथास्य दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिः** । **अस्य** पुत्रस्य दक्षिणे कर्णे मुखं निधाय वाग्वागिति त्रिर्जपेदित्यर्थः । **अथ दधि मधु**

---

**वागिति त्रिरिति** । एतदनन्तरं नामकरणम् , ततो जातरूपेण प्राशनं माध्यन्दिनोक्तम् ।

सन्नीयानन्तर्हितेन जातरूपेण प्राशयति, भूस्ते दधामि भुवस्ते दधामि स्वस्ते दधामि भूर्भुवःस्वः सर्वं त्वयि दधामीति ॥ २५ ॥

अथास्य नाम करोति, वेदोऽसीति । तदस्य तद् गुह्यमेव नाम भवति ॥ २६ ॥

अथैनं मात्रे प्रदाय स्तनं प्रयच्छति —

यस्ते स्तनः स(श)शयो यो मयोभूर्यो रत्नधा वसुविद्यस्सुदत्रः ।
येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेकरिति ॥ २७ ॥

अथास्य मातरमभिमन्त्रयते —

इलाऽसि मैत्रावरुणी वीरे वीरमजीजनत् ।
सा त्वं वीरवती भव याऽस्मान् वीरवतोऽकरदिति ॥

तं वा एतमाहुः, अतिपिता बताभूरतिपितामहो बताभूः परमां बत

---

घृतं सन्नीयानन्तर्हितेन जातरूपेण प्राशयति । अनन्तर्हितेन = अव्यवहितेन जातरूपेण हिरण्येन संसृज्य दधि मधु घृतं तं पुत्रं प्राशयतीत्यर्थः । भूस्ते दधामीत्यादयः प्राशनमन्त्राः ॥ २५ ॥

अथास्य नाम करोति वेदोऽसि — । स्पष्टम् ॥ २६ ॥

अथैनं मात्रे प्रदाय — । प्रयच्छति दापयेदित्यर्थः । स्तन्यप्रदानमन्त्रमाह यस्ते स्तनस्सशयो योमयोभूरित्यादि ॥ २७ ॥

अथास्य मातरमभिमन्त्रयते — । इळासि मैत्रावरुणीत्यादिमन्त्रेण पुत्रमातरमभिमन्त्रयेदित्यर्थः । तं वा एतमाहुरतिपिता बताभूः — । एवंविदो

---

मात्रे प्रदायेति । मात्रभिमन्त्रणानन्तरं मात्रे प्रदानं माध्यन्दिनोक्तम् । स क्रम इहापि युक्तः स्वीकर्तुम् ।

काष्ठां प्रापच्छ्रिया यशसा ब्रह्मवर्चसेन, य एवंविदो ब्राह्मणस्य पुत्रो जायत इति ॥ २८ ॥

इति अष्टमाध्याये चतुर्थं ब्राह्मणम् ॥

---

८—५.

अथ वँशः । पौतिमाषीपुत्रः कात्यायनीपुत्रात्, कात्यायनीपुत्रो गौतमीपुत्रात्, गौतमीपुत्रो भारद्वाजीपुत्रात्, भारद्वाजीपुत्रः पाराशरीपुत्रात्, पाराशरीपुत्रः औपस्वस्तीपुत्रात्, औपस्वस्तीपुत्रः पाराशरीपुत्रात्, पाराशरीपुत्रः कात्यायनीपुत्रात्, कात्यायनीपुत्रः कौशिकीपुत्रात्, कौशिकीपुत्र आलम्बीपुत्राच्च वैयाघ्रपदीपुत्राच्च, वैयाघ्रपदीपुत्रः काण्वीपुत्राच्च कापीपुत्राच्च, कापीपुत्रः (१) आत्रेयीपुत्रात्, आत्रेयीपुत्रो

---

ब्राह्मणस्य जातः पुत्रः पितरमतिशयितवान्, पितामहमत्यशेत इत्यादिना स्तुत्यानां परमां काष्ठां प्राप्त इति सर्वेषां स्तुत्यो भवतीत्यर्थः ॥ २८ ॥ ८—४.

अथेदानीं समस्तप्रवचनवंशः। स्त्रीप्राधान्यात्, गुणवान् पुत्रो भवतीति प्रस्तुतत्वात् स्त्रीविशेषकृतपुत्रविशेषेण, आचार्यपरम्परा कीर्त्यते अथ वंशः — —।

---

स्त्रीप्राधान्यादिति ल्यब्लोपे पञ्चमी। स्त्रीप्राधान्यं परिगृह्येत्यर्थः। प्रस्तुतत्वात् स्त्रीविशेषकृतेति। एतद्गुरुपरम्परानिविष्टानां पितर इव मातरोऽपि महिमसंपन्ना इति स्त्रीप्रस्तावे बुद्धिस्थमासीत्। तद् व्यङ्क्तुमेवं मातृपूर्वकनिर्देश इति। अतः शाखान्ते पाठात् औचित्यात् समस्तप्रवचनवंशत्वमेव। (४-६.) मधुब्राह्मणानन्तरवंशब्राह्मणम्, (६ ६.) द्वितीयमैत्रेयीब्राह्मणानन्तरवंशब्राह्मणञ्च मध्यनिविष्टत्वात् समस्तप्रवचनवंशपरं मा भूत्। इदं तु अन्ते स्थितं प्रकृताध्याय-पूर्वं ब्राह्मणमात्रशेषत्वे मानाभावात् सर्वशेषमिति भावः।

गौतमीपुत्रात्, गौतमीपुत्रो भारद्वाजीपुत्रात्, भारद्वाजीपुत्रः पाराशरीपुत्रात्, पाराशरीपुत्रो वात्सीपुत्रात्, वात्सीपुत्रः पाराशरीपुत्रात्, पाराशरीपुत्रो वार्कारुणीपुत्रात्, वार्कारुणीपुत्रो वार्कारुणीपुत्रात्, वार्कारुणीपुत्रः आर्तभागीपुत्रात्, आर्तभागीपुत्रः शौङ्गीपुत्रात्, शौङ्गीपुत्रः सांकृतीपुत्रात्, सांकृतीपुत्र आलम्बायनीपुत्रात्, आलम्बायनीपुत्र आलम्बीपुत्रात्, आलम्बीपुत्रो जायन्तीपुत्रात्, जायन्तीपुत्रो माण्डूकायनीपुत्रात्, माण्डूकायनीपुत्रो माण्डूकीपुत्रात्, माण्डूकीपुत्रः शाण्डिलीपुत्रात्, शाण्डिलीपुत्रो राथीतरीपुत्रात्, राथीतरीपुत्रो भालुकीपुत्रात्, भालुकीपुत्रः क्रौञ्चिकीपुत्राभ्याम्, क्रौञ्चिकीपुत्रौ वैदभृतीपुत्रात्, वैदभृतीपुत्रः कार्शकेयीपुत्रात्, कार्शकेयीपुत्रः प्राचीनयोगीपुत्रात्, प्राचीनयोगीपुत्रः साञ्जीवीपुत्रात्, साञ्जीवीपुत्रः प्राश्नीपुत्रादासुरि[1]वासिनः, प्राश्नीपुत्र आसुरायणात्, आसुरायण आसुरेः, आसुरिः (२) याज्ञवल्क्यात् याज्ञवल्क्य उद्दालकात्, उद्दालकोऽरुणात्, अरुण उपवेशेः, उपवेशिः कुश्रेः, कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो जिह्वावान् वाध्योगात्, वाध्योगोऽसिताद्वार्षगणात्, असितो वार्षगणो हरितात् कश्यपात्, हरितः कश्यपः शिल्पात् कश्यपात्, शिल्पः कश्यपः कश्यपान्नैध्रुवेः, कश्यपो नैध्रुविर्वाचो वाक् अम्भिण्याः, अम्भिण्यादित्यात्।

आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाऽऽख्यायन्ते ॥ ३ ॥

1. आसुरी. मा.

प्राश्नीपुत्रादिति। स्त्रीपूर्वकनिर्देश इतः परं नादृतः। एवमुत्तरगुरुपरम्परायामपि।

आदित्यादिति आदित्यमण्डलान्तर्वर्तिपरब्रह्मविवक्षणात् तदुपरि गुरुपरम्पराया अभावादनुक्तिः। एवं याज्ञवल्क्यघटितगुरुपरम्परां प्रदर्श्य सर्वशुक्लयजुःशाखाप्रवर्तकस्य तस्यातिशयं कीर्तयति आदित्यानीति। व्यक्तमिदं श्रीभागवत — विष्णुवायुपुराणादौ। शुक्लानि शुद्धानि अयातयामसंज्ञानि, यद्वा मन्त्रब्राह्मणसांकर्यरहितानि।

समानमा साञ्जीवीपुत्रात्, साञ्जीवीपुत्रो माण्डूकायनेः, माण्डूकायनिर्माण्डव्यात्, माण्डव्यः कौत्सात्, कौत्सो माहित्थेः, [1] माहित्थिर्वामकक्षायणात्, वामकक्षायणः शाण्डिल्यात्, शाण्डिल्यो वात्स्यात्, वात्स्यः कुश्रेः, कुश्रिर्यज्ञवचसो[2] राजस्तम्बायनात्, यज्ञवचा राजस्तम्बायनस्तुरात् कावषेयात्, तुरः कावषेयः प्रजापतेः, प्रजापतिर्ब्रह्मणः। ब्रह्म स्वयम्भु।

1. माहित्थेः. मा. 2. यज्ञवर्चसः. मा.

---

**प्रजापतेः** चतुर्मुखादित्यर्थः। **ब्रह्मणः** नारायणादित्यर्थः। **स्वयंभु** स्वतस्सर्वज्ञ-

---

याज्ञवल्क्यघटितेव तदघटिताऽपि काचिद् गुरुपरम्पराऽस्ति काण्वशाखायाः। उभयोरपि साञ्जीवीपुत्रे समागमः [दृश्यते ह्युभयशिष्यत्वमप्येकस्य। यथा, 'काण्वीपुत्राच्च कापीपुत्राच्च', 'कौश्चिकीपुत्राभ्या'मित्यादि।] इति दर्शयितुं **समान**मित्यादि।

**प्रजापतिर्ब्रह्मण** इत्यत्र, 'ब्रह्मणः प्रवचनाख्यस्य' इति षष्ठ्यन्तं कृत्वा व्याख्यातं शाङ्करे। पूर्ववंशब्राह्मणयोरिवेहापि ब्रह्मशब्देनोपदेष्टृग्रहणसंभवे किमिति क्लिष्टं व्याख्यायते? कुत्र चैतदन्वयः? ननु प्रजापतेर्हिरण्यगर्भस्य सगुणस्य ब्रह्मणः कोऽन्य उपदेष्टा; न च निर्गुणं ब्रह्म उपदेष्टुं प्रभवतीति चेत्—न—पूर्ववंशब्राह्मणोक्तस्य परमेष्ठिनश्चतुर्मुखस्येह प्रजापतिपदेनापि रूढ्यैव ग्रहणात्। तस्य च हिरण्यगर्भस्य, 'हिरण्यगर्भं पश्यत जायमान'मिति परब्रह्मणो जातस्य, 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति परं ब्रह्मैवोपदेष्टृ प्रसिद्धम्। न च तस्य निर्गुणत्वं प्रामाणिकार्थविरुद्धं कल्पयितुं साम्प्रतम्। अतोऽयं **ब्रह्मशब्दः** पितामहपितरं पद्मनाभं पुरुषोत्तमं नारायणमेवाहेति स्वयम्भुशब्दोऽपि तस्योपदेष्ट्रन्तरनिरपेक्षत्वरूपप्रकृतोपयोग्यर्थविशेषपर इत्याशयेनाह **ब्रह्मणो नारायणादिति, स्वयम्भु स्वतःसर्वज्ञ**मिति च। एवमेव तत्रतत्र परव्याख्योपेक्षायामाशयः तदर्थपरामर्शपरैः परिशीलनीयः॥

अयं वंशब्राह्मणपाठः विद्यायामधिकृतैः स्वाचार्यमारभ्य परब्रह्मरूपप्रथमगुरुपर्यन्तमनुक्रमेण

**ब्रह्मणे नमः ॥ ४ ॥ हरिः ओम् ॥**

इति अष्टमाध्याये पञ्चमं ब्राह्मणम् ॥

इति बृहदारण्यके अष्टमोऽध्यायः ॥ **इति बृहदारण्यकोपनिषत् ॥**

**पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥** ओं शान्तिः शान्तिः शान्तिः ॥

श्रीमते श्रीनिवासपरब्रह्मणे औपनिषद्पुरुषाय नमः ॥



---

मित्यर्थः । **ब्रह्मणे नमः ।**

"आचार्येभ्यो नमस्कृत्य [1] अथ वंशमनुक्रमेत् ।
वंशमा ब्रह्मणो नयन् (आ ब्रह्मणो नयन् वंशं?) दीर्घमायुरवाप्नुयात् ॥"

इति आ ब्रह्मणो वंशपरम्पराकीर्तनस्य श्रेयोहेतुत्वं शास्त्रसिद्धमिहानुसन्धेयम् ॥ ४ ॥ ८–५.

इति अष्टमाध्यायप्रकाशिका

क्षेमाय यः करुणया क्षितिनिर्जराणां भूमावजृम्भयत भाष्यसुधामुदारः ।
वामागमाध्वगवदावदतूलवातो रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥

इति श्रीमत्ताताचार्यचरणारविन्दचञ्चरीकस्य
वात्स्यानन्तार्यपादसेवासमधिगतशारीरकमीमांसाभाष्यहृदयस्य
परकालमुनिपादसेवासमधिगतपारमहंस्यस्य

**श्रीरङ्गरामानुजमुनेः**

**कृतिषु**

**बृहदारण्यकोपनिषत्प्रकाशिका संपूर्णा ॥**

**॥ शुभमस्तु – श्रीरस्तु ॥**

1. अथ वंशस्य कीर्तयेत् । स्वधा पूर्वेषां भवति नेताऽऽयुर्दीर्घमश्नुते ॥ इत्युक्त्वाऽनुक्रमेद् वंशं ? ] वंशमाब्रह्मणो नयेत् इति ख. ग.

---

परम्परानुसंधानस्यावश्यकर्तव्यत्वप्रदर्शकः । तदिदं वचनोपन्यासपूर्वं विस्पष्टयति **आचार्येभ्य** इति॥

श्रुत्यन्तरामानुजयोगिसेवि-
श्रीरङ्गरामानुजयोगिशिष्ये ।
श्रीरङ्गरामानुजयोगिवर्य-
श्रुत्यन्तभाष्यस्य गतिर्मयीयम् ॥ १ ॥

दध्यङ्ङश्वशिरा यदाह मधु तद् यत्रास्ति कक्ष्यं तथा
यस्मिन्नश्वमयार्कलब्धनिगमश्रीयाज्ञवल्क्योक्तयः ।
अश्वब्राह्मणपूर्वकं बृहदिदं ह्यारण्यकं यत्परम्,
श्रीमानश्वमुखः स मे हृदि परिष्कारं विधत्ते स्थितः ॥ २ ॥

यस्मिन् ज्ञाते भवति निखिलं ज्ञातमस्यावबोधो
वेदान्तात् स्यात् तव, स सुगमः सर्वविद्याविदैव ।
वेद्यं निर्द्वापरमिह कृते कर्मवर्गे समीचि
त्रेताव्याप्ते त्रियुग! कलयेत् त्वत्प्रभावं कलौ कः ॥ ३ ॥

श्रीमन् संयमिसार्वभौम! भवतः श्रीरङ्गरामानुज-
प्रख्यां सप्रति वेदितुं समुचितां सार्थः समर्थः सताम् ।
यन्मामद्भुतरङ्गलक्ष्मणमुनिश्रुत्यन्तभाष्याशयं
सम्यक् शिक्षयता गुरोऽत्रभवता पन्थाः परिष्कार्यते ॥ ४ ॥

तन्त्रवेदान्तयोस्तर्के प्राच्ये नव्ये परत्र च ।
प्रबन्धानां प्रणेत्रैवं वात्स्यसच्चक्रवर्तिना ॥ ५ ॥

सभाष्येशाद्युपनिषत्परिष्कारकृतेदृशम् ।
**बृहदारण्यकं वीरराघवेण परिष्कृतम् ॥ ६ ॥**

इति श्रीमद्वेदान्तरामानुजयतीन्द्रमहादेशिकचरणारविन्दचञ्चरीकस्य
श्रीमद्रङ्गरामानुजयतीन्द्रमहादेशिकपदपद्मसेवासमधिगतवेदान्तार्थस्य

**वात्स्यसच्चक्रवर्तिनो वीरराघवाचार्यस्य**

**कृतिषु**

**बृहदारण्यकोपनिषद्भाष्यपरिष्कारः ॥**

**श्रीरस्तु । शुभमस्तु ॥**

श्रीः

बृहदारण्यके

## काण्वमाध्यन्दिनपाठभेदः

( कण्डिकारूपवाक्यराशिविभागस्यान्यान्यत्वात् तत्प्रदर्शनस्यानावश्यकत्वाच्च स नात्र निर्दिश्यते । )



| काण्वे — | अ. | ब्रा. | | माध्यन्दिने — | काण्ड. | अ. | ब्रा. |
|---|---|---|---|---|---|---|---|
| (उषा वा इत्यादि | ३. | १. | .... | उषा वा इत्यादि | १०. | ६. | ४.) |
| उवध्यं | | | .... | ऊवध्यं | | | |
| (नैवेहेत्यादि | ३. | २. | .... | नैवेहेत्यादि | १०. | ६. | ५.) |
| प्राची दिक्छिरः | | | .... | प्राची दिक्छरः | | | |
| प्रतितिष्ठत्येवं ( ति य एवं ) | | | .... | प्रतितिष्ठत्येवं | | | |
| भाण ( णम ) करोत् | | | .... | भाणकरोत् | | | |
| प्रजाः पशून् | | | .... | प्रजां प्रशून् | | | |
| यदश्व ( श्वय ) त् | | | .... | यदश्वत् | | | |
| अनवरुद्धचैव | | | .... | अनवरुद्धचेव | | | |
| सार्वदैवत्यं (?) | | | .... | सर्वदेवत्यं | | | |
| मृत्युरस्यात्मा भवति | | | .... | मृत्युरस्यात्मा, भवति, सर्वमायुरेति | | | |
| देवतानामेको भवति | | | .... | देवतानामेको भवति य एवं वेद | | | |
| | ३. | ३ | .... | (१४. १, २, ३. प्रवर्ग्याध्यायाः १४. ४प्रभृति बृहदारण्यकम् । अतः ४-१. द्वया हेत्यादि) | | | |
| द्वया हेत्यादि | | | | | | | |
| अविव्यत्सन् ( अवित्सन् ) | | | .... | अविव्यत्सन् | | | |
| यत्रासां ( यत्र तासां ) | | | .... | यत्रासां | | | |
| प्रति प्रति बुभूषति | | | .... | प्रति प्रतिर्बुभूषति | | | |

| काण्वे – | | माध्यन्दिने – |
|---|---|---|
| तदैव तच्छुष्यति | .... | तदेव तच्छुष्यति |
| तस्माद्वैव ( तस्माद्वेव ) | .... | तस्माद्वेव |
| अयास्याङ्गिरसः (अयास्य आङ्गिरसः) | .... | अयास्य आङ्गिरसः |
| स तया वाचा | .... | तया वाचा |
| गीयते [ न्न ] इत्युह | .... | गीयतेऽन्न इत्युह |
| ३. ४. (आत्मैव) | .... | ४. २. (आत्मैव) |
| ओ ( औ ) षति | .... | ओषति |
| अर्धवृगलं | .... | अर्धवृगलं |
| तस्मादयमेकांशः ( आकाशः ) | .... | तस्मादयमाकाशः |
| तां तां | .... | तां |
| सोवै ( वे ) त | .... | सोवेत् |
| पुत्रात् [ प्रेयोमित्रात् ] प्रेयो वित्तात् | .... | पुत्रात् प्रेयो वित्तात् |
| अन्तरतरः ( रं ) | .... | अन्तरतरं |
| अवैत् | .... | अवेत् । ( एवमुपरि सर्वत्र ) |
| एवमे [ वै ] कैकः | .... | एवमेकैकः |
| अरिष्टं ( ष्टिं ) | .... | अरिष्टिं |
| विन्दते | .... | विन्दति |
| ३ - ५ - | .... | ४ - ३ |
| त ( क ) स्मात् | .... | कस्मात् |
| प्रलिलेहयन्ति | .... | प्रतिलेहयन्ति |
| वागेवैनं | .... | वागेनं |
| इत्येवाहुः | .... | इत्याहुः |
| अवारुन्धत | .... | अवारुन्ध |
| रूपमसामेति | .... | रूपं भवामेति |
| अधिदैवतं | .... | अधिदेवतं |

| काण्वे — | | माध्यन्दिने — |
|---|---|---|
| यथादैवतं | .... | यथादेवतं |
| आप्नुवदिति | .... | आप्नवदिति |
| जयति | .... | जयति य एवं वेद |
| ४. १. | .... | ५. १. |
| पूर्यते ह प्रजया | .... | पूर्यते प्रजया |
| (शब्दपर्यायः १०, दिक्पर्यायः ११.) | .... | (दिक्पर्यायः १०, शब्दपर्यायः ११.) |
| द्वासप्तति | .... | द्वासप्ततिः |
| कुमारो वा महाराजो वा | .... | कुमारो वा |
| ४. २. | .... | ५. २. |
| यत् कृष्णं तेनाग्निर्यच्छुक्लं | ... | यच्छुक्लं तेनाग्निर्यत् कृष्णं |
| संविता ( संवित्ते ) | .... | संवित्ते |
| गौतम | .... | गोतम |
| अत्रिर्ह वै — अत्तिरिति (?) | .... | अत्तिर्ह वै — अत्तिरिति |
| ४. ३. | .... | ५. ३. |
| त्यच्च | .... | त्यञ्च ( एवमुपर्यपि ) |
| अधिदैवतम् | .... | अधिदेवतम् |
| ४. ४. | .... | ५. ४. |
| यन्नु मे | ... | यन्मे |
| ब्रवीतु मे भगवान् | .... | ब्रवीतु भगवान् |
| स होवाच | .... | स होवाच याज्ञवल्क्यः |
| विदितं [ भवति ] | .... | विदितम् |
| (शङ्खपर्यायः प्राक्; वीणापर्यायः पश्चात्) | .... | (वीणापर्यायः प्राक्; शङ्खपर्यायः पश्चात्) |
| शङ्खध्मानस्य ( शङ्खधास्य ) | .... | शङ्खध्मस्य |
| नासिकैकायनम् | .... | नासिके एकायनम् |

| काण्वे — | | माध्यन्दिने — |
|---|---|---|
| (स्पर्शरसगन्धरूपशब्दसंकल्पविद्या-नन्दविसर्गाध्ववेदाः क्रमेण) | .... | ( स्पर्शगन्धरसरूपशब्दसंकल्पवेद - कर्माध्वानन्दविसर्गविद्याः क्रमेण) |
| उद्ग्रहणायैव | .... | उद्ग्रहणायेव |
| (जिघ्रति पश्यति शृणोत्यभिवदति मनुते विजानातीति क्रमः | .... | (पश्यति जिघ्रत्यभिवदति शृणोति मनुते विजानातीति क्रमः ) |
| यत्र वा अस्य ( यत्र त्वस्य ) | .... | यत्र त्वस्य |
| ४. ५. | .... | ५. ५. |
| ( पृथिव्यबग्निवाय्वादित्यदिक्चन्द्र-विद्युत्स्तनयित्न्वाकाशधर्मसत्य-मानुषात्मपर्यायाः क्रमेण) | .... | (पृथिव्यबग्न्याकाशवाय्वादित्यचन्द्र-दिग्विद्युत्स्तनयित्नुधर्मसत्यमानु-षात्मपर्यायाः क्रमेण) |
| यश्चाय [ मध्यात्म ] मात्मा | .... | यश्चायमात्मा |
| अनावृतं नानेन ( नैनेन ) | .... | अनावृतं नैनेन |
| दश च शतानि सहस्राणि | .... | दश च सहस्राणि |
| ४. ६. | .... | ५. ६. |
| अथ वंशः पौतिमाष्यः | .... | (अथ वंशः तदिदं वयं शौर्पणाय्यात् इत्यारभ्य बैजवापायनपर्यन्त - मतीव भेदः । उपरि तु ) |
| जातूकर्ण्यः आसुरायणाच्च यास्काच्च | .... | जातूकर्ण्यो भारद्वाजात् भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्च |
| माण्डेः , माण्डिः | .... | माण्टेः , माण्टिः |
| विप्रचित्तेः , विप्रचित्तिः | .... | विप्रजित्तेः , विप्रजित्तिः |
| सनकात् , सनकः | .... | सनगात् , सनगः |
| ५. १. | .... | ६. १. |
| तं होदकालयत् ( दाचकार ) | .... | तं होदाचकार |
| चुक्रुधुः ( चुक्रुशुः ) | .... | चुक्रुधुः |

| काण्वे — | | माध्यन्दिने — |
|---|---|---|
| स मुक्तिः | .... | सा मुक्तिः ( एवमुपर्यपि ) |
| (पूर्वपक्षाद्यनुबन्धिप्रश्ने उद्गात्रेत्यादि; अन्तरिक्षपदघटितप्रश्ने ब्रह्मणेत्यादि) | .... | (पूर्वपक्षाद्यनुबन्धिप्रश्ने ब्रह्मणेत्यादि ; अन्तरिक्षपदघटितप्रश्ने उद्गात्रेत्यादि) |
| शस्यैव च | .... | शस्यैव |
| (यत् किञ्चेदं प्राणभृदिति । पुनः २०८ पुटे किं ताभिर्जयतीति प्रश्ने २०९ पृथिवीलोकमेवेत्यादि) | .... | (पृथिवीलोकमेवेत्यादि आदौ । पुनः किं ताभिर्जयतीति प्रश्ने यत्किञ्चेदं प्राणभृदिति) |
| अतिनेदन्ते | .... | अतिनेदन्ति |
| पितृलोकमेव ताभिर्जयति । एवमिव (अतीव) हि पितृलोकः । या हुता अधिशेरते मनुष्यलोकमेव ताभिर्जयति । अथ इव हि मनुष्यलोकः | .... | मानुष्य ( मनुष्य ) लोकमेव ताभिर्जयति । अतीव हि मा (म) नुष्यलोकः । या हुता अधिशेरते, पितृलोकमेव ताभिर्जयति । अथ इव हि पितृलोकः |
| शस्यैव च तृतीया कतमास्ता या अध्यात्ममिति | .... | शस्यैव तृतीयाऽधिदेवतमथाध्यात्मम् कतमास्ता या अध्यात्ममिति । |
| ५. २. | .... | ६. २. |
| अतिग्रहा इति | .... | अतिग्रहाः |
| (वाग्ग्रहानन्तरं जिह्वाग्रहः) | .... | (जिह्वाग्रहानन्तरं वाग्ग्रहः) |
| मृत्युं जयति ( य एवं वेद ) | .... | मृत्युं जयति |
| (प्राणक्रमणप्रश्नतदुत्तरानन्तरं किं न जहातीति प्रश्नः उत्तरञ्च) | .... | (किं न जहातीति प्रश्नतदुत्तरानन्तरं प्राणक्रमणप्रश्नः उत्तरञ्च) |
| सोम्य हस्तमार्तभाग। | .... | सौम्य हस्तमार्तभागेति होवाच |
| मन्त्रयाञ्चक्राते | .... | मन्त्रयाञ्चक्रतुः |
| अथ यत् | .... | अथ ह यत् |

| काण्वे – | | माध्यन्दिने – |
|---|---|---|
| ५. ३. | .... | ६. ३. |
| लाम्या ( ह्या ) यनिः | .... | लाह्यायनिः |
| अथैनं ( नम ) ब्रूम | .... | अथैनमब्रूम |
| क्व पारिक्षिता अभवन्निति क्व पारिक्षिता अभवन् – स त्वा | .... | क्व पारिक्षिता अभवन् क्व पारिक्षिता अभवन्निति – तत् त्वा |
| उवाच वै सोऽगच्छन् | .... | उवाच वै तदगच्छन् |
| समन्तं पृथिवी द्विस्तावत् | .... | समन्तं लोकं द्विस्तावत् पृथिवी |
| तां समन्तं पृथिवीं | .... | तां पृथिवीं |
| अश्वमेधयाजिनोऽभवन् | .... | पारिक्षिता अभवन् |
| जयति यः | .... | जयति, सर्वमायुरेति यः |
| ५. ४; ५. ५. | .... | ६. ५; ६. ४. |
| (उषस्तब्राह्मणम्. ५. ४.) | .... | (कहोलब्राह्मणम्. ६. ४.) |
| (कहोलब्राह्मणम् ५. ५.) | .... | (उषस्तब्राह्मणम्. ६. ५.) |
| उदानिति स त आत्मा सर्वान्तरः। एष त आत्मा सर्वान्तरः | .... | उदानिति स त आत्मा सर्वान्तरः, यः समानेन समानिति स त आत्मा सर्वान्तरः |
| यथा विब्रूयात् | .... | यथा वै ब्रूयात् |
| कहोलः | .... | कहोडः |
| यदेव साक्षात् | .... | यत् साक्षात् |
| तस्माद् ब्राह्मणः | .... | तस्मात् पण्डितः |
| तेनेदृश एव अतोऽन्यदार्तम् | .... | तेनेदृश एव भवति य एवं वेद |
| ५. ६. | .... | ६. ६. |
| प्रोतश्चेति कस्मिन्नु खल्वापः | .... | प्रोतश्च कस्मिन्न्वापः ( एवमुपर्यपि खलुशब्दो नास्ति ) |

| काण्वे — | | माध्यन्दिने — |
|---|---|---|
| अन्तरिक्षलोकेषु | .... | आकाश एव गार्गीति । कस्मिन्नु आकाश ओतश्च प्रोतश्चेति अन्तरिक्षलोकेषु |
| गन्धर्वलोकेषु | .... | द्यौर्लोकेषु |
| गन्धर्वलोकाः | .... | द्यौर्लोकाः |
| इन्द्रलोकेषु | .... | गन्धर्वलोकेषु |
| इन्द्रलोकाः | .... | गन्धर्वलोकाः |
| अनतिप्रश्न्यां वै देवतामति | .... | अनतिप्रश्न्या वै देवता अति |
| ५. ७. | .... | ६. ७. |
| येनायञ्च | .... | यस्मिन्नयञ्च |
| अन्तर्यामिणमिति स ब्रह्मवित् | .... | अन्तर्यामिणं स ब्रह्मवित् |
| कश्चिद् ब्रूयात् | .... | कश्च ब्रूयात् |
| स होवाच वायुर्वै | .... | वायुर्वै |
| यमयत्येष त आत्मा | .... | यमयति स त आत्मा (एवमुपर्यपि) |
| (योऽन्तरिक्षे तिष्ठन् इत्यादिरीतिः | .... | य आकाशे तिष्ठन् इत्यादिरीतिः) |
| (वायु - द्यु - आदित्य - दिक् - चन्द्रतारक - आकाश - तमः - तेजःपर्यायाः क्रमात् ) | .... | (वायु - आदित्य - चन्द्रतारक - दिक् - विद्युत् - स्तनयित्नु- पर्यायाः क्रमात् , सर्वलोकपर्यायश्च, ' यः सर्वेषु लोकेषु तिष्ठन् - ' इत्येवंरूपः) |
| इत्यधिदैवतमथाधिभूतम् — | .... | (इत्यु एवाधिलोकमथाधिवेदम् यः सर्वेषु वेदेषु तिष्ठन्नित्यादिकं पश्चात् । अथ, इत्यु एवाधिवेदमथाधियज्ञम् । यः सर्वेषु यज्ञेषु तिष्ठन् इत्यादि, अथ, इत्यु एवाधियज्ञमथाधिभूतम् । ) |

| काण्वे – | | माध्यन्दिने – |
|---|---|---|
| इत्यधिभूतमथाध्यात्मम् | .... | इत्यु एवाधिभूतमथाध्यात्मम् |
| (त्वक्पर्यायानन्तरं विज्ञानपर्यायः अथ रेतःपर्यायः) | .... | (त्वक्पर्यायानन्तरं तमःपर्यायतेजः - पर्यायरेतःपर्यायाः। अथ (विज्ञान- पर्यायस्थाने?) आत्मपर्यायः, 'य आत्मनि तिष्ठन्' इति रीत्या) |
| ५. ८. | .... | ६. ८. |
| इमं द्वौ प्रश्नौ | .... | इमं याज्ञवल्क्यं द्वौ प्रश्नौ |
| तौ चेन्मे वक्ष्यति | ... | तौ चेन्मे विवक्ष्यति |
| [तौ चेन्मे न विवक्षिष्यति मूर्धाऽस्य विपतिष्यतीति] ? | .... | तौ चेन्मे न विवक्ष्यति मूर्धाऽस्य विपतिष्यतीति = |
| अहं वै [त्वा] याज्ञवल्क्य | .... | अहं वै त्वा याज्ञवल्क्य |
| उज्ज्यं धनुः | .... | उद्यन् धनुः |
| यदवा (र्वा) क् पृथिव्याः | .... | यदर्वाक् पृथिव्याः |
| धारयस्वेति, स होवाच | .... | धारयस्वेति |
| कस्मिंस्तदोतश्च | .... | कस्मिन्नेव तदोतश्च |
| असङ्गमरसमगन्धमचक्षुष्कममुखम- मात्मनन्तरं | .... | असङ्गमस्पर्शमगन्धमरसमचक्षुष्कम - मुखमनामागोत्रमजरममरमभय - ममृतमरजोशब्दमविवृतमसंवृत- मपूर्वमनपरमनन्तरं |
| न तदश्नाति किञ्चन | .... | न तदश्नाति कञ्चन |
| द्यावापृथिव्यौ | .... | द्यावापृथिवी |
| (सूर्याचन्द्रमोवाक्यानन्तरं द्यावा- पृथिवीवाक्यम्) | .... | (द्यावापृथिवीवाक्यानन्तरं सूर्याचन्द्र- मोवाक्यम्) |
| निमेषा मुहूर्ता अहोरात्राणि | .... | अहोरात्राणि |
| संवत्सरा इति विधृताः | .... | संवत्सरा विधृताः |

| काण्वे — | | माध्यन्दिने — |
| --- | --- | --- |
| प्राच्यो नद्यः | .... | प्राच्योऽन्या नद्यः |
| दिशमनु | .... | दिशम् |
| ददतो मनुष्याः | .... | ददतं मनुष्याः |
| दर्वीं | .... | दर्व्यं |
| गार्ग्यविदित्वा | .... | अविदित्वा गार्गि |
| जुहोति यजति तपस्तप्यते | .... | जुहोति ददाति तपस्यत्यपि |
| अन्तवदेवास्य तत् | .... | अन्तवानेवास्य स लोकः |
| नान्यदतोऽस्ति | .... | नान्यदास्ति |
| एतस्मिन्नु खल्वक्षरे गार्ग्याकाशः | .... | एतद्वै तदक्षरं गार्गि यस्मिन्नाकाशः |
| बहुमन्येध्वम् | .... | बहुमन्यध्वम् |
| मुच्येध्वम् | .... | मुच्याध्वै |
| ५. ९. | .... | ६. ९. |
| वसु सर्वं हितमिति तस्मात् | .... | सर्वं वसु हितम् । एते हीदं सर्वं वासयन्ते । तद्यदिदं सर्वं वासयन्ते, तस्मात् |
| द्वादश वै मासाः | .... | द्वादश मासाः |
| ते यदिदं सर्वमाददानाः | .... | तद्यदिदं सर्वमाददानाः |
| एते हीदं सर्वं षडिति | .... | एते ह्येवेदं सर्वं षडिति |
| एक एवैव ( इवैव ) पवते | .... | एक एव पवते |
| पृथिव्येव यस्यायतनमग्निर्लोकः अमृतमिति होवाच | .... | पृथिव्येव यस्यायतनं चक्षुर्लोकः स्त्रिय इति होवाच |
| (पृथिवी - काम - रूप आकाश - तमः - रूप - अप् - रेतः- पर्यायाः क्रमात् ) | .... | (पृथिवी - रूप - आकाश - काम - तेजः - तमः - अप् - रेतः- पर्यायाः क्रमात् ) |

| काण्वे — | | माध्यन्दिने — |
|---|---|---|
| | कामपर्याये | |
| हृदयं लोकः | .... | चक्षुर्लोकः |
| य एवायं काममयः पुरुषः | .... | य एवासौ चन्द्रे पुरुषः |
| स्त्रिय इति | .... | मन इति |
| | रूपपर्याये | |
| सत्यमिति | .... | चक्षुरिति |
| | आकाशपर्याये | |
| श्रोत्रं लोकः | .... | चक्षुर्लोकः |
| य एवायं श्रौत्रः प्रातिश्रुत्कः पुरुषः | .... | य एवायं वायौ पुरुषः |
| दिश इति | .... | प्राण इति |
| | तमःपर्याये | |
| हृदयं लोकः | .... | चक्षुर्लोकः |
| ( पुनः रूपपर्ययः तत्र ) रूपाण्येव यस्यायतनं चक्षुर्लोकः — य एवायमादर्शे पुरुषः—असुरिति | .... | ( तेजःपर्यायः तत्र ) तेज एव यस्यायतनं चक्षुर्लोकः — य एवायमग्नौ पुरुषः — वागिति |
| | अप्पर्याये | |
| हृदयं लोकः | .... | चक्षुर्लोकः |
| | रेतःपर्याये | |
| हृदयं लोकः | .... | चक्षुर्लोकः ( एवञ्च पर्यायाष्टकेऽपि चक्षुर्लोक इत्यविशिष्टमिह ) |
| हृदय इति होवाच | .... | हृदय इति ( एवमुपर्यपि ) |
| सर्वो लोको जानाति | .... | जानाति |
| प्रतिष्ठितेति | .... | प्रतिष्ठिता भवतीति ( उपर्यपि ) |
| हृदयेन हि श्रद्धां जानाति | .... | हृदयेन हि श्रद्धत्ते |
| प्रतिष्ठितमिति | .... | प्रतिष्ठितं भवतीति ( उपर्यपि ) |

| काण्वे – | | माध्यन्दिने – |
|---|---|---|
| वाक् प्रतिष्ठितेति हृदय इति | .... | वाक् प्रतिष्ठिता भवतीति; मनसीति; कस्मिन्नु मनः प्रतिष्ठितं भवतीति; हृदय इति |
| यद्ध्येतत् | .... | यत्रैतत् |
| असङ्गो न हि सज्यते असितो न व्यथते न रिष्यति | .... | असङ्गोऽसितो न सज्यते न व्यथते इति |
| निःह्य प्रत्युह्य | .... | व्युदुह्य प्रत्युह्य |
| न मेने शाकल्यः | .... | शाकल्यो न मेने |
| अपि हास्य परिमोषिणोऽस्थीन्यपजह्रुरन्यन्मन्यमानाः | .... | तस्य हाप्यन्मन्यमानाः परिमोषिणोऽस्थीन्यपजह्रुः |
| अथ होवाच | .... | अथ ह याज्ञवल्क्य उवाच |
| तं वः पृच्छामि — पृच्छामीति | .... | तं वः पृच्छानि — पृच्छानीति |
| तस्य लोमानि पर्णानि | .... | तस्य पर्णानि लोमानि |
| तदातृण्णात् | .... | तदातुन्नात् |
| (‘रेतस’ इत्यर्धानन्तरं ‘धानारुह’ इत्यर्धम्) | .... | (‘रेतस’इत्यस्य, ‘धानारुह’इत्यस्य च मध्ये ‘जात एवे’ त्यर्धम्) |
| समूलमावृहेयुः | .... | समूल मुद्वृहेयुः |
| (विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणमिति, तिष्ठमानस्येत्यादिना सह वाक्यतया पठितम्) | .... | (विज्ञानमानन्दं ब्रह्म रातेर्दातु· परायणमिति श्लोकोत्तरार्धतया पठितम्) |
| ६. १. | .... | ६. १०. |
| तं होवाच | .... | स होवाच जनको वैदेहः |
| (शैलिनीयविषयः प्रथमम्; अथ उदङ्कीयः) | .... | (उदङ्कोपदिष्टविषयः प्रथमम्; अथ शैलिनीयः |
| जित्वा शैलिनिः (नः) | .... | जित्वा शैलिनः |

| काण्वे — | | माध्यन्दिने — |
|---|---|---|
| व्याख्यानानीष्टं हुतमाशितं पायित- मयञ्च लोकः परश्च लोकः सर्वाणि च भूतानि वाचैव | .... | व्याख्यानानि वाचैव |
| हरेतेति; यदेव ते कश्चिदब्रवी- च्छृणवामेति | .... | हरेतेतिः क एव ते किमब्रवीदिति ( एवमुपर्यपि ) |
| वधाशङ्कं | .... | वधाशङ्का |
| दिशो वै सम्राट् श्रोत्रम् | .... | श्रोत्रं हि दिशः |
| स्त्रियमभिहार्यते | .... | स्त्रियमभिहर्यति |
| हृदये ह्येव हि सम्राट् सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति | .... | हृदयेन हि सर्वाणि भूतानि प्रति- तिष्ठन्ति |
| ६. २. | .... | ६. ११. |
| इन्धो ह वै | .... | स होवाच इन्धो वै |
| परोक्षेणैव | .... | परोक्षेणेव |
| यथा केशः सहस्रधा भिन्न (एवमस्यै).... ता हिता नाम नाड्योन्तर्हृदये प्रतिष्ठिता भवन्ति एताभिर्वा एतदास्रवत् | | ता वा अस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्न एताभिर्वा एतमास्रवत् |
| प्रविविक्ताहारतर इवैव | .... | प्रविविक्ताहर इव |
| तस्य प्राची दिक् | .... | तस्य वा एतस्य पुरुषस्य प्राची दिक् |
| दक्षिणे प्राणाः | .... | दक्षिणाः प्राणाः |
| नेति ने[ती]त्यात्मा | .... | नेति नेत्यात्मा |
| (असङ्ग इति वाक्यं यथापूर्वम् (५.९.)... | | (असङ्ग इति वाक्यं यथापूर्वम् (६.९.) |
| अभयं त्वागच्छतात् याज्ञवल्क्य यो नो भगवन्नभयं वेदयसे नम- स्तेऽस्तु | .... | नमस्ते याज्ञवल्क्य अभयं त्वागच्छ- तात् यो नो भगवन्नभयं वेदयसे |

| काण्वे – | | माध्यन्दिने – |
|---|---|---|
| ६. ३. | .... | ७. १. |
| समूदाते | .... | समूदतुः |
| विपल्येति ( एवमुपर्यपि ) | .... | विपर्यैति ( एवमुपर्यपि ) |
| चन्द्रमा एवास्य ज्योतिर्भवतीति । चन्द्रमसैव | .... | चन्द्रज्योतिः सम्राडिति होवाच चन्द्रेणैव |
| अग्निरेवास्य ज्योतिर्भवतीति | .... | अग्निर्ज्योतिः सम्राडिति होवाच |
| वागेवास्य ज्योतिर्भवतीति | .... | वाग्ज्योतिः सम्राडिति होवाच |
| आत्मैवास्य ज्योतिर्भवतीति | .... | आत्मज्योतिः सम्राडिति होवाच |
| लोकावनु सञ्चरति | .... | लोकौ सञ्चरति |
| अतिक्रामति मृत्यो रूपाणि | .... | अतिक्रामति |
| विजहाति | .... | विजहाति मृत्योरूपाणि |
| स यत्र प्रस्वपिति | .... | स यत्रायं प्रस्वपिति |
| स्वयं निहत्य | .... | स्वयं विहत्य |
| पुष्करिण्यः स्रवन्त्यो भवन्ति अथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते | .... | स्रवन्त्यः पुष्कारिण्यो भवन्ति अथ वेशान्ताः स्रवन्तीः पुष्करिणीः-सृजते |
| तदेते श्लोकाः | .... | तदप्येते श्लोकाः |
| पुनरेति स्थानं | .... | पुनरैति स्थानं |
| पुरुषः (एवमुपरि) | .... | पौरुषः ( एवमुपरि ) |
| न तं पश्यति कश्चन | .... | न तं कश्चन पश्यति |
| जागरितदेश एवास्यैष इति | .... | जागरितदेश एवास्यैषः |
| स्वयंज्योतिर्भवति सोहं | .... | स्वयंज्योतिर्भवतीति एवमेवैतद्याज्ञ-वल्क्य सोहं |

| काण्वे — | | माध्यन्दिने — |
|---|---|---|
| ('स वा एष एतस्मिन् संप्रसादे' .... इति १५. कण्डिका इह) | | ('स वा एष एतस्मिन् संप्रसादे' इति कण्डिका नेह किन्तु काण्व-६.३. ३४ स्थाने) |
| (स वा एष एतस्मिन् बुद्धान्त इति.... १७. कण्डिकेह) | | (स वा एष एतस्मिन् बुद्धान्त इति कण्डिका नास्ति।) |
| तदत्राविद्यया मन्यते | .... | तदत्राविद्यया भयं मन्यते |
| देव इव राजेवाहमेवेदं सर्वोऽस्मि | .... | राजेव देव इवाहमेवेदं सर्वमस्मि |
| अतिच्छन्दा अपहतपाप्माभयं रूपं | .... | आत्मकामपाप्तकाममकामं रूपं |
| आप्तकाममात्मकाममकामं रूपं शोका-न्तरं | .... | अतिच्छन्दोऽपहतपाप्माभयं रूपं शोकान्तरं |
| वेदा अवेदाः | .... | वेदा अवेदा यज्ञा अयज्ञाः |
| चान्डालोऽचाण्डालः पौल्कसोऽपौ-ल्कसः | .... | पौल्कसोऽपौल्कसश्चाण्डालोऽ-चाण्डालः |
| तन्न पश्यति (एवमुपरि) | .... | ('तत् द्रष्टव्यं न पश्यति', 'तद्-घ्रातव्यं न जिघ्रति', 'तद्रसं न रसयति', 'तद्वक्तव्यं न वदति', 'तच्छ्रोतव्यं न शृणोति', 'तन्मन्तव्यं न मनुते', 'तत् स्प्रष्टव्यं न स्पृशति', 'तद् विज्ञेयं न विजानाति' इति कर्मकारकविशेषः सर्वत्र) |
| घ्रातुर्घ्रातेः | .... | घ्रातुर्घ्राणात् |
| रसयन् वै तन्न रसयते | .... | विजानन् वै तद्रसं न रसयति |
| रसयितू रसयितेः | .... | रसयितू रसात् |
| वक्तुर्वक्तेः | .... | वक्तुर्व (र्वा ?) चः |

| काण्वे – | | माध्यन्दिने – |
|---|---|---|
| विज्ञातुर्विज्ञातेः | .... | विज्ञातुर्विज्ञानात् |
| ( 'यत्र वा अन्यदिवे ' ति ३१ कण्डिका ) | .... | ( यत्र वा अन्यदिवेति कण्डिका नास्ति । ) |
| एषास्य परमा गतिरेषास्य परमा संपत् | .... | एषास्य परमा संपत् |
| मानुष्यैर्भोगैः | .... | मानुष्यकैः कामैः |
| [ ते ] ये शतं | .... | ये शतं |
| शये तं पितॄणां जितलोकानामानन्दाः स एको गन्धर्वलोक आनन्दः | .... | ये शतं पितॄणां जितलोकानामानन्दाः स एकः कर्मदेवानामानन्दः |
| ये शतमाजानदेवानामानन्दाः स प्रजापतिलोक आनन्दः | .... | ये शतमाजानदेवानामानन्दाः स देवलोक आनन्दः यश्च श्रोत्रियोऽवृजिनोऽकामहतः अथ ये शतं देवलोक आनन्दाः स एको गन्धर्वलोक आनन्दः यश्च श्रोत्रियोऽवृजिनोऽकामहतः अथ ये शतं गन्धर्वलोक आनन्दाः स एकः प्रजापतिलोक आनन्दः |
| अथैष एव परम आनन्दः एष ब्रह्मलोकः | .... | एष ब्रह्मलोकः |
| इति होवाच याज्ञवल्क्यः | .... | इति हैनमनुशशासैतदमृतम् |
| ( अत्र ह याज्ञवल्क्यो विभयाञ्चकारेत्यादि । ) | .... | ( अत्र ह याज्ञवल्क्य इत्यादिवाक्यमिह न; किन्तु कण्डिकाद्वयानन्तरम् ) |
| (६. ३. ३४ स वा एष एतस्मिन् • स्वप्नान्त इत्यादि ) | .... | ( स वा एष एतस्मिन् संप्रसादे इत्यादि काण्व (६-३-१५) वत् । एतदनन्तरम् , अत्र ह याज्ञवल्क्यो विभयाञ्चकारेत्यादि । ) |

| काण्वे — | | माध्यन्दिने — |
|---|---|---|
| ( तद्यथाऽनः सुसमहितम् — यत्राणिमानं-इति कण्डिकाक्रमः ) | .... | ( स यत्राणिमानम् — तद्यथाऽनः सुसमाहितम् इत्यादि इति कण्डिकाक्रमः ) |
| उत्सर्जन् याति, यत्रैतदूर्ध्वोच्छ्वासि भवति । | .... | उत्सर्जद्याति ( इत्येतावदेव ) |
| बन्धनात् प्रमुच्यते | .... | बन्धनात् प्रमुच्येत |
| अभिसमायान्ति | .... | उपसमायन्ति |
| ऊर्ध्वोच्छ्वासि भवति | .... | ऊर्ध्वोच्छ्वासी भवति |
| ६. ४. | .... | ७. २. |
| यत्रायमात्माऽऽबल्यं न्येत्य | .... | यत्रायं शारीर आत्माऽऽबल्यं नीत्य |
| चक्षुषो वा | .... | चक्षुष्टो वा |
| सविज्ञानो भवति सविज्ञानमेवान्वव क्रामति | .... | संज्ञानमेवान्ववक्रामति, स एष ज्ञः सविज्ञानो भवति |
| अविद्यां गमयित्वाऽन्यमाक्रममाक्रम्य | .... | अविद्यां गमयित्वा |
| रूपं कुरुते पित्र्यं | .... | रूपं तनुते पित्र्यं |
| दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानां | .... | ब्राह्मं वा प्राजापत्यं वा दैवं वा मानुषं वा अन्येभ्यो वा भूतेभ्यः |
| मनोमयः | .... | मनोमयो वाङ्मयः |
| पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयः | .... | आकाशमयो वायुमयस्तेजोमय आपोमयः पृथिवीमयः क्रोधमयोऽक्रोधमयो हर्षमयोऽहर्षमयः |
| तद्यदेतदिदम्मयः | .... | तद्यदेदम्मयः |
| पापः पापेन | .... | पापः पापेनेति |
| तत्क्रतुर्भवति यत्क्रतुर्भवति | .... | तथाक्रतुर्भवति यथाक्रतुर्भवति |

| काण्वे – | | माध्यन्दिने – |
|---|---|---|
| अभिसंपद्यते | .... | अभिसंपद्यत इति |
| तदेव सक्तः | .... | तदेव सत् तत् |
| पुनरेति | .... | पुनरैति |
| इति नु (तु) कामयमानः | .... | इति नु कामयमानः |
| आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति | .... | आत्मकाम आप्तकामो न तस्मात् प्राणा उत्क्रामन्ति अत्रैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माप्येति |
| अथायमशरीरः अमृतः प्राणो ब्रह्मैव तेज एव | .... | अथायमनस्थिकोऽशरीरः प्राज्ञ आत्मा ब्रह्मैव लोक एव सम्राडिति होवाच याज्ञवल्क्यः |
| तदेते श्लोका भवन्ति | .... | तदप्येते श्लोकाः |
| अणुः पन्था विततः (रः) | .... | अणुः पन्था वितरः |
| ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः | .... | ब्रह्मविद् उत्क्रम्य स्वर्गं लोकमितो विमुक्ताः |
| पुण्यकृत् तैजसश्च | .... | तैजसः पुण्यकृच्च |
| अविद्यामुपासते | .... | असंभूतिमुपासते |
| विद्यायां रताः | .... | संभूत्यां रताः |
| अनन्दा नाम | .... | असुर्या नाम |
| प्रेत्याभिगच्छन्ति | .... | प्रेत्यापिगच्छन्ति |
| अबुधो जनाः | .... | अबुधा जनाः |
| (आत्मानं चेत्, यस्यानुवित्तः, इहैव सन्तः इति श्लोकक्रमः) | .... | (इहैव सन्त इति श्लोकस्थानापन्नः श्लोकः पूर्वम्, अथ आत्मानं चेदिति, अथ यस्यानुवित्त इति।) |
| संज्वरेत् | .... | संचरेत् |
| अस्मिन् संदेहे (सदेहे) (संदेह्ये) | .... | अस्मिन् संदेहे |

| काण्वे – | | माध्यन्दिने – |
|---|---|---|
| इहैव सन्तोऽथ विद्मः | .... | तदेव सन्तस्तदु तद्वयामः |
| अवेदिर्महती विनष्टिः | .... | अवेदी महती विनष्टिः |
| य एतद्विदुः | .... | ये तद्विदुः |
| न ततो | .... | न तदा |
| (यस्मादर्वाक्, यस्मिन् पञ्चेति श्लोकक्रमः) | .... | (यस्मिन् पञ्च, यस्मादर्वाक् इति श्लोकक्रमः) |
| तं देवाः | .... | तद् देवाः |
| आयुर्होपासते | .... | अयुर्ह्योपासते |
| श्रोत्रं मनसो | .... | श्रोत्रमन्नस्यान्नं मनसो |
| मनसैवानुद्रष्टव्यम् | .... | मनसैवाप्तव्यम् |
| एकधैवानुद्रष्टव्यम् | .... | मनसैवानुद्रष्टव्यम् |
| स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः | .... | स वा अयमात्मा सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च |
| एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुः | .... | एष भूताधिपतिरेष लोकेश्वर एष लोकपालः स सेतुः |
| वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन | .... | वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन च |
| लोकमिच्छन्तः | .... | लोकमीप्सन्तः |
| पूर्वे विद्वांसः | .... | पूर्वे ब्राह्मणा अनूचाना विद्वांसः |
| असङ्गो न हि सज्यते असितो न व्यथते न रिष्यति एतमु हैवेते न तरत इत्यतः पापं | .... | असङ्गोऽसितो न सज्यते न व्यथते इत्यतः पापं |

| काण्वे — | | माध्यन्दिने — |
|---|---|---|
| इत्युभे उहै (इहै) वैष एते तरति | .... | इत्युभे ; उभे ह्येष एते तरत्यमृतः साध्वसाधुनी |
| नैनं कृताकृते तपतः | .... | नैनं कृताकृते तपतः नास्य केनचन कर्मणा लोको मीयते |
| न लिप्यते कर्मणा | .... | न कर्मणा लिप्यते |
| समाहितो भूत्वा | .... | श्रद्धावित्तो भूत्वा |
| पश्येत् ( पश्यति ) सर्वमात्मानं पश्यति | .... | पश्येत् सर्वमेनं पश्यति सर्वोऽस्यात्मा भवति सर्वस्यात्मा भवति। |
| ( नैनमिति वाक्यं पूर्वम् , सर्वमिति वाक्यं पश्चात् ) | .... | ( सर्वमितिवाक्यं पूर्वम् , नैनमिति वाक्यं पश्चात् ) |
| विरजो विचिकित्सो ब्राह्मणो भवति | .... | विजरो विजिघत्सोऽपिपासो ब्राह्मणो भवति य एवं वेद |
| ( एष ब्रह्मलोक इत्यादि य एवं वेदेत्यन्तमानुपूर्व्यम् ) | .... | स वा एष महानज आत्मा अन्नादो वसुदानः स यो हैवमेतं महान्तमजमात्मानमन्नादं वसुदानं वेद, विन्दते वसु । स वा एष महानज आत्माऽजरोऽभयोऽमृतो ब्रह्माभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्यः । सोऽहं भगवते विदेहान् ददामि माञ्चापि सह दास्यायेति । |
| अमृतोऽभयः | .... | अभयोऽमृतः |
| ६. ५. | .... | ७. ३. |
| स्त्रीप्रज्ञैव | .... | स्त्रीप्रज्ञेव |

| काण्वे – | | माध्यन्दिने – |
|---|---|---|
| सोऽन्यद् वृत्तमुपाकरिष्यन् याज्ञवल्क्यो मैत्रेयीति होवाच | .... | अथ ह याज्ञवल्क्योऽन्यद् वृत्तमुपाकरिष्यन् । मैत्रेयीति होवाच याज्ञवल्क्यः |
| यदेव भगवान् वेत्थ | .... | यदेव भगवान् वेद |
| [ वि ] ब्रूहीति | .... | ब्रूहीति |
| भवती ( ति ) सती | .... | भवती सती |
| हन्त तर्हि भवत्येतत् | .... | हन्त खलु भवति तेऽहं तद् वक्ष्यामि |
| व्याचक्षाणस्य तु मे | .... | वाचं तु मे व्याचक्षाणस्य |
| स होवाच | .... | स होवाच याज्ञवल्क्यः |
| ( वित्तपर्यायानन्तरं ब्रह्मपर्यायः ) | .... | ( वित्तब्रह्मपर्यायमध्ये 'न वा अरे पशूना' मिति पर्यायान्तरम् ) |
| ( वेदपर्यायानन्तरं भूतपर्यायः ) | .... | वेदभूतपर्यायमध्ये, 'न वा अरे यज्ञाना' मिति पर्यायान्तरम् |
| वेदान् वेद भूतानि तं परादुः | .... | वेदान् वेद यज्ञास्तं परादुः योऽन्यत्रात्मनो यज्ञान् वेद भूतानि तं परादुः |
| इमे वेदा इमानि सर्वाणि भूतानि | .... | इमेवेदा इमे यज्ञा इमानि भूतानि |
| ( शङ्खपर्यायानन्तरं वीणापर्यायः ) | .... | ( वीणापर्यायानन्तरं शङ्खपर्यायः ) |
| इष्टं हुतं | .... | दत्तं हुतं |
| स्पर्श - रस - गन्ध - रूप - शब्द - संकल्प - विद्या - कर्म - आनन्द - विसर्ग - अध्व - वेद - पर्यायाः क्रमेण | .... | स्पर्श - गन्ध - रस - रूप - शब्द - संकल्प - वेद - कर्म - अध्व - आनन्द - विसर्ग - विद्यापर्यायाः क्रमेण ( वेदानामयनं हृदयम् । विद्यानामयनं वाक् ) |

| काण्वे | माध्यन्दिने – |
|---|---|
| रसघन एव एवं वा अरे अयमात्मा.... अनन्तरोऽबाह्यः कृत्स्नः | रसघन एव स्यादेवं वा अरे इदं महद् भूतमनन्तमपारं कृत्स्नः |
| मोहान्तमापिपत् न वा अहमिदं .... विजानामीति | मोहान्तमापीपदत् न वा अहमिदं विजानामि न प्रेत्य संज्ञाऽस्तीति |
| स होवाच .... | स होवाच याज्ञवल्क्यः |
| अनुच्छित्तिधर्मा .... | अनुच्छित्तिधर्मा । मात्रासंसर्गस्त्वस्य भवति । |
| (यत्र हि द्वैतमित्यादि पूर्व (४.४.) .... रीतिविलक्षणम् ।) | (यत्र हि द्वैतमित्यादेः यत्रत्वित्यतः प्राच्यस्य स्थाने (७.१.) स्थितरीत्या, यद्वैतं न पश्यतीत्यादि, यद्विजानीयादित्यन्तम् । ततः, 'यत्र वा अन्यदिव स्यात् तत्रान्योऽन्यदित्यादि । पश्येत्, जिघ्रेत, रसयेत्, अभिवदेत्, शृणुयात्, मन्वीत, स्पृशेत्, विजानीयादिति क्रमः ।) |
| तं केन विजानीयात् स एष — .... | (तं केन विजानीयादित्येतदनन्तरं स एष नेतीत्यादि नास्ति। विज्ञातारमरे केन विजानीयादित्येतावदेव ।) |
| याज्ञवल्क्यो विजहार .... | याज्ञवल्क्यः प्रवव्राज |

६. ६.

| काण्वे | माध्यन्दिने |
|---|---|
| (अथ वंश इत्यादि वंशब्राह्मणम् .... १.४.६. स्थितात् किञ्चिदन्यथा) | (पूर्वब्राह्मणान्तर्गततयैव वंशब्राह्मणम् पूर्वस्थितात् किञ्चिदन्यथा) |

| काण्वे | | माध्यन्दिने – |
|---|---|---|
| ७. १. | .... | ८. १. |
| उदञ्च्य ( च्य ) ते | .... | उदच्यते |
| ७. २. | .... | ८. २. |
| ७. ३. | .... | ८. ३. |
| एष प्रजापति रित्यादि | .... | काण्व - ७. १५. स्थितं वायुरनिलमित्यादि, त्रिधेमेत्यन्तम्. ८.४. एष प्रजापतिरित्यादि |
| ददत्यस्मै | .... | ददन्त्यस्मै |
| ७. ४. | .... | ८. ५. |
| यो हैतन्महत् | .... | यो हैवमेतन्महत् |
| ७. ६. | | ८.६. |
| ते देवाः सत्यमेवोपासते | .... | ते देवाः सत्यमित्युपासते |
| यमित्येकमक्षरम् | .... | अमित्येकमक्षरम् |
| ७. ७. | | |
| तद्यत् सत्यं | .... | तद्यत् तत् सत्यं |
| रश्मिभिरेषः | .... | रश्मिभिर्वा एषः |
| सुवरिति ( स्वरिति ) | .... | स्वरिति |
| (मनोमय ब्राह्मणानन्तरं विद्युद्ब्राह्मणम्) | ... | (विद्युद्ब्राह्मणानन्तरं मनोमयब्राह्मणम्) |
| यवो वा स एष सर्वस्येशानः | .... | यवो वैवमयमन्तरात्मन् पुरुषः स एष सर्वस्य वशी सर्वस्येशानः |
| विद्यत्येनं पाप्मनः | .... | विद्यत्येनं सर्वस्मात् पाप्मनः |
| ७. ८. | .... | ८. ९. |
| तस्याः द्वौ स्तनौ | .... | तस्यै द्वौ स्तनौ |

| काण्वे | | माध्यन्दिने – |
|---|---|---|
| (७-१०. यदा वै इत्यादि ब्राह्मणान्तरं | .... | (८-११. एतद्वै इत्यादिब्राह्मणानन्तरं |
| (७.११. एतद्वै इत्यादिब्राह्मणम्) | | ८-१२. यदा वै इत्यादिब्राह्मणम्) |
| यथाडम्बरस्य ( लम्बरस्य ) | .... | यथाडम्बरस्य |
| ७. १२. | .... | ८. १३. |
| भूतानि रमन्ते | .... | भूतानि रतानि |
| भूतानि विशन्ति | .... | भूतानि विशन्ते |
| ७. १३. | .... | ८. १४. |
| उद्दास्मादुक्थवित् | .... | उद्दास्मा उक्तवित् |
| सम्यञ्चि हास्मै | .... | सम्यञ्चि हास्मिन् |
| श्रैष्ठ्याय कल्पन्ते | .... | श्रैष्ठ्याय कल्प्यन्ते ( कल्पन्ते ) |
| प्रक्षत्रमत्रमाप्नोति | .... | प्रक्षत्रमात्रमाप्नोति |
| ७. १४. | .... | ८. १५. |
| एतदु हैवास्या एतत् | .... | एतदु हास्या एतत् |
| एषु त्रिषु लोकेषु | .... | एषु लोकेषु |
| सर्वमु ह्येवैष | .... | सर्वमु ह्येष |
| तद्वैतत् सत्ये प्रतिष्ठितम् | .... | तद्वैतत् सत्ये प्रतिष्ठिता |
| य एव ब्रूयादहमदर्शमिति | .... | य एव ब्रूयादहमद्राक्षमिति |
| तस्मादेव श्रद्दध्याम | .... | तस्मा एव श्रद्दध्यात् ( म ) |
| एवमेषा ( एवमु हैषा ) गायत्री | .... | एवम्वेषा गायत्री |
| अमूं सावित्रीमन्वाह | .... | अमूमन्वाह |
| तां हैतामेके | .... | तां हैके |
| गायत्रीमेव सावित्रीमनुब्रूयात् | .... | गायत्रीमेवानुब्रूयात् |
| मा समर्द्धीति | .. | मा समर्द्धीति ( न भेदः ) |

